

# सूर्योदयः

( भक्तिविशिष्टाङ्कः )

श्रीभारतधर्ममहामण्डलस्य मुखपत्रम्



## सदुपदेशाः

श्रेयः सौभाग्यमग्र्यं ललितयुवतयश्चित्रवस्त्राणि हारा-
च्छत्रं चञ्चत्तुरङ्गा मदकलकरिणः काञ्चनं शुभ्रगेहम् ।
सौख्यं लक्ष्मीः प्रभूता प्रवरकनकभाः शुभ्रकीर्तिश्च लोके,
श्रद्धा सद्धर्ममार्गे भवति ननु फलं धर्मकल्पद्रुमस्य ॥

रम्यं रूपं करणपटुताऽऽरोग्यमायुर्विशालं,
कान्तारूपानमितरतयः सूनवो भक्तिमन्तः ।
षट्खण्डोर्वीतलपरिवृढत्वं यशः क्षीरशुभ्रं,
सौभाग्यश्रीरिति फलमहो धर्मवृक्षस्य सर्वम् ॥

यत्किञ्चित् त्रिषु लोकेषु प्रार्थयन्ति नराः सुखम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥



संवत् २०१८ ] [ मूल्यम् रूप्यकत्रयम्

प्रकाशकः
अवधेशप्रसाद शर्मा
भारतधर्ममहामण्डल-
प्रधानकार्यालयः
जगतगंज, वाराणसी।

## सम्पादक-मण्डलम्

पण्डित अनन्तशास्त्री फड़के
व्याकरणाचार्यो मीमांसातीर्थः, वेदान्तकेशरी
अध्यक्षः पुराणेतिहासविभागस्य वाराणसेयसंस्कृत-विश्वविद्यालयस्य।

पण्डित श्रीकृष्णमणि त्रिपाठी
व्याकरण-साहित्यवेदान्त-सांख्ययोगपुराणेतिहासाचार्यः, एम० ए०, साहित्यरत्नम्।

पण्डित अवधेशप्रसाद शर्मा,
विद्याभूषणः काव्यतीर्थः

मुद्रक
विश्वनाथ भार्गव
मनोहर प्रेस,
जनतबर, वाराणसी।

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य मुखपत्रम् ।

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

३७ तमे वर्षे भक्तिविशिष्टाङ्कः ] २०१८ वैक्रमाब्दः [ मार्च १६६१

## प्रार्थना

ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरेण्यम् ।
भृत्यार्तिहं प्रणतपालभवाब्धिपोतं
बन्दे महापुरुष ते चरणारविन्दम् ॥

त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं
धर्मिष्ठ आर्यवचसा यदगादरण्यम् ।
मायामृगं दयितयेप्सितमन्वधावद्-
वन्दे महापुरुष ते चरणारविन्दम् ॥

यं ब्रह्मावरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैः
वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥

---

# भागवततात्पर्यनिर्णयः

( पं० श्रीकृष्णमणित्रिपाठी, साहित्यव्याकरण-पुराणेतिहासाचार्यः एम० ए० सरस्वतीभवनम्, वाराणसी )

वेदवेदान्तसारं यद् व्यासशोकनिवर्तकम्।
महापुराणमूर्धन्यं श्रीमद्भागवतं स्तुमः॥

प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते इतिन्यायेन प्रयोजनमन्तरा न भवति कस्याचिदपि कुत्रापि प्रवृत्तिः साधीयसी। प्रयोजनञ्चानुबन्धचतुष्टयज्ञानं विना न स्फुटीभवतीत्यतस्तावदादौ तत्प्रदर्श्यते।

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्॥ (१,१,२)

इतिपद्यपर्यालोचनया श्रीमद्भागवते प्रोज्झितकैतवोधर्मो निरूप्यते। प्रकर्षेण उज्झितं कैतवं फलाभिसन्धि लक्षणं कपटं यस्मिन् स प्रोज्झितकैतवः निष्काम इत्यर्थः। अत एवायं निर्मत्सराणां सतां परमोधर्मः। मात्सर्यं हि कामकलुषकलेवरेष्वेव सम्भवति नान्यत्र, यतोनिष्कामा एव निर्मत्सरा भवन्ति। अतस्तेषां धर्मस्य कैतवरहितत्वमेव युज्यते। अतएवायं धर्मो भागवतधर्मतया व्यपदिश्यते भागवतधर्मनिरूपणायैव श्रीमद्भागवतस्योप क्रमात्। तथा हि

किं वा भागवता धर्मा न प्रायेण निरूपिताः।
प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः॥ (१,४,३१)

किञ्च वास्तवं परमार्थभूतं सत्, वेद्यंचित्, शिवदम्, आनन्दस्वरूपं वस्तु सच्चिदानन्दात्मकं ब्रह्म इह श्रीमद्भागवते प्रकाश्यते। तथा चोक्तम्

अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान् हरिः।
यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः॥ (१२,५,१)

एतेन सच्चिदानन्दोपलक्षितं ब्रह्म श्रीमद्भागवतस्य विषयो निर्दिष्टः।

संबन्धस्त्वत्र वोद्धृवोद्धव्यभावो वोद्धव्यः। अधिकारिणो जिज्ञासवो विरक्ता मुमुक्षवः सन्ति। प्रयोजनञ्च तापत्रयोन्मूलनपूर्वकं भगवत्प्राप्तिरेवोपलक्ष्यते। अत्र एवोक्तं श्रीमद्भागवतमाहात्म्ये—

जीवच्छवो निगदितः स तु पापकर्मा
येन श्रुतं शुककथावचनं न किञ्चित्।
आजन्ममात्रमपि येन शठेन किञ्चि-
च्चित्तं विधाय शुकशास्त्रकथा न पीता। (३,४२)
चाण्डालवच्च खरवद् बत तेन नीतं
मिथ्या स्वजन्म जननीजनिदुःखभाजा॥ (३,४३)

अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः॥

इत्यादिना सर्गादिवर्णनस्योपक्रान्तत्वेन कथं सच्चिदानन्दोपलक्षितं ब्रह्मैव श्रीमद्भागवतस्य विषयोऽवधार्यते इति वाच्यम्। पुराणलक्षणसंगमनायात्र सर्गादीनामानुषङ्गिकं वर्णनं जातमिति कल्पनेनादोषात्। सर्गादिवर्णनं व्यासस्य मुख्यमुद्देश्यं नास्ति किन्तु स्थूलभूतानां भूगोलखगोलयोर्ब्रह्माण्डस्य च वर्णनं निखिललोकनियन्तुर्भगवतो महापुरुषस्य स्थूलस्वरूपनिरूपणायोपक्रान्तम्। परितः परिवर्तनशीलेऽस्मिन् जगति कालविशेषे लिखितस्य भूगोलस्य न संभवति सदैवोपयोगः। अत एवेदानीन्तनेन भूगोलेन

सह पौराणिकभूगोलस्य न जायते संगतिः। व्यासेन हि योगजसमाधिवलेन करामलकवन्मनसा प्रत्यक्षी-क्रियमाणानां सूक्ष्मातिसूक्ष्मलोकानां स्वरूपमुपस्थापितम्, आधुनिकैर्भूगोलविद्भिस्तु स्थूलदृष्ट्याद्दश्यमानस्य स्थूल-जगत एव वर्णनं क्रियते इत्युभयोरस्ति महद्वैपम्यम्।

तस्माद्भगवतः स्थूलरूपानुध्यानार्थमेव विराड्ब्रह्माण्डस्य वर्णनं पुराणेषु जातमित्यव्याहतः पन्थाः। अतएवोक्तं श्रीमद्भागवते 'जितासनो जितश्वासो जितसङ्गो जितेन्द्रियः'।
स्थूले भगवतोरूपे मनः सन्धारयेद्धिया। (२,१,२३)
यस्येहावयवैर्लोकान् कल्पयन्ति मनीषिणः। (२,१,३८)
कट्याादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः। (२,५,३६)
भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः।
स्वर्लोकःकल्पितो मूर्ध्ना इति वा लोककल्पना। (२,५,४२)

एवं वंशमन्वन्तरादीनां वर्णनमपि जगतो नश्वरत्व-प्रदर्शनद्वारा ततो वैराग्यमुत्पाद्य परमात्मनि रागसंम्वर्द्ध-नायैव, अन्यथा मुक्तिरूपप्रयोजनसाधने तेषामुपयोगाभावेन वर्णनस्यासंगत्यापत्तेः। तथा चोक्तम्

कथा इमास्ते कथिता महीयसां
वितायं लोकेषु यशः परेयुषाम्
विज्ञानवैराग्यविवक्षया विभो
वचोविभूतीर्न तु पारमार्थ्यम्॥ (१२,३,१४)
यस्तूत्तमश्लोकगुणानुवादः
संगीयतेऽभीक्ष्णममङ्गलघ्नः।
तमेव नित्यं शृणुयादभीक्ष्णं
कृष्णेऽमलां भक्तिमभीप्समानः॥ (१२,३,१५)

तथा च भक्तिज्ञानविरागसम्पादनद्वारा सर्वाश्रयभूते परमात्मन्येवैकमात्र तात्पर्यं श्रीमद्भागवतस्येति निश्चप्रचम्। अतएवोक्तं श्रीमद्भागवतमाहात्म्ये-

इदं भागवतं नाम पुराणं ब्रह्मसम्मितम्।
भक्तिज्ञानविरागाणां स्थापनाय प्रकाशितम्॥

सदा सेव्या सदा सेव्या श्रीमद्भागवती कथा।
यस्याः श्रवणमात्रेण हरिश्चित्तं समाश्रयेत्॥
किञ्च–दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम्।
वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा॥
(२,१०,२)

इत्यत्र आश्रय एव दशमं लक्षणम्। आश्रयपदार्थश्च-परमात्मैवास्ति, तथा चोक्तम्, श्रीमद्भागवते

आभासश्च निरोधश्च यतश्चाध्यवसीयते।
स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते॥
तेनेयं वाङ्मयी मूर्तिः प्रत्यक्षा वर्तते हरेः।
सेवनाच्छ्रवणात्पाठाद्दर्शनात्पापनाशिनी॥

अपिच—

व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु।
मायामयेषु तद् ब्रह्म जीववृत्तिष्वपाश्रयः॥ (२,१०,७)

इदं भागवतं नाम पुराणं ब्रह्मसमितमिति वचनानुसारं श्रीमद्भागवतं हि भवभीतिभञ्जकस्य भगवतो वाङ्-मयावतारः। ब्रह्मसम्मितमित्यत्र ब्रह्मपदेन परब्रह्म बोद्धव्यम्।

निगमकल्पतरोर्गलितं फलं
शुकमुखादमृतद्रवसंयुतम्।
पिवत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुकाः॥ (१,१,३)

इत्यत्र श्रीमद्भागवतस्य निगमकल्पतरुफलत्वेनोपक्रान्तात्—

यः स्वानुभावमखिलश्रुतिसारमेक-
मध्यात्मदीपमतितितीर्षतां तमोऽन्धम्।
संसारिणां करुणयाऽऽह पुराणगुह्यं
तं व्याससूनुमुपयामि गुरुं मुनीनाम्॥
(१,२,३)

इत्यादिना श्रुतिसारत्वप्रतिज्ञानाच्च। निगमकल्पतरोः फलं श्रुतेः सारश्च निखिललोकनायको भगवान् श्रीकृष्ण एव तदभिन्नतया श्रीमद्भागवतमपि तथा व्यपदिश्यते।

फलत्वोत्प्रेक्षयाऽत्र माधुर्यातिशयः सूच्यते। माधुर्यं हि फले एवास्वाद्यते नतु वृक्षादौ। फलमाधुर्यमपेक्ष्यैव वृक्षाणां प्राशस्त्यं प्रतीयते। तस्मात् निगमादप्यतिशयसौभाग्यशालि माधुरीधुरीणं श्रीमद्भागवतं नाम महापुराणमित्यत्र नास्ति काचित् संशीतिः।

यथादौ प्रथमस्कन्धीय-प्रथमाध्यायस्य प्रथमपद्ये "सत्यं परं धीमहि" इति वाक्यं वर्तते तथैवान्ते द्वादशस्कन्धीय त्रयोदशोध्यायस्यैकोनविंशतितमे पद्येऽपि "सत्यं परं धीमहि" इत्यस्योल्लेखोऽस्ति। अत आभ्यामुपक्रमोपसंहाराभ्यां निर्णीयते यत् परसत्यब्रह्मतत्त्वप्रकाशनायैव श्रीमद्भागवतस्याविर्भावः।

ब्रह्मादिदेवैरभ्यर्थितो भगवान् नारायणो द्वापरे पराशरात् सत्यवत्यां व्यासरूपेणावतीर्य वेदं चतुर्धा विभज्य कलियुगे ज्ञानशक्तिविहीनानां मन्दमतीनामल्पायुषां पुंसां ज्ञानवर्त्म प्रदर्शनद्वारा कैवल्यलाभाय महाभारतं सप्तदशपुराणानि च विरच्यापि शान्तिमलभमानो नारदोपदेशतः श्रीकृष्णभक्तिप्रधानं वेदान्तसूत्रव्याख्यानमयममलात्मनां मुनीनामपि मनोमुग्धकरं श्रीमद्भागवतं व्यचरयत्।

भवतानुदितप्रायं यशो भगवतोऽमलम्।
येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलम्॥ (१,४,८)
यथा धर्मादयश्चार्था मुनिवर्यानुकीर्तिताः।
न तथा वासुदेवस्य महिमा ह्यनुवर्णितः॥ (१,४,९)

इत्यादिना नारदोपदेशानन्तरं श्रीमद्भागवतस्य प्रकटनादस्य परमार्थसाधनत्वं सुतरां सिद्ध्यति। अत एवोक्तम्।

**अनर्थोपशमं साक्षाद् भक्तियोगमधोक्षजे**
**लोकस्याजानतो व्यासश्चक्रे शाश्वतसंहिताम्॥**
**यस्यां वै श्रूयमाणायां कृष्णे परमपुरुषे।**
**भक्तिरुत्पद्यते पुंसां शोकमोहभयापहा॥**

अपि च श्रीमद्भागवतोपदेशमुपसंहरता भगवता शुकदेवेन यदा राजा परीक्षित् आदिष्टो यत्

अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम्।
एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले॥
(१२,५,११)
दशन्तं तक्षकं पादे लेलिहानं विषाननैः
न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः॥
(१२,५,१२)

तदादेशमेनमाकर्ण्य राज्ञा परीक्षितापि स्पष्टमुक्तम्—

**सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना।**
**श्रावितो यच्च मे साक्षादनादिनिधनो हरिः॥**
(१२,६,२) इति

**अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया।**
**भवता दर्शितं क्षेमं परं भगवतः पदम्॥** (१२,६,७)

तदन्तरमेवासौ राजर्षि गंगाकूले कुशासने उदङ्मुख उपविश्य परमात्मानं ध्यायमानः छिन्नसंशयः सन् ब्रह्मीभूतः। तथाहि—परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना।
**समाधाय परं दध्यावस्पन्दासुर्यथातरुः॥** (१२,६,९)
**प्राक्कूले बर्हिष्यासीनो गङ्गाकूल उदङ्मुखः।**
**ब्रह्मभूतो महायोगी निःसङ्गश्छिन्नसंशयः॥** (१२,६,१०)

एतेनेदं सिध्यति यत् परतत्त्वोपदेश एव श्रीमद्भागवतस्य मुख्यमुद्देश्यमस्ति। वैष्णावाचार्या जगद्गुरवः श्रीवल्लभाचार्याः श्रीमद्भागवतस्य गम्भीरविचारपूर्वकं सुबोधिनी नाम्नी टीका कृतास्ति तत्र तेन भक्त्या श्रीकृष्णचरणारविन्दसेवनमेव श्रीमद्भागवतस्य तात्पर्यं निर्णीतमस्ति। अतएव सत्यं परं धीमहीत्यस्य व्याख्याने तेन तत्र परं सत्यं पुरुषोत्तम तत्त्वं ध्यायेमः प्रीतिं वा कुर्म इत्यर्थं कृतः।

अनादिकालतः प्रसृतप्रवाहे दुःखगाहे परसहस्रबाधेऽगाधेऽस्मिञ्जगज्जलनिधौ निमज्जतां कञ्चिदनपायमुपायमपश्यतां संसीदतां विषीदताञ्च जनानामुद्धारणायश्रीमद्भागवताद्दतेनान्या स्ति सुदृढातरिः नापि कश्चिदन्यः धीवरो धीवरः

प्रभवेदन्तरेण वारिदभासं जगन्निवासं भगवन्तं वासुदेवम्। अतो भगवतो भागवतस्य च महिमानं नेशः शेषोऽप्यशेषतया वक्तुं बद्धपरिकरः स्यात्, किमुत मादृशोऽल्पज्ञो जनः तस्य तात्पर्यं निश्चेतुं प्रभवेत्तथापि "अथावाच्यः सर्वः स्वमति परिणामावधि गृणन्" इति न्यायेन यत् किञ्चिदुच्यते तदखिलब्रह्माण्डद्वीपदीपाय भगवते भास्कराय दीपप्रदर्शनमिव भक्तिप्रदर्शनमात्रमेवास्ति। पुराणलक्षणञ्च सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितरूपम्। तथाहि

सर्गश्च प्रतिसर्गश्च वंशोमन्वन्तराणि च
वंशानुचरितञ्चेति पुराणं पञ्चलक्षणम्॥

यद्यपि सृष्टिसंहारयोर्मूलं वेदेऽप्युपलभ्यते, तथापि तदीयं सुस्पष्टतरं सविस्तरं वर्णनं पुराणेष्वेवोपलभ्यते। नच पुराणेषु वसिष्ठादीनां ब्रह्मर्षीणां मन्वादीनां राजर्षीणां सगरनहुषययातिप्रभृतीनां राज्ञां वंशवर्णनात् तदनुभावित्वेन पुराणानामनादित्वं न स्यादिति वाच्यम्।

क्वचित् क्वचित् पुराणेषु विरोधो यदि दृश्यते।
कल्पभेदादिभिस्तत्र व्यवस्था सद्भिरिष्यते॥

इत्यादिना प्रतिकल्पं भाविसमानराजवंशादि स्वीकारेण दोषात्। नच प्रतिकल्पं समानः सर्गो न भवतीति वाच्यम्, धाता यथा पूर्वमकल्पयदित्यादि—श्रुत्या प्रतिकल्पं समानाया सृष्टेः समर्थितत्वात्। अन्यथा वेदानामनादित्वं न स्यात् "उर्वशीहाप्सराः सा पुरुरवसमैडं चकमे" इत्यादिनेतिवृत्तस्योपवर्णितत्वात्। तस्मादक्षतमनादित्वं पुराणानाम्, अत एवोक्तं मत्स्यपुराणे।

पुराणं सर्वशास्त्राणां ब्रह्मणा प्रथमं स्मृतम्।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः॥

## दर्शनं भागवतधर्मश्च

विद्यावतां भागवते परीक्षा, इति प्रसिद्धया,
भागवतस्य विषयगाम्भीर्यं सर्वविदितमेवास्ति।
यतोहि समेषां दर्शनानां सिद्धान्तास्तत्र
स्थले-स्थले निरूपिताः सन्ति।

मनुष्यजीवनं हि वाहुल्येन दुःखमयमेवास्ति। अत एव भारतीयदर्शनेषु दुःखस्यास्तित्वमङ्गीकृत्य तदपाकरणाय अनेके उपायाः प्रतिपादिताः सन्ति। भगवता बुद्धेन दुःखदूरीकरणाय सम्यक्संकल्प-सम्यग्वचन-सम्यक्कर्मान्त - सम्यग्जीव - सम्यग्व्यायाम - सम्यक्स्मृति-सम्यक्समाधिरूपा अष्टावुपाया प्रदर्शिताः। योगवासिष्ठं तु रामस्य दुःखापनोदनायैव निर्मितम्। राज्ञा दशरथेन यदा श्रुतं यद्रामोऽहर्निशं जगद्दुःखानि चिन्तयन् सदोदासीनस्तिष्ठति, तदा तेन तदपाकरणाय कुलगुरवे वसिष्ठाय समर्पितोरामः। तेन दुःखकारणं जगति राग एव। अज्ञानेन दुःखं जायते ज्ञानेन च तन्निवृत्तिरित्यादिकमाध्यात्मिकं तत्त्वमुपदिश्य रामस्य विषादो दूरीकृतः, यस्य विवरणं योगवासिष्ठे विस्तृतं गुम्फितमस्ति। श्रीमद्भगवद्गीताया आरम्भोऽपि अर्जुनविषादस्य अपनोदनायैव जातः। पूर्वमीमांसामते संसारो दुःखमयः, सुखस्य धाम तु स्वर्ग एवास्ति। अतएव तत्प्राप्तये तत्र स्वर्गकामो यजेत इत्यादिना यज्ञायोपदेशः संगच्छते। न्यायदर्शननये संसारो दुःखबहुल एवास्ति। मिथ्याज्ञानमेवास्ति दुःखस्य मूलं तन्निवृत्तये एकमात्रमुपायश्च प्रमाणप्रमेयादि षोडशपदार्थानां तत्त्वज्ञानोपलब्धिरेव। वैशेषिक दर्शननये तु दुःखस्यात्यन्तिकनिवृत्तिरेव निश्रेयः तत्प्राप्तिश्च तत्त्वज्ञानादेव भवति। सांख्यदर्शनं तु प्राणिमात्रम् आध्यात्मिकादि त्रिविधदुःखाभिभूतमेव मनुते। तन्मते दुःखात्यन्तनिवृत्तिरेव परमपुरुषार्थः तत्साधनन्तु प्रकृतिपुरुषमहदहङ्कारादि पञ्चविंशतितत्त्वज्ञानमेव। तथा चोक्तम्—

पञ्चविंशति तत्त्वज्ञः यत्र कुत्राश्रमे वसन्।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥

योगदर्शनं तु सांख्यस्य पञ्चविंशतितत्त्वानि स्वीकुर्वन् षट्विंशतितममीश्वरतत्त्वं स्वीकरोति। तन्मते प्रकृतिपुरुषसंयोगाद्दुःखं तद्वियोगाच्च कैवल्यं भवति। योगमतानुसार-

मात्मा स्वच्छस्फटिक एव निर्मलोऽस्ति न तत्र दुःखादि संभवति; किन्तु जपाकुसुमसान्निध्याद् स्वच्छे स्फटिके रक्तोपरागात्स्वचित्तवृत्त्या सह सम्बन्धेन तत्र दुःखं भवति। अतो योगप्रक्रियया चित्तवृत्तेर्निरोधात् पुरुषस्य स्वरूपेऽवस्थानं जायते। वेदान्तदर्शनमते जीवब्रह्मणोः पार्थक्यज्ञानमज्ञानं भ्रमोवोच्यते। वस्तुतः तयोः पार्थक्यं नास्ति; किन्तु भ्रमात् पार्थक्यं प्रतीयते। मायैव दुःखस्य मूलं तन्निवारणं ब्रह्मज्ञानादेव भवति। वेदान्ते ब्रह्मज्ञानाय चत्वारि साधनानि निर्दिष्टानि, नित्यानित्यवस्तुविवेकः इहामुत्रफलभोगविरागः, साधनचतुष्टयसंपत्तिः, मुमुक्षुत्वञ्च। एभिः साधनैर्ब्रह्मज्ञानमुपलभ्य जीवः कृतकृत्यो भवति न तस्य किमप्यवशिष्यते। एवञ्च यथा सर्वेषु दर्शनेषु दुःखस्यापनोदनाय विभिन्ना उपायाः प्रदर्शिताः तथैव श्रीमद्भागवतेऽपि दुःखनिवृत्तये भक्तिज्ञानविरागादीनि साधनानि निर्दिष्टानि सन्ति।

अद्वैतवेदान्तदर्शनस्य प्रधानाचार्याणां भगवत्पूज्यपाद श्रीशङ्कराचार्याणां मते केवलं ब्रह्मैव सत्यमस्ति। तदतिरिक्तं सर्वं दृश्यप्रपञ्चं मायिकं भ्रमो वा। ब्रह्मज्ञानोदयेन दृश्यप्रपञ्चस्य निषेधादखण्डं चिन्मयमेकरसमद्वितीयं ब्रह्मैवावशिष्यते। तददृश्य-अग्राह्य-अलक्ष्य-अचिन्त्यादि शब्दैर्व्यवह्रियते। ते परमार्थदृष्ट्या ब्रह्म निर्गुणं व्यवहारिकदृष्ट्या च सगुणं स्वीकुर्वन्ति। विशिष्टाद्वैतसंप्रदायप्रवर्तका श्रीरामानुजाचार्याः सगुणमेव ब्रह्म मन्यन्ते न निर्गुणम्। तन्मते ब्रह्मचिदचिद् विशिष्टमस्ति। जीवजगती ब्रह्मण एव शरीरे स्तः। यतो हि ब्रह्मणः तत्कार्यञ्च भिन्नं नास्ति। अत एव ब्रह्म विशेष्यं ते च विशेषणे। विशेष्यञ्च विशेषणेन सहैव सम्बद्धं तिष्ठति नासम्बद्धम्। अतश्चिदचिद्विशेषणाभ्यांसम्बद्धतयाब्रह्म विशिष्टाद्वैतमुच्यते। ते हि ब्रह्मणो जीवो जगच्च भिन्ने स्वीकुर्वन्ति। चिदचिदीश्वराणां संयोग एव ब्रह्म। अत एव एतज्ज्ञेयं "नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित्। भोक्ता-भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" (१, १२) इति श्वेताश्वरोपनिषत्संगच्छते। द्वैतसंप्रदायाचार्याः श्रीमध्वाचार्या द्वे एव तत्त्वे स्वीकुर्वन्ति, एकं स्वतन्त्रं तत्त्वं द्वितीयञ्चास्वतन्त्रम्। अशेषकल्याणगुणगणाकरो भगवान् विष्णुः स्वतन्त्रं तत्त्वमस्ति जीवो जगच्चास्वतन्त्रे स्तः तत्त्वे। अतो जीवजगती भगवदधीने एव स्तः। श्रीरामानुजमते ईश्वर एव जगद्रूपेण परिणमते परं मध्वाचार्यमते जीवजगद्भगवतां पार्थक्यं नित्यमस्ति। तन्मते भगवान् नियामकः नियम्यश्च जीवः। द्वैताद्वैतसंप्रदाचार्याणां श्रीनिम्बार्काचार्याणां मते जीवजगती उभे अपि ब्रह्मपरिणामभूते स्तः। ब्रह्मैव जीवजगतोरुपादानं निमित्तञ्च कारणम्। ते ब्रह्म सगुणं निर्गुणञ्च मन्यन्ते। विशुद्धाद्वैतप्रवर्तकानां श्रीवल्लभाचार्याणां मते नित्यसच्चिदानन्दस्वरूपो भगवान् सर्वविरुद्धधर्माणामाश्रयः स्वीकृतोऽस्ति।

तन्मते निर्गुणोऽपीश्वरः सगुणः, निराकारोऽपिसाकारः, अगम्योऽपि सुगमः स्वीक्रियते। न तत्र किञ्चित्परिणामो भवति। स शुद्धः सच्चिदानन्दस्वरूप एव। तथाचोक्तम्—"मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः" श्रीवल्लभाचार्यमते सांसारिकदुःखनिवृत्तये सर्वोत्तमः सरलउपायो भगवद्भक्तिरेवास्ति। एवं विभिन्नदर्शनेषु जगत्कर्तृत्वस्वरूपमपि विभिन्नं स्वीकृतमस्ति। न्यायदर्शनं वैशेषिकदर्शनं च ईश्वरं जगत्कर्तारमङ्गीकुरुत योगदर्शनं सेश्वरसांख्यञ्च पुरुषविशेषमेव संसारोत्पादकं स्वीकुरुतः, निरीश्वरसांख्यमते प्रकृतिरेव कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः, वेदान्तदर्शनन्तु ब्रह्मण एव विवर्तं जगदिति मनुते। वेदान्तस्य ब्रह्म श्रीमद्भगवद्गीतायाः पुरुषोत्तमः श्रीमद्भागवतस्य श्रीकृष्णश्च एकमेव परमं तत्त्वमस्ति। तथा चोक्तम्—श्रीमद्भागवते—

वदन्ति तत्तत्त्वविदः तत्त्वं यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥
(१, २, ११)

कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्।
जगद्धिताय सोऽप्यत्र देहीवाभाति मायया ॥

श्रीमद्भागवतं हि परमविरक्तानाममलात्मनां परमहंसानां प्रियतमो विष्णुभक्तिप्रतिपादकः सर्वश्रेष्ठो वैष्णवदर्शनग्रन्थोऽस्ति। तत्र मुख्यतया सख्यवात्सल्यमाधुर्यरसलीलायाः सविस्तरं वर्णनं विद्यते। अखिलब्रह्माण्डाधिपतिः श्रीकृष्णः गोपगोपीप्रेमपरवशः गोपालबालकैः सह क्रीडति नृत्यति गायति गाश्चारयति क्रीडायां पराजीतोभूत्वा गोपालबालकान् पृष्ठे आरोप्य समुद्वहति। अतएवोक्तम्—"पुञ्जीभूतं प्रेमगोपाङ्गनानां एकीभूतं गुप्ततत्त्वं श्रुतीनाम्। मूर्तीभूतं भागधेयं यदूनां श्यामीभूतं ब्रह्म मे सन्निधत्ताम्" वेदान्तसिद्धान्तानुसारं अविद्यानाशात् कैवल्यमुक्तिर्भवति। अविद्या नाशश्च जायते पराविद्यया ज्ञानेन वा ज्ञानस्योदयो भवति, अन्तःकरणशुद्धया। अन्तःकरणशुद्धिश्च निष्कामकर्मणा, निष्कामकर्मप्रवृत्तिश्च श्रवणमननादिभिर्जायते। अतोऽविद्यानिवृत्तिपूर्वकं ब्रह्मोपलब्धये श्रवणमननादीनामनुष्ठानमत्यावश्यकम्। आनन्दघनं भगवन्तं लब्ध्वा न पुनर्जीवः पुनर्जन्मचक्रे परिवर्तते। तथा च श्रुतिः–'न स पुनरावर्तते न स पुनरावर्तते'। गीतायाञ्च—

यद्गत्वा न निवर्तन्ते तद्धाम परमं मम।

श्रीमद्भागवतेऽज्ञानकल्पितासत्यरूपपरित्यागपूर्वकं स्ववास्तविकस्वरूपेणावस्थितिर्मुक्तेर्लक्षणम्। तथाहि "मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः" (२,१०,६) मुक्तिः पञ्चधा-सालोक्य-सार्ष्टि सामीप्य-सारूप्य-सायुज्यभेदात्। तत्र भगवतो नित्यचिन्मयधाम्नि स्थितिः सालोक्यमुक्तिः-प्रोच्यते भगवत्तुल्यैवप्राप्तिः सार्ष्टि मुक्तिः कथ्यते। भगवत्सानिध्येऽवस्थितिः सामीप्यमुक्तिर्निगद्यते। भगवत्स्वरूपप्राप्तिः सारूप्यमुक्तिः। भगवत्स्वरूपावस्थितिः सायुज्यमुक्ति' स्वीक्रियते। श्रीमद्भागवतानुसारं भगवतः परमभक्ताः—पञ्चस्वपि मुक्तिषु नैकामपि मुक्तिं वाञ्छन्ति किन्तु सर्वदा अनन्यभावेन भगवत्सेवासम्पादनमेवाभिलषन्ति। परमकृपालुना भगवता दीयमानामपि मुक्तिं न गृह्णन्ति ते। तथाहि श्रीमद्भागवते—

न किंचित् साधवो धीरा भक्ता ह्येकान्तिनो मम।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥
(११,२०,३४)

श्रीमद्भागवते प्रायः सर्वेषां दर्शनानां सिद्धान्ताः स्वीकृताः। श्रीमद्भागवते प्रधानतया दशानां तत्त्वानां वर्णनमस्ति। तत्र मुख्यतमं तत्त्वम्, आश्रयतत्त्वमेवास्ति। आश्रयतत्त्वञ्च शरणागतवत्सलो भगवानेवास्ति। तदुपलब्धये एवान्येषां नवानां तत्त्वानां वर्णनं जातम्।

यद्यपि प्रतिस्कन्धं श्रीमद्भागवते आश्रयतत्त्वस्य निरूपणं दृश्यते, तथापि सगुणं साकारमाश्रयतत्त्वं दशमस्कन्धे निर्गुणनिराकारमाश्रयतत्त्वञ्च द्वादशस्कन्धे विशेषतो निरूपितम्।

श्रीमद्भागवतस्य श्रुतिभिः यावान् घनिष्ठः सम्बन्धो वर्तते न तावान् अन्येषां पुराणानाम्। कतिपयशब्दपरिवर्तनपूर्वकं बहूनां श्रुतीनां तदर्थानाञ्च तत्र स्पष्टतयोल्लेखोऽस्ति। बहूनि श्रीमद्भगवद्गीतापद्यानि ब्रह्मसूत्रसूत्राणि च श्रीमद्भागवते मिलन्ति। प्रस्थानत्रये यत्किमपि तत्त्वं प्रतिपादितमस्ति तत्सर्वं श्रीमद्भागवते उपनिबद्धमुपलभ्यते। अतएव श्रीमद्भागवतं श्रुतीनां सारः महाभारततात्पर्यनिर्णायकं ब्रह्मसूत्रभाष्यञ्चोच्यते। श्रीमद्वल्लभाचार्यचरणास्तु श्रीमद्भागवतं चतुर्थं प्रस्थानं स्वीकुर्वन्ति।

सर्ववेदान्तसारे श्रीमद्भागवते समासक्तचेतसो विदुषो नान्यत्र मनः सजते, तथाचोक्तं भगवता व्यासदेवेन—

सर्ववेदान्तसारं हि श्रीमद्भागवतमिष्यते।
तद्रसामृततृप्तस्य नान्यत्र स्याद् रतिः क्वचित् ॥

यथा पक्षविहीनाः पक्षिशावका मातरं प्रतीक्षन्ते बुभुक्षिता वत्सा मातुर्दुग्धं पातुमातुरा भवन्ति, यथा वा वियोगिनी वनिता प्रवासिना प्रियतमेन मिलितुमुत्कण्ठिता भवति तथैव भगवन्तं द्रष्टुं भक्तहृदयं विह्वलं भवति (६, ११, २६)

वाञ्छाकल्पतरुर्भगवान् भक्तानां मनोरथानवश्यं पूरयति। श्रीकृष्णसन्देशमादाय वृन्दावनमुपगम्य तत्र तद्वियोगविह्वलानां गोपीनामपूर्वं प्रेम पर्यालोच्योद्धवस्य मनसि शङ्काऽजायत यत किं भगवान् स्वभक्तान् परित्यजति ? इमामुद्धवस्याशङ्कामपनेतुमेव कुब्जागृहे गत्वा भगवान् श्रीकृष्णः प्रादर्शयत् यत् यदाहं भक्तिमतीं कुब्जामपि न परित्यजामि तर्हि परमभक्तानां गोपीनां परित्यागं कर्तुं कथं शक्नुयाम्।

सौरन्ध्रीमपि संत्यक्तुमहं शक्तोऽस्मि नोद्धव ।
किमुत व्रजलोकांस्तानिति व्यञ्जन्निमामगात् ॥

श्रीमद्भागवतानुसारं केवलं शारीरिकं सान्निध्यं सान्निध्यं नास्ति ; किन्तु मनस एव मुख्यं सान्निध्यमपेक्षितं यत्र हार्दिकं प्रेम विद्यते तत्रैव सान्निध्यमस्ति। प्रेम विना शारीरिकं सान्निध्यं व्यर्थमेव प्रतीयते। गोपीनां-हृदयेषु सत्यं प्रेम आसीत्। अतस्तत्र सत्यं सान्निध्यमासीत्। संयोगापेक्षया वियोगेऽधिकं मानसं सान्निध्यं जायते। यतो हि संयोगे प्रियतमसान्निध्यं सीमितं भवति; किन्तु वियोगे सर्वदैव प्रियतमस्य स्मरणं चिन्तनं दर्शनञ्च जायते। दूरे वर्तमानस्य कृष्णस्य हृदये गोपिका आसन् तासां हृदये च स आसीत्। अत एव तासां हृदि प्रसृतं प्रेमपयोनिधिं पर्यवेक्ष्य प्रेमगद्गदेनोद्धवेनोक्तम्-

आसामहो चरणरेणुजुषामहं स्यां
वृन्दावने किमपि गुल्मलतौषधीनाम्।
या दुस्त्यजं स्वजनमार्यपथं च हित्वा
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्
(१०-४७-६१)

कीर्तनभक्तिशिरोमणिः श्रीचैतन्यमहाप्रभुः स्वगौडीय-सम्प्रदायप्रचारं श्रीमद्भागवतानुसारमेव समारब्धवान्। तस्य मुख्यमुद्देश्यमासीत् भगवन्नामगुणकीर्तनद्वारा भगवद्भक्तिप्रचारः। तेन द्वैताद्वैतयोः समन्वयाय महान् प्रयासो विहितः। तदनुसारं भगवन्नाम एवं संकीर्तनीयं येन नेत्राभ्यामश्रुधारा प्रवहेत् वाणीगद्गदा भवेत्, सर्वाङ्गञ्च पुलकितं स्यात्।

हरे राम हरे राम राम राम हरे हरे !
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे !

इति महामन्त्रो भगवन्नामसु सर्वश्रेष्ठः स्वीकृतः। किञ्च तस्य निम्नाङ्किताश्चत्वारः सिद्धान्ता अतिप्रसिद्धाः सन्ति। (१) ब्रह्म सर्वभेदशून्यमस्ति; किन्तु सच्चिदानन्द-स्वरूपतया तस्य शक्तिस्त्रिधाऽभिव्यज्यते। प्रथमा सन्धिनी शक्तिः, द्वितीया संवित्-शक्तिः, आह्लादिनी शक्तिश्च तृतीया। तत्र सन्धिनीशक्तिबलेन स्वयं तिष्ठति भगवान् अन्यांश्च स्थापयति। संवित्-शक्त्या स्वयं जानाति भक्तांश्च बोधयति। आह्लादिनीशक्त्या च स्वयमानन्दमनुभवति भक्तांश्चानन्दयति।

(२) भगवन्तमनुकूलयितुं दृढेन प्रेम्णा तद्भक्तिसम्पादनमेव सरल उपायः।

(३) निष्कामकर्मणा चित्तशुद्धिर्भवति ततो ज्ञानं समुद्भवति तेन च दृढाभक्तिः समुज्जृम्भते।

(४) मुक्तेरेकमात्रं साधनञ्च भगवच्चरणारविन्दे आत्मसमर्पणमेवास्ति।

चैतन्यमहाप्रभुणा हि ब्रह्मसूत्रनिर्दिष्टनिम्नाङ्कितभागवतश्लोकसिद्धान्तानुसारमेवात्मनो मतं प्रचारितम्—

स वै पुंसां परोधर्मो यतो भक्तिरधोक्षजे।
अहैतुक्यप्रतिहता ययाऽऽत्मा सम्प्रसीदति ॥ (१,२,६)
नैष्कर्म्यमप्यच्युतभाववर्जितं
न शोभते ज्ञानमलं निरञ्जनम्।

कुतः पुनः शश्वदभद्रमीश्वरे
न चार्पितं कर्म यदप्यकारणम् ॥ (१,५,१२)
स सर्वधीवृत्त्यनुभूतसर्व
आत्मा यथा स्वप्नजनेक्षितैकः ।
तं सत्यमानन्दनिधिं भजेत
नान्यत्र सज्जेद् यत आत्मपातः ॥ (२,१,३९)
एवं स्वचित्ते स्वत एव सिद्ध
आत्मा प्रियोऽर्थो भगवाननन्तः ।
तं निर्वृतो नियतार्थो भजेत
संसारहेतूपरमश्च यत्र ॥ (२,६,६)

येऽन्येऽरविन्दाक्ष विमुक्तमानिन-
स्त्वय्यस्तभावादविशुद्धबुद्धयः ।
आरुह्य कृच्छ्रेण परं पदं ततः
पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥ (१०,२,३२)

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥(११,२०,३१)
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथंचिद् यदि वाञ्छति ॥(११,२०,३३)

एषां पद्यानां पर्यालोचनया सिद्ध्यति यत् श्रीमद्भागवतमद्वैततत्त्वमेव स्पष्टं शब्दैः प्रतिपादयति । तदेकमद्वितीयं परमार्थतत्त्वं ज्ञानिभिः ब्रह्मयोगिभिः परमात्मा भक्तैश्च भगवानित्युच्यते तदेव निर्गुणं सगुणञ्चोच्यते । तदेव ब्रह्म भक्ताभिलाषपूरणाय विभिन्नेषु रूपेष्ववतीर्य लोकानानन्दयति शिक्षयति च । भगवतोऽचिन्त्या शक्तिर्मायास्ति मायासन्तरणाय भगवद्भक्तिरेव परमं साधनम् ।

इह खलु संसारे सुखं मे शाश्वतं भूयात् दुःखञ्च कदाचिन्माभूत् इति बुद्ध्या दुःखं हातुं सुखञ्चोपलब्धुं सततमभिलषति प्राणिमात्रम् । नहि कोऽपि विवेकीस्वल्पे सुखमनुभवति सर्वोऽपि जनोऽधिकादधिकमेव सुखं वाञ्छति । यावदनन्तं सुखं न लभते, तावत् प्रयतमान एव तिष्ठति । तथा चाह-भगवती छान्दोग्यश्रुतिः "नाल्पे सुखमस्ति भूमैव सुखम् ।"

एवञ्च भगवत्साक्षात्कारस्वरूपमेवात्यन्तिकमनन्तं सुखमेव जीवस्य वास्तविकं लक्ष्यं चरममुद्देश्यं मानवशरीरलाभस्य फलञ्चास्ति । आत्यन्तिकं निरतिशयं सुखमेव मोक्षः, मुक्तिः, परमपुरुषार्थः, निःश्रेयश्चोच्यते । एतल्लब्ध्वा जीवः कृतकृत्यो भवति, न तस्य किञ्चित्कर्तव्यमवशिष्यते । एतदेव सुखस्य चरमा परमा च गतिरस्ति । तथा चोक्तं वेदे—

'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।' श्रीमद्भगवद्गीतायामपि—

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥

यद्यपि "आपामसोमममृता अभूम" इति श्रुत्या सोमपानादिभिः लभ्यस्य स्वर्गादेरपि सुखसाधनत्वं प्रतीयते तथापि "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति गीतावाक्यानुसारं भोगेन पुण्यानां क्षयात्स्वर्गाच्च्युतिदर्शनान्न तदात्यन्तिकं सुखसाधनं मन्यन्ते विद्वांसः ।

वेदान्तसिद्धान्तानुसारं ब्रह्मैव पूर्णसुखस्वरूपं निरतिशयानन्दरूपमस्ति । अभेदोपासनया तत्साक्षात्कृत्य जीवः सर्वदुःखविनिर्मुक्तो भूत्वा परमानन्दं विन्दते शाश्वतीं च शान्तिं लभते ।

भेदोपासनया च परमात्मनः साक्षात्कारं सम्पाद्य जन्ममृत्युबन्धन-क्लेशरहितो जीवः सगुणस्य भगवतो नित्यलीलाधाम्नि अप्राकृतेन शरीरेण निवसन् भगवत्-सान्निध्यसुखमनुभवति । अतः भगवत्स्वरूपसाक्षात्कारमन्तरा न किमप्यस्ति वास्तविकं सुखम् । "कर्मभिर्भगवद्भक्ति भवतीशकृपा तथा । ज्ञानं तेन विमुक्तिश्च मोक्षधर्मार्थसंग्रहः" । इति वचनानुसारं मुक्तेः प्रधानतया त्रीणि

साधनानि सन्ति, निष्कामकर्म ज्ञानं भक्तिश्चेति। तेषु ज्ञानस्य कृपाणधारासमानत्वेन सर्वसुलभत्वाभावात्। निष्कामकर्मणश्च कष्टसाध्यत्वाद्भक्तिरेव सर्वसाध्या सुभगा सुलभा च प्रतीयते। सत्ययुगादौ ज्ञानवैराग्ययोः मोक्षसाधकत्वेऽपि कलियुगे भक्तेरेव प्राधान्यमस्ति। तथा चोक्तं पद्मपुराणे—

सत्यादित्रियुगे बोधवैराग्यौ मुक्तिसाधकौ।
कलौ तु केवलं भक्तिर्ब्रह्मसायुज्यकारिणी।

श्रीमद्भागवतमाहात्म्येऽपि—

न तपोभिर्न वेदैश्च न ज्ञानेनापि कर्मणा।
हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिकाः।

अथ भक्तेः किं स्वरूपमिति भक्तिलक्षणम्-प्राह महर्षिशाण्डिल्यः "सा परानुरक्तिरीश्वरे।"

अङ्गिराश्च—"सानुरागरूपा,। नारदपञ्चरात्रे तु

सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम्।
हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते॥

किञ्च—अनन्यममता विष्णौ ममता प्रेमसङ्गता।
भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैः॥

भक्तिरसायने च—

द्रुते चित्ते प्रविष्टाया गोविंदाकारता स्थिरा।
सा भक्तिरित्यभिहिता।

एभिर्वचनैरिदं ज्ञायते यत् भगवति, अनन्यं प्रेमैव भक्तिरस्ति। भज सेवायामिति धातोः क्तिन्प्रत्ययेन निष्पन्नभक्तिशब्दार्थः प्रेम्णा भगवत्सेवैवास्ति। यद्यपि भगवद्भक्तौ जीवमात्रस्यास्त्यधिकारो न्याययुक्तः हनुमजाम्बवद्गरुडगजेन्द्रकाकभुसुण्डिजटायुप्रभृतीनाम् पशुपक्षिप्लवङ्गमादीनामपि भगवद्भक्त्या परमपदप्राप्तिदर्शनात्, तथापि सर्वसाधारणपशुपक्षिषु मनुष्यवत् ज्ञानसाधनयोरभावादीश्वरभक्तिं कर्तुमसमर्थतया शास्त्रकारा ईश्वरभक्तौ प्रधानतया मनुष्याणामेवाधिकारं वदन्ति। तथा च वादरायणसूत्रम्—

"शास्त्राधिकारत्वान्मनुष्यस्य"।

भगवद्भक्तौ रूपस्यायुषश्च न मूल्यमस्ति, नच विद्याया, धनस्य जातेश्चोत्कर्षोऽप्यपेक्ष्यते। न वा सदाचारस्य सद्गुणस्य च प्राधान्यमस्ति, नापि बलं मुख्यं विद्यते; किन्तु प्रेमैवानन्यं प्रतीक्षते भगवान्। तथा चोक्तं जीवगोस्वामिना भक्तिरसामृतसिन्धौ—

व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का?
का जातिर्विदुरस्य यादवपतेरुग्रस्य किं पौरुषम्?
कुब्जायाः कमनीयरूपमधिकं किं तत्सुदाम्नोधनम्?
भक्त्या तुष्यति केवलं न च गुणैर्भक्तिप्रियो माधवः।

भक्तिर्भगवतः प्राणतोऽप्यधिका प्रियाऽस्ति तथाऽभ्यर्थितो भगवान् अपावनानां गृहं पुनाति। तथा चोक्तं नारदेन भक्तिं प्रति पद्मपुराणान्तर्गत-श्रीमद्भागवतमाहात्म्ये—

त्वं तु भक्ते! प्रिया तस्य सततं प्राणतोऽधिका।
त्वयाहूतस्तु भगवान् याति नीचगृहेष्वपि॥ (२।३)

प्रगाढया भक्त्या प्रसन्नो भगवान् सर्वमपि कार्यं परित्यज्य भक्तस्य कृतेऽलौकिकं कर्म निर्वर्तयति। असम्भवञ्च कार्यं सम्भावयति। सर्वशक्तिसम्पन्नः कर्तुमकर्तुमन्यथाकर्तुं सर्वथा समर्थो भगवान् श्रीकृष्णः पाण्डवकुलनन्दनस्य धर्मराजस्य भक्तिगुणगणाकृष्टः कौरवकुलं दूरे परित्यज्य पाण्डवकुलस्य मङ्गलचिन्तायां नियतं व्यापृतो भूत्वा, अर्जुनस्य सारथ्यमपि स्वीचकार। भक्तराजस्य प्रह्लादस्योत्कृष्टया भक्त्याऽकृष्टो यत्रयत्र तस्य विपदमभिलक्षितवान् तत्र तत्र तां वारयितुं प्रववृते। मदोन्मत्तस्य करिणः पादतलेन मर्दितः शैलशिखाद्भूमौ प्रक्षिप्तः जीवनापहारकं च विषलड्डुकं मधुरमोदकत्वेन परिणमय्य भगवता परिपालितः प्रह्लादः। हरिनामस्मरणमात्रेण भक्तिरसाभिप्लुतः प्रह्लादः "क्व ते नारायणः":—इति पित्रा पृष्टः" सर्वत्रैव वर्तते मे नारायणः इत्युक्तवान्। पुनः "यदि सर्वत्रैव वर्तते ते नारायणः तदत्र स्तम्भेऽपि वर्ततां नाम"

इत्युक्तवति पितरि "बाढम्" मिति यदा प्राह प्रह्लादः, तदैव तेन सवेगमभिहतात् स्तम्भान्नारायणो नृसिंह-रूपेणाविर्भूय भक्तस्य प्रतिकूलाचारिणं हिरण्यकशिपुं नखैर्विदार्य पञ्चत्वं प्रापयामास, प्रह्लादं च तद्राज्येऽभिषिच्य भक्तस्य भगवच्चिन्तनपरस्य साहाय्यं सम्पादयामास। तथा चाह—श्रीमद्भागवते भगवान् व्यासदेवः—

सत्यं विधातुं निजभृत्यभाषितं
व्याप्तिं च भूतेष्वखिलेषु चात्मनः।
अदृश्यतात्यद्भुतरूपमुद्वहन्
स्तम्भे सभायां न मृगं न मानुषम् ॥(७।८।१८)

किञ्च पञ्चवर्षवयस्कस्य ध्रुवस्य हिंस्रश्वापदसमाकीर्णेऽरण्ये रक्षां चकार। तस्य परमया भक्त्या सन्तुष्टो भगवान् स्वकीयवैकुण्ठलोकस्याप्युपरि कञ्चिन्नूतनं लोकं तदर्थं निर्माय दर्शितवान् भक्तजने किमपि स्नेहातिरेकम्। अत एवोक्तम्-द्वापरे द्रौपदी यदा दुष्टदुःशासनेन केशेषु परिगृहीता कौरवसभायां विवस्त्रां कर्तुमभिलषिता तदैवैकान्तया भक्त्या तया—

गोविन्द! द्वारिकावासिन्! कृष्ण! गोपीजनप्रिय!
कौरवैः परिभूतां मां किं न जानासि केशव!
कौरवार्णवमग्नां मामुद्धरस्व जनार्दन!
प्रपन्नां पाहि गोविन्द! कुरुमध्येऽवसीदतीम् ॥

इत्येवमभ्यर्थितो भगवान् तस्या वसनरूपेणात्मानं परिणमय्य लज्जां परिरक्ष्य दर्शितवान् भक्तिमर्यादां प्रचारितवांश्च द्रौपद्याः पातिव्रत्यप्रकर्षम्। भक्तेः प्रणयस्य हृदयानुरागरूपस्य स्नेहस्य च दृश्यते समुत्कर्षः वृन्दावनलीलायाम्। तत्र हि परमया भक्त्या प्रणयादिना वा समाकृष्टो भगवान् श्रीकृष्णः सर्वेषामेव काम्यं फलं सम्पादयामास। बालोऽपि कृष्णः शिशुजनैरसाध्यानि कानिचित्कर्माणि सम्पाद्यात्मन ईश्वरतां दर्शितवान्।

अम्बरीषपृथुप्रभृतयो राजानः प्रेम्णा भगवन्तमर्चयित्वाऽनायासेन परमं पदं प्रापुः। सुदामा केवलैः पृथुकतण्डुलकणैः, गजेन्द्रः केवलेन पुष्पेण, शबरी च बदरीफलैरेव भगवन्तं सन्तोष्य स्वीयां स्वीयामभिलाषां पूरितवन्तः प्राप्तवन्तश्च तत्कृपया परमं पदम्। एतत्सर्वं पर्यालोच्येदं वक्तुं शक्यते यत्सत्यमुक्तं भगवता गीतायाम्—

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥

अनन्यया भक्त्या सन्तुष्टो भगवान् भक्तस्य सर्वविधां विपदं वारयति मनोरथं च सर्वं पूरयति। गोपदमिव संसारसागरमुत्तीर्य भगवद्भक्तः परमं पदं लभते। तथाह श्रीमद्भागवते—

समाश्रिता ये पदपल्लवप्लवम्
महत्पदं पुण्ययशो मुरारेः।
भवाम्बुधिर्वत्स पदं परं पदम्
पदं पदं यद्विपदां न तेषाम् ॥ (१०।१४।५८)

भगवति समासक्तो भक्तस्तद्भक्तिं लब्ध्वा न पुनः जन्ममरणचक्रचंक्रमितो भवति।

तथाहि ब्रह्मादयो देवा देवकीगर्भगतं भगवन्तं स्तुवन्ति—

शृण्वन् गृणन् संस्मरयंश्च चिन्तयन्
नामानि रूपाणि च मङ्गलानि ते।
क्रियासु यस्त्वच्चरणारविन्दयोः
आविष्टचेता न पुनर्भवाय ॥ (१०।२।३७)

**भक्तेर्भेदाः**

भक्तिस्तावद् द्विधा, गौणी पराभेदात्। गौणी पुनर्द्विधा वैधी रागात्मिका च। वैधी अपि श्रवण-कीर्तन-स्मरण-पाद-सेवन—अर्चन-वन्दन-दास्य-सख्यात्मनिवेदनरूपेण पुनर्नवधा विभज्यते—गुरूपदेशाद् विधिनिषेधानुकूलं साधनं कुर्वतो भक्तस्य हृदये प्रथमं या भक्तिरुदेति सा वैधी भक्तिरुच्यते। ततो निरन्तरम् भगवच्चरणारविन्द-

विषयिणी रागात्मिका भक्तिराविर्भवति यथा भक्तहृदये आनन्दातिरेकः संजायते तस्य मनो मधुपः प्रभुपादपद्म-मकरन्दपानमत्तः सर्वत्र प्रभुमेव पश्यन्नानन्दनिमग्नः तिष्ठति। वंशीनिनादमाकर्ण्य स्वान्तिकमुपगता गोप्यो यदा कृष्णेनोक्ता यत्—

रजन्येषा घोररूपा घोरसत्त्वनिषेविता।
प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः॥

(१०।२९।१९)

तद्यात माचिरं गोष्ठं शुश्रूषध्वं पतीन् सतीः।
क्रन्दति वत्सा बालाश्च तान् पायत दुह्यत॥

(१०।२९।२२)

तदा रागात्मिकाभक्तिरसाप्लुता एव ता भगवन्तं श्रीकृष्णमेवमुक्तवत्यः—

चित्तं सुखेन भवतापहृतं गृहेषु
यन्निर्विशत्युत करावपि गृह्यकृत्ये।
पादौ पदं न चलतस्तव पादमूलाद्-
यामः कथं व्रजमथो करवाम किम्वा॥

(१०।२९।३४)

रागात्मिकायां भक्त्या भगवत्प्रेमविह्वलो भूत्वा भक्तः उन्मत्तवन्नृत्यति रोदिति गायति हसति च। तथा चोक्तम्—

क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्
हसन्ति नन्दति वदन्त्यलौकिकाः।
नृत्यन्ति गायन्त्यनुशीलयन्त्वजं
भवन्ति तूष्णीं परमेत्य निर्वृताः॥ (११।३।३२)

अस्यामवस्थायां स्थितस्य भक्तस्य दशामेव वर्णयति भगवान् कृष्ण उद्धवं प्रति—

वाग्गद्गदा द्रवते यस्य चित्तम्
रुदत्यभीक्ष्णं हसति क्वचिच्च।
विलज्ज उद्गायति नृत्यते च
मद्भक्तियुक्तो भुवनं पुनाति॥ (११।१४।२४)

एवञ्च गुरुवाक्यशास्त्रवचनाज्ञानुसारं वैधीं भक्तिमभ्यस्यतो भक्तस्य हृदये सा रागात्मिका भक्तिरुदेति, यस्यां भक्तहृदयं सांसारिकविषयेभ्य उपरतं भूत्वा भगवति लीनं भवति। एतत् परिपक्वदशायाः परिणामः एव पराभक्तिः। यस्यामहंकारदेहात्मभावौ नश्यतः सर्वात्मदृष्टिश्च जायते। तथा चोक्तं श्रीशङ्कराचार्यपादैः—

सम्पूर्णं जगदेव नन्दनवनं सर्वेऽपि कल्पद्रुमाः
गांगंवारि समस्तवारिनिवहः पुण्याः समस्ता क्रियाः
वाचः प्राकृतसंस्कृताः श्रुतिगिरो वाराणसी मेदिनी
सर्वावस्थितिरस्य वस्तुविषया दृष्टे परे ब्रह्मणि॥

के भक्तेः गुणा इति जिज्ञासायां प्राह भगवान् व्यासः—

क्लेशघ्नी शुभदा मोक्षलघुताकृत् सुदुर्लभा।
सान्द्रानन्द विशेषात्मा श्रीकृष्णाकर्षणी च सा॥

स्कन्दपुराणे च

अन्तः शुद्धिर्बहिः शुद्धिः तपः शान्त्यादयस्तथा।
अमी गुणाः प्रपद्यन्ते हरिसेवाभिकामिनम्॥

तस्मादात्मकल्याणकामिभिः पुरुषैर्भगवत्स्वरूपसाक्षात्कारात्मकमुक्तिप्राप्तये तत्साधनत्वेनोपयोगिनी भगवद्भक्तिरवश्यमनुष्ठेया समाहरणीया च सा सर्वदा।

## नवधाभक्तिः

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥

(१) तत्र भगवद्गुणगाथायाः श्रवणं नाम श्रवणभक्तिः। सा च सर्वधर्मेभ्यः श्रेष्ठा स्वीकृताऽस्ति। यतो हि भगवतो गुणानुवादश्रवणेन तत्प्राप्तिरवश्यं भवति। तथा चोक्तं श्रीमद्भागवते अध्याये—

श्रवणं सर्वधर्मेभ्यो वरं मन्ये तपोधनाः!
वैकुण्ठस्थो यतः कृष्णः श्रवणादेव लभ्यते॥

महाराजः परीक्षित् श्रवणभक्तिप्रभावेणैव परमात्मानं प्राप्तवान्। तद्यथा—

असारे संसारे विषयविषसंगाकुलधियः
क्षणार्धं क्षेमार्थं पिवत शुकगाथाऽतुलसुधाम्।
किमर्थं व्यर्थं भो! व्रजत कुपथे कुत्सितपथे
परीक्षित्साक्षी यच्छ्रवणगतमुक्त्युक्तिकथने॥

महापापी धुन्धुकारी अपि भगवतो गुणानुवादश्रवणप्रभावेणैव संसारसागरादुत्तीर्णः महादुर्वृत्तोऽजामिलस्तु नारायणशब्दोच्चारणेनैव यमपाशाद्विमुक्तः। अत एवोक्तम्—

अशेषसंक्लेशशुभं विधत्ते गुणानुवादश्रवणं मुरारेः।
कुतः पुनस्तच्चरणारविन्द परागसेवारतिरात्मलब्धा॥
(३।७।१४)

अतो मनुष्याणां कृते श्रवणादन्यः कोऽपि नास्ति भगवत्प्राप्तिसाधकः सुगमः पन्थाः।

(२) भगवच्चरित्रकीर्तनं भक्तिः नामकीर्तनं श्रीमद्भागवते यथा—

संकीर्त्यमानो भगवाननन्तः श्रुतानुभावो व्यसनं हि पुंसः।
प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः॥
इत्थं हरेर्भगवतो रुचिरावतार-
वीर्याणि बालचरितानि च शन्तमानि।
अन्यत्र चेह च श्रुतानि गृणन् मनुष्यो-
भक्तिं परां परमहंसगतौ लभेत॥ ११,३१,२८

श्रीमद्भगवद्गीतायां कीर्तनासक्तो भक्तः सर्वश्रेष्ठत्वेनाभिहितं भगवता—

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः॥
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।
भविता न च मे तस्मादन्यः प्रियतरो भुवि॥

(३) भगवच्चरणारविन्दादिस्मरणात्मिका स्मरणभक्तिः श्रीमद्भागवते, यथा—

अविस्मृतिः कृष्णपदारविन्दयोः
क्षिणोत्यभद्राणि शमं तनोति च।
सत्त्वस्य शुद्धिं परमात्मभक्तिं
ज्ञानं च विज्ञानविरागयुक्तम्॥ १२,१२,५४

विष्णुसहस्रनामस्तोत्रेऽपि—

यस्य स्मरणमात्रेण जन्मसंसारबन्धनात्।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे॥

श्रीमद्भगवद्गीतायां च भगवान् श्रीकृष्णः; स्मरणभक्त्याऽऽत्मनः सुलभत्वं दर्शितवान्—

अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याऽहं सुलभः पार्थ! नित्यमुक्तस्य योगिनः॥

(४) भगवत्पादाब्जसेवनं सेवनभक्तिः, श्रीमद्भागवते यथा—

यत्पादसेवाभिरुचिर्मनस्विना-
मशेषजन्मोपचितं मलं धियः।
सद्यः क्षिणोत्यन्वहमेधती सती
यथा पदाङ्गुष्ठविनिःसृता सरित्॥

भगवतो रामस्य चरणारविन्दरजसाङ्कितां भूमिं पश्यतो भरतस्य तन्मयतां वर्णयन् भगवान् शिवः भगवतीं पार्वतीं प्रति प्राह-अध्यात्म-रामायणे—

स तत्र वज्राङ्कुशवारिजाञ्चित-
ध्वजादिचिह्नानि पदानि सर्वतः।
ददर्श रामस्य भुवेऽतिमङ्गला
न्यचेष्टयत्पादरजःसु सानुजः॥ २,९,२
अहोसुधन्योऽहममूनि राम-
पादारविन्दाङ्कितभूतलानि।
पश्यामि यत्पादरजोविमृग्यं
ब्रह्मादि देवैः मुनिभिश्च नित्यम्॥ २,९,३

अहल्या भगवतो रामस्य चरणरजसा स्पृष्टा सती सचेतना भूत्वा पुलकितसर्वाङ्गा हर्षाश्रुजलनयना राजीवलोचनं भगवन्तं श्रीरामं स्तौति—

अहो! कृतार्थास्मि जगन्निवास! ते
पादाब्जसंलग्नरजःकणादहम्।

स्पृशामि यत्पद्मजशङ्करादिभि-
विंमृग्यते रन्धितमानसैः सदा ॥ १,५,४३

यत्पादपङ्कजपरागपवित्रगा
भागीरथी भवविरञ्चिमुखान् पुनाति ।
साक्षात्स एव मम हग्विषयो यदास्ते
किं वर्ण्यते मम पुराकृतभागधेयम् ॥ १,५,५४

(५) पाषाणादि निर्मिताया भगवन्मूर्तेः पूजनम् अर्चनभक्तिः। सा च भगवतोऽतिप्रीतिकारिणी विद्यते। भगवतोऽर्चनेन भक्तानां हृदये प्रसन्नता भवति तथा भगवद्भावप्रीतिश्च शनैः शनैः समुदेति। तथाहि श्रीमद्भागवते व्यासदेवः—

श्रीविष्णोरर्चनं ये तु प्रकुर्वन्ति नराः भुवि ।
ते यान्ति शाश्वतं विष्णोरानन्दं परमं पदम् ॥

अर्चनभक्त्या स्वर्गापवर्गसंप्राप्तिः समाप्तसिद्धिलोभश्च नायासेन भवति—

स्वर्गापवर्गयोः पुंसां रसानां भुवि मानसम् ।
सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥

श्रीमद्भगवद्गीतायामपि भगवान् श्रीकृष्णः—

यतः प्रवृत्ति भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमर्च्य सिद्धिं विन्दति मानवः ॥

(६) भगवच्चरणारविन्दयोर्वन्दनं वन्दनभक्तिरुच्यते, तथा भक्तेषु अहंकारापनयनद्वारा भगवद्भावस्योदयो भवति। तथा चोक्तं श्रीमद्भागवते—

ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम्
भृत्यार्तिहं प्रणतपाल भवाब्धिपोतं ।
वन्दे महापुरुष ! ते चरणारविन्दम् ॥ ११,५,३३

एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥

भीष्मस्तवराजे च—

एतावदुक्त्वा वचनं भीष्मस्तद्गतमानसः ।
नम इत्येव कृष्णाय प्रणाममकरोत्तदा ॥

(७) दासवत् सर्वतोभावेन भगवद्भक्तिसम्पादनम् दास्यभक्तिः, यत्र भगवत्सेनाभ्यासद्वारा भक्तहृदयतोभिमानापनयनं भवति भक्तो भगवन्तमेव सर्वश्रेष्ठं मनुते। तथा चोक्तं श्रीमद्भागवते—

न वासुदेवात्परमस्ति मङ्गलं न वासुदेवात्परमस्ति पावनम् ।
न वासुदेवात्परमस्ति दैवतं तं वासुदेवं प्रणमन्न सीदति ॥

(८) भगवन्तं सखायं मत्वा तदनुकूलाचरणम् सख्यभक्तिः—अत्र भगवत्सखिरूपेण भक्तहृदये मधुरमयस्य प्रेम्णो विकाशो जायते। सख्यभक्तिप्राप्तै भगवत्प्रेमिभिः सखिभिः सह संगः तेषां चरित्रस्याध्ययनमत्यावश्यकमस्ति। तथा हि श्रीमद्भागवते—

अहोभाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् ।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥
(१०,१४,३२)

किञ्च सख्युः सुदाम्नः सेवापरस्य भगवतः श्रीकृष्णस्यावस्थां वर्णयति व्यासदेवः—

सख्युः प्रियस्य विप्रर्षे रङ्गसङ्गातिनिर्वृतः ।
प्रीतो व्यमुञ्चदब्बिन्दून् नेत्राभ्यां पुष्करेक्षणः ॥
(१०,८०,१६)

अथोपवेश्य पर्यङ्के स्वयं सख्युः समर्हणम् ।
उपहृत्यावनिज्यास्य पादौ पादावनेजनैः ॥
अग्रहीच्छिरसा राजन् भगवाल्लोकपावनः ।
व्यलिम्पद् दिव्यगन्धेन चन्दनागुरुकुंकुमैः ॥

(९) भगवति आत्मसर्वस्वसमर्पणम् आत्मनिवेदनभक्तिः—आत्मनिवेदनद्वारा भक्तानां शारीरिकी वाचनिकी मानसिकी च सकलाचेष्टाभगवद्भावमयी भवति। तदा भक्तानां हृदये भगवद्विषयेऽपूर्वादिव्यरागस्य

विकासो भवति। भक्त आत्मनः सर्वं वस्तु भगवदर्थमेव मनुते।

तथा हि श्रीमद्भागवते--

स वै मनः कृष्णपदारविन्दयो र्वचांसि वैकुण्ठ गुणानुवर्णने।
करौ हरे मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये॥
(९,४,१८)

घ्राणञ्च तत्पादसरोजसौरभे श्रीमत्तुलस्यां रसनातदर्पिते।
पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने॥
(९,४,१९)

नवविधासु आसु भक्तिषु एकविधया अपि भक्त्या भगवन्तं साक्षात्कृत्य भक्तः अनायासेन संसारसागरादुत्तर्तुं शक्नोति किं पुनः प्रह्लाद इव यत्र नवधापि भक्तिर्भवेत्। अतः प्रेम्णा भगवतो भक्तिर्विधेया, ययान्तेऽवश्यं कल्याणं भवेत्।

अत एव पद्मपुराणस्थश्रीमद्भागवतमाहात्म्ये भगवद्भक्तानामेवं प्राशस्त्यमुक्तम्।

निखिलभुवनमध्ये निर्धनास्तेऽपि धन्याः
निवसति हृदि येषां श्रीहरेर्भक्तिरेका।
हरिरपि निजलोकं सर्वथातो विहाय
प्रविशति हृदि तेषां भक्तिसूत्रोपनद्धः॥

नवधा भक्तिवर्णनप्रसङ्गे श्रीरूपगोस्वामिना नवानामपि भक्तीनामेकैकमुदाहरणं प्रदाय तत्फलं श्रीकृष्णपदारविन्दप्राप्तिरेव प्रतिपादितम् तथाहि—

श्रीविष्णोः श्रवणे परीक्षिदभवद् वैयासकिः कीर्तने।
प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने॥
अक्रूरस्त्वभिवादने कपिपति र्दास्येऽथ सख्येऽर्जुनः।
सर्वस्वात्मनिवेदने बलिरभूत्कृष्णाप्तिरेषां परम्॥

तस्मात् भक्तिज्ञानविरागसम्पादनद्वारा परमतत्त्वपुरुषोत्तमप्राप्तावेव श्रीमद्भागवतस्य तात्पर्यं प्रतीयते। अत एव पद्मपुराणान्तर्गतश्रीमद्भागवतमाहात्म्ये भक्तिज्ञानविरागाणां सुखमुत्पद्यते कथम् इति देवर्षिनारद प्रश्ने—

सत्कर्मसूचको नूनं ज्ञानयज्ञः स्मृतो बुधैः।
श्रीमद्भागवतालापः स तु गीतशुकादिभिः॥ (२,६०)
इदं भागवतं नाम पुराणं ब्रह्मसम्मितम्।
भक्तिज्ञानविरागाणां स्थापनाय प्रकाशितम्॥
(२,७१)

इत्यादिना कुमाराणामुत्तरं संगच्छते। अत एव च भगवता श्रीशुकदेवमुनिनाऽपि सिद्धान्तितम्—

श्रीमद्भागवतं पुराणतिलकं यद्वैष्णवानां धनं
यस्मिन् पारमहंस्यमेवममलं ज्ञानं परं गीयते।
यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतम्
तच्छृण्वन् प्रपठन् विचारणपरो भक्त्या विमुच्येन्नरः॥
(६,८,२)

किञ्च—

कृष्णप्रियं सकलकल्मषनाशनं च
मुक्त्यैकहेतुमिह भक्तिविलासकारि।
सन्तः कथानकमिदं पिबतादरेण
लोके हि तीर्थपरिशीलनसेवया किम्॥ (६,९,८)

अपि च—

नृदेहमाद्यं सुलभं सुदुर्लभं
प्लवं सुकल्पं गुरुकर्णधारम्।
मयानुकूलेन नभस्वतेरितं
पुमान् भवाब्धिं न तरेत् स आत्महा॥ (११,२०,१७)

———

# नारदप्रोक्तं भक्ति-सूत्रम्

ले०—विद्यावारिधिः श्रीदेवीनारायण एडवोकेटः वाराणसीस्थः

देवर्षिनारद :—

देवदत्तामिमां वीणां स्वरब्रह्म विभूषिताम् ।
मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम् ॥
अहो देवर्षिधन्योऽयं यत्कीर्तिं शार्ङ्गधन्वनः ।
गायन्माद्यन्निदं तन्त्र्या रमयत्यातुरं जगत् ॥ श्रीमद्भागवते ॥
श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।
वसन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥
गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्द्ध्वज्वलनं हविर्भुजः ।
पतत्यधो धाम विसारिसर्वतः किमेतदित्याकुलमीक्षितं जनैः॥
चयस्त्विषामित्यवधारितं पुरा,
ततः शरीरीति विभाविताकृतिम् ।
विभुर्विभक्तावयवं पुमानिति
क्रमादमुं नारद इत्यबोधि सः । (माघे)

अथातो भक्तिं व्याख्यास्यामः ॥१॥

अस्मिन्नादिमे सूत्रेऽथशब्दो मङ्गलार्थः प्रयुक्तः ।
"ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥
इति स्मृतिवचनात्तस्य माङ्गलिकत्वम् ॥

सा त्वस्मिन् परमप्रेमरूपा ॥२॥

अमृतस्वरूपा च ॥३॥

यल्लब्ध्वा पुमान् सिद्धो भवत्यमृतो भवति तृप्तो भवति ॥४॥

यत्प्राप्य न किंचिद्वांछति, न शोचति न द्वेष्टि, न रमते, नोत्साही भवति ॥५॥

यज्ज्ञात्वा मत्तोभवति, स्तब्धोभवति, आत्मारामोभवति ॥६॥

सा न कामयमाना निरोधस्वरूपत्वात् ॥७॥

निरोधस्तु लोकवेदव्यापारन्यासः ॥८॥

तस्मिन्ननन्यता तद्विरोधिषूदासीनता च ॥९॥

अन्याश्रयाणां त्यागोऽनन्यता ॥१०॥

लोकवेदेषु तदनुकूलाचरणं तद्विरोधिषूदासीनता च ॥११॥

भवतु निश्चयदार्ढ्यादूर्ध्वं शास्त्ररक्षणम् ॥१२॥

अन्यथा पातित्याशङ्का ॥१३॥

लोकोऽपि तावदेव किन्तु भोजनादिव्यापारस्त्वाशरीरधारणावधि ॥१४॥

## भक्तिलक्षणम्

तल्लक्षणानि वाच्यन्ते नानामतभेदात् ॥१५॥

पूजादिष्वनुराग इति पाराशर्यः ॥१६॥

कथादिष्विति गर्गः ॥१७॥

आत्मरत्यविरोधेनेति शाण्डिल्यः ॥१८॥

नारदस्तु तदर्पिताखिलाचारता तद्विस्मरणे परमव्याकुलतेति ॥१९॥

अस्त्येवमेवम् ॥२०॥

यथा व्रजगोपिकानाम् ॥२१॥

तत्रापि न माहात्म्यज्ञानविस्मृत्यपवादः ॥२२॥

तद्विहीनं जाराणामिव ॥२३॥

नास्त्येव तस्मिंस्तत्सुखसुखित्वम् ॥२४॥

## भक्तिसाधनविचारः

सा तु कर्मज्ञानयोगेभ्योप्यधिकतरा ॥२५॥

फलरूपत्वात् ॥२६॥

ईश्वरस्याप्यभिमान-द्वेषित्वाद्दैन्यप्रियत्वाच्च ॥२७॥

तस्या ज्ञानमेव साधनमित्येके ॥२८॥

अन्योन्याश्रयत्वमित्यन्ये ॥२९॥

स्वयं फलरूपतेति ब्रह्मकुमारः ॥३०॥

राजगृहभोजनादिषु तथैव दृष्टत्वात् ॥३१॥

न तेन राजपरितोषः क्षुच्छान्तिर्वा ॥३२॥

तस्मात्सैव ग्राह्या मुमुक्षुभिः ॥३३॥

तस्याः साधनानि गायन्त्याचार्याः ॥३४॥

तत्तु विषयत्यागात्संगत्यागाच्च ॥३५॥

अव्यावृतभजनात् ॥३६॥

लोकेऽपि भगवद्‌गुणश्रवणकीर्तनात् ॥३७॥

मुख्यतस्तु महत्कृपयैव भगवत्कृपालेशाद्वा ॥३८॥

महत्सङ्गस्तु दुर्लभोऽगम्योऽमोघश्च ॥३९॥

लभ्यतेऽपि तत्कृपयैव ॥४०॥

तस्मिंस्तज्जने भेदाभावात् ॥४१॥

तदेव साध्यतां तदेव साध्यताम् ॥४२॥

## दुःसंगः त्याज्यः

दुःसंगः सर्वथैव त्याज्यः ॥४३॥

कामक्रोधमोहस्मृतिभ्रंशबुद्धिनाशकारणत्वात् ॥४४॥

तरङ्गायिता अपीमे सङ्गात्समुद्रायन्ति ॥४५॥

## महामायाविजयः

कस्तरति कस्तरति मायां ? यः सङ्गांस्त्यजति, यो महानुभावं सेवते, निर्ममो भवति ॥४६॥

यो विविक्तस्थानं सेवते, यो लोकबन्धनमुन्मूलयति निस्त्रैगुण्यो भवति, यो योगक्षेमं त्यजति ॥४७॥

यः कर्मफलं त्यजति, कर्माणि संन्यसति, ततोनिर्द्वन्द्वो भवति ॥४८॥

यो वेदानपि संन्यसति केवलमविच्छिन्नानुरागं लभते ॥४९॥

स तरति स तरति स लोकांस्तारयति ॥५०॥

## पराभक्तिः गौणीभक्तिश्च

अनिर्वचनीयं प्रेमस्वरूपम् ॥५१॥

मूकास्वादनवत् ॥५२॥

प्रकाश्यते क्वापि पात्रे ॥५३॥

गुणरहितं कामनारहितं प्रतिक्षणवर्द्धमानमविच्छिन्नं सूक्ष्मतरमनुभवरूपम् ॥५४॥

तत्प्राप्य तदेवावलोकयति, तदेव शृणोति, तदेव चिन्तयति ॥५५॥

गौणी त्रिधा गुणभेदादार्तादि भेदाद्वा ॥५६॥

उत्तरस्मादुत्तरस्मात्पूर्वं श्रेयाय भवति ॥५७॥

## भक्तिसुलभता

अन्यस्मात् सौलभ्यं भक्तौ ॥५८॥

प्रमाणान्तरस्यानपेक्षत्वात् स्वयं प्रमाणत्वात् ॥५९॥

शान्तिरूपात्परमानन्दरूपाच्च ॥६०॥

## साधकस्य साधना

लोकहानौ चिन्ता न कार्या निवेदितात्मलोक-वेदत्वात् ॥६१॥

न तदसिद्धौ लोकव्यवहारो हेयः किन्तु फलत्यागस्तत्साधनंच का मेव ॥६२॥

स्त्रीधननास्तिकचरित्रं न श्रवणीयम् ॥६३॥

अभिमानदम्भादिकं त्याज्यम् ॥६४॥

तदर्पिताखिलाचारः सन् कामक्रोधाभिमानादिकं तस्मिन्नेव करणीयम् ॥६५॥

## भक्तगौरवः

त्रिरूपभङ्गपूर्वकं नित्यदास्यनित्यकान्ताभजनात्मकं वा प्रेमैव कार्यम् प्रेमैव कार्यम् ॥६६॥

भक्ता एकान्तिनो मुख्याः ॥६७॥

कण्ठावरोधरोमाञ्चाश्रुभिः परस्परं लपमानाः पावयन्ति कुलानि पृथ्वीं च ॥६८॥

तीर्थीकुर्वन्ति तीर्थानि सुकर्मीकुर्वन्ति कर्माणि सच्छास्त्री कुर्वन्ति शास्त्राणि ॥६९॥

यतस्तन्मयाः ॥७०॥

मोदन्ते पितरो, नृत्यन्ति देवताः, सनाथा चेयं भूर्भवति ॥७१॥

नास्ति तेषु जातिविद्यारूपकुलधनक्रियादिभेदः ॥७२॥

यतस्तदीयाः ॥७३॥

## वादविवादस्त्याज्यः

वादो नावलम्ब्यः ॥७४॥

बाहुल्यावकाशत्वादनियतत्वाच्च ॥७५॥

भक्तिशास्त्राणि मननीयानि तदुद्बोधककर्माणि करणीयानि ॥७६॥

सुखदुःखेच्छालाभादित्यक्ते काले प्रतीक्ष्यमाणे क्षणार्द्धमपि व्यर्थं न नेयम् ॥७७॥

अहिंसासत्यशौचदयास्तिक्यादिचारित्र्याणि परिपालनीयानि ॥७८॥

सर्वदा सर्वभावेन निश्चिन्तैर्भगवानेव भजनीयः ॥७९॥

स कीर्त्यमानः शीघ्रमेवाविर्भवति अनुभावयति च भक्तान् ॥८०॥

त्रिसत्यस्य भक्तिरेव गरीयसी भक्तिरेव गरीयसी ॥८१॥

## एकादशधा भक्तिः

गुणमाहात्म्यासक्ति, रूपासक्ति, पूजासक्ति, स्मरणासक्ति, दास्यासक्ति, सख्यासक्ति, कान्तासक्ति, वात्सल्यासक्ति, आत्मनिवेदनासक्ति, तन्मयतासक्ति, परमविरहासक्तिरूपा एकधाप्येकादशधा भवति ॥८२॥

इत्येवं वदन्ति जनजल्पनिर्भया एकमताः कुमारव्यासशुकशाण्डिल्यगर्गविष्णुकौण्डिन्य - शेषोद्धवारुणि-बलि-हनुमद्विभीषणादयो भक्त्याचार्याः ॥८३॥

य इदं नारदप्रोक्तं शिवानुशासनं विश्वसिति श्रद्धत्ते स प्रेष्ठं लभते स प्रेष्ठं लभत इति ॥८४॥

---

# सुरभारती कथमुन्नेतव्या

ले०—पं० रामशङ्करशुक्लः साहित्याचार्यः ( वाराणसेय-संस्कृतविश्वविद्यालयः )

अस्माकं संस्कृतभाषा जगति सर्वासु भाषासु प्रशस्यतमा भाषाऽस्ति। संस्कृतभाषायाः साहित्यमपि समस्तभाषासाहित्येषु प्राचीनतमं, व्यापकं, रमणीयञ्चास्ते। यदि काचिद्भाषा प्रत्नतायां गौरवं लभते तर्हीयमेव। सम्प्रति स्वसभ्यतायां समुन्नतौ साहङ्कारा पाश्चात्यजातयो यदा विपिनेष्वटाट्यमाना संकेतमात्रेणैव स्वाभिप्रायं व्यञ्जयन्तिस्म ततः पूर्वममी अस्माकं महामुनयः पवित्रतमे सरस्वत्यास्तटे ऋग्भिर्भगवन्तमपुपूजन्, देवगिरा च व्यवाहरन्। तथा विश्वस्मै स्वमस्तिष्कपरिचयं दिशन्तः समागतसमस्तशंकानिराकरणं चक्रुः। जगत्यस्माकं वेद एव प्राचीनतमो ग्रन्थः। इमञ्च, ज्ञानदृशा परमर्षयः साक्षाच्चक्रुः। आध्यात्मिकीं समस्यां समाधातुं मानवमस्तिष्कं प्रविकासयितुञ्चोपनिषदोऽप्यस्यामेव भाषायामभिव्यञ्जिताः। जगदुद्भवमारभ्याप्रतिसञ्चरं विविधानि इतिवृत्तानि सम्मुखमुपस्थापयति, पुराणान्यप्यस्यामेव मञ्जुलभाषायां विनिर्मितानि। आर्याणां प्राचीनतमां सर्वहितावहां परम्परां सर्वतो वर्णयन्ति। धर्मशास्त्राण्यप्यस्यामेव भाषायामुपनिबद्धानि। लौकिकपारलौकिकानि यावन्ति ज्ञानविज्ञानानि अत एव प्रसृतानि। किं बहुना ? सर्वाणि

शास्त्राणि देववाण्यामेव प्रतिबद्धानि । अतः संस्कृतभाषा जगत्जनमाननीया, जगज्जनहितावहास्ते इत्यत्र नास्ति संशयलेशः ।

आर्यभाषासाहित्यमस्यां भाषायां निबद्धय शास्ति देववाणी । भाषाविज्ञानवतां दृष्टौ द्वे भाषे उपलभ्येते । ययोः संस्कृतिरन्यतयोर्निर्मितिरस्ति ।

(१) आर्यभाषा (२) सेमेटिकभाषा च । आर्यभाषान्तर्गते द्वे शाखे, पाश्चात्या पौरस्त्या च । पाश्चात्यान्तर्गता योरोपीया समस्ताः प्राचीना नूतनाश्च भाषाः सन्ति । ग्रीक, लैटिन, ट्युटानिक, फ्रैंच, जर्मनीजिप्साप्रभृतयो भाषा मूलभूतार्यभाषया एव प्रादुर्भूताः । पौरस्त्यशाखान्तर्गतौ द्वौ विभागौ स्तः । (१) इरानियाः (२) भारतीयाश्च । इरानियाभाषा जेन्द–अवेस्तानाम्ना प्रसिद्धा । यस्यां भाषायां पारसीकाणां धार्मिका ग्रन्था उपलभ्यन्ते । भारतीयशाखायां संस्कृतमेव सर्वस्वम् । आर्यभाषाया मूलस्वरूपं परिचेतुमस्माकं समीपे बहूनि वस्तूनि सन्ति । द्राविडीं भाषां विहाय अन्याः सर्वा भारतीयभाषाः संस्कृतभाषातः प्रसूताः । संस्कृतशब्दः सम्पूर्वककृधातोर्निष्पद्यते । भाषास्वरूपविधेः संस्कृततशब्दस्य प्रयोगे वाल्मिकीयरामायणे सर्वप्रथममुपलभ्यते । यथा—

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।<br>रावणं मन्यमाना मां सीता भीता भविष्यति ॥

(सुन्दरकाण्डे, ५-१४)

यास्कपाणिन्योर्ग्रन्थेषु व्यवहृताः शब्दा एव "भाषा" कथ्यते । संस्कृतशब्दोऽस्मिन्नर्थे नोपलभ्यते । यदा "भाषायाः" प्रचारः सर्वसाधारणजनसमाजे न्यूनतामगमत्तदा पालीप्राकृतभाषे व्यवहारास्पदं जगृहतुः । अतो ज्ञायते यत्पालीप्राकृतभाषाभ्यां पार्थक्यं दर्शयितुं "संस्कृतं" इति नामकरणं संजातम् ।

संस्कृतभाषाया द्वौ भेदौ । (१) वैदिकसाहित्यं (२) लौकिकसाहित्यञ्च । वैदिकसाहित्ये वेदादिकं, लौकिकसाहित्ये रामायणमहाभारतेतिहासपुराणानि एवञ्च निखिलार्वाचीनसंस्कृतसाहित्यं वर्तते । कस्याश्चिद्भाषाया ज्ञानाय तदीयव्याकरणस्य पूर्णरूपेणाध्ययनस्य भवति परमावश्यकता । संस्कृतभाषायाः सर्वश्रेष्ठवैय्याकरणो भगवान्पाणिनिरेवास्ति । संस्कृतभाषां सर्वथा विशुद्धां व्यवस्थिताञ्च कर्तुं विशिष्टव्याकरणं विनिर्मितम् । बहवोऽर्वाचीना भ्रान्तचित्ताः समालोचकाः पाणिनिमाक्षिपन्ति यत्पाणिनिना व्याकरणनियमेन संस्कृतभाषायां महती जटिला च कृता । किन्तु मम दृष्टौ वास्तविकस्वरूपेण यदि पाणिनीयव्याकरणस्योद्भवो नाभविष्यत्तर्हि भाषाविषयकवैमत्यस्वरूपं अपरिहृतमभविष्यत् । हिन्दीभाषायाः स्वतन्त्रपुष्टव्याकरणाभावात्प्रत्येकप्रान्तवासिनः स्वस्वसुविधानुसारेण वाक्यानि प्रयुज्यन्ते । तदनुसारेण संस्कृतभाषाया अपीयमेव दशा निश्चिताऽभविष्यत् ।

पाणिनिना "अष्टाध्यायी" विनिर्मिता । महामुनिकात्यायनेन तस्या वार्तिकं विरचितम् । वार्तिके नूतनशब्दानां व्युत्पत्तयः प्रदर्शिताः । विक्रमात्पूर्वं द्वितीयशताब्द्यां पतञ्जलिना "अष्टाध्याय्या" भाष्यं विरचितं यद् "महाभाष्यम्" इति प्रसिद्धम् । अतो लौकिकसंस्कृतव्याकरणस्य कर्तारस्त्रयो मुनयो सन्ति ।

## संस्कृतस्य स्वरूपम्

संस्कृतभाषायाः स्वरूपस्य विचारप्रस्तावे इदमपि विचारणीयमस्ति यत्संस्कृतभाषा व्यावहारिकवार्तालापस्य भाषाऽऽसीत् न वा ? अस्मिन् विषये मतभेदो विद्यते । कियतां जनानां मतेन प्राकृतभाषैव जनसाधारणव्यवहारस्य भाषासीत् । एवञ्च संस्कृतभाषा साहित्यिकभाषारूपेणैव प्रयुक्ताऽभूत् । अतः संस्कृतभाषायाः प्रयोगः केवलं ग्रन्थेष्वेव कृतः ।

मतमन्यदस्ति यत्संस्कृतभाषा न केवलं साहित्यिक-

भाषाऽसीत्किन्तु जनसाधारणव्यवहारस्यापि प्रयोजिका। महर्षियास्केन निरुक्तनाम्ना महत्त्वपूर्णग्रन्थरचना कृता। अस्मिन् ग्रन्थे क्लिष्टवैदिकशब्दव्युत्पत्तयः प्रदर्शिताः। अयं ग्रन्थः "संस्कृतभाषां जनसाधारणीति" प्रमाणयति। यथा—"भार्षिकेभ्यो धातुभ्यो नैगामाकृतौ भाण्यन्ते" ( निरूक्त २।२। ) अनेन स्पष्टमेव यत् यास्कस्य कार्यकाले संस्कृतभाषायाः प्रचारः सार्वजनीन आसीत्। पाणिनेः कार्यकाले ( विक्रमात्पूर्वं पञ्चमशताब्द्यां ) संस्कृतभाषाया इदमेव स्वरूपं सुस्थिरमासीत्। पाणिनिरपि इमामुक्तिं "भाषा" नाम्ना व्यवहरति। आह्वाने प्लुतः प्रयुज्यते। यथा—"आचार्य देवदत्तोऽहं त्वामभिवादये।" इत्युक्तो गुरुः प्रतिवदति "आयुष्मानेधि देवदत्त।" एभिः प्रकारैर्ज्ञायते यत्संस्कृतभाषा व्यावहार्यासीत्। संस्कृतसाहित्ये प्रहेलिकादयोऽप्युपलभ्यन्ते। तथा च "दण्डा—दण्डी, केशा—केशी, हस्ता—हस्ती उदरपुरं भुङ्क्ते" इत्यादि प्रयोगा इदानीमपि जनसमाजे प्रचलिताः सन्ति। संस्कृतनाटकानां पद्धत्यापि इयं परंपरा सिद्धयति यत्संकृस्त-भाषा जनसाधारणीति निश्चीयते, अन्यथाभिनेयप्रधाननाटकानां रचना कर्तुमशक्या, समालोचकैरेतदवश्यमवधेयं यत्प्रथमं पाणिनिकालिकं साहित्यमधीत्य स्वभावः प्रकटनीयः पाणिनेरनन्तरं कात्यायनस्य कालः। तदानीन्तनाः सूत्र-वार्तिकादयः संस्कृतसाहित्ये महत्वद्योतकाः।

महर्षिपतञ्जलेर्महाभाष्ये वहवो रूढवाक्यप्रयोगाः उपलभ्यन्ते। यथा—

करोतिरभूत प्रादुर्भावे दृष्टः। निर्मलीकरणे चापि विद्यते। पृष्ठं कुरु पादौ कुरु उन्मृदानेति गम्यते। ( १।३।१ भाष्यः ) विक्रमात्सहस्रवर्षपूर्वामारभ्योदयकालतः संस्कृतभाषा चावश्यमेव जनसाधारणी व्यवहारस्य भाषासीत्। बहुभिः संस्कृतानुरागिभिर्विद्वद्भिर्निश्चितं यदन्तःपुरे संस्कृतभाषा एव प्रयोक्तव्या। धारानरेशभोजराजशासनकाले (११ शताब्द्यां) संस्कृतभाषाव्यवहारो जनसाधारणं एवञ्च साहित्यिकलेखनप्रयोगेऽपि बाहुल्येनोपलभ्यते। संस्कृतभाषाप्रयोगा न केवलं विद्वांसः श्रीमन्तो वाऽकुर्वन्। किन्तु तत्कालेऽपि निम्नस्तरा ज्ञातयः संस्कृतनुरागिण्य-एवासन्। अस्माभिस्तात्कालिकस्य पटकारस्य वार्ता कदाऽपि न विस्मर्तव्या। यथा—

काव्यं करोमि नहि चारुतरं करोमि।
यत्नात्करोमि यदि चारुतरं करोमि॥
भूपालमौलिमणि - मण्डितपादपीठ।
हे साहसांक ! कवयामि वयामि यामि।

अतो निश्चितमिदं प्रमाणयति यत्संस्कृतभाषा पुरा जनसाधारणीभाषास्वरूपे प्रतिष्ठिता आसीत्। संस्कृतभाषाया महत्त्वप्रकटनस्य कारणमिदं यदाधुनिकसमाजस्य समालोचकाः संस्कृतभाषां Dead language ( मृत-भाषा ) इति वदन्ति। किन्तु तेषामपि संस्कृतसाहित्या-ध्ययनस्य परमावश्यकता वर्तते। अस्माकं स्वातन्त्र्यमा-पन्नानां प्रायस्त्रयोदशवर्षाणि व्यतीतानि। स्वातन्त्र्यपूर्वं भारतीयनेतारः संस्कृतभाषाम्प्रतिं श्रद्धानुरागं प्रकटयन्तिस्म किन्तु संस्कृत भाषायाः कृते या प्रगतिरावश्यकी आसीत्सा प्रगति अवरुद्धेव प्रतीयते। तस्यावरो-धस्य कानि कानि कारणानि सन्ति तत्सम्बन्धेऽस्माभि-र्विचारणीयः प्रश्नः। लेखनप्रवचनाभ्यामेव संस्कृतभाषां प्रति श्रद्धानुरागस्य प्राकट्यं भिन्नो विषयः। परन्तु भारतीय-ग्रामीणजनता केवलं कर्मकाण्डं, ज्यौतिषविद्यां वा संस्कृत-भाषायाः स्वरूपं गणयति। अधुना भारतराष्ट्रे संस्कृत-भाषाया महान्तो मनीषिणः सन्ति, किन्तु वर्तमान-मानवसमाजस्तान् हेयदृष्ट्या पश्यति। संस्कृतभाषास्नातका यदि जनसमूहमध्ये गच्छन्ति तर्हि न ज्ञायते यज्जनाः तान्कर्मकाण्डज्यौतिषयोर्विद्वांसौ ज्ञात्वा तद्विषयक-प्रश्नानेव पृच्छन्ति। न केवलमिदमेव किन्तु संस्कृतभाषा-ध्ययनकर्तृछात्राणामध्ययनानन्तरमुत्तरोत्तरा न प्रगतिः प्रत्युत ह्रासोऽनुभूयते। यदि संस्कृतभाषाया इयमेव परि-

स्थितिश्चिरकालपर्यन्तं भविष्यति तर्हि निश्चितमेव यदस्मिन्नणुपरमाणुयुगे संस्कृतभाषायाः प्रगतिः कष्टसाध्या भविष्यति। यतो भारतदेशस्य ६० प्रतिशतप्रजा मध्यमवर्गीया वर्तते। तासामध्ययनस्य प्रधानप्रयोजनं केवलं परिवारपालनमेव भवति। सर्वसाधारणं प्रथमं पितरौ विविधकष्टसहनपूर्वकं पुत्राय सुयोग्यतां प्रदातुं पितुः सहयोगिनं कर्तुञ्चाध्यापयति। संस्कृतस्याध्ययने छात्रा आत्मनो बहुमूल्यं २५ वर्षात्मकं आयुष्कालं यमनियमपूर्वकं व्यतीतं कुर्वन्ति। तथापि "सामाजिकः" इति नामयोग्यो न मन्यते जनैः। पृच्छाम्यहं यत्तत्कृते कः उत्तरदायी? भारतशासनाधिकारिणो, मनीषिणः संस्कृतभाषा वा?

एकतो रूसराष्ट्रीया नरा विज्ञानद्वारा चन्द्रमङ्गलादिग्रहोपग्रेषूपनिवेशाय तथा च विविधविद्याविष्कारान्वेषणकार्येषु तत्पराः सफलप्रयत्नाश्च, परन्तु वयमस्माकममूल्यकालं केवलं प्राचीनवादविवादे व्यर्थंदुर्व्ययं कुर्मः। तत्कृतेऽस्माभिश्चिन्तनीयं यद्देववाण्या मानवजीवनस्य सञ्चालनं कीदृशोपायेन भवितुं शक्यम्? "संस्कृत भाषाया उन्नतिः कर्तव्यास्माकं परमं कर्तव्यम्" इति वाक्यस्य शतसहस्रशंखवद्घोषणमात्रेणैव लोककल्याणमसम्भवम्। तत्कृते सर्वप्रथमं संस्कृतछात्रैः शिक्षकैश्च वसुधैव कुटुम्बकम् इति शास्त्रादेशोपरि दृढव्रतैर्भवितव्यम्। संस्कृतभाषाया ह्रासस्यानेकानि कारणानि सन्ति। तेषां मध्ये साम्प्रदायिकत्वं प्रधानकारणम्। यतः संस्कृतभाषा कस्यापि जातिविशेषस्य सम्प्रदायविशेषस्य वा पैतृकसम्पत्तिर्नास्ति। देववाण्या हि भारतदेशो विश्वगुरुत्वं प्राप्तः। मम दृष्टौ संस्कृतभाषाध्ययनं न केवलं भारतवर्षस्यैव कृते, अपितु विश्वस्य प्रतिव्यक्ति तदध्ययनमुचितम्। वयं जानीमहे यदणुपरमाणूनां प्रयोगः संस्कृतसाहित्ये तथा च वैदिकसाहित्यं विज्ञानेन परिपूर्णोस्ति, तथाप्यर्वाचीनविद्वांसो वैदिकविद्याया अल्पज्ञानेन देववाणीमुपेक्षणीयां मन्यन्ते। यथा बालकान् प्रति विमाता व्यवहरति तथैव भारतीयशासकाः संस्कृतछात्रान् प्रति व्यवहरन्ति। यावत्पर्यन्तं संस्कृतछात्रस्नातकाङ्क्षासनविभागो यथोचितस्थानं न दास्यति तावत्पर्यन्तं संस्कृतभाषायाः प्रचारः प्रसारोऽतिदुर्लभः। अधुना प्रत्येकप्रान्तीयभाषाऽनुदिनं विकासमेति, तथा च तत्तद्भाषासाहित्याविष्कारैः परिवर्धते। एतादृशे परिवर्तनशीलकाले संस्कृतभाषाया अपि नूतनसाहित्याविष्कारस्यावश्यकता जागर्ति। संस्कृतसाहित्यस्य प्रचाराय प्रसाराय चायं मार्गः श्रेष्ठः। यथा—

(१) संस्कृतज्ञानामेतत्कर्तव्यं यत्तेषां हृदये संस्कृताध्ययनम्प्रत्यात्मलघुत्वभावना परित्याज्या। एवञ्च छात्रवृत्तिद्वारा संस्कृताध्यनस्य प्रवृत्तिरपि हेया। प्रायो जनानां किम्वदती प्रवर्तते यत्संस्कृतछात्रा लेखनकलायां कुशला न भवन्ति, तस्या निराकरणं परमावश्यकम्।

(२) बहवः समालोचका आक्षिपन्ति यत्संस्कृताध्ययनस्य शैली दूषिताऽस्ति। अतस्तत्परिशोधनाय, संस्कृतप्रचाराय प्रसाराय - चाधुनिकविविधविषयाणामध्यापनं संस्कृतभाषामाध्यमेनैवोचितम्। यथाङ्ग्लभाषायाश्छात्रा इतिहासभूगोलराजशास्त्रविज्ञानगणितादीन् विषयान् आङ्ग्लभाषामाध्यमेनैव पठन्ति। एतत्पश्चादेव संस्कृतसाहित्येऽपि नूतनसाहित्याविष्कारस्याशा कर्तव्या।

(३) संस्कृतछात्रस्योन्नत्यर्थं न केवलं संस्कृतछात्राध्यापकाश्चोत्तरदायिनः, किन्तु तत्कृते शासका अप्युत्तरदायिनः। भारतीयजनताया अपि एतत्कर्तव्यं यत्संस्कृतज्ञान् प्रत्युपेक्षाभावना त्याज्या। एकस्य संस्कृतविभागस्यायोजना शासकानां परमं कर्तव्यमस्ति। तस्मिन्विभागे संस्कृतज्ञानामेव प्राधान्यं भवेत्। एतादृशैः प्रयासैरेव संस्कृतभाषायाः प्रचारः प्रसारश्च समुचितप्रकारेण भवितुं शक्नोति।

# मुक्तेः सुलभं साधनम् ।

( ले० पं० श्री अनन्त शास्त्री फड़के व्याकरणाचार्यो, मीमांसातीर्थः, वेदान्तकेसरी च, अध्यक्षः पुराणेतिहासविभागः, वाराणसेय संस्कृत विश्व-विद्यालयस्य )

मनुष्यः सर्वदात्यन्तिकं नित्यञ्च सुखमिच्छति न तु क्वचिदपि दुःखलेशम् । एतादृशसुखस्यैव नाम मोक्षो, मुक्तिः, निर्वाणमित्यादि संकेतेन शास्त्रेषु दृश्यते । तत्स्वरूपविषये तत्साधनविषये च चार्वाकादारभ्याऽऽ-शङ्कराचार्यं दृढो मतभेद उपलभ्यते । तथाहि—सुखसेवन-पूर्वकदेहच्छेदौ मोक्षः, इतिचार्वाकः, पुनर्भावनाप्रकर्षपरि-लब्धपरिशुद्धं चित्तसन्तानमिति योगाचारः । प्रलीननिखिलो-पाधेः क्षेत्रज्ञस्य सततोर्द्ध्वगतिः इति जैनाः । जीवस्य लिङ्ग-शरीरापगमः इति भास्करमतानुयायिनः, विष्णुशिवादि-श्रवणादिभक्तिधर्माचरणाद्विष्णुशिवादिलोकस्थितिरिति वैष्णवशैवादयः भक्ताः । पारमेश्वर्यप्राप्तिरिति माहेश्वराः । पूर्णात्मलाभ इत्यभिनवगुप्ताचार्याः । स्वसमानाधिकरण-दुःखप्रागभावसमानकालीनदुःखध्वंसः इति तार्किकाः । आत्यन्तिकपापपुण्यरहितस्थितिरिति मीमांसकाः । परा-ख्याया वाण्या, स्फोटस्य वा दर्शनम् इति पाणिनीयाः प्रकृतितोऽविवेकनिष्ठावृत्तिपूर्वक — पुरुषस्य स्वरूपेणा-वस्थानमिति साङ्ख्ययोगिनः । विद्यानिरस्ताविद्यापूर्वक ब्रह्मस्वरूपेणावस्थानमित्यद्वैतवेदान्तिनः । सर्वदा कायवाग्-मनोबुद्धिभिर्भगवत्सेवनमिति भागवताः ।

एवं तत्साधनविषयेऽपि मतान्यनेकानि तत्तद्दर्शन-काराणां विद्यन्ते, तथाहि–सुखसाधकस्योपायस्य करणमिति चार्वाकः । दुःखं दुःखं शून्यं शून्यमित्यादिभावनमिति बौद्धाः । क्षेत्रज्ञस्योपाधेर्नाशायाहिंसादिवर्जनपूर्वकशास्त्रीयो-पदिष्टाचारस्य पालनमिति जैनाः । लिङ्गशरीरापगमार्थं शास्त्रीयध्यानाद्युपायानुष्ठानमिति भास्करीयः, श्रवणादि-गौणभक्त्याचरणमिति वैष्णवशैवादयः । पशुत्वनिवृत्त्यर्थं शैवशास्त्रोपदिष्टधर्माचरणमिति माहेश्वराः । मायावशेन भागतयावभासमानस्य परमात्मनः पूर्णतावभासनसिद्धये प्रत्यभिज्ञाप्राप्तिकरणमित्यभिनवगुप्ताचार्याः । साधर्म्य-वैधर्म्याभ्यां पदार्थतत्त्वविचार इति तार्किकाः । काम्यनिषिद्ध-वर्जनपुरःसरं नित्यकर्माचरणमिति मीमांसकाः । स्फोट-प्रापकशुद्धशब्दादिज्ञानम् इतिपाणिनीयाः । प्रकृतेः पुरुषस्य च सम्यग्ज्ञानम् इतिसाङ्ख्ययोगिनः । साधनचतुष्टय-संपत्तिप्राप्तिपूर्वकमहं ब्रह्मास्मीति दृढभावनाकरणम् इत्यद्वैत-वेदान्तिनः । परमेश्वरविषयकात्यन्तप्रेमदायक-श्रवणादि-साधनाभ्यास इति भागवतीयाः ।

इत्थं साधनसाध्यविषयेऽनेकमतभेदसत्वेऽपि सर्व-साधनानां संक्षेपेण संग्रहः श्रीमता व्यासदेवेन भागवतीय-एकस्मिन् श्लोके कृतः ।

योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित् ॥

इति ।११।२०।

अत्र ज्ञानपदेन मुक्तिप्राप्तेः साधनभूताः सर्वेऽपि ज्ञान-प्रकाराः ससाधना गृह्यन्ते कर्मपदेन च मोक्षप्राप्तेः कर्म-काण्डगताः सन्ध्यावंदनादि प्रकाराः तथा हठ-राज-मन्त्र-लययोगस्थिताः ससाधना प्रकाराः स्वीक्रियन्ते । एवं भक्तिपदेन श्रवणकीर्तनस्मरणार्चननामग्रहणप्रभृतयः सर्वे गौणभक्तिप्रकारा अभिप्रेयन्ते । एवं च मोक्षार्थं दर्शनभेदेन प्रोक्तानां सर्वेषामुपायानां संग्रहोऽत्र संपादित इति प्रतिभाति । उपरितने तु प्रोक्तेषु सर्वसाधनसाध्येषु पराभक्तिरेव परमप्रेमास्पदरूपा नामस्मरणादि सहज सुलभ-

साधनैः प्राप्या सर्वेषां प्राणिनां कृतेऽधिकारिप्रभृतिभेद-रहितोपादेयेति निबन्धेऽस्मिन् निर्णीयते। वेदान्तादि साधनेषु प्रोक्तकठिनसाधनचतुष्टयसंपत्तिस्तु न सर्वैः प्राप्तुं शक्या, परःसहस्रेषु केनचिदेकेन यथार्थतः साधन-चतुष्टयसंपत्तिप्राप्तिद्वारा मुक्तिप्राप्तिः कृता स्यात्। एवं योगादिद्वारापि त्रिपुट्यादिलयपूर्वकासंप्रज्ञातसमाध्यादि-द्वारा परमपदप्राप्तिरपि प्राचीनकाले मत्स्येन्द्रनाथप्रभृतिभिः कृता श्रूयते नत्वद्यत्वे कश्चन मनुष्य एतादृश उपलभ्यते। अस्मिन् कराले सर्वसद्गुणविनाशके कलौ काले तु क्षीणवीर्याणामल्पजीविनां कुटुम्बादिभरणचिन्ताऽग्रस्तानां दुःखिनां जनानां कृते भगवद्गुणश्रवणादिसाधनं विना नान्य उपायः समस्ति। अत एव श्रीमद्भागवते—

अकामः सर्वकामो वा मोक्षकाम उदारधीः।
तीव्रेण भक्तियोगेन भजेत पुरुषं परम्॥

इति भक्तिरूपः सुलभ उपायः सर्वसाध्यानां कृते प्रोक्तः। एवमन्यत्रापि,

यदीच्छसि परं ज्ञानं ज्ञानाच्च परमं पदं
तदा यत्नेन महता कुरु गोविन्दकीर्तनम्॥ इति।

तथान्योपायानां काठिन्यमपि भगवता गीतायां भङ्ग्यन्तरेण प्रोक्तम्—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥ इति।

अतः स्वदर्शनोक्तसाधनेषु सुलभसाधनरूपभक्तेः संग्रहः केनाप्यंशेन सर्वैर्दर्शनकारैः कृतः, विवेकचूडामणौ श्रीशङ्कराचार्यैः—

मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी।
स्वस्वरूपानुसंधानं भक्तिरित्यभिधीयते॥ इत्युक्तम्।
कर्मकाण्डेऽपि—यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्॥

इति सम्पूर्णकर्मणः साद्गुण्यं परमेश्वरस्मरणेन भवतीति निर्दिष्टम्।

योगेऽपि "ईश्वरप्रणिधानाद्वा" इति सूत्रेण पतञ्जलिनेश्वरसेवादिकं प्रोक्तम्। ननु इमानि सर्वाणि वचनानि न स्वार्थपरकाणि किन्तु विधेयस्तावकान्यर्थवादभूतानीति-चेत् न, यत एतादृशेषु वचनेष्वर्थवादकथनमपि परम-दोषाय कल्पत इति बृहन्नारदीयपुराणे प्रथमाध्याये प्रोक्तम् यथा—

पुराणेष्वर्थवादत्वं ये वदन्ति नराधमाः।
तैरर्जितानि पुण्यानि तद्वदेव भवन्ति हि॥
समस्तकर्मनिर्मूलसाधनानि नराधमः।
पुराणान्यर्थवादेन ब्रुवन्नरकमश्नुते॥ इत्यादिनानेक-श्लोकजातेन भक्तिस्तुतिः प्रतीयते "यत्स्तूयते तद्विधीयते" इतिन्यायेन भक्तिबोधकानि वचनानि नार्थवादरूपाणि किन्तु भक्त्या जाततत्तत्फलबोधकान्येव।

ननु भक्तिस्वीकारविषये नास्ति मतभेदः। परन्तु मोक्ष-प्राप्तौ न सा प्रधाना किन्तु गौणसाधनरूपा, यथा श्रवणा-दिकर्मणा चित्तशुद्धिः ततोज्ञानं ततः पराभक्तिः ततोऽहमा-त्मास्मीतिज्ञानं ततोमुक्तिरितिचेत्, सत्यमिदं भक्तिशास्त्र-काराणां मतं परित्यज्यान्यदर्शनकाराणां मतम्, परन्त्वत्र विषये भक्तिशास्त्रकाराणां मतानि मुख्यतया समालोच-नीयतामर्हन्ति।

नारदस्तु भक्त्यैव मुक्तिः सिद्ध्यति न तु तत्र मध्ये ज्ञाना-दिरूपोऽवान्तरव्यापारोऽपेक्ष्यत इति स्पष्टं प्रतिपादयति—

"सा तु कर्मज्ञानयोगेभ्योऽधिकतरा"॥२५॥

इतिसूत्रेण कर्म-ज्ञान-योगापेक्षयापि भक्तेः श्रेष्ठत्वं प्रतिपाद्य षड्विंशसूत्रेण कर्म-ज्ञान-योगानां सा फलरूपेति "फलरूपत्वात्" इत्युक्तवान् कदाचित्फलरूपत्वमपि गौणं-स्यादितिशङ्कानिवारणार्थं पुनः।

राजगृहभोजनादिषु तथैव दृष्टत्वात्॥३१॥ न तेन राज-

सन्तोषः क्षुच्छान्तिर्वा" ॥३२॥ इति सूत्राभ्यां ज्ञाने दोषं समुद्भाव्य स्वकीयमतं पूर्वसूत्रेण नारदः "स्वयं फलरूपतेति ब्रह्मकुमारः" ॥३०॥ इत्युक्तवान्।

अर्थात् फलरूपत्वं यदुच्यते तन्मुख्यमेव न कदाचिदपि भक्तिशास्त्रकारदृष्ट्या गौणं वक्तुं शक्यते। अतएव श्रीमद्भागवते व्यासदेवः—

सालोक्य-सार्ष्टि-सामीप्य-सायुज्यमेकत्वमप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥ इति

परमेश्वरसेवारूपभक्तेर्ब्रह्मानन्दादपि समुत्कृष्टत्वमुक्तवान्।

श्रीशाण्डिल्योऽपि कर्म-ज्ञान-योगापेक्षया भक्तेः श्रेष्ठत्वं बोधयितुं गीतास्थं श्लोकद्वयं भङ्ग्यन्तरेण सूचयति— "कर्मिज्ञानियोगिभ्य आधिक्यशब्दात्॥१५॥ इत्युक्तवान्। अत्र सूचितं गीताश्लोकद्वयम्—

तपस्विभ्योऽधिकोयोगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिकोयोगी तस्माद्योगी भवार्जुन॥
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥ इति।

ततोऽनन्तरसूत्रेण तदेव द्रढयति—"प्रश्ननिरूपणाभ्यामाधिक्यसिद्धेः" ॥१६॥ इति अत्र गीतायां द्वादशाध्यायेऽर्जुनकृतः प्रश्नः, भगवता प्रदत्तं तदुत्तरं च सूचितम्। तथाहि—

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः॥ इति॥

अत्रार्जुनो भक्ताक्षरविदोर्मध्ये श्रेष्ठत्वं कस्येति पृच्छति। ततो भगवान् उत्तरयति—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेतास्ते मे युक्ततमाः मताः॥१२।१-२

तथा—ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते।
तेषामहं समुद्धर्ता मृत्युसंसारसागरात्॥
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्॥१२।५-६

इति भक्तेः सुलभत्वं भक्तानां श्रेष्ठत्वं च प्रतिपाद्याक्षरविदां कष्टत्वं बोधयति—

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम्॥
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः।
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्॥
अव्यक्ताहि गतिर्दुःखं देहवद्भिरवाप्यते॥१२।३-५॥

इति क्लेशयुक्तत्वं स्पष्टी कृतवान्। अन्ते च

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः। इत्युपसंहृतवान्। भक्तिरसायनकारः श्रीमधुसूदनसरस्वत्यपि भक्तेर्ज्ञानवच्छ्रेष्ठत्वं प्रतिपादयति—

तावत्कर्माणि कुर्वीत नौं निर्वेद्यत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते॥१२।२

इति श्लोकस्थावपिद्वयनिरूपणमुखेन "अद्रुतचित्तस्य निर्वेदपूर्वकं तत्त्वज्ञानम्, द्रुतचित्तस्य च भगवत्कथाश्रवणादिभागवतधर्मश्रद्धापूर्विकाभक्तिरित्यवधित्वेन द्वयमुपातम्" इत्युक्तवान्। तथान्यत्र—"समाधिसुखस्येव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वात्......भक्तस्य संसारमोक्षस्यावश्यकत्वात् मोक्षान्तर्गतो वा भक्तियोगः, तस्मात्पुरुषार्थचतुष्टयान्तर्गतत्वेन वा स्वातन्त्र्येण वा भक्तियोगः पुरुषार्थः परमानन्दरूपत्वादिति निर्विवादम्" इत्यभिप्रेतवान्। एत एव भागवते आत्मारामाश्च मुनयो निग्रन्था अप्युरुक्रमे।

कुर्वन्त्यहैतुकीं भक्तिमित्थं भूतगुणो हरिः॥१।७ इति ज्ञानिनां जीवन्मुक्तानां भक्तिरावश्यकत्वेन प्रतीयत इति प्रतिपादितम्। अतः कलौ भक्तिरेव सरलं सर्वलोकहिताय साधनं कल्पत इति शम्।

---

# भक्तितत्त्वाविष्करणम्

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योस्ति कुत्रचित्॥
निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु।
तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम्॥
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः॥

इति भागवते भगवता निजमुखेनैव प्रोक्तम्। सिद्धान्तमिममनुसृत्यैत्र वैदिकानि कर्मोपासनाज्ञानकाण्डानि सुप्रसिद्धानि, वस्तुतो मार्गत्रयव्यतिरिक्तो नान्यः कोऽपि पन्था विद्यते, येन स्वीयपरमप्रेमास्पदात् चिरमित्रात् श्रीभगवतो वियुक्तः, अनन्तेभ्यः कालेभ्योऽनन्तासु योनिषु बम्भ्रम्यमाणः, जन्मजरामरणानामवर्णनीयक्लेशपरम्परां सहमानो जीवः पुनरनन्तासीमानन्दमयस्य करुणावरुणालयस्य प्रभोश्चरणसरसीरुहमधिगन्तुमर्हति। विशेषतः कलिकालेऽत्र अल्पप्राणायुमेधसां मानवानां भगवद्भक्तिरेवैकमात्रं सरलसुगमसुखसाध्यमवलम्बनमास्ते। अत्र भक्तिमार्गे वर्णाश्रमाधिकारादीनां नास्त्यपेक्षा, बाला वृद्धाः स्त्रियः पुमांसोऽन्त्यजाश्चाधिकृताः सन्ति। सर्वेषामेव कृते भगवद्भक्तिः सुखाधायिका हितकरी च। एतादृशमत्युपयोगि, मानवमात्रहितसाधकं, भक्तियोगप्राशस्त्यप्रदर्शकं, वैदिकोपासनाकाण्डसम्बद्धं दैवीमीमांसादर्शनं नाम कालक्रमेण बहोः कालाद् तिरोहितमासीत्। यद्यपि सप्तानां ज्ञानभूमीनां वर्णनं शास्त्रेषु समुपलभ्यते; किन्तु दर्शनानि षडेवेति प्रसिद्धिरापामरं प्रथिता। इदमुपासनामीमांसादर्शनमद्यावध्यप्राप्तमासीत्। श्रीभारतधर्ममहामण्डलस्य, श्रीमत्या आर्यमहिलाहितकारिण्या महापरिषदः, श्रीविश्वेश्वरनिधिश्रीमहामायानिधिप्रभृतीनामनेकासां संस्थानां संस्थापकाः परमाराध्यपादाः परमहंसपरिव्राजकाचार्या भगवन्तः पूज्यप्रवरयोगीन्द्रगुरवोऽनन्तश्रीविभूषिता महर्षयः श्रीज्ञानानन्दस्वामिवर्या दार्शनिकमभावमिममाकलय्य स्वीयसमाधियोगेन भक्तियोगाचार्याद् महर्षेरङ्गिरसः कृपया दैवीमीमांसादर्शनमिदं पुनरधिगतवन्तः। तच्च तैर्जनसाधारणकल्याणकामनया राष्ट्रभाषायां हिन्दीनामधेयायां सरलसुबोधप्राञ्जलविशदेन स्वरचितभाष्येण संवलितं विहितम्, येनैतत् सर्वजनबोधगम्यमास्ते।

"श्रेयांसि बहुविघ्नानि" इत्याभाणकमनुसृत्य महिषासुरमर्दिन्या श्रीजगन्मातुरसीमानुकम्पया विविधा आसुरीर्बाधाः समतिक्रम्यामूल्यं ग्रन्थरत्नमेतत् पूर्वं हिन्दीभाष्यसहितं प्राकट्यं नीतम्। इदानीं च संस्कृतभाष्योपेतं प्रकाश्यते। दैवीमीमांसादर्शनं खण्डद्वयविभक्तमास्ते। अयं प्रथमखण्डोऽवधेयः।

सम्पूर्णमपीदं दर्शनं रसोत्पत्ति-स्थिति-लयाख्यैश्चतुर्भिः पादैर्विभक्तम्। प्रथमखण्डे रसोत्पत्तिनामकौ द्वौ पादावासाते। स्थितिलयनामकाभ्यां द्वाभ्यां पादाभ्यां संवलितो द्वितीयः खण्डो यन्त्रस्थः शीघ्रमेव समुदेष्यति।

प्रथमखण्डस्यास्य द्वयोः पादयोः प्रथमे पादे परमात्मस्वरूपम्, भक्तेर्लक्षणम्, तद्भेदाः, रागात्मिकाया भक्तेरधिकारिता भक्तलक्षणम्, सप्तानां ज्ञानाज्ञानभूमीनां वर्णनं सप्तानां मुख्यानां गौणानां च रसानां लक्षणानि, भक्तेर्महत्त्वम्, पराया भक्तेः श्रेष्ठता, भक्तौ सर्वेषामपि समानाधिकारिता, भक्तेः फलादिविषयाणां सरलं सुन्दरं च विवेचनमास्ते। एतस्य द्वितीये स्त्पत्तिपादे शक्तिशक्तिमतोरभेदः, सृष्टिस्वरूपम्, मानवेतरयोनिसंख्या, मुक्तिबन्धनस्वरूपम्, ब्रह्मेश्वरयोरभिन्नता,

पितृमातृकालमहाकालजन्मभूमिप्रभृति भगवद्विभूतीनां महत्त्वम्, सर्गे लये च मनसो बुद्धेश्च कारणत्वम्, सर्गभेदः, मनुष्यपिण्डस्य स्वाधीनता, त्रिविधशुद्धिः, परमस्य पुंसो निर्लिप्तता, ऐश्वर्यभेदाः, समर्पणस्य फलम्, प्रसादमाहात्म्यम्, अपराधभेदः, पतनकारणम्, भक्त्या समुन्नतौ विविधमहर्षीणां मतानि, भगवद्भक्तौ माहात्म्यज्ञानापेक्षा, चेत्यादयो विषयाः सुविवेचिताः सन्ति। ग्रन्थस्यास्याध्ययनेन भक्तिविषये न किञ्चिदपि ज्ञातव्यमवशिष्यते।

भगवान् रसस्वरूपः प्रेममयो वा। तदंशत्वाज्जीवोऽपि तदभिन्न एव। परंत्वविवेकेन मानवः स्वीयान्तःकरणप्रेमरसं सांसारिके क्षणभंगुरे स्त्रीपुत्रस्वजनादौ नियोजयति। तत्समागमेन सुखी तद्वियोगेन च दुःखी जायते। पूर्वजन्मपुण्योपचयेन मानवो यदा सांसारिकात्मीयजनसम्बन्धमसारं दुःखप्रदं च मत्वा निजान्तःकरणस्थप्रेमस्रोतस्विनिं परमप्रेष्ठे, एकरसे, अजरामरे, वियोगरहिते, सदा सन्निहिते परमप्रेममये, अमन्दानन्दसागरे परमात्मनि प्रवाहयति, तदा तदेव भक्तिशब्दवाच्यतां प्रपद्यते।

भागवते प्रेम्णि निमज्जनोन्मज्जनं कुर्वतो भक्तमानवस्य भगवता सह शाश्वतिकमेकीकरणमेवैतद्दर्शनस्योद्देश्यम्। भगवद्रसरसिकैरेतस्याध्ययनेन स्वजन्मानि धन्यतां नेष्यन्त इत्याशास्महे।

——

# भक्तिरहस्यम्

यो नित्यो निर्विकारः प्रकृतिरपि
पुमान् निर्गुणः सद्गुणाश्च
भात्येकोऽनेकरूपो विविध-
तनुतया कारणात् कार्यतश्च।
आनन्दाब्धौ रसात्मा निरवधि
रसिकान् भक्तियुक्तान् मुमुक्षून्
मग्नीकुर्यात्तमीशं श्रय
इह परमं भक्तिभावैकगम्यम्।
सतस्त्रिकालज्ञगुरोः कृपाकणम्
भक्त्या अवाप्याङ्गिरसः कृतार्थताम्।
भेजुर्मुहुस्तत्पदपङ्कजं स्मरन्
विधास्यते भाष्यमिदं यथामति॥

"आत्मेत्येवोपासीत" "तदात्मानमेवावेत" तमेव विदित्वाऽतिमृत्युमेति" इत्यादिश्रौतवचःसमूहचारितार्थ्यसम्पादनहेतवे सिद्धान्तितमिदं यत् परस्परसम्बन्धानि वैदिकदर्शनानि मुमुक्षूणां दिव्यनेत्रस्वरूपाणीति, स्थावरजङ्गमात्मके विशाले जगत्यत्रोच्चावचेषु संख्यातीतेषूद्भिज्जेषु, ततश्च स्वेदजेषु, तदनन्तरमण्डजेषु, ततोनु जरायुजेषु शरीरेषु भ्राम्यन् प्रकृतिमातुरनुकम्पया जीवः क्रमोन्नतिं लभमानोऽन्ते मानवदेहमाश्रयति, शरीरं मानवीयमधिगत्यापि जीवोऽयं जरामरणस्वरूपकठोरदुःखचक्रं परित्यक्तुं न शक्नोति। स च वासनाजालविजडितो जन्ममृत्युरूपसंसारप्रवाहेऽनारतं प्रवहति। केवलमुपासनयैवात्मसाक्षात्कारमनुष्ठायासौ परमानन्दस्वरूपं मुक्तिपदमधिगन्तुमर्हति। एतद्धि श्रौतवचसामुपर्य्युक्तानां चारितार्थ्यम्। उपासना किल भगवत्सान्निध्यप्राप्तेरुपायः। उपासनामीमांसाऽपरनामकस्य दैवीमीमांसादर्शनस्य राद्धान्तोऽयं यद् योगसाधनेन चित्तवृत्तिनिरोधपूर्वकमन्तःकरणं विघ्नेभ्यः परिरक्षन् साधको भक्तेरमृतमयप्रभावेण प्रभावितोऽन्तर्जगति प्रविश्य भगवत्सान्निध्यं लभमान आत्मज्ञानमधिगत्य निर्वाणपदं प्राप्नोति। यथाऽऽज्ञप्तं भगवता गीतोपनिषदि—

चतुर्विधा भजन्ते मां नराः सुकृतिनोऽर्जुन।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतः।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्॥
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥

कर्मकाण्डेनाधिभौतिकीम् उपासनाकाण्डेन चाधिदैविकीं शुद्धिं सम्पादयन् ज्ञानी भक्तो "ब्रह्मैव जगत्" इतिभावेन भगवन्तं साक्षात्कृत्योपर्य्युक्तभगवद्वाक्यानां चारितार्थ्यं विदधाति। अपौरुषेयवेदोपासनाकाण्डपरिपुष्टय एव पूज्यचरणेन महर्षिणाऽङ्गिरसा दार्शनिकं विज्ञानमिदमाविष्कृतम्। ततश्च महर्षिशाण्डिल्याद् भगवतः शेषाश्च दर्शनविज्ञानमिदमाविर्भूतम्। उन्नतो ज्ञानसम्पन्नो मानवोऽन्ताराज्ये प्रविशन् दार्शनिकनेत्रसाहाय्यमन्तरेण न कदापि गम्यस्थानमधिगन्तुमर्हति। वेदानामभ्रान्तत्वात् तद्विज्ञानमपि सर्वाङ्गसुन्दरमभ्रान्तम्। तच्च सप्तधा विभक्तम्। अतो वैदिकानि दर्शनान्यपि सप्तैव सन्ति, एतासां सप्तानामपि ज्ञानभूमीनां नामानि लक्षणानि च पूज्यपादैर्महर्षिभिर्निर्दिष्टानि। तथाहि—

दानदा ज्ञानभूमेर्हि प्रथमा भूमिका मता।
संन्यासदा द्वितीया स्यात्तृतीया योगदा भवेत्॥
लीलोन्मुक्तिश्चतुर्थी वै पञ्चमी सत्पदा स्मृता।
षष्ठ्यानन्दपदा ज्ञेया सप्तमी च परात्परा॥
यत् किञ्चिदासीज् ज्ञातव्यं ज्ञातं सर्वं मयेति धीः।
प्रथमो भूमिकायाश्चानुभवः परिकीर्त्तितः॥
त्याज्यं त्यक्तं मयेत्येवं द्वितीयोऽनुभवो मतः।
प्राप्या शक्तिमर्या लब्धाऽनुभवो हि तृतीयकः॥
मायाविलसितं चैतद् दृश्यते सर्वमेव हि।
न तत्र मेऽभिलाषोस्ति चतुर्थोऽनुभवो मतः॥
जगद्ब्रह्मेत्यनुभवः पञ्चमः परिकीर्त्तितः।
ब्रह्म एव जगत् षष्ठोऽनुभवः किल कथ्यते॥
अद्वितीयं निर्विकारं सच्चिदानन्दरूपकम्।
ब्रह्माहमस्मीति मतिः सप्तमोऽनुभवो मतः॥
इमां भूमिं प्रपद्यैव ब्रह्मसारूप्यमाप्यते॥

प्रधानानि शास्त्राणि चतुर्व्यूहसुरक्षितानि। उपासनाकाण्डमीमांसास्वरूपं दैवीमीमांसादर्शनमपीदं तथैवास्ते। यथा च—(१) सृष्टिस्थितिप्रलयानां स्वरूपम्, (२) एतत्त्रयाणां हेतुः (३) मुक्तिः (४) तदुपायश्चेति चतुर्व्यूहम्। दर्शनमिदमनुसृत्य पूर्वोक्तचतुर्व्यूहाश्रयेणैव मुमुक्षवो भवपारावारपारंगता भवितुमर्हन्ति। पदार्थवादिनौ न्यायवैशेषिकौ पदार्थविज्ञानद्वारा तत्त्वज्ञानप्राप्तिपुरस्सरं मुक्तिपथं प्रदर्शयतः योगदर्शनं चैकत्वाधिगमपूर्वकसमाधिना निर्वाणं समाम्नाति, सांख्यदर्शनं तु त्रिविधदुःखात्यन्तनिवृत्तिमभिलक्ष्य प्रकृतिपुरुषात्मकज्ञानेन मोक्षं निर्दिशति, कर्ममीमांसादर्शनं च यथाक्रिया—संस्कारशुद्ध्या निर्वाणमार्गमुपदिशति, तथैव भक्तिशास्त्रं दैवीमीमांसादर्शनमपि भगवद्भक्तिसाहाय्येनैव त्रिविधां शुद्धिं सम्पादयद् निःश्रेयसद्वारमुद्घाटयति। अन्तर्बाह्यराज्यमध्येऽवस्थितत्वाद्यथा योगदर्शनं निर्विरोधि सर्वहितसाधकं च, तथैव कर्मकाण्डज्ञानकाण्डमध्यवर्त्ति दैवीमीमांसादर्शनमपीदं सर्वाविरुद्धम् अखिलहिताधायकं च, किमपि दर्शनशास्त्रं स्वीयज्ञानभूमेरनुरोधतोऽन्यदर्शनमतं यदि खण्डयति तर्हि हानिकारकं नास्ति। परन्तु परदर्शनमताविरोधित्वाद् दैवीमीमांसादर्शनस्य विशिष्टं महत्त्वं सर्वैरङ्गीकर्त्तव्यमेव, समतलभूमिपर्यटनपरायणः पथिको यदि पार्वतप्रदेशभ्रमणशीलक्रियाकौशलं निन्दन् समतलभूभ्रमणकौशलमेव प्रशंसति, यद् वा पार्वतमार्गविचरणशीलः पथिकः स्वीयं भ्रमणकौशलं बहु मन्यमानः समतलभूमिभ्रमणपरायणं मानवं यदि निन्दति तदानीं न काऽपि हानिः। प्रत्युत देशकालपात्रानुसारेण तदुपकारकमेव, तथैव यद्येकं दर्शनविज्ञानं दर्शनान्तरमतस्य कुत्रचित्सिद्धान्ते दोषमारोपयति सिद्धान्तं वा खण्डयति तदा नैतद्दोषायावधेयम्। यत्र दर्शने यस्या ज्ञानभूमेरधिगतये यद्धि विज्ञानं विवक्षितं तस्यैव प्रौढिः सम्पादिता भवति। अतस्तत्खण्डनं न दोषाधायकम्। किन्तु दर्शनेऽत्र खण्डनप्रणाली काऽपि नावलम्बिता। अतो दर्शनशास्त्रस्यैतस्य सार्वभौमदृष्टिः सर्वथा सर्वाभ्यर्हिता।

"ब्रह्माद्या ऋषिपर्यन्ताः स्मारका न तु कारकाः" इति सिद्धान्तः सर्ववादिसम्मतः। पूज्यपादा महर्षयस्तु नित्यस्थितज्ञानराज्यतोऽभ्रान्तं वैदिकं शास्त्रसमूहमाविष्कुर्वन्ति। चक्रायमाणकालतीव्रतरचंक्रमणेन कस्यचन शास्त्रस्याविर्भावः कस्यचिच्च तिरोभावो भवति। एष कालचक्रमहिमा। किन्तु कस्यचन शास्त्रीयग्रन्थस्याविर्भाव ऋषिद्वारैव सम्भवः।

महर्षि जैमिनि-महर्षि भरद्वाजाविष्कृतकर्ममीमांसादर्शनाश्रयणमन्तरेण यथा विचित्रविशालदुरूहकर्मरहस्यं न हृदयङ्गमं कर्त्तुं शक्यते, तथैव भक्तिशास्त्रस्यैतस्य दैवीमीमांसादर्शनस्य विज्ञानं हृदयङ्गमं विधातुम-

समर्थस्य कस्यापि साम्प्रदायिकस्योपासकस्य न साफल्यप्राप्तिः। न चासौ साम्प्रदायिक उपासकसाधको दैवराज्यस्य महत्त्वं लोकातीतां व्यवस्थां वाऽवधारयितुं पारयति। स च स्वाधिकाराधिगमे भग्नमनोरथो विषीदति, दैवीमीमांसादर्शनरहस्यमनवधार्य साम्प्रदायिक उपासकगणः पथभ्रष्टः कदाचित्कर्ममार्गमाश्रित्याधिकारविरुद्धमाचरति कदापि च ज्ञानमार्गमाश्रयन्ननधिकारचर्चायां प्रवर्त्तते, स्वाध्यात्मिकोन्नतिमार्गं च स्वयमेव कण्टकाकीर्णं विधत्ते। सुतरामितो नष्टस्ततो भ्रष्टो जायते। अत एव कर्ममीमांसादर्शनं यथा सकलशाखिनां सर्वसाम्प्रदायिकानां च कल्पसूत्रभूतं स्मार्तानुशासनस्य परमं सहायकम्,तथैव दैवीमीमांसादर्शनमपीदं सर्वविधोपासकानां निखिलसाम्प्रदायिकानां च परमाश्रयस्वरूपम्।

वैदिकं काण्डत्रयमनुसृत्य मीमांसात्रयमपि परस्परघनिष्ठसम्बन्धसंयुक्तम्। मीमांसात्रयज्ञानभूमयोऽपि पारस्परिकनैकट्यभावोपेतमास्ते। परमेतत् त्रिपुरुषार्थेषु महान्तो भेदाः सन्ति। यतः कर्ममीमांसादर्शनं कर्म, दैवीमीमांसादर्शनं भक्तिम्, ब्रह्ममीमांसापरनामकं वेदान्तदर्शनं च ज्ञानमेव मुक्तिकारणमामनन्ति, सुतरां विभिन्नज्ञानभूमिविज्ञानानुसारेण पुरुषार्थभेदानाकलय्य मुमुक्षुभिर्विचलितैर्न भाव्यम्। यतोऽन्नमयकोषपोषणविषये शारीरिकयन्त्रेषु मुखस्य प्राधान्यं प्रतिपादयतां, पाकस्थल्याः प्राधान्यं वदतां हृदययन्त्रस्य वा प्रधानतां निरूपयतां त्रिविधानामपि मानवानां विचाराः सत्यतामावहन्ति। यतो ह्यन्नं मुखेन पाकस्थलीमुपढौकते, ततश्च रसरूपतामापन्नं हृदययन्त्रमाश्रित्य रुधिरं सत् सर्वत्र शरीरे संचरति, शरीरस्य रक्षां पुष्टिं च विदधाति। एकत्र प्रविष्टमन्नमन्यत्र गत्वा स्वीयमुचितं कार्यं सम्पादयति। अतो यन्त्रत्रयप्रशंसनं कुर्वतां यथा वचांसि न सन्त्यसत्यानि, तथैव कर्म-भक्ति-ज्ञान-योगा अपि परस्पराश्रयसम्बन्धनिबन्धनाः सन्ति। सुतरामेतादृशमतभेदे लक्ष्यहानिसम्भावना नास्ति। ज्ञानयोगिनः, भक्तियोगिनः कर्मयोगिनश्चान्योन्यं पूर्णाधिकारमासाद्य कृतकृत्यतामापद्यन्ते, ब्रह्मसायुज्यं च लभन्ते। अतो दर्शनशास्त्रेषु पारस्परिकं मतभेदमवलोकमानानां मुमुक्षूणां सन्देहावसरो नास्त्येव। यथा सौधनिर्माणाय इष्टिका-जल-चूर्णानां समानभावेन प्रयोजनीयता, एकस्याप्यभावे सौधनिर्माणमसम्भवम्, तथैव निःश्रेयसाधिगमाय कर्मोपासनाज्ञानानां त्रयाणामप्यावश्यकता विद्यते। अतो भगवद्वाक्यं वेदः कर्मोपासनाज्ञानकाण्डैस्त्रिधा विभक्तोऽस्ति। वेदस्य काण्डत्रयमनुसृत्य मीमांसादर्शनत्रयी स्वतः सिद्धा।

दर्शनशास्त्रेऽत्र परमात्मन आनन्दस्वरूपता प्रतिपादिता,सद्भावे चिद्भावे चानन्दस्यैव व्यापकताऽङ्गीकृता। एवं किल मुक्तिद्वारमुद्घाट्य निर्वाणस्वरूपं परमानन्दपदमधिगन्तुं पूज्यपादेनाङ्गिरसा महर्षिणा भक्तिशास्त्रमिदं दैवीमीमांसादर्शनं प्रकटीकृतम्।

दर्शनशास्त्रस्यास्य प्रथमे पादे भगवत्सान्निध्यप्राप्तिहेतुभूताया भक्तेरेव विशिष्य प्रतिपादनमस्ति। भगवतो रसरूपत्वाद् ब्रह्मानन्दरसप्रदायिनीं भक्तिमेव द्वारीकृत्य रसस्वरूपस्य भगवतः सान्निध्यमवाप्तुं शक्यते। अतो दर्शनस्यास्य प्रथमः पादो रसपादः प्रोक्तः। सृष्टिप्रकरणरहस्यमनवधार्य सृष्टेः पारे गतिरसम्भवा। अतः सृष्टिप्रकरणस्य विस्तृतं विवेचनं द्वितीयपादेऽभिहितम्। अस्य द्वितीयपादस्य नाम उत्पत्तिपाद इति। स्थितिरहस्यावधारणं विना धर्माधर्म-बन्ध-मोक्ष-दैवासुरसम्पत्ति-ज्ञानाज्ञानादीनां पार्थक्यं नावधारयितुं शक्यते, न वा परमपुरुषार्थद्वारमुद्घाटितं भवितुमर्हति। अतो दर्शनशास्त्रेऽत्र तत्तदुपर्युक्त-

विषयवर्णनानुसारेण तृतीयपादस्य नाम स्थितिपाद इति।

भक्तिविज्ञानं दैवलोकानां रहस्यं श्रृङ्खलां, सृष्टिस्थित्योर्विज्ञानं च परिज्ञाय भाग्यशाली भक्तो यदा योगसाधनरूपं शरीरम्, प्राणं च भक्तिसाधनस्वरूपमवगच्छन् भगवत्सान्निध्यमासादयन् ब्रह्मसायुज्याधिकारी जायते, तदैव लयक्रियामनुसर्त्तुमर्हति। अत एतद्दर्शनचतुर्थपादस्य नाम मुक्तिस्वरूपलयसहकारित्वाल्लयपाद इति।

---

## रसपादः

सकलशास्त्रमूलभूते वेदे कर्मोपासना ज्ञाननामकानि काण्डत्रयाणि विद्यन्ते। एतदनुसारेणैव मीमांसादर्शनमपि त्रिविधमवधेयम्, तथा हि—(१) कर्ममीमांसादर्शनम्, (२) उपासनामीमांसादर्शनम्, (३) ज्ञानमीमांसादर्शनं चेति। अत्र कर्ममीमांसादर्शने कर्मकाण्डविज्ञानस्य विवेचनं वर्त्तते। दर्शनमिदं पूर्वमीमांसानाम्नाऽपि विख्यातम्, उपासनामीमांसादर्शने उपासनाकाण्डरहस्यमुपवर्णितम्, तदेतत् मध्यमीमांसाभिधानेन दैवीमीमांसासमाख्ययाऽपि प्रोच्यते। ज्ञानमीमांसादर्शने ज्ञानकाण्डीयतत्त्वानां निर्णयो विहितः, तच्चैतत् उत्तरमीमांसानाम्ना ब्रह्ममीमांसानामधेयेन च प्रोक्तमवधेयम्। यथा कर्मकाण्डस्य धर्मविज्ञानमेव मूलं तथैवोपासनाकाण्डस्य दैवीमीमांसादर्शनप्रतिपादिता भक्तिरेव मूलकारणं समाम्नातम्। अतो दैवीमीमांसादर्शनारम्भे तदीयं प्रथमं सूत्रं प्रणिगद्यते —

**अथातो भक्तिजिज्ञासा ॥१॥**

उपासनामूलं भक्तिरेवेति हेतोश्चित्तशुद्धौ सत्यां भक्तिजिज्ञासाऽनुष्ठेया। अथशब्दो मङ्गलवाचकः। तदुक्तं स्मृतौ—

ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा॥
कण्ठं भित्त्वा विनिर्यातौ तेन मांगलिकावुभौ॥

अथ शब्दस्यानन्तर्य्यमर्थः। विहितकर्मानुष्ठानेन चित्तशुद्धेरनन्तरमेव भक्तिजिज्ञासाया अधिकारः। अर्थस्य शब्दहेतुत्वाद् भक्तेरुपासनामूलकत्वे भक्तिजिज्ञासा विधेया॥१॥

भक्तिजिज्ञासायां प्रथमं किं ज्ञातव्यमित्याह

**रसरूपः परमात्मा जडरूपा माया ॥२॥**

रस आनन्दस्तत्स्वरूपः परमात्मा, माया च जडरूपा वेद्या, श्रुतावप्युक्तम्—

"रसो वै सः" आनन्दं ब्रह्मेतिव्यजानात्"
"आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन"

"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ति" इत्यादि, परमात्मा वाङ्मनसयोः पन्थानमतीत इतिहेतोः जिज्ञासूनां तद्विज्ञानार्थं सच्चिदानन्दभावद्वारा तन्निर्देशः क्रियते। एतद्भावत्रयं प्रतिपाद्य विषयाणामेकत्वेऽपि कर्ममीमांसादर्शनेन सद्भावस्य, ब्रह्ममीमांसादर्शनेन चिद्भावस्य, दैवीमीमांसादर्शनेन चानन्दभावस्य प्रतिपत्तिर्बोभूयते। आस्थूलजगतः सूक्ष्मजगत्पर्यन्तमानन्दस्यैव विस्तारः। इन्द्रियानन्दमारभ्य ब्रह्मानन्दं यावत् सर्वत्रैवानन्दस्यैवोपभोगः। जडजगति कटुतिक्तमधुरादयः षट्, अन्तर्जगति हास्यकरुणादयः सप्तगौणाः वात्सल्यादयः सप्तमुख्याश्च रसा एकस्मादेव रसात् समुत्पन्नाः। समस्तानामपि रसानामुपादानकारणमेकमेव। अन्यथा रसानां संमिश्रणेन रसान्तरोत्पत्तिर्न स्यात्। अर्थाद् यावद्द्रव्यभावित्वसम्बन्धः सदैव

तिष्ठेत्। किन्तु नैवं दृश्यते। एकस्मिन् रसे रसस्यान्यस्य मिश्रणाद् रसान्तरमुत्पद्यते। अत एतदनुमीयते निश्चीयते च यत् परिणामध्वंसविकाशशीलः पदार्थो न नित्यः। विनाशस्वभावशीलं वस्तु कारणान्तरसमुत्पन्नं कार्यात्मकमेव। अतो रूपान्तरितानां समस्तरसानां कारणस्वरूप एक एव रसोऽङ्गीकार्यः। अतो निखिलरसानां कारणस्वरूपः परमात्मैव सर्वेषां रसानामाधार उपादानकारणं च सिध्यति। प्रकृतिवैचित्र्यादुपाधेर्विभेदाच्च रसानामन्योन्यभेदः। यथैक एवाकाश उपाधिभेदेन घटाकाशमठाकाशादिनाम्ना बहुरूपः प्रतिभाति, तथैव सम्पूर्णरसनिदानस्वरूपपरमपुरुष एव निखिलरससमुद्गमस्थानम्। सर्वेऽपि रसाः रसस्वरूपपरमपुरुषान्नातिरिच्यन्ते। अतो रसरूपः परमात्मा व्याख्यातः।

अन्यच्च रूपरसगन्धस्पर्शादिविषयानन्दस्याधाररूपास्तत्तद् विषया न सन्ति। अन्यथा क्षुत्प्रस्य भोजनासमर्थस्य रोगिणश्च सुन्दरभोजनप्राप्तौ आनन्दोत्पत्तिर्जायेत। किन्तु नैतत्सम्भवति। सर्वेऽपि विषयास्तथैवावधेयाः। वस्तुतस्तु तत्तदिन्द्रियाणां तत्तद्विषयसान्निध्ये प्राप्तेऽन्तःकरणमेकतत्त्वाधिगमेन स्थिरीभवति। ततः क्षणिकसमाधिभूमिमासादयति चित्ते आनन्दसहस्ररश्मेर्भगवतः परमात्मन आनन्दज्योतिषि समाहितान्तःकरणे निविशमाने विषयेभ्य आनन्दः समुत्पद्यते। अतो विषयेषु इन्द्रियेषु वा नास्त्यानन्दः। आनन्दमयं ब्रह्मैव तत्स्थानमिति निर्विवादम्।

जडश्चेतनश्चेति द्वौ पदार्थौ सर्वत्रैव संसारे प्रत्यक्षमुपलभ्येते। चेतनपदार्थो जडसञ्चालको ज्ञानस्वरूपश्च। जडपदार्थाश्च चेतनेनैव सञ्चाल्यन्ते। अतो जडश्चेतनव्यतिरिक्त एव भवितुमर्हति। अत एतन्निश्चीयते यज्जडपदार्था अज्ञानरूपिण्या मायाया एव स्वरूपाः। श्रुतौ स्मृतावप्युक्तम्—

तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति।

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्
स मां पश्यति विश्वात्मा तस्याहं प्रकृतिः शिवा
तत्सान्निध्यवशादेव चैतन्यं मयि शाश्वतम्
जडाऽहं तस्य संयोगात् प्रभवामि सचेतना।
अयस्कान्तस्य सान्निध्यादयसश्चेतना तथा॥
आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज!
सृजन् रक्षन् हरन् विश्वं दध्रे संज्ञां क्रियोचिताम्"॥

"त्वं देवशक्त्यां गुणकर्मयोनौ
रेतस्त्वजायां कविरादधेऽजः।
दैवात् क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान्।
आधत्त वीर्यं साऽसूत महत्तत्त्वं हिरण्मयम्"॥

समष्टिव्यष्टिसम्बन्धयुक्तपूर्वसंस्कारानुसारेण स्पन्दनधर्मिण्यां प्रकृतौ सिसृक्षायां जायमानायां परमपूरुषस्तस्यां प्रकृतौ स्वचैतन्यं वितरति, येन सृष्टिर्विकासमेति, परमात्मन आनन्दस्वरूपमुपरि निर्णीतम्। शङ्कते—ब्रह्म तु सच्चिदानन्दस्वरूपम्, किन्तु दर्शनेऽत्र केवलमानन्दरूप आत्मा कथं लक्षितः? समाधत्ते—दर्शनशास्त्रे सृष्टेः स्वरूपस्य तत्कारणस्य समुचितमन्वेषणं कृतम्, येनेदं सिध्यति यदानन्दानुभवायैव सच्चिदोरन्योन्यानुभवात् क्रियोत्पत्तिः। सृष्टिविस्तारस्यैतदेव मौलिकं रहस्यम्। इमं मौलिकसिद्धान्तमनुसृत्य दर्शनशास्त्रेऽत्र आनन्देनैव आत्मनो लक्ष्यीकरणमुचितम्। अन्यच्च "अहं ममेतिवत्" ब्रह्मणो ब्रह्मप्रकृतेश्चान्योन्यसम्बन्धयुक्तता। गायकस्य तद्गानशक्तेश्चोदाहरणेन सच्चिदानन्दरूपं ब्रह्म आनन्द-

मयम्, तत्प्रकृतिः शक्तिरूपिणीत्यतः उभयस्वरूपस्वानुभवप्राप्तये तत्प्रकृतिर्जडा प्रोक्ता ॥२॥

रसजडस्वरूपलक्षणं निर्दिश्यते—

रसो ज्ञानरूपो जडस्त्वज्ञानरूपः ॥३॥

ज्ञानात्मको रसो जडस्त्वज्ञानात्मकः। आनन्दस्वरूपपरमात्मन आनन्दसत्ताया जगत्यत्र सर्वत्रैव विद्यमानत्वात् तदीयानन्दो जीवैः प्रकारद्वयेनाधिगन्तुं शक्यते। एकस्तु प्रकृतिप्रतिविम्बितोऽपरस्तु साक्षात् चिदानन्दस्वरूपः। प्रकृतिप्रतिविम्बितानन्दो हि आनन्दच्छायामात्रमतोऽसौ सुखमित्युच्यते। प्रकृतेः परस्थितो यो हि शुद्धस्वरूपः स एव वास्तविक आनन्दः। तथा हि श्रुतौ स्मृतौ च—

"एषोऽस्य परमानन्द एतस्यैवानन्दस्याऽन्यानि-भूतानि मात्रामुपजीवन्ति"।

अथात्र विषयानन्दो ब्रह्मानन्दांशरूपभाक्।
निरूप्यते द्वारभूतस्तदंशत्वं श्रुतिर्जगौ ॥
एषोऽस्य परमानन्दो योऽखण्डैकरसात्मकः।
अन्यानि भूतान्येतस्य मात्रामेवोपभुञ्जते ॥

वस्तुतश्छाया मायात्मिकैव। माया हि भ्रमोत्पादिका, अतः किल मायाबद्धोऽज्ञानी जीवो वैषयिकसुखमेव वास्तविकानन्दमवधार्य तत्रासज्जते। यथा किल कस्तूरिकामृगः स्वनाभिविद्यमानकस्तूरिकागन्धेनैवोन्मत्तः तद्गन्धमजानन् तदन्वेषणे इतस्ततो भ्राम्यति, तथैव सर्वव्यापकस्य आनन्दस्वरूपकस्य भगवत आनन्दसत्ता सर्वत्रैव जीवे व्याप्नोति। तामेवानन्दसत्तामधिगन्तुमखिलजीवप्रवृत्तिः। तथा चोक्तं श्रुतौ—

"यदा वै करोति सुखमेव लब्ध्वा करोति। नाऽसुखं लब्ध्वा करोति, सुखमेव लब्ध्वा करोति सुखं तद् विजिज्ञासस्व, नाऽल्पे सुखमस्ति भूमैव तत्सुखम्" इति श्रुतिः।

समाधिनिर्धूतमलस्य चेतसो
निवेशितस्यात्मनि यत् सुखं भवेत्।
न शक्यते वर्णयितुं गिरा तदा
यदेतदन्तः करणेन गृह्यते ॥

परन्त्वविद्याग्रस्तो जीवः पाषाणे स्पर्शमणिभ्रमवत्, नाशशीलं परिणामे दुःखदं विषयसुखमेव वास्तविकं सुखं मन्वानः प्रतार्यते। अतो जिज्ञासुशंकापनोदाय लक्ष्यस्थिरीकरणाय च निर्णीयते यत् स्वरूप एव ज्ञानस्य नित्यस्थितित्वाद् रसो ज्ञानमयः। ज्ञानस्य परिपूर्णतायामेवानन्दपरिपूर्णता। श्रुतिस्मृतिप्रतिपादितभावार्थोऽयं यद् निर्विकल्प समाधिस्थितस्य पूर्णज्ञानिनो योगिनो य ह्यानन्दानुभवः स च न शब्देन प्रकाशयितुं शक्यते, केवले ज्ञानराज्य एव तदनुभवो नान्यत्र। गीतायामप्युक्तम्—

यत्रोपरमते चित्तं निरुद्धं योगसेवया।
यत्र चैवात्मनाऽत्मानं पश्यन्नात्मनि तुष्यति ॥
सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र न चैवाऽयं स्थितश्चलति तत्त्वतः
यं लब्ध्वा चापरं लाभ मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥
अ० ६ श्लो० २०-२२

स्मृतावप्युक्तम्—

शब्दो न यत्र पुरुकारकवान् क्रियार्थो
माया परैत्यभिमुखे च विलज्जमाना।
तद् वै पदं भगवतः परमस्य पुंसो
ब्रह्मे ति यद् विदुरजस्रसुखं विशोकम् ॥

शब्दमायातीते ज्ञानस्वरूपे ब्रह्मणः परमपदे शोकरहितः पूर्णानन्दो विराजते। अज्ञानतः सृष्टि, अतो जडोऽज्ञानमयः। यतः कार्यकारणयोरेकरूपता। नामरूपविरहितेऽद्वितीये कारणब्रह्मणि अनन्तवैचित्र्यपरिपूर्णस्य नानारूपात्मकस्य कार्यब्रह्मणो या किल प्रतीति,

सा केवलम् अघटनघटनापटीयस्या मायाया एव लीलाऽवधेया, कार्यं विलोक्य कारणमनुमीयते, अतो मायाकार्यरूपमिदं जगदज्ञानादेवैतादृशवैचित्र्यमधिगच्छति। एतत्कारणरूपा जड़ा मायाप्यज्ञानरूपिणी। सुतराम् रसात्मनोरात्मज्ञानतोरभेदत्वाद् रसो ज्ञानस्वरूप एव। तथा च यदा चेतनरूपमात्मानं प्रकृतिरपेक्षते, तर्हि प्रकृतिर्जडेत्यत्र कः सन्देहः। सृष्टिकर्तृत्वे, अज्ञानस्य च सृष्टिमूलकत्वे जडस्याज्ञानरूपता सिध्यति ॥ ३ ॥

आत्मनो मायायाश्च परस्परं विरुद्धत्वे यश्च तदेकाचानेकत्वसंशयस्तं समाधत्ते—

**ज्ञानरूपत्वात्स एक एवाज्ञानरूपत्वात्सानन्ता ॥४॥**

स आत्मा[1]ज्ञानस्वरूपत्वादेकोऽद्वितीयश्च, परन्त्वज्ञानरूपिणी माया तु अनन्ता विद्यते[2]। सर्वव्यापको विकाररहितः सच्चिदानन्दस्वरूप आत्मैक एव। श्रुतौ यथा—

"एकोदेवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा"[3] इति, एतादृशस्यात्मनोऽद्वितीयस्वरूपज्ञानं तदैव सम्भवति, यदा साधको निर्विकल्पसमाधिभूमिं सम्यगारुह्य यथार्थज्ञानं लभते। यतो ज्ञानमेवाद्वितीयात्मस्वरूपोपलब्धिनिदानम्[4]। तथाहि श्रुतौ—

नित्यो नित्यानां चेतनश्चेतनानाम्
एको बहूनां यो विदधाति कामान्।
तत्कारणं सांख्ययोगाधिगम्यम्
ज्ञात्वा देवं मुच्यते सर्वपाशैः॥

स्मृतावपि—

वक्तव्यं किमु विद्यतेऽत्र बहुधा ब्रह्मैव जीवः स्वयम्
ब्रह्मैतज्जगदापराणुसकलं ब्रह्माद्वितीयश्रुतेः।
ब्रह्मैवाहमिति प्रबुद्धमतयः संत्यक्तबाह्याः स्फुटं
ब्रह्मीभूय वसन्ति सन्ततचिदानन्दात्मनैव ध्रुवम्॥

१. घटज्ञानम्, पटज्ञानम्, मठज्ञानं चेतिभेदेनानन्तं वस्तुविषयकं ज्ञानम्, परन्तु विचारतः परिदृश्यमाने वस्तुविषयकज्ञानविभिन्नत्वेऽपि तदेकमेव। विषयेऽस्ति पार्थक्यम्, नैव तद् विज्ञाने। विषयज्ञानं विभिन्नतामापद्यते। कालान्तरे तदीयं स्मरणेव, दशभ्यो वर्षेभ्यः पूर्वं यानि वस्तूनि दृष्टानि, साम्प्रतं तत्स्मरणमेव जायते। जाग्रदवस्थायायां केचन पदार्थाः समुपलभ्यन्ते, स्वप्नावस्थायां तेषामेव दर्शनं भवति। परन्तु न ते विषयाः सम्प्रति विद्यन्ते। अतो विषयाभावेऽपि विषयज्ञानं तिष्ठत्येव, अतः सिद्धमिदं यत् ज्ञाने पार्थक्यं नास्ति। विषयेष्वेव पार्थक्यं विद्यते। अतः परमात्मानः स्वरूपज्ञानमेकमेव।

२. एकस्याद्वितीयस्य ज्ञानमयपुरुषस्यानन्तस्वरूपेण दर्शनमज्ञानकार्यम्। सामुद्रिकवीचिवत् ज्ञानसमुद्रे परमपुरुषे अनन्तास्तरङ्गा उत्पद्यन्ते। तरङ्गाः परिणामशीला अतो ज्ञानस्वरूपा भवितुं नार्हन्ति, यतो ज्ञानं नित्यं परिणामरहितं च। अज्ञानस्वरूपमनन्तं वेद्यम्।

३. ज्ञानपूर्णतयैवानन्दपरिपूर्णता, आनन्दपूर्णतया च ज्ञानपरिपूर्णता। रसस्वरूपपरमात्मन आनन्दमयत्वादसौ ज्ञानस्वरूपइत्यत्र न सन्देहलेशः।

४. अज्ञाने नष्टे यदा पुरुषो निजां ज्ञानमयीं स्थितिमधिगच्छति तदानीं स्वरूपोपलब्धिर्जायते। घटं प्रति दण्डादिर्यथा निमित्तकारणत्वं नास्ति, स्वरूपोपलब्धिरूपो मोक्षो न कस्यचित्कार्यम्। मोक्षो हि नित्यः सनातनः स्वतः प्रकाशशीलश्च। कार्यस्यैव किमपि कारणं भवति। अत्र ज्ञानमयी स्थितिः स्वरूपोपलब्धिश्चेति द्वितयी एकस्या एवावस्थायाः परिचायिका। तात्पर्यमेतद् यत् ज्ञाने स्थितौ सत्यां स्वरूपोपलब्धिर्जायते इति।

सर्वत्रैव जगति अद्वितीयं ब्रह्म परिव्याप्नोति। जीवो ब्रह्मैव नापरः। अतएव जीवो निजस्वरूपं विदित्वा चिदानन्देऽद्वितीये ब्रह्मणि निमज्जति। प्रकृतिवैभवरूपा सृष्टिरज्ञानस्यैव विलासः। अतएवानन्तस्वरूपयुक्तः सृष्टिविकासः। सृष्टिवैचित्र्योऽज्ञानमेव हेतुः। अज्ञानरूपिणी मया किलानन्तस्वरूपाऽगवन्तव्या। शक्तिशक्तिमतोरभेदेऽपि शक्तिरूपिणी मया शक्तिमतः पृथगात्मानं बोधयन्ती अद्वैताद् द्वैतभावं प्रदर्शयति। पुनः सैव मयारूपिणी ब्रह्मशक्तिः स्वीय त्रिगुणविकारतो यदा जगद्रूपं दृश्यमनन्तरूपमयं विधत्ते, तदाऽभ्युपगन्तव्यमेवेदं यत् अज्ञानकारणादेवासावनन्तरूपमयं दृश्यं निदर्शयति। एवशब्दोऽनिश्चयात्मकः। वेदे यथा "एकमेवाद्वितीयम्" इत्यत्र एवशब्दप्रयोगस्तथैवात्रापि बोद्धव्यः। स च परमात्मा एकोऽद्वितीयश्च। आत्मा ज्ञानमयः। स्वरूपज्ञानस्यैकरसपूर्णत्वात् प्रकारान्तरेणात्मस्वभावत्वाच्च तदप्यात्मतुल्यं विभु नित्यं च। वस्तुतो ज्ञानं तदैव परिपूर्णतां प्रतिपद्यते यदा तदेकाद्वितीयस्वरूपं धारयति सात्त्विक ज्ञानस्य लक्षणमपि वेदशास्त्रेषु तथैव परिदृश्यते। सुतराम् एकाद्वितीयभावं दधत् स्वरूपज्ञानं यस्य रूपम् असावात्माऽवश्यमेवैकोऽद्वितीयश्चेति ॥ ४ ॥

परमात्मा कथं लभ्य इत्युच्यते—

**सृष्टेरतीतो बुद्धेश्च परः स भक्तिलभ्यः ॥५॥**

त्रिगुणमयप्रकृतिपरिणामस्वरूपायाः सृष्टेः परमात्माऽतीतो यतोऽसौ त्रिगुणः महत्तत्त्वसम्बन्धत्वात् बुद्धिरपि प्रकृतिसमुद्भवैव। अतः परमात्मा बुद्धेरपि परः। "यो बुद्धेः परतस्तु सः" इति गीतोक्तेः। बुद्ध्याऽपि न लब्धुं शक्य इत्यर्थः। तथा हि श्रुतौ—

इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः॥

अशब्दमस्पर्शमरूपमव्ययम्
तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात् प्रमुच्यते॥

स्मृतावपि—

शब्दो न यत्र पुरुकारकवान् क्रियार्थो
माया परैत्यभिमुखे च विलज्जमाना।
तद् वै पदं भगवतः परमस्य पुंसो
ब्रह्मेति यद् विदुरजस्रसुखं विशोकम्॥

श्रुतिरप्याह—

"भक्तिरेवैनं नयति, भक्तिरेवैनं दर्शयति, भक्तिवशः पुरुषो भक्तिरेव भूयसी"

धनुर्गृहीत्वौपनिषदं महास्त्रम्
शरं ह्युपासा निशितं सन्धयीत।
आयम्य तद्भागवतेन चेतसा
लक्ष्यं तदेवाक्षरं सौम्य विद्धि॥

स्मृतिरपि प्राह—

त्वं भक्तियोगपरिभावितहृत्सरोज
आस्से श्रुतीक्षितपथो ननु नाथ पुंसाम्॥
असेवया यः प्रकृतेर्गुणानां
ज्ञानेन वैराग्यविजृम्भितेन।
योगेन मय्यर्पितया च भक्त्या
मां प्रत्यगात्मानमिहावरुद्धे॥

गीतायामपि भगवता श्रीकृष्णेन प्रोक्तं—"यदहं वेदेन तपस्यया, दानेन यज्ञेन वा केनापि अन्येन

प्रकारेण नाधिगन्तुं शक्यः, केवलमनन्यया भक्त्यैव मदीयस्वरूपसाक्षात्कारो नान्यथा"। एतत्सूक्तप्रतिपादितसिद्धान्तद्वयमपि परस्परं विरुद्धवत् प्रतीयते। यः किल प्रकृत्यतीतो बुद्धेश्च परः स भक्त्या कथं लब्धुं शक्यते? भक्तिस्त्वनुरागात्मिका। अनुरागस्तु चित्तवृत्तिविशेषः। अतो यश्चित्तबुद्धिभ्यां समतीतः स चित्तवृत्तिविशेषतः कथं लभ्यः? एतादृशशंकां समाधत्ते—नूनमेव भक्तिः सानुरागस्वरूपा प्रतिपादिता। अनुरागस्तु न चित्तवृत्तिविशेषः परमेश्वरानुरागस्यालौकिकत्वात्। भक्तेरपि गौणी परा चेति द्विविधो भेदः। गौणी भक्तिसाधनेन यदा चित्तं निर्मलं जायते, तदैव तत्रानन्दमयपुरुषस्यानन्दमयी सत्ता प्रतिफलति। आनन्दरसाप्लावितं चित्तमानन्दमयमेव भवति। तस्य प्रत्येकस्मिन् अणौ परमाणौ च चैतन्यमेवोच्छलति। एतादृशो महात्मा "सर्वं खल्विदं ब्रह्म" "वासुदेवमयं जगत्" इत्यादि भावानां सदैव स्मरति। एतदवस्थावर्णनं शास्त्रे यथा—

> भक्तिं हरौ भगवति प्रवहन्नजस्रम्
> आनन्दबाष्पकलया मुहुरर्द्यमानः।
> विक्लिद्यमानहृदयः पुलकाचिताङ्गो
> नात्मानमस्मरदसाविति मुक्तलिङ्गः॥

अतो वक्ष्यमाणसूत्रप्रतिपादितभक्तिलक्षणप्रसंगेनैतत्प्रमाणितं यत् सर्वत्र विराजमाने परमात्मनि निरवच्छिन्नचिन्ताधारैव भक्तिशब्दवाच्या। तदीयचिन्ताधारा भगवतो न विच्छिद्यते। निरवच्छिन्नतैलधारावत् भक्तस्य चित्तवृत्तिर्भगवत्येव लीना तिष्ठति। अत एतादृशोऽनुरागो न चित्तवृत्तिविशेषः। रसस्वरूपभगवदानन्दसत्ताया रूपान्तरमात्रं तदवधेयम्। अतो भगवद्गीतायामप्युक्तम्—

> "नाऽहं वेदैर्न तपसा न ज्ञानेन न चेज्यया।
> शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा॥

अहं तु "भक्त्या लभ्यस्त्वनन्यया" इत्यादि। एतदपि बहुत्र लभ्यते यद् भगवत्कृपामन्तरेण भक्तिर्न लभ्यते। चित्ते आनन्दसत्ताप्रकाशावस्थैव भक्तिदशा वेद्या। अतः सिद्धमेतद् यत् परमेश्वरानुकम्पाधिगतोऽलौकिकोऽपार्थिवोऽनुराग एव भक्तिरित्युच्यते। सुतरां भक्त्यैव प्रकृतेर्बुद्धेरतीतोऽपि परमेश्वरो लभ्यते। वेदान्तसिद्धान्तमनुसृत्यापि प्रश्नोऽयं समाधीयते—एतन्मतेऽज्ञानकार्यत्वाद् बुद्धिरपि असद्रूपा मिथ्या। बुद्धिबोद्धव्यविषयसमूहोऽपि मिथ्यैव। अतो ध्यानधारणादिक परमेश्वरचिन्तनस्यापि मिथ्यात्वे सत्यपि यथा निद्रावस्थायां व्याघ्रादीनां स्वप्ने जाते स्वप्नद्रष्टा मानवो विनिद्रः प्रकृतिस्थो जायते, तथैवेश्वरस्य बुद्धेरतीतत्वेऽपि तं बुद्धिगम्यं विधाय गौण्या भक्त्या निरन्तरं साधनं विदधतः साधकस्य चित्तं स्थैर्यमापद्यते, तत्र चानन्दसत्ता प्रकाशते। एवमानन्दस्वरूपः परमात्मा लभ्यते। अतः सिद्धमेतद् यत् बुद्धेरतीतोऽपि भगवान् बुद्ध्या लब्धुं शक्यते—भगवत्साक्षात्कारद्वारा निःश्रेयसाधिगमोऽपि भक्त्यैव साधकैर्लभ्यते। अतोभक्तिर्मुक्तिहेतुः। स्मर्यते चात्र—

> एवं हरौ भगवति प्रतिलब्धभावो
> भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात्।
> औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमानः
> तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते॥
> मुक्ताश्रयं यर्हि निर्विषयं विरक्तं
> निर्वाणमृच्छति मनः सहसा यथाऽर्चिः।
> आत्मानमत्र पुरुषो व्यवधानमेक-
> मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः॥

सोऽप्येतया चरमया मनसो निवृत्त्या
तस्मिन् महीम्न्यवसितः सुखदुःखवाह्ये ।
हेतुत्वमप्यसति कर्त्तरि दुःखयोर्यत्
स्वात्मन्विधत्त उपलब्धपरात्मकाष्ठः ॥

नाऽहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ! ॥

भगवद्भक्तियुक्तेन आनन्दचित्तेन तत्र ध्येयपदार्थे स्वचित्तमर्पयता साधकेनान्ते गुणातीतेन सता भक्त्याऽऽत्मसाक्षात्कारं विधाय निःश्रेयसपदमधिगम्यते । एकतत्त्वप्राप्त्या योगिनोऽन्तःकरणं समाधिस्थं जायत इतियोगदर्शनसिद्धान्तः। इयमेव योगावस्था। अस्यामेव दशायां द्रष्टा परमात्मा स्वस्वरूपे प्राकट्यमापद्यते। योगविज्ञानमनुसृत्य सिध्यतीदं यत भक्तेरनन्यवृत्त्या भक्तान्तःकरणमेकतत्त्वमयं जायते, तदानीं भक्तोऽसौ समाधौ स्थितो भवति। ततस्तदीये भक्तिमयसमाधिस्थान्तःकरणे परमात्मा स्वतः प्रकाशते ॥ ५ ॥

भक्तिलक्षणं प्रतिपाद्यते—

## साऽनुरागरूपा ॥ ६ ॥

सा पूर्वोक्ता भक्तिरनुरागरूपा अनुरागात्मिकेत्यर्थः। सर्वासु चित्तवृत्तिषु प्राधान्येन वृत्तिद्वयं कारणस्वरूपमवधेयम् रागो द्वेषश्चेति । तत्र तमः प्राधान्याद्द्वेषवृत्तिर्दुःखस्य, रागवृत्तिश्च सत्त्वोन्मुखरजःप्राधान्येन सुखस्य हेतुः । "सुखानुशयी रागः" "दुःखानुशयी द्वेष" इति योगदर्शनम्। तात्पर्यमेतद् यद् सुखानुस्मरणपूर्वकप्रवृत्तिरेव रागः, दुःखानुस्मरणपूर्वकविरुद्धभावनोत्पत्तिरेव द्वेषः । भक्तिः किल द्वेषप्रतिकूला रागानुकूला चैकाऽलौकिकी वृत्तिः । यद्यपि रागस्य रजोगुणमूलकत्वमुक्तम् । परन्तु सुखेच्छारूपसत्त्वगुणसम्बन्धनिबन्धनत्वाद्रागः सत्त्वोन्मुखरजः प्रधानवृत्तिरुच्यते । अलौकिकीभगवद्वृत्तिः सात्त्विकी, यतस्तया साकं भगवदनुरागसम्बन्धः । फलतोऽधोगतिदायिन्या द्वेषवृत्तेर्विपरीता समुन्नतिसम्पादकानुरागवृत्तिरूपिणीभक्तिरुक्ता ।

स्मर्यतेचात्र—

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाऽम्भसोऽम्बुधौ ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥

बहिर्जगत्याकर्षणविकर्षणवदन्तर्जगति रागद्वेषौ स्तः । आकर्षणं रजोमूलकं, विकर्षणं च तमोमूलकमवधेयम्। रागश्च रजःसत्त्वप्रधानो द्वेषश्च तमःप्रधानः । आकर्षणविकर्षणयोः समन्वये जगतः प्रतिष्ठा, तस्याः सत्त्वप्रधानकार्यत्वात् । फलत आकर्षणविकर्षणसमन्वये जगतः स्थितिः, एवमेव द्वेषातीता रागानुरूपा परमेश्वराभिमुखगमनशीला सत्त्वगुणमयी विशिष्टालौकिकानुरागवृत्तिरेव भक्तिः ॥ ६ ॥

तद्विशेषलक्षणं व्याचष्टे—

## स्नेहप्रेमश्रद्धातिरेकादलौकिकेश्वरानुरागरूपा ॥७॥

स्नेहश्च प्रेम च श्रद्धा च ताभ्यो व्यतिरिक्ता अलौकिको य ईश्वरानुरागस्तद्रूपाभक्तिरिति । स्नेहप्रेमश्रद्धाभेदेन लौकिकीप्रीतिस्त्रिविधा । पुत्रकन्यादिषु निम्नगामिनी स्नेह उच्यते । मित्रकलत्रादिषु समानगामिनी प्रेमेत्युच्यते । मातृपितृगुरुजनादिषु च गामिनी प्रीतिः श्रद्धानाम्ना व्यपदिश्यते । अन्तर्जगति बहिर्जगति समानरूपेण विद्यमाना, तदुभयं धारणशीला, आकर्षणविकर्षणस्वरूपा नित्यविराजमाना द्वन्द्वशक्तिः रागद्वेषनामतो-

ऽभिधीयते। अनयोः रागद्वेषयोः रागस्यैवैकं पुण्यमयं विशिष्टं स्वरूपमनुरागसंज्ञया दर्शनशास्त्रेषु प्रोक्तम्। अनुरागोऽपि द्विविधः कामरूपः प्रेममूलकश्च। काममूलके ह्यासक्तिः प्रेममूलके च भावः प्राकट्यमासादयतः। कामस्य मूलं स्वार्थः तस्य च लक्ष्यमनात्मेन्द्रियादिकम्। प्रेम्णो मूलं परार्थः, तदीयं लक्ष्यमात्मा। अतः कामी यावतीं स्वार्थपरतां परित्यजति तावत्येव तत्र परार्थपरता व्यज्यते, स च प्रेमिको जायते। वस्तुतः श्रीगीतोपनिषत्प्रोक्तनिष्कामकर्मयोगविज्ञानाधिकारी न कामी प्रेमिक एव। कुत्रचिदेवमपि दृश्यते यत् कामी चापि प्रेमिकत्वमापद्यते। पुराणे विल्वमङ्गलोदाहरणमत्रावधेयम्। विल्वमङ्गलो वेश्यायां पूर्वं कामासक्तः, परन्तु स्वीयां सात्त्विकीं वृत्तिमनुसृत्यासौ समधिकपरार्थवृत्तिसम्पन्नो बभूव। पुण्यशीले विल्वमङ्गले पूर्वजन्मार्जितसत्त्वगुणाधिक्येन परार्थपरायणता निष्कामपरायणता चेति द्वे शुभे वृत्ती सहसैव समुत्थिते। तदानीमसौ कामसम्बन्धसंयुक्तां वेश्यां व्यस्मरत्। तदन्तःकरणानुरागतरङ्गिणी कामभूमिं विहाय प्रेमभूमौ प्रावहत्। अनन्तरं च तेन प्रेममयो भगवान् दृष्टः। वस्तुतः प्रेमवृद्धया सहैव प्रेमिकस्य स्वार्थवृत्तिरपक्षीयते। अन्ततः पूर्णे प्रेमिके स्वार्थवृत्तेरत्यन्ताभावो जायते। इयमेव प्रेमिकस्य यथार्थस्थितिः। यथा पूर्णो भक्तः परिपूर्णो ज्ञानी च पराया भक्तेरधिकारिणौ भक्तिपरिपूर्णतायां ज्ञानस्यापि पूर्णता। अतः पूर्णो ज्ञानी ह्येव वास्तविकप्रेमिको भवितुमर्हति। यतो ज्ञानविरोधिन्यहं तत्त्वसत्त्वे कोऽपि मानवो यथाऽऽत्मज्ञानी भवितुं नार्हति, तथैवाहं तत्त्वयुक्तस्वार्थविद्यमानतायां नैव कोऽपि वास्तविकः प्रेमिको भवितुं शक्तः। स्वार्थस्याज्ञानमूलकत्वादिदमभ्युपगन्तव्यमेव यत् स्वार्थाज्ञानसत्वे शुद्धप्रेमोदयो न सम्भवः। नैव पुरुषोऽसौ परायाभक्तेरधिकारवान्। अत्र विषये भगवतो निजमुखारविन्दनिःसृतं वचोऽवधेयम्। तथा हि—

मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते।
न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा॥
भजन्त्यभजतो ये वै करुणाः पितरो यथा।
धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः॥
भजतोऽपि न वै केचिद्भजन्त्यभजतः कुतः!
आत्मारामाश्चाप्तकामा अकृतज्ञा गुरुद्रुहः॥
नाहं तु सख्यो भजतोऽपि जन्तून्,
भजाम्यमीषामनुवृत्तिसिद्धये।
यथाऽधनो नष्टधने विनष्टे,
तच्चिन्तयाऽन्यन्निभृतो न वेद॥
एवं मदर्थोज्झितलोकवेद-
स्वानां हि वो मय्यनुवृत्तयेऽबलाः।
मया परोक्षं भजता तिरोहितम्,
माऽसूयितुं मार्हथ तत् प्रियं प्रियाः॥
न पारयेऽहं निरवद्यसंयुजां,
स्वसाधुकृत्यं विबुधायुषाऽपि वः।
या माऽभजन् दुर्जरगेहशृङ्खलाः,
संवृश्च्य तद्वः प्रतियातु साऽधुना॥ इत्यादि।

पूर्वोक्ताः स्नेहादयस्तिस्रो वृत्तयो लौकिकत्वाद् विनश्वरशीलाः। यतो जगतो नश्वरत्वात्तदाश्रयोऽपि विनश्वर एव। परन्तु भक्तिस्तु तद्विलक्षणा। यतः सा तु अविनश्वरपरमात्मनि अलौकिकप्रीतिरूपा। वस्तुतो रागद्वेषयो रजस्तमोमूलकत्वम्। आत्मसुखेच्छासम्बन्धसंयुक्तत्वात् मोहमिश्रिता लौकिकानुरागरूपाः स्नेहप्रेमश्रद्धादयः सत्त्वोन्मुखरजः प्रधानाः भगवदनुरागरूपिणी भक्तिस्त्वलौकिकी मोहराज्यातीताशुद्धसत्त्वगुणमयी प्रोच्यते। भागवतहृदयविहारिणी साक्षान्मुक्तिप्रदायिनी भक्तिर्लोकातीतेत्यत्र न सन्देहलवः। ननु ये किल भगवन्तं

पतिपुत्रमित्रपितृप्रभृतिभावैः श्रद्दधते किमेतन्न भक्तिपदवाच्यम् ? एतादृशशंकासमाहितय एव सूत्रेऽत्र "अलौकिक" शब्दप्रयोगः। लौकिकं व्यवहारमनुसृत्य पितृमित्रपुत्रादिभिः सह यो हि स्नेहप्रेमादिसम्बन्धः क्रियते स च नश्वरत्वाद् बन्धनकारणम्। यतः प्रेमाधारोऽनित्यः। तेषां पीडितत्वे वियोगे च दुःखमनुभूयते। लौकिकीषु स्नेहप्रेमादिवृत्तिष्वपि जीवैरानन्दोऽनुभूयते। तत्कारणमिदं यत् पुत्रमित्रादिषु समुदितायां स्नेहादिवृत्तौ चित्तं स्थिरतामापद्यते। सुस्थिरे चेतसि परमात्मन आनन्दसत्ताया आभासो जायते, येन जीवैरानन्दोऽधिगम्यते। परन्तु चित्तावलम्बनीयविषयाणां पार्थिवत्वनश्वरादित्वात् तन्मूले च मोहस्य काममूलकममत्वबुद्धिसद्भावाज्जीवैर्बन्धनमेव लभ्यते न मुक्तिः। परमेश्वरविषयकालौकिकानुरागे तदभावाभावः परमेश्वरस्य नित्यसत्यसनातननिखिलकामनाश्रयमायाधीश्वरत्वात्। परमेश्वरे कामनामोहमूलके भावे समर्पिते भक्तो निष्कामः शान्तिमयश्च बोभूयते। अत ईश्वरे स्नेहादिव्यवहारो नूनमेव भक्तिपदवाच्यः। अतः सिद्धमिदं यत् त्रिविधा प्रोक्तप्रीतयो लौकिक्यो नश्वरशीलाश्च॥ तदाश्रयस्य जगतोनश्वरत्वात् परन्त्वविनश्वरपरमात्मनि अलौकिकप्रीतिरूपा भक्तिस्तु सर्वविलक्षणा। उपर्युक्तो लौकिकोऽलौकिकश्च प्रेम्णो द्विविधो भेदः श्रीभगवता व्रजाङ्गनाप्रश्नोत्तरे यः प्रदर्शितः, सच प्रकृतविज्ञानानुमोदितः। यः प्रेमानुष्ठाने प्रेम विधत्ते, तस्य प्रेमरसास्वादने सत्यपि प्रेमगतिः स्वार्थमूलिका। प्रेमाननुष्ठानेऽपि प्रेम कुर्वतः प्रेमानुष्ठानमपेक्षाकृतं समुन्नतम्। यतोऽधिकारेऽत्र विलयोन्मुखः स्वार्थः। उदाहृत्येदमवधेयं यत् पित्रोः पुत्रस्नेहं प्रत्यक्षतः स्वार्थन्यूनतायां सत्यामपि नूनमनुरागोऽसौ समुन्नतः। परन्तु तदनुरागमूलेऽज्ञानासक्त्योः स्थितत्वात् असौ नैव विशुद्धो भवितुमर्हति यस्तु प्रेमानुष्ठानेऽपि न प्रेम विदधाति, तस्यातिविचित्रतापरिपूर्णाश्चतुर्विधाः श्रेणयो भवन्ति। श्रीभगवतः परमाद्भुतविज्ञानप्रकाशः सदुदाहरणैः क्रियते। वस्तुतश्चतुर्विधश्रेणीषु तिस्रः प्रेमराज्यबाह्याः सन्ति, चतुर्थ्यां प्रेमद्वारं रुद्धं दृश्यते। तथा चोक्तम्—

सात्त्विकौ दम्पतीभूतं स्यातां ज्ञानरतौ वरौ।
परस्परार्थिनौ तौ हि जायेते पितरौ सदा॥

साधके वैराग्याभ्याससाहाय्येन यथायथाऽज्ञानं तिरोदधाति तथातथैव ज्ञानाभिवृद्धिरस्ति, प्रेमजल मलिनकर्त्तुः स्वार्थस्य तदीयान्तःकरणे ह्रानिरुपजायते। उपर्युक्ता भगवत्प्रोक्ताश्चतुर्विधा अवस्था वस्तुस्थित्या स्वार्थसम्बन्धशून्या न सन्ति। आत्मकामिनो गुरुद्रुहः कृतघ्नाश्चेति त्रयः सन्ति घृणितस्वार्थप्रतिमूर्त्तयः। चतुर्था आत्मारामास्तु स्वीय शुद्धसात्त्विकस्वार्थपरांकाष्ठां प्राप्तास्तत्रैव निमग्नाः सन्तिष्ठन्ते। अतश्चत्वारोऽप्येते प्रकारान्तरेण स्वार्थग्रहग्रस्ता इत्यत्र न सन्देहलेशोऽपि। अतः श्रीभगवान् आत्मानं लक्ष्यीकृत्य कामनाजालविरहितं स्वार्थपङ्कविमुक्तं ज्ञानस्वरूपं लक्षयित्वा प्रेमलक्ष्यं स्थिरीचकार। यावत् प्रेमिकेऽज्ञानलेशः, तावदलक्षितस्वरूपः स्वार्थः प्रेमधारां विशुद्धामपि मलिनयिष्यति। एतद् विज्ञानमनुसृत्यैव श्रीभगवान् स्वीयवचनैरात्मानमेव सर्वोत्तमं यथार्थप्रेमिकं संसाधितवान्। कमपि समुन्नतमधिकारं प्राप्य प्रेम सर्वास्ववस्थास्वपि निर्मलं तिष्ठति, प्रेमिके स्वार्थलेशाभावात् तत् केवलं परार्थवृत्तिं दद्यात् स्वीय प्रेमपात्रसन्निधाने सुमधुरं प्रेमफलं प्रापयितुमर्हति, समुन्नताधिकारोऽसौ श्रीभगवता स्वकीयोन्नताचरणस्य दिग्दर्शनं कारयित्वा संसाधितः।

विज्ञानमेतत्प्रकारान्तरेणापि समवधातुं शक्यते। तथाहि—स्नेह-प्रेमश्रद्धा-भक्तिप्रभृति नामानि धारयन्ती

अनुरागधारा भावस्वरूपपर्वतराजतो निर्गत्य परमानन्दमये भगवत्समुद्रे सम्मिलितुमग्रेसरति। यथाहि हिमालयप्रदेशात् प्रवहणसमये नितान्तप्रबलतरङ्गैरतिशयचाञ्चल्यान्निर्गमकाले कापि धारा अलकनन्दा काऽपि च मन्दाकिनी काचिच्च भागीरथीति गीयते, पश्चाच्च तिस्रो मिलित्वैकीभूय समतलभूमौ प्रवहन्ती पुष्टा शान्ता च भूत्वा गङ्गानाम्ना व्यपदिश्यते, तथैवानुरागमयी धारा स्नेह-प्रेमश्रद्धारूपेण प्रवहन्ती चञ्चलरूपा पावनी गीयते। ततश्च स्वीय त्रिविधनामरूपस्वभावान् परित्यज्य भगवद्भावमयस्वार्थरहित सतमलप्रदेशे एकीभूय शान्तधारास्वरूपेण प्रवहति, तदैवासौ धारा भक्तिरिति प्रोच्यते।

वस्तुतोऽनुरागोत्पत्तिः प्रथमावस्थायां मानवान्तःकरणे स्नेहप्रेमश्रद्धारूपेण जायते। असावेवानुरागो भगवता साधारणप्रेमनाम्नाभिहितः। नानारूपधारिण्यामनुरागवृत्तावत्र यथायथाऽज्ञानस्वार्थेन्द्रियमूलिका आसक्तिर्ह्रासमुपैति तथातथाऽनुरागवृत्तिरसौ पवित्रा सती भगवद्भावं प्राप्नोति। इदमेवभक्तेः क्रमविकासरहस्यमवधेयम्।

श्रीभगवद्वचनप्रकाशिताधिकारविशेषपर्यालोचनेन प्रेमविज्ञानमेतत्सुस्पष्टतां गमिष्यति। तत्प्रोक्ताधिकाराणां सप्तधा विभागेन त्रिलोकपवित्रकरं विज्ञानमेतत् समधिकं सुस्पष्टं भविष्यति। भगवच्चरणारविन्दगामिन्याः पतितपावन्याः प्रेमधाराया अवलम्बनेन वञ्चितस्य पापनिरतस्य गुरुद्रोहिणोऽधिकारः सर्वतो निकृष्टोऽवधेयः। यतो ज्ञानदातृगुरुद्रोहात् ज्ञानरिपुरसौ तिर्यग्योनेरधिकारवान् जायते। कृतघ्नस्य द्वितीयोऽधिकारः। जन्मान्तरे घोरनरकपातानन्तरं कृतघ्नेन स्वीयसमुन्नतिमार्गो लब्धुं शक्यते। अधिकारद्वयमेतत् इन्द्रियासक्तिपरिपूर्णताया उदाहरणमवगन्तव्यम्। अस्मात् दूरे प्रेमराज्यस्थितिः। पूर्वनिरूपितेषु तृतीयोऽधिकार आप्तकामस्य वेद्यः। चतुर्वर्गनाम्नाऽभिहितेषु कामार्थधर्ममोक्षेषु इन्द्रियसेवामूलकः कामाधिकारः निकृष्टः। ततश्च सर्वतोत्र योऽपि यथाक्रमं समुन्नता अधिकारा ज्ञातव्याः। कामस्तु प्रेमराज्यरिपुः। आप्तकामो निजेन्द्रियेच्छामूलकवासना तृप्त्याऽऽत्मविमुखतामापद्यते। चतुर्थोऽधिकारः प्रेमविनिमयः। सोऽयं प्रेमवणिजामधिकारः। यतोऽत्र आदानं प्रदानं च। अस्मादेव प्रेमशिक्षा प्रारभ्यते। पञ्चमोऽधिकारस्तेषां, ये प्रेमाननुष्ठानेऽपि प्रेम विदधत्ते। यथा मातरः पितरश्च। अधिकारोऽयमुत्तमः। यतोऽसौ धर्मसम्बद्धः। अधिकारेऽत्र साधके निष्कामभावो जागर्त्तिः। सर्वविधेष्वपि प्रेमिकेषु पञ्चमोऽयमधिकारो दृश्यते। एतदधिकारविशिष्टमानवचित्तप्रेमप्रवाहः शुष्कताम् नाधिगच्छति, जन्मजन्मान्तरे स्वकीयचित्तप्रेमधारां परिवर्धयन् भक्तिसाहाय्येन शनैः शनैरानन्दमयब्रह्ममहासागरे साधकोऽसावग्रेसरति। गृहस्थाश्रम एवैतत्पवित्रशिक्षास्थानम्। षष्ठोऽधिकार आत्मारामस्य वेद्यः। मिष्टान्नमिच्छतः पुरुषस्य मुखे मिष्टान्ने दीयमाने पुमानसौ मूकतां भजति, तथैव निवृत्तिपथपथिको यदेन्द्रियभूमिमतिक्रान्तः परमानन्दमयभगवद्भूमिमुपढौकते, तदानीमसौ बहिश्चेष्टां विजहाति। इयमात्मारामावस्था। वस्तुतः प्रेमराज्येनैवेयं स्वार्थातीताऽऽवस्था। सप्तमोऽधिकारोऽन्तिमः प्रेममयभगवता प्रोक्तः प्रेमसरोरुहमूलभूतः। मुक्तात्मनि भागवते भगवदवतारे च सर्वोत्तमाधिकारस्यैतस्य दर्शनमुपलभ्यते॥ ७॥

ईश्वरानुरागस्वरूपिण्या भक्तेः प्रकारमभिधत्ते—

**सा द्विविधा गौणी परा च॥ ८॥**

सा भक्तिः गौणी परा चेति भेदात् द्विविधाऽव

गन्तव्या । साधनदशायां गौणी सिद्धावस्थायां च परेत्युच्यते ॥ ८ ॥

पराया लक्षणमभिधीयते—

**स्वरूपद्योतकत्वात्पूर्णानन्ददा परा ॥ ६ ॥**

वक्ष्यमाणप्रकाराया गौण्या भक्तेरङ्गसाधनद्वारा साधको भक्तः क्रमशोऽभ्यासवृद्धिं कुर्वाणो भक्तिराज्ये समुन्नतादपि समुन्नततरमधिकारमधिगच्छन् अन्ते समाधिदशां प्राप्नोति । गौण्या भक्तेरवस्थायां साधको नैजमात्मानं स्वप्रियतमं परमेश्वरं जगच्च पृथक् पृथङ्-निभालयति । अवसानेऽभ्यासपरिपूर्णतायां सत्यां भक्ति-पारावारे निमग्नः चित्तैकत्वपूर्णतया द्वैतभावविरहितो जगति सर्वत्रैव स्वकीयं प्रियतमं परमेश्वरमेवावलोकयति । इयमेव भक्तेरद्वैतावस्था पराभक्तिरुच्यते । अस्यामवस्थायां भक्तेन स्वात्मरूपसाक्षात्कारः क्रियते । परमात्मनो ह्यानन्दस्वरूपत्वात् परायाः भक्तेर्दशायां भक्तो यदा सर्वव्यापिनं पूर्णस्वरूपमानन्दमयं परमात्मानं परिपश्यति, तदा पूर्णज्ञानी भवन् परमानन्दसागरे निमज्जति । श्रुतावप्युक्तम्—

"रसोह्येवाऽयं यं लब्ध्वाऽऽनन्दीभवति" इति, जीवो हि स्वस्वरूपं विस्मृत्य प्रकृतिसम्बद्धत्वात् तद्गतेच्छासुखदुःखादि धर्मानात्मन्यारोपयन् घटीयन्त्रसूचीवत् जन्ममृत्युचक्रे परिभ्राम्यन् आध्यात्मिकमाधिदैविकमाधिभौतिकं चेति दुःखत्रयमुपभुङ्क्ते । यतो हि जीवो यदा निजमात्मानमभिमानहेतुना प्रकृतिवन्मन्यते, तर्हि प्रकृतिसमुत्पन्नस्थूलसूक्ष्मकारणशरीरसम्बन्धोऽवश्यम्भावी, अतएव तेन शारीरिकमानसिकाध्यात्मिकसुखदुःखसमूहा भुज्यन्ते । परन्तु यदा परया भक्त्या साधक इदमवधारयति यदहं शरीरत्रयानवच्छिन्नस्तद्गतसुखदुःखा सम्बद्धः सर्वव्यापक-पूर्णानन्दकन्दसच्चिदानन्दस्वरूपस्तदानीमसौ ज्ञानी भक्तः स्वस्वरूपमधिगच्छन् प्रकृतिपरपारस्थिते पूर्णसच्चिदानन्द-महासागरे निमज्जति । यथा किल श्रुतिस्मृतिषु प्रोक्तमुपलभ्यते—

तस्माद्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावतः ॥
ज्ञानविज्ञानयज्ञेन मामिष्ट्वाऽऽत्मानमात्मनि ।
सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽगमन् ॥
भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते ।
मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥

समाधिनिर्धूतमलस्य चेतसो
निवेशितस्यात्मनि यत् सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा
स्वयं यदन्तःकरणेन गृह्यते ॥
तदा पुमान् मुक्तसमस्तबन्धनः
तद्भावभावानकृताशयाकृतिः ।
निर्दग्धबीजानुशयो महीयसा
भक्तिप्रयोगेण समेत्यधोक्षजम् ॥
अधोक्षजालम्भमिहाऽशुभात्मनः
शरीरिणः संसृतिचक्रसाधनम् ।
सद्ब्रह्मनिर्वाणसुखं विदुर्बुधाः
ततो भजध्वं हृदये हृदीश्वरम् ॥
विनिर्धुताऽशेषमनोमलः पुमान्
असङ्गविज्ञानविशेषवीर्यवान् ।
यदङ्घ्रिमूले कृतकेतनः पुन-
र्नसंसृतिं क्लेशवहां प्रपद्यते ॥
यदारतिर्ब्रह्मणि नैष्ठिकी पुमान्
आचारवान् ज्ञानविरागरंहसा ।
दहत्य वीर्यं हृदयं जीवकोषं
पञ्चात्मकं योनिमिवोत्थितोऽग्निः ॥

दग्धाशयो मुक्तसमस्ततद्गुणो
नैवान्तर्वहिरात्मनो विचष्टे।
परात्मनोर्यद् व्यवधानं पुरुस्तात्
स्वप्ने यथा पुरुषस्तद्विनाशे॥
त्वं प्रत्यगात्मनि तदा भगवत्यनन्त-
आनन्दमात्र उपपन्नसमस्तशक्तौ।
भक्तिं विधाय परमां शतकैरविद्या—
ग्रन्थिं विभेत्यसि ममाहमिति प्ररूढम्॥

आत्मसाक्षात्कारं कुर्वता ज्ञानिना भक्तेन परमपदमधिगम्यते। आनन्दस्वरूपसर्वाधारपरमात्मनि परां भक्तिं लभमानस्य साधकस्य न किञ्चिदपि प्राप्तुमवशिष्यते। निर्विकल्पं समाधिं प्राप्नवता ज्ञानिभक्तेन योऽसीमानन्दोऽधिगम्यते नासौ वाचा वर्णयितुं शक्यते। सच्चिदानन्दमहासागरे निमग्नस्य भक्तशिरोमणे समस्तमपि संसारबन्धनं विच्छिद्यते। पञ्चभिः कोषैः सह आत्मनः सम्बन्धेन या किल जीवभावसमुत्पत्तिः सा प्रणश्यति। परां भक्तिं प्राप्तो योगी भगवदानन्दसत्तामधिगम्य संसारचक्रजन्ममृत्युभयाद् विमुच्यते॥ ९॥

सम्प्रति गौण्या भक्तेर्भेदं लक्षयति—

## साधनलभ्या गौणी वैधीरागात्मिका च ॥१०॥

साधनेन लभ्या गौणी भक्तिर्वैधीरागात्मिकाचेति द्विविधभेदसम्पन्ना। वस्तुत उभयोरेव लक्ष्यभूता पराभक्तिरेव। भक्तिविज्ञानमनुसृत्य भक्तस्य यादृशोऽप्यधिकारः कथं न स्यात् परन्त्वसौ परायाः भक्तेः राज्यं समधिगमिष्यत्येव। यतः परा भक्तिः सिद्धावस्थायाः परिणामस्वरूपा। तस्याः पराया भक्तेः प्राप्तये या साधनावस्था सैव गौणीत्युच्यते। गौण्या भक्तेरवस्थाद्वयम्। एका गौणी द्वितीया रागात्मिका च। साधनेन गौणी भक्तिः परिपोषमेति, विधिनिषेधौ मन्यमानः साधको यदा श्रवणकीर्त्तनजपध्यानवहिर्यागान्तर्यागादीनि साधनानि भगवद्भक्तिभावोद्भावकानि कुर्वाणो भक्तिभूमिमग्रेसरति, तदानीं तद्दशाभक्तिरेव वैधी प्रोच्यते। यतो भक्तिदशायामेतस्यां विधेः कर्त्तव्याकर्तव्यस्य नियमस्तिष्ठति। अतएव वैधीति तस्या नाम। किन्तु यदा साधकस्यैवंविधां वैधीभक्तिमनुतिष्ठतश्चित्ते भगवन्तं प्रत्यलौकिकोऽनुरागः समुत्पद्यते, येन रात्रिन्दिवं भक्तो भावसागरे निमग्नोऽपूर्वमानन्दंलभते तदानीं तच्चेतसि तैलधारावदानन्दामृतसिञ्चनकरः सदाऽनवच्छिन्नो भक्तिप्रवाहो विजृम्भते। इयं दशैव रागात्मिका प्रोच्यते॥१०॥

गौणीभक्त्यन्तर्गतवैध्या भक्तेः स्वरूपमाह—

## विधिसाध्यमाना वैधी सोपानरूपा ॥११॥

विधिना विधानेन साध्यमानाऽनुष्ठीयमाना वैधी प्रोक्ता, सा किल सोपानस्वरूपा मन्तव्या। गुरुशास्त्रोपदेशद्वारा निषिद्धसाधनपरित्यागपूर्वकविहितसाधनाभ्यासेन प्रथमदशायां विधीयमाना भक्तिरेव वैधी समाम्नाता। भक्तेः समुन्नतभूमिमासादयितुमियं सोपानस्वरूपा वेद्या। यथा सोपानेन मानवः प्रासादपृष्ठमधिरोहति, तथैव गुरूपदेशेन वैध्याभक्तेर्नवविधाङ्गसाधनानि समाचरन् साधकः शनकैर्योगसम्बन्धिनीं प्रत्यहारभूमिमतिक्रामन् भक्तेरन्ताराज्ये प्रविशति, वैध्या नवाङ्गानि यथा—

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥

एतानि नवान्यङ्गानि समनुसृत्य साधको यदा स्वजीवनचर्या भगवत्सेवायां समर्पयति, तदानीं तदीयं

चेतः सकलकलुषविमुक्तं सत् श्रीभगवतः कृपया हृदयमन्दिरविहारिणउपास्यदेवस्यापूर्वभासनस्वरूपत्वमभ्युपैति। तथाहि स्मृतिशास्त्रे—

यथाग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात्।
तथा तद्विषया भक्तिः करोत्येनांसि कृत्स्नतः॥
प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम्।
धुनोति शमलं कृष्णः सलिलस्य यथा शरत्॥

स्वयमपि निजमुखेन श्रीभगवता प्रोक्तम्—

नाहं वसामि वैकुण्ठे योगिनां हृदये न च।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद॥

श्रीगीतायामपि—

अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ ! नित्ययुक्तस्य योगिनः॥

स्मृतावपि—

यत् पादसेवाभिरुचिस्तपस्विना-
मशेषजन्मोपचितं मलं धियः।
सद्यः क्षिणोत्यन्वहमेधती सती
यथा पदांगुष्ठविनिःसृता सरित्॥

एवं किल वैध्या भक्तेः साधकः श्रवणकीर्त्तनादीनामङ्गानां साधनमनुतिष्ठन् पवित्रचित्तो दास्यसख्यात्मनिवेदननामकान्यन्तिमान्यङ्गानि साधयन् तदन्ते रागात्मिकां भक्तिमासादयति। यतोऽन्तिमाङ्गत्रयसम्बन्धो वैध्या रागात्मिकया च वेदितव्यः। परन्तु भक्तेर्वैध्यां दशायामपि अभ्यासरीत्यैतत् त्रयसाधनमनुष्ठीयते। भगवन्तं स्वप्रभुं मत्वा दासभावेन तत्सेवायां चित्तसमर्पणाभ्यासएव दास्यरूपाङ्गपालनलक्षणम्। भगवन्तं प्रियसुहृदं ज्ञात्वा तेन सह मैत्रीभावस्थापनप्रयत्नो हि सख्यरूपाङ्गलक्षणम्। एवमभ्यस्यतो भक्तसाधकस्य सकलेन्द्रियव्यापारो भगवतो विविधप्रकारासु सेवास्वेव प्रवर्त्तते तदानीं वैध्या भक्तेरन्तिमसाधनस्वरूपस्य आत्मनिवेदनभावस्याधिगमो जायते। स्मृतावप्युक्तम्—

स वै मनस्तस्य पदारविन्दयो-
र्वचांसि वैकुण्ठगुणानुवर्णने।
करौ हरेर्मन्दिरमार्जनादिषु
श्रुतिं कुरुष्वाच्युतसत्कथोदये॥
मुकुन्दलिङ्गालयदर्शने दृशौ
तद्भृत्यगात्रस्पर्शेँ तदङ्गम्।
घ्राणं च तत्पादसरोजसौरभे
श्रीमत् तुलस्यां रसनां तदर्पिते॥
पादौ हरेः क्षेत्रपदानुसर्पणे
शिरो हृषीकेशपदाभिवन्दने।
कामं तु दास्ये नतु कामकाम्यया
यथोत्तमश्लोकजनाश्रया रतिः॥

एवं रीतिमनुसृत्य यदा भक्तो वैध्या भक्तेः परां काष्ठामधिगच्छति, तदैव भगवत् कृपया तच्चित्ते भगवत्यपूर्वा प्रीतिरुत्पद्यते, यया रात्रिन्दिवमविरलं धारावाहिभक्तिस्रोतस्तन्मानसे प्रवहति। तथाहि स्मृतौ—

ध्यानायनं प्रहसितं वहुलाधरौष्ठ-
भासारुणायिततनुर्द्विजकुन्दपङ्क्तिः।
ध्यायेत् स्वदेहकुहरेऽवसितस्य विष्णो-
र्भक्त्यार्द्रयार्पितमना न पृथग् दिदृक्षेत्॥
सतां प्रसङ्गान्मम वीर्यसम्पदो
भवन्ति हृत्कर्णरसायनाः कथाः।
तज्जोषणादाश्वपवर्गवर्त्मनि
श्रद्धा रतिर्भक्तिरनुक्रमिष्यते॥
मद्गुणश्रुतिमात्रेण मयि सर्वगुहाश्रये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥

लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥

अस्यामेवावस्थायां रागात्मिका भक्तिरुदेति । गुणभेदेन भक्तेरनेके भेदाः शास्त्रे समुपलभ्यन्ते । यथा हि बृहन्नारदीयस्मृतौ—

भक्तिर्दशगुणा नृणां पापारण्यदवानलः ।
तामसै राजसैश्चैव सात्त्विकैश्च नृपोत्तमः ॥
यश्चान्यस्य विनाशार्थं भजते श्रद्धया हरिम् ।
शृणुष्व पृथिवीपाल सा भक्तिस्तामसाधमा ॥
योऽर्चयेत् कैतवधिया स्वैरिणी स्वपतिं यथा ।
नारायणं जगन्नाथं सा वै तामसमध्यमा ॥
देवपूजापरं दृष्ट्वा मत्सरी योऽर्चयेद्धरिम् ।
शृणुष्व पृथिवीपाल सा भक्तिस्तमसोत्तमा ॥
धनधान्यादिकं यस्तु प्रार्थयन्नर्चयेद्धरिम् ।
श्रद्धया परयाविष्टः साभक्तीराजसाधमा ॥
यः सर्वलोकविख्यातं कीर्त्तिमुद्दिश्य माधवम् ।
अर्चयेत् परया भक्त्या सा वै राजसमध्यमा ॥
सालोक्यादि पदं यस्तु प्रार्थयन्नर्चयेद्धरिम् ।
विज्ञेया पृथिवीपाल सा भक्ती राजसोत्तमा ॥
यस्तु स्वकृतपापानां क्षयार्थं पूजयेद्धरिम् ।
श्रद्धया परया राजन् सा भक्तिः सात्त्विकाधमा ॥
हरेरिदं प्रियमिति कृत्वा मनसि यो नरः ।
कर्माणि कुरुते भूयो भक्तिः सात्त्विकमध्यमा ॥
विधिबुद्ध्याऽर्चयेद् यस्तु दासवच्चक्रपाणिनम् ।
भक्तीनां प्रवरा ज्ञेया सा भक्तिः सात्त्विकोत्तमा ॥
नारायणस्य महिमां काञ्चिच्छ्रुत्वापि यो नरः ।
तन्मयत्वेन सन्तुष्टः सा भक्तिः सात्त्विकोत्तमा ॥
अहमेव परो विष्णुर्मयि सर्वमिदं जगत् ।
इति यः सततं पश्येत् तं विद्यादुत्तमोत्तम् ॥
एवं दशविधा भक्तिः संसारच्छेदकारिणी ।
तत्रापि सात्त्विकी भक्तिः सर्वकामफलप्रदा ॥

इति ॥११॥

रागात्मिकां भक्तिं व्याचष्टे—

## रसानुभाविकाऽऽनन्दशान्तिदा रागात्मिका ।१२।

रसस्य परात्मस्वरूपस्य अनुभाविका अनुभावयित्री आनन्दशान्त्योः प्रदात्री भक्तिः किल रागात्मिका प्रणिगद्यते । गौण्या भक्तेरङ्गभूताया रागात्मिकायाः समुदयेन साधकः प्रीतिविशुद्धतामनुभूयालौकिकं रसमास्वादयितुं प्रभवति । धारणाया भूमेर्दार्ढ्येन हेतुना रात्रिंदिवं भगवच्चरणारविन्दचिन्तनपरायणचित्तो यदा जायते, तदानीं भागवतप्रधानोऽसौ प्रीतिरसमेकमपूर्वमनुभवति । यतसम्बन्धे स्मृतिराह—

विसृजति हृदयं न यस्य साक्षात्
हरिरवशाभिहितोऽप्यघौघनाशः ।
प्रणयरसनया धृतांघ्रिपद्मः
स भवति भागवतप्रधान उक्तः ॥
त्रिभुवनविभवहेतवेऽप्यकुण्ठ-
स्मृतिरजितात्मसुरादिभिर्विमृग्यात् ।
न चलति भगवत्पदारविन्दा-
ल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः ॥
एवं हरौ विदधति प्रतिलब्धभावो
भक्त्यार्द्रवद्धृदय उत्पुलकः प्रमोदात् ।
औत्कण्ठ्यवाष्पकलया मुहुरर्द्यमानः
तच्चापि चित्तवडिशं शनकैर्वियुंक्ते ॥
भक्तिं मुहुः प्रवहतां त्वयि मे प्रसंगो
भूयादनन्तमहताममलाशयानाम् ।
येनाऽञ्जसोल्बणमुरुव्यसनं भवाब्धिं
नेष्ये भवद्गुणकथामृतपानमग्नः ॥

भक्ताग्रगण्यः साधको भक्तिरसद्रवीभूतो भक्तिरसास्वादनोन्मत्तः क्षणमात्रमपि श्रीभगवच्चरणारविन्दचिन्तनविरक्तो न जायते। भक्तस्य चित्तं यदैवं प्रकारेण भगवति विनिविष्टं जायते तदानीं भगवद्रसास्वादनेन भक्तहृदये परमानन्दज्योतिः शान्तिश्च समुदेति। अयमेव रागात्मिकाया भक्तेर्विभिन्नदशायां साधकचित्तस्यापूर्वालौकिको भावः।

स्मृतावुक्तम्—

भक्तिं हरौ भगवति प्रवहन्नजस्र—
मानन्दवाष्पकलया मुहुरर्दमानः।
विक्लिद्यमानहृदयः पुलकाचिताङ्गो
नात्मानमस्मरदसाविति मुक्तलिङ्गः॥
इत्यच्युतांघ्रिं भजतोऽनुवृत्त्या
भक्तिर्विरक्तिर्भगवत्प्रबोधः ।
भवन्ति वै भागवतस्य राजन्
ततः परां शान्तिमुपैति साक्षात्॥

श्रीपति भगवत्येवंविधरागात्मिका भक्तेः समुदयेन साधकचित्तं द्रवीभवति । साधकनेत्राभ्यां निरवच्छिन्ना आनन्दाश्रुधारा प्रवहति। तदानीं भक्तशिरोमणिना तेन सकलसाधनफलस्वरूपा पवित्रा शान्तिरुपलभ्यते। वैध्या भक्तेरवस्थायां यथा साधको विधिनिषेधौ स्वीकुर्वन् बहिर्लक्ष्यपरायणो यथाऽभवत्, तथाऽस्यां रागात्मिकाया भक्तेर्दशायां न भवति। अत्र तु बहिर्लक्ष्यं प्रणश्यति। अस्यामवस्थायां भाग्यवान् भक्तोऽन्तर्जगत्येव विचरन् रागात्मिकाया भक्तेस्तेषु तेष्वनुरागेषु निमज्जोन्मज्जनं विदधानस्तिष्ठति। विशिष्टाया भक्तेरनुरागोऽसौ "आसक्तिरपि" प्रोच्यते। भक्तिरियं रागात्मिका महता भाग्येन समवाप्यते॥ १२॥

एतस्य भावस्योदयेन भक्तस्य समुत्पन्ना दशा वर्ण्यते—

## भक्तस्तब्धात्मारामत्वम्॥ १३॥

रागात्मिकायां भक्तौ निमग्नः साधको मत्तः स्तब्ध आत्मारामो जायते। योगस्य धारणाभूमिमासादयन् भक्तशिरोमणिर्यदा भगवद्रससमुद्रस्य विभिन्नभाववीचिषु निमग्न आनन्दमपूर्वां शान्तिं च समधिगच्छति, तदा तदीय चेतसा विषयवासना तत्क्षणमेव विनश्यति। आनन्दसागरनिमज्जनोन्मज्जनकारिणो भक्तस्य रसानुभवतारतम्यमनुसृत्य तदीयानि बहिर्लक्षणानि विभिन्नप्रकाराणि दृष्टिगोचरतामापद्यन्ते, रागात्मिकायां भक्तौ निमग्नः साधकः कदाचिद् रागामृतपानेन समुन्मत्तो भवति, कदापि स्वकीय हृदयान्तःस्थले रागरूपममृतं पूर्णरूपेण निक्षिप्य पूर्णकुम्भवत् स्तब्धो निःशब्दश्च जायते। कदाचिच्च हृदयकमलविराजमाने आत्मनि अपूर्वामासक्तिमधिगत्य आनन्दपवित्रधारामवगाहमान आत्मारामतां प्रतिपद्यते। एतदेव रागात्मिकाया भक्तेश्चरमफलमवधेयम्॥ तथा चोक्तम् स्मृतिशास्त्रे—

कथं विना रोमहर्षं द्रवता चेतसा विना।
विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाऽऽशयः।
यथाग्निना हेममलं जहाति,
ध्मातं पुनः स्वं भजते च रूपम्।
आत्मा च कर्मानुशयं विधूय
मद्भक्तियोगेन भजत्यथो माम्॥
वाग्गद्गदा द्रवते यस्य चित्तम्,
रुदत्यभीक्ष्णं हसति क्वचिच्च।
विलज्ज उद्गायति नृत्यते च
मद्भक्तियुक्तो भुवनं पुनाति॥
एवं व्रतः स्वप्रियनामकीर्त्या
जातानुरागो द्रुतचित्त उच्चैः।

हसत्यथोरोदिति रौति गाय-
त्युन्मादवन्नृत्यति लोकबाह्यः ॥
क्वचिद् रुदन्त्यच्युतचिन्तया क्वचित्
हसन्ति नन्दन्ति वदन्त्यलौकिकाः ।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं
भवन्ति तूष्णीं परमेत्यनिर्वृताः ॥

क्वचिद् रुदति वैकुण्ठ चिन्ताशवलचेतनः ।
क्वचिद्धसति तच्चिन्ताह्लाद उद्गायति क्वचित् ॥
नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित् ।
क्वचित् तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥
क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ।
अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥

निशम्य कर्माणि गुणानतुल्यान्
वीर्याणि लीलातनुभिः कृतानि ।
यदातिहर्षोत्पुलकाश्रुगद्गदं
प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥
यदा ग्रहग्रस्त इव क्वचिद्धस-
त्याक्रन्दते ध्यायति वन्दते जनम् ।
मुहुः श्वसन् वक्ति हरे जगत्पते
नारायणेत्यात्ममतिर्गतत्रयः ॥

अयमेव रागात्मिकाया भक्तेरपूर्वो महिमा। यद्यपि स्वरूपज्ञानाधिगमेन सर्वश्रेष्ठो भक्तः परायां भक्तावात्मारामदशामधिगच्छति; परन्तु रागात्मिकायां भक्तावपि भगवद्भावाप्लुतो भक्तो भावसाहाय्येन आत्मारामतां प्रतिपद्यते। भगवद्भावेषु कमप्येकं भावमाश्रित्य भावरससागरे निमज्जनोन्मज्जनमेव रागात्मिकाया भक्ते यथार्थस्वरूपम् ॥ १३ ॥

रागात्मिकया भक्त्या संयुक्तस्य भक्तस्य भावं वर्णयित्वा तेन भावपदार्थेन साकमीश्वरस्य कार्यब्रह्मणश्च कीदृशः सम्बन्ध इत्युच्यते—

**भावगम्य ईश्वरः शब्दद्योत्यश्च भावस्तस्मान्नाम-रूपात्मकं कार्यब्रह्म ॥ १४ ॥**

परमेश्वरो भावेन गम्यः। भावश्च शब्देन द्योत्यः प्रकाश्यः तस्मात् करणात् कार्यब्रह्मनामरूपात्मकमवधेयम्। यत्रभावस्तत्र रूपं शब्दश्च। अन्यच्च भावजनितरूपशब्दाभ्यां कार्यकारणरूपेण नामप्राकट्यमुपैति, सुतरां भावशब्दात्मकस्य जगतो नामरूपात्मकत्वं स्वतःसिद्धम्। वाङ्मनसयो बुद्धेश्चातीतमपि भगवन्तं भावुकः साधको भावद्वारैव साक्षात्करोति। श्रुतावुक्तम्—

भावग्राह्यमनीडाख्यं भावाभावकरं शिवम्।
कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥

तटस्थज्ञानेन स्वरूपज्ञानाधिगमकाले प्रधानावलम्बनभूतः भाव एव। ज्ञातृज्ञानज्ञेयेति त्रिपुटीसत्त्वे आत्मसम्बन्धस्थापनमेव तटस्थज्ञानमुच्यते। यत्र च त्रिपुटी विलयेनाद्वितीयसच्चिदानन्दस्वरूपस्य साक्षात्कृतिः तत् स्वरूपज्ञानमवधेयम्। एतद् द्वयसन्धौ भावस्यावश्यकत्वम्। यतो हि तटस्थज्ञानभूमितः स्वरूपज्ञानभूमिमासादयितुं कस्यचिदवलम्बनस्यावश्यकत्वात् साधकेन भावस्यैवाश्रयः क्रियते। स च तदर्थमत्यावश्यकः। अहमस्मि सच्चिदानन्दस्वरूपं ब्रह्मेत्युच्चभावाश्रयेण साधकः परमात्मनः स्वानुभवाधिगत्या कृतकृत्यतामापद्यते। अतएव स्मृतौ भावस्य बहुशो महिमा गीतः। तथा हि—

भावेन लभ्यते सर्वं भावेन देवदर्शनम्।
भावेन परमं ज्ञानं यस्माद्भावावलम्बनम् ॥
भावात्परतरं नास्ति त्रैलोक्ये सिद्धिमिच्छताम्।
भावो हि परमं ज्ञानं ब्रह्मज्ञानमनुत्तमम् ॥
भावात्परतरं नास्ति येनानुग्रहवान् भवेत्।
भावादनुग्रहप्राप्तिरनुग्रहान्महासुखी ॥

भावेन लभ्यते सर्वं भावाधीनमिदं जगत्।
भावं विना महाकाल न सिद्धिर्जायते क्वचित्॥
भावात् परतरं नास्ति भावाधीनमिदं जगत्।
भावेन लभ्यते योगस्तस्माद् भावं समाश्रयेत्॥

यद्यप्यान्तरिकभावप्रकाशने वहिरङ्गचेष्टायाः सहायकत्वम्, परन्तु तत्र प्रधानसहायकः शब्द एव। तद्द्वारैव वहिर्जगत्यान्तरिकभावानां स्थायित्वे साक्षाद्रूपेण साहाय्यं प्राप्यते। यथा क्षणमाविद्युत् क्षणमात्रं प्रभाप्रदानद्वारा जगदालोकयन्ती क्षणान्तरेणैव मेघगर्भे-विलीना जगत् द्विगुणान्धकारपरिपूर्णं विधत्ते, तथैवान्तर्जगति प्रकाशितोऽपि यदि वहिर्जगति शब्दद्वारा प्रतिष्ठितो न भवेत् तर्हि भावाप्रकाशेन वाह्यसंसारो भावशून्यता रूपान्धकारेणाच्छन्नो जायते। भावस्तु कारणब्रह्मसम्वद्धः। स हि भावप्रकाशितः। शंकतेऽत्र—योगदर्शने "तस्य वाचकः प्रणवः" इति सूत्रेण ईश्वरस्य प्रणववाचकता निरूपिता परन्तु सूत्रेऽत्र—"शब्दद्योत्यश्चभावः" इति प्रतिपादितम्। तदैतद्विरुद्धाभिप्रायस्य किं सामञ्जस्यम्? यतो वाचकद्योतकशब्दावेकार्थं प्रकाशकौ। समाधत्ते—शास्त्रेषु वाचकद्योतकशब्दयोरेकार्थप्रकाशकत्वे किञ्चिदर्थपार्थक्यमपि निभाल्यते। साहाय्यान्तरमन्तरेण स्वयमर्थप्रकाशको वाचकशब्दार्थः। कस्यचिदवलम्बनेनार्थप्रकाशकरो द्योतकशब्दार्थः। प्रणवशब्द ईश्वरवाचकः। यतः सृष्ट्युन्मुखप्रकृतिपुरुषप्रथमसम्मेलनेन प्रणवोत्पत्तिः। अतः साक्षात्सम्वन्धेन प्रणव एवेश्वरवाचको भवितुमर्हति। एवं हि प्रणवस्वरूपशब्देन सह ईश्वरस्य साक्षात् सम्वन्धसत्वेऽपि प्रणवेनेश्वरोऽवगम्यते। तदवलम्बितशब्दः परमेश्वरस्य भावसमूहं प्रकटयति अतो "भावः शब्दद्योत्य" इत्युक्तम्, न शब्दवाचकः। अत इदमविरुद्धभावसामञ्जस्यमगवन्तव्यम्। भावः शब्दश्च रूपान्तरेण रूपेण नाम्ना च परिणतौ भवतः। जगदुत्पत्तिकरो भाव एव संसारे रूपनाम्ना शब्दनाम्ना च प्रकाश्यमभ्युपैति। नाम तु शब्दस्यैव परिणाममात्रम्। अतः कार्यब्रह्मपरनामकं दृश्यमानं जगदिदं नामरूपात्मकमवबुध्यते। यतः कारणगुणाः कार्यगुणमाश्रयन्ते। यदि कारणेन भावः सम्वद्धः, सच कार्यकारणयोर्विवर्त्तस्वरूपः कारणसम्वन्धयुक्तो भावश्च नाम्ना रूपेण च कार्ये प्रकाशितो जायते, तर्हि कार्यब्रह्म नामरूपात्मकमिदं विज्ञानं सुप्रसिध्यति। अतः श्रुतिरभिधत्ते—

"रूपं रूपं प्रतिरूपो वभूव तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयते, युक्तो ह्यस्य हरयः शतादश" इति

"नामरूपे व्याकरवाणि" "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते" "आकाशो ह वै नामरूपयोर्निवहिता"।

यदा कारणं ब्रह्म मायाश्रयेण कार्यब्रह्मरूपेण विवर्त्तते, तदानीं नामरूपावलम्वनं जायते। कारणब्रह्मणः कार्यं कार्यस्वरूपं जगदवधेयम्। भावो यदाऽन्तिमावलम्बनीभूतो लयोन्मुखतां प्रपद्यमानः स्वरूपज्ञानमासादयतीत्यन्यमेतत्, किन्तु लयोन्मुखाभावे भावेनैव रूपशब्दनाम्ना कारणकार्यरूपेण नामैव समुत्पन्नं भवति। अत एतदभ्युपगन्तव्यमेव यत् कार्यब्रह्म रूपं जगत् नामरूपात्मकमिति॥ १४॥

भावप्रसङ्गात् ज्ञानाज्ञानभूमीनां निर्देशः क्रियते—

**"भावमयदृश्यस्य चतुर्दशविधतया सप्त ज्ञानभूमयः, सप्ताज्ञानभूमयः॥ १५॥**

भावमयं यत् दृश्यं तस्य चतुर्दशप्रकारतया ज्ञानभूमयः सप्त, अज्ञानभूमयश्च सप्तैव विद्यन्ते।

भावमयदृश्यानि चतुर्दशधा विभक्तानि । तथाहि श्रुतौ—

ॐ ये ते पाशाः सप्त सप्त त्रेधा तिष्ठन्ति ।

आधिभौतिकं परमात्मनः कार्यब्रह्म विराट् स्वरूपं, तस्यैव भेदाश्चतुर्दशविधाश्चतुर्दशभुवनसंज्ञया वेदे वर्णिताः ! सत्त्व-तमसी, पुण्यपापे प्रकाशान्धकारौ चानुसृत्य विराट्पुरुषस्य नाभेरुपरि सप्तलोकाः, अधश्च सप्तलोकाः मिलित्वा चतुर्दशलोका विद्यमाना वेद्याः ।

स्मृतावपि तथा—

स एव पुरुषस्तमादण्डं निर्भिद्य निर्गतः ।
सहस्रोर्वङ्घ्रिबाह्वक्षः सहस्राननशीर्षवान् ।।
यस्येहावयवैर्लोकान् कल्पयन्ति मनीषिणः ।
कट्यादिभिरधः सप्त सप्तोर्ध्व जघनादिभिः ।।

कार्यकारणसम्बन्धानुसारेण व्यष्टिसृष्टावपि प्रायः सर्वे पदार्थाः सप्तप्रकारा दृश्यन्ते, यथा सप्त व्याहृतयः, सप्त दर्शनानि, सप्त दिनानि । सप्त धातवश्चेत्यादि ।

तथाहि श्रुतौ—

"सप्त प्राणाः प्रभवन्ति, तस्मात् सप्तर्चिषः,
समिधः सप्त होमाः, सप्त इमे लोकाः,
येषु चरन्ति प्राणा गुहाशया निहताः
सप्त सप्त" ।। इति ।

स्मृतावपि—

अन्ये भेदाश्च भो देवाः श्रूयन्तां सप्तधा मम ।
स्थूलसूक्ष्मप्रपञ्चेषु व्याप्तोऽस्मि सप्तरूपतः ।।
अज्ञानज्ञानयोरस्मि भूमयः सप्त सप्त च ।
ऊर्द्ध्वलोकाश्च ये सप्त ह्यधोलोकाश्च सप्त ये ।।
अहमेवास्मि ते सर्वे सप्त प्राणास्तथैव च ।
सप्त व्याहृतयः सप्त समिधः सप्तदीप्तयः ।।
अहमेवास्मि भो देवाः सप्त होमा न संशयः ।
वारा वै सप्तभूत्वाऽथ कालं हि विभजाम्यहम् ।।
सप्तभूम्यनुसारेण ज्ञानस्य त्रिदिवौकसः ।
सप्तज्ञानाधिकाराश्चोपासनायास्तथैव च ।।
सप्त कर्माधिकाराश्च सर्वे तेऽस्म्यहमेव भोः ।
सप्त चक्रविभेदेषु प्राणावर्त्तात्मकेष्वहम् ।।
पीठानां स्थापनं कार्यमाविर्भूय करोम्यहम् ।।
कृष्णरक्तादिका वर्णा भूत्वा च सप्तसंख्यकाः ।
अहमेव जगत्सर्वं नितरां संप्रकाशये ।
सप्तच्छाया स्वरूपेण पुनश्चाहमिदं जगत् ।।
गभीरध्वान्तपुञ्जेन सर्वमाच्छादयामि च ।
लौकिकं भावराज्यञ्च सप्त गौणरसैरहम् ।।
व्यनज्मि साधकान् भूयः सुदिव्येऽलौकिके रसे ।
सप्त मुख्यरसैरेवोन्मज्जये च निमज्जये ।।
जीवानां स्थूलदेहेषु व्याप्तास्मि सप्त धातुभिः ।
जीवाधारक्षितावस्यां व्याप्तास्मि च तथैव तैः ।।
मद्वाचकस्य भो देवाः प्रणवस्य निरन्तरम् ।
सप्ताङ्गानि स्वराः सप्त सम्भूयोत्पादयन्ति च ।।
सृष्टिं शब्दमयीं सर्वां वैदिकीं लौकिकीं तथा।
तीर्थानां सप्त भेदा वै पीठानां च दिवौकसः ।।
अनार्यमानवानां च सप्तभेदा यथोचिताः ।
सप्ताधिकारा ये देवा आर्यजातेः प्रकीर्तिताः ।।
सप्त स्थूलप्रपञ्चस्य शक्तयश्चाहमेव ताः ।
सप्त सागररूपेण सदा पर्यावृतास्ति हि ।।
निवासभूमिर्जीवानां मयैव सुरसत्तमाः ।
उपासकगणान् सप्त मातृकारूपमाश्रिताः ।।
अहन्तूपासनामार्गे विधायाग्रेसरान् हि तान् ।
उपासनानदीस्नातान् स्वसमीपं नयामि च ।।
भूमिर्दार्शनिकीः सप्त निर्माय ताभिरेव च ।
आरोप्य ज्ञानसोपानं साधकास्तत्त्ववेदिनः ।।

न यस्मात् पुनरावृत्तिस्तत् कैवल्यपदं नये।

एतत्प्रमाणान्यनुसृत्य ज्ञानभूमीनामज्ञानभूमीनां च सप्त सप्त विभागा मिलित्वा चतुर्दशविभागा भवन्ति ॥१५॥

इदानीं रसविभागा उच्यन्ते—

**रसानुभवश्चतुर्दशविधस्तत्र सप्त गौणाः सप्त मुख्याश्च ॥१६॥**

रसस्यानुभवो ज्ञानमपि चतुर्दशप्रकारकं भवति। तत्र सप्त रसा मुख्याः सप्त गौणाश्च। सप्त गौणा रसाः निम्नश्रेणयो न साक्षादुन्नतिकरास्ते चाग्रे विवेचयिष्यन्ते। यथैकस्य ब्रह्माण्डस्य उत्तममध्यमभेदेन सप्त सप्त मिलित्वा चतुर्दश भेदाः सन्ति, तथैव भावरससागरस्यापि चतुर्दश भेदा अवगन्तव्याः। वस्तुतो दृश्यरूपजगतः सर्वेऽपि विभागाः पूर्वसूत्रोक्ताः सप्त विधा भवन्ति। त एव सप्त प्रकृतेः स्वभावसिद्धद्वन्द्वरूपेण चतुर्दश संख्यका जायन्ते। यथा चैकत्र ब्रह्माण्डे सत्त्वमया भूर्भुवः स्वरादयो लोकाः सप्त तमोमयाश्चातलविलसुतलादयो लोकाः सप्त तथैतद् द्वन्द्वविज्ञानमनुसृत्य भगवद्भावप्रकाशशीला रसा अपि मुख्यगौणभेदेन चतुर्दशविधा विज्ञेयाः। रसानां चतुर्दशत्वं दार्शनिकविज्ञानसिद्धम् ॥१६॥

रसा वर्ण्यन्ते—

**हास्यादयो गौणाः दास्यासक्ति-सख्यासक्ति-वात्सल्यासक्ति-कान्तासक्त्यात्मनिवेदनासक्ति-गुणकीर्त्तनासक्ति-तन्मयासक्तयश्च मुख्याः ॥१७॥**

स्पष्टोऽर्थः। रसभावविज्ञातॄणाम् पूर्वाचार्याणामिदं सम्मतं यत् सृष्टिरियं शृङ्गारद्वारैव सम्पूर्णमिदं जगदाविर्भूतम्। तथा हि श्रुतौ—

"तमसासीत् तमसा गूढमग्रे प्रकेतं सलिलम्। नाऽसदासीन्नो सदासीत्तदानीं नासीद् रजो नो व्योमपरो यत्। किमावरीवः कुहकस्य शर्मन्नाम्नः किमासीद् गहनं गभीरम्। न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः।"

आसीदवातं स्वधया तदेकं
तस्मादन्यान्न परः किञ्चनास ॥
कामस्तदग्रे समवर्तताधिमनसो
रेतः प्रथमं यदासीत्।
सतो बन्धुरसतो निरविन्दन्
हृदि प्रतिष्या कवयो मनीषा ॥
"आत्मैवेदमग्र आसीदेक एव, सोऽकामयत
जाया मे स्यादथ प्रजायेय"
"स तपस्तप्त्वा मिथुनमैच्छत्"।
तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।
अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥
यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः।
तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥

एतन्मंत्राणामित्थमाशयः—ब्रह्माण्डप्रलयदशायां सत् असत् आकाशादयः केऽपि पदार्था नासन्। सर्वत्रैवान्धकारः परिव्याप्त आसीत्। मृत्युः, अमृतः, (अमरता) दिनं, रात्रिः नासीत्। केवलमेकमात्रपरमात्मैवाविद्यत। तदनन्तरं प्रलयगर्भलयप्राप्तजीवसमष्टिसंस्कारे अंकुरोत्पत्तिकालः समागतः, तदानीं परमात्मना तपः कृत्वा मैथुनेच्छा विहिता। तस्य तपो मनुष्यवत् साधारणं नासीत्। तपस्तत्पूर्वकल्पानुसारेण सृष्टिविषयकं ज्ञानमात्रमेव। एतेन ज्ञानेनैव "एकोऽहं बहु स्याम" इतीच्छां परमात्मा प्रकटितवान्, तदा तस्यैव शरीरात् प्रकृतिरूपिणी जाया प्रादुरभवत्। यया सह मिथुनीभावफलस्वरूपैवेयं शृङ्गारप्रचुरा सृष्टिरवगन्तव्या।

स्मृतावप्युक्तम्—

द्विधा कृत्वाऽऽत्मनोदेहमर्धेन पुरुषोऽभवत् ।
अर्धेन नारी तस्यां स विराजमसृजत् प्रभुः ॥

निम्ननिर्दिष्टप्रकारसृष्टिरपि स्मृत्यन्तरे समुपलभ्यते—

योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः ।
पुमांश्च दक्षिणार्धांगो वामार्धा प्रकृतिः स्मृता ॥
तां ददर्श महाकामी कामाधारां सनातनः ।
अतीव कमनीयां च चारुपङ्कजसन्निभाम् ॥
दृष्ट्वा तां तु तया सार्धं रासेशो रासमण्डले ।
रासोल्लासेषु रसिको रासक्रीडां चकार ह ॥
नाना प्रकारश्रृङ्गारं श्रृङ्गारो मूर्त्तिमानिव ।
चकार सुखसम्भोगं यावद्वै ब्रह्मणो दिनम् ॥
ततः स च परिश्रान्तस्तस्या योनौ जगत्पिता ।
चकारवीर्याधानं च नित्यानन्दे शुभक्षणे ॥
गात्रतो योषितस्तस्य सुरतान्ते च सुव्रत ।
निःससार श्रमजलं श्रान्तायास्तेजसा हरेः ॥
महाक्रमणक्लिष्टाया निःश्वासाच्च बभूव ह ।
तदा वव्रे श्रमजलं तत् सर्वं विश्वगोलकम् ॥
स च निःश्वासवायुश्च सर्वाधारो बभूव ह ।
निःश्वासवायुः सर्वेषां जीवानां च भवेषु च ॥
धर्मतोयाधिदेवश्च बभूव वरुणो महान् ।
तद्वामाङ्गाच्च तत्पत्नी वरुणानी बभूव सा ॥
अथ सा कृष्णचिच्छक्तिः कृष्णगर्भं दधार ह ।
शतमन्वन्तरं यावज्ज्वलन्ती ब्रह्मतेजसा ॥
शतं मन्वन्तरान्ते च कालेऽतीतेऽपि सुन्दरी ।
सुषाव डिम्बं स्वर्णाभं विश्वाधारालयं परम् ॥
समस्तजीवाधारं हि ब्रह्माण्डं तदिहोच्यते ॥इति॥

भक्तिविषयकाश्चतुर्दशरसा अपि एतत्सृष्टिप्राथमिकश्रृङ्गाररसपरिणामस्वरूपा वेद्याः । केवलं निमित्तभेदेनैव समस्तजगन्मूलकारणरूपः प्रकृतिपुरुषसंयोगात्मकः श्रृङ्गाररस एवानेकान् भेदान् प्राप्तः सम्पूर्णजीवहृदयराज्येषु स्वाधिपत्यं स्थापितवानस्ति, चतुर्दशरसेष्वेषु सप्त मलिन श्रृङ्गारात्मकाः, सप्त च शुद्धश्रृङ्गारात्मका विज्ञेयाः । हास्य-वीर-करुण-अद्भुत-भयानक-बीभत्स-रौद्राश्चेति सप्त गौणा मलिनश्रृङ्गात्मकाः । एतेषां रसानां विषये केऽपि भक्ताचार्या एतदभिप्रयन्ति यत् सर्वेषां रसानामानन्दपरिणामस्वरूपत्वात्, तद्द्वारापि समुन्नतिर्भवितुमर्हति, किन्तु रसा ह्येते स्वाश्रयमालिन्याद् गौणा एवावगन्तव्याः । हास्यादिगौणरसद्वारा समुन्नतिविषये स्मृतिराह—

उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ।
द्विषन्नपि हृषीकेश किमुताधोक्षजप्रियाः ॥
कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च ।
नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥
भैष्मीराधादिरूपेषु श्रृंगारः परमोज्ज्वलः ।
भीष्मो वीरे दशरथः करुणे स्थितिमाप्तवान् ॥
बल्यर्जुनयशोदानां विश्वरूपस्य दर्शने ।
अत्यद्भुतरसास्वादः कृष्णानुग्रहतो भवेत् ॥
गोपालबाला हासस्य श्रीदामोद्वहनादिषु ।
एवमन्यत्र भीत्यादि त्रितयेऽपि विचिन्त्यताम् ॥
गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद्वृष्णयः स्नेहात्पार्था भक्त्या मुनीश्वराः ॥
श्रृङ्गारी राधिकायां सखिषु सकरुणः क्ष्वेडदग्धेष्वगाहे
बीभत्सी तस्य गर्भे व्रजकुलतनयाचैलचौर्ये प्रहासी ।
वीरो दैत्येषु रौद्री कुपितवति तुरासाहि हैयङ्गवीनस्तेये श्रीमान् विचित्रो निजमहसि शमीदामवन्धे स जीयात् ॥

सप्तसु मुख्यरसेष्वेवं नास्ति । यतो हि दास्यादिमुख्यासक्तिषु मलिनताया अत्यन्ताभावात् दास्यादिद्वारा साक्षाद्रूपेण भक्तानां कल्याणं सम्पद्यते । अनुरागो-

दयेन भक्तानां चेतांसि रात्रिन्दिवमानन्दसागरे निमग्नानि तिष्ठन्ति । प्रकृतिवैचित्र्यहेतुना कल्पतरुं श्रीभगवन्तं प्रति कश्चिद्दासभावेन, कोऽपि वात्सल्येन, अपरः कान्तभावेन, परः आत्मनिवेदनेन अन्यो गुणकीर्त्तनेन, कोऽपि च तन्मयतया च भगवच्चरणारविन्दसन्निधानेऽग्रेसरन् अन्ते परमानन्दपदमधिगच्छति। भगवान् भक्ताधीन इति हेतो भगवदासक्तभक्तानां परममनुग्रहं विदधत् तांश्च संरक्षन् अन्ते परमानन्दरूपमुक्तिपदं प्रापयति ।

सहि निजमुखेनैव स्वयमाह—

अहं भक्तपराधीनो ह्यस्वतन्त्र इह द्विज ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥
नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ।
श्रियञ्चात्यन्तिकं ब्रह्मन् ! येषां गतिरहं परा ॥
ये दारागारपुत्राप्तप्राणान् वित्तमिमं परम् ।
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥
मयि निर्बद्धहृदया-साधवः समदर्शनाः ।
वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥
साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ।
मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि ॥

भगवतोऽतिप्रियाणां भक्तानां दास्यसख्याद्यासक्तिसम्बन्धे भक्तिशास्त्रे बहूनि प्रमाणानि समुपलभ्यन्ते । पवनात्मजस्य हनूमतो भगवति श्रीरामचन्द्रे या किलापूर्वा दास्यासक्तिरासीत् सा जगत्प्रसिद्धैव । दास्यासक्तेः समुदयेन भक्तः सेवकभावेन भगवति तत्सेवकेषु च नैजमात्मानं समर्पयति । श्रीभगवान् स्वयमाह—

मद्भक्तानां च ये भक्तास्ते मे भक्ततमाः स्मृताः ।
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ॥
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ।

सख्यभावदृष्टान्तस्वरूपोऽर्जुनो वेद्यः । स च भगवतः सख्यभावमधिगतो भेदबुद्धिं सर्वथैव परित्यक्तवानासीत् । विश्वरूपदर्शनेन यदा श्रीकृष्णस्य यथार्थस्वरूपमधिगतवान् तदाऽसौ करौ बद्ध्वा प्रोवाच—

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण ! हे यादव ! हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वापि ॥
यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत ! तत्समक्षं
तत् क्षामये त्वामहमप्रमेयम् ॥

वात्सल्यासक्तिदृष्टान्तभूता यशोदानन्दादयो गोपा आदर्शस्वरूपेण विज्ञातुं शक्यन्ते । एतैस्तु भगवतः श्रीकृष्णस्य विश्वरूपधारणं कालीयनागदमनादिकमलौकिकं कार्यकलापमवलोक्यापि पुत्रभावेनैव तत्र प्रीतिरनुष्ठिता । एतद्वात्सल्यभावभावितेन केनापि भक्तेन प्रतिपादितम्—

एह्येहि वत्स नवनीरदकोमलाङ्ग !
याचामि मूर्धनि चिराय परिष्वजे त्वाम् ।
आरोप्य वा हृदि दिवानिशमुद्वहामि
वन्देऽथवा चरणपुष्करकद्वयं ते ॥

कान्तासक्तेरपूर्वमुदाहरणं व्रजगोपिकासु दृष्टिगोचरतामायाति । आभिस्तु समस्तापि लोकलज्जां कुलमर्यादां गार्हस्थ्यधर्मं चापि परित्यज्य श्रीकृष्णं परं ब्रह्म ज्ञात्वा वृन्दावननिवासिनो मोहनमुरलीधारिणो हृदयराजस्यानन्दकन्दसच्चिदानन्दस्वरूपस्य कृष्णस्य भगवतः पवित्रे प्रेमसिन्धौ स्वीया जीवननौकाः सनिर्भयहृदयं प्रवाहिताः ।

यदर्थं भगवताऽपि प्रोक्तम्—

न पारयेऽहं निरवद्य संयुजां
स्वसाधुकृत्यं विबुधायुषाऽपि वः।
या माऽभजन्दुर्जरगेहशृङ्खलाः
संवृश्च्य तद्वः प्रतियातु साधुना ॥

उद्धवं च वृन्दावने प्रहिण्वता श्रीकृष्णेन स्वयं प्रोक्तम्—

ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः।
मामेव दयितं प्रेष्ठमात्मानं मनसा गताः ॥
ये त्यक्तलोकधर्माश्च मदर्थे तान् विभर्म्यहम्।
मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ॥
स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः।
धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथंचन ॥
प्रत्यागमनसन्देशैर्वल्लव्यो मे मदात्मिकाः।

आत्मनिवेदनासक्तिसम्बन्धे देवर्षिनारदादयो दृष्टान्तभूताः सन्ति। एतैस्तु हरौ भगवति देहं मनः स्वप्राणांश्च समर्पयद्भिः प्रकृष्ट आत्मनिवेदनासक्ति परिचयो दत्तः। आत्मनिवेदनासक्तेरुदयेन भक्तचेतसोऽहंभावस्य नाशो जायते, तदीय जीवनचेष्टादयो भगवत्प्रीत्यर्थमेव सम्पद्यन्ते, स्मृतावप्युक्तम्—

सा वाग्यया तस्य गुणान् गृणीते
करौ च तत्कर्मकरौ मनश्च ॥
स्मरेद्वसन्तं स्थिरजङ्गमेषु
शृणोति तत्पुण्यकथाः स कर्णः ॥
शिरस्तु तस्योभयलिङ्गमानमेत्
तदेव यत् पश्यति तद्धि चक्षुः।
अङ्गानि विष्णोरथ तज्जनानां
पादोदकं यानि भजन्ति नित्यम् ॥

वाणी गुणाऽनुकथने श्रवणौ कथायाम्
हस्तौ च कर्मसु मनस्तव पादयोर्नः।
स्मृत्यां शिरस्तव निवासजगत्प्रमाणे
दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥

इमे हि आत्मनिवेदनासक्तिभावाः परिवेदनीयाः। गुणकीर्तनासक्तिदृष्टान्तभूतो महर्षिर्वेदव्यासोऽवगन्तव्यः। अखिलानि शास्त्राणि विरच्यापि यदा तेन शान्तिर्नासादिता तदा भगवद्गुणकीर्तनेन निर्वृत्तिरासादिता।

तथा चोक्तं स्मृतौ—

निवृत्ततर्षैरुपगीयमानाद्
भवौषधाच्छ्रोत्रमनोऽभिरामात्।
क उत्तमश्लोकगुणानुवादात्
पुमान् विरज्येत विना पशुघ्नात् ॥

तस्मिन् महन्मुखरिता मधुभिश्चरित्र-
पीयूषशेषसरितः परितः स्रवन्ति।
ता ये पिबन्त्यवितृषो नृप! गाढकर्णैः
तान् न स्पृशन्त्यशनतृड्भयशोकमोहाः ॥

रागात्मिकाया भक्तेरन्तिमावस्था तन्मयासक्तिरेव, यस्यां लब्धायां भक्तो भगवद्रूपमात्मानमवधारयन् तदीयेऽपूर्वप्रीतिप्रवाहे दिवानिशं निमज्जति। एतत्तन्मयासक्त्यपूर्ववर्णनप्रसङ्गेन स्मृतिरभिधत्ते—

नमस्तुभ्यं परेशाय नमो मह्यं शिवाय च।
प्रत्यक् चैतन्यरूपाय मह्यमेव नमोनमः ॥
मह्यं तुभ्यमनन्ताय मह्यं तुभ्यं शिवात्मने।
नमो देवाधिदेवाय पराय परमात्मने ॥

तन्मयासक्तिभावोदयेन तन्मयो भक्तः कदाचिद् भगवन्तं कदाप्यात्मानमेव प्रणमति। हरौ हरे वा विलक्षणा पारस्परिकाऽऽसक्तिरेव तन्मयासक्तिरुक्ता।

श्रीहरिः स्वयमेव श्रियं प्रत्याह—

शृणु कान्ते प्रवक्ष्यामि यं ध्यायामि सुरोत्तमम्।
आशुतोषं महेशानं गिरिजावल्लभं हृदि ॥
कदाचिद्देवदेवो मां ध्यायत्यमितविक्रमः।
ध्यायाम्यहं च देवेशं शङ्करं त्रिपुरान्तकम् ॥
शिवस्याहं प्रियः प्राणः शङ्करस्तु तथा मम।
उभयोरन्तरं नास्ति मिथः संसक्तचेतसोः ॥

तन्मयासक्तिर्विलक्षणभावविकासः श्रीकृष्णसमर्पितप्राणासु गोपिकासु विलोक्यते। यदा श्रीकृष्णचन्द्रो गोपीरभिमानवतीर्ज्ञात्वा तन्मानमर्दनाय रासमध्य एव ताः परित्यज्यान्तर्हितस्तदानीं ताः किं चक्रुरित्युक्तं स्मृतौ—

इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणतत्पराः।
लीलाभगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥
कस्याश्चित्पूतनायन्त्या कृष्णायन्त्यपिवत् स्तनम्।
तोकायित्वा रुदन्त्यन्या पदाहन् शकटायतीम् ॥
दैत्यायित्वा जहारान्यामेका कृष्णार्भभावनाम्।
रिङ्गयामास काप्यङ्घ्री कर्षती घोषनिःस्वनैः ॥
मा भैष्ट वर्षवाताभ्यां तत् त्राणं विहितं मया।
इत्युक्त्वैकेन हस्तेन यतन्त्युन्निदधेऽम्बरम् ॥
आरुह्यैका पदाक्रम्य शिरस्याहाऽपरां नृप।
दुष्टाहे गच्छ जातोऽहं खलानां ननु दण्डधृक् ॥

श्रीकृष्णविरहे व्याकुला गोप्यस्तच्चिन्तया तन्मयतामवापुः। तन्मयावस्थायां श्रीकृष्णस्य तास्ता लीला अनुचक्रुः। अयमेव तन्मयासक्तेर्भावः। एवं हि ह्रास्यादि गौणस्वरूपाः दास्यादिमुख्याश्चासक्तीर्द्वारीकृत्य रागात्मिकाया भक्तेः साधको भगवद्राज्ये सदैवाग्रेसरति ॥ १७ ॥

रसभावनिमग्नसाधकस्य दशा प्रोच्यते—

## रसरूप एवायं भवति भावनिमग्ने ॥ १८ ॥

भावे भगवद्भावसमुद्रे निमग्नः साधकोऽयं रसरूपतां प्रपद्यते। सर्वे रसा आनन्दमया वेद्याः। अत आनन्दस्वरूपस्य भगवतश्चरणसरसीरुहेषु चित्तैकाग्र्यं सम्पादयन् ध्यातृध्यानध्येयरूपिण्यास्त्रिपुट्या अवलम्बेन भगवच्चरणारविन्दं ध्यायन् यथा यथा परममानन्दमधिगच्छति तथा तथा त्रिपुटीनाशतो भगवता सह तस्य भेदबुद्धिः प्रणश्यति। निष्कर्षोऽयं यत् अस्या रागात्मिकाया भक्तेरवस्थायां रसस्वरूपास्वासक्तिषु एकस्याप्यासक्तिविशेषस्य साहाय्येन रससागरे निमज्जन् भक्तशिरोमणिः आसक्तिविशेषभावो लवलीनत्वादासक्तिस्वरूप एव जायते। सुतरां भक्तेः समुन्नतदशायामस्यां सविकल्पसमाधेरुदयेन ध्याता साधको ध्येयस्यानन्दस्वरूपस्य भगवतः स्वरूपतां प्रतिपद्यते। यथा श्रुतिराह—

"तव वयं स्मः" "तं यथा यथोपासते तदेव भवति" स्मृतिरपि—

सति सक्तो नरो याति सद्भावं ह्येकनिष्ठया।
कीटको भ्रमरं ध्यायन् भ्रमरत्वाय कल्पते ॥
क्रियान्तरासक्तिमपास्य कीटको
ध्यायन् यथाऽलिं ह्यलिभावमृच्छति।
तथैव योगी परमात्मतत्त्वं
ध्यात्वा समायाति तदेकनिष्ठया ॥

सूत्रेऽत्रैकशब्दप्रयोगो बहुविज्ञानयुक्तः। एतत् तात्पर्यमिदं यत् भगवद्भक्तावेकवारमपि निमग्नो भक्तः स्वीयां स्वतन्त्रां जीवसत्तां परिजहाति, अतएव रसस्वरूपोऽसौ प्रणिगद्यते ॥ १८ ॥

मुख्यस्य रसस्य वैशिष्ट्यं वर्णयति—

**परा मुख्यरससन्निकर्षादुन्नतिस्तु सर्वारसाश्रया ॥१८॥**

मुख्यस्य रसस्य सन्निकर्षात् लाभात् पराभक्तिः अधिगम्यत इति शेषः। उन्नतिस्तु सर्वाश्रया, सर्वो रस आश्रयो यस्या एवंभूता विज्ञातव्या। अर्थात् सकलरसाश्रयणेन समुन्नतिर्भवतीत्यर्थः। हास्यादिगौणरसद्वारा दास्यादिमुख्यरसेन च साधकः समुन्नतिं लभते। गौणरसेन कथमुन्नतिरिति प्रश्नस्योत्तरं ददता महामुनिना शुकाचार्येणाभिहितम्—

उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः।
द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः॥
कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च।
नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते॥

गौणरसस्य साधनेन सालोक्यादिमुक्तिर्लभ्यते। निर्वाणमुक्तिस्तु केवलया परया भक्त्यैवाधिगम्यते। गौणरसेनापि तन्मयत्वं जायते। तेन च पराभक्तिरुदेति। अतो गौणरसानां परम्परासम्बन्धेन मुख्यरसानां साक्षात्सम्बन्धेन परां भक्तिं प्रति कारणता विज्ञेया।

आनन्दरूपत एव भगवतः परमपदसम्बन्धः। सर्वेष्वपि रसेषु स्वभावत एवानन्दसत्ता सद्भावः। अतो मुख्येन गौणेन वा रसेन साधकेनोन्नतिर्लभ्यते। यद्यपि रौद्रबीभत्सादिषु गौणरसेषु आनन्दविरोधिदुःखजनक भावानां सम्बन्धः, परन्तु तत्गौणरसजनितक्रियापरिसमाप्तौ भगवत्सम्बन्धसत्त्वात् रूपान्तरेण तत्रापि भक्तिपात्रता दुर्निवारा। अतो गौणरसा अपि समुन्नतिप्रदाः। गौणेषु मुख्येषु च रसेष्वेतावानेव भेदो यत् गौणरसैः साकं बहिर्विषयसम्बन्धात्, ते न सन्ति सर्वथा दोषशून्याः। अतस्तद्द्वारा समुन्नतिलाभेऽपि पराभक्तिर्नोदेति।

गौणरसेषु वैषयिकसम्बन्धेन साधकस्य चेत उदारतां न भजते। साधकोऽसौ स्वीयचेतसो निम्नप्रवाहं सहसैव रोद्धुं न समर्थो जायते। अतो गौणरसमग्नः साधकोऽभ्युदयाधिकारं लभमानोऽपि साक्षान्मुक्तिस्वरूपायाः पराया भक्तेरधिकारी भवितुं नार्हति। किन्तु दास्यादिमुख्यरसेषु बहिर्विषयाणां लेशतोऽसम्बन्धाभावात् तद्द्वारेण भाग्यशालिभिर्भक्तैः साक्षाद्रूपेण पराभक्तिरधिगम्यते। दृष्टान्तरूपेणेदमवधातुं शक्यते यत् कश्चिन्नरपतिर्यदा स्वीयराज्यसमुद्धारायैव सकामः प्रयतते वीरतां च प्रदर्शयते, तदानीं तत्र वीररससमुद्गमेऽपि स्वार्थसम्बन्धात् निर्मलता न समायाति। परन्तु सैव वीरभावो यदि निष्कामभावेन प्रयुज्यते, तर्हि स च मलिनताया अत्यन्ताभावात् आध्यात्मिकसमुन्नतौ कारणायते। अतो गौणरसद्वारा कदाचित् पराया भक्तेर्विषये उपकारे जातेऽपि, उपकारोऽयं परोक्षभूत एव मन्तव्यः। परन्तु मुख्यरसानां निर्मलत्वात् भगवद्भावयुक्तत्वाच्च, तद्द्वारा भक्तैः साक्षाद्रूपेण पराभक्तिरासाद्यते। यतो मुख्यरसानां पूर्णोदयेन साधकस्यान्तःकरणेषु समाधेरुदये न कापि बाधा भवितुमर्हति ॥१९॥

पराया भक्तेर्लाभोपाया निरूप्यन्ते—

**परालाभो ब्रह्मसद्भाविका तन्मयासक्त्युन्मज्जननिमज्जनात् ॥ २० ॥**

ब्रह्मसद्भाविकायां अद्वैतभावप्रदायां तन्मयासक्तौ तन्मयासक्तिभावसागरे उन्मज्जनात् निमज्जनाच्च पराया भक्तेर्लाभो वेद्यः। भक्तो यदा भगवत्तन्मयतां प्रपद्य भावसमुद्रे निमज्जत्युन्मज्जति च तदैवाद्वैतभावप्रद तद्भावद्वारा पराया भक्तेरुदयो जायते। शुद्धरसधारणायां दृढत्वमापन्नायां साधकः क्रमशः श्रेष्ठां समा-

धिभूमिमधिरोहति, अनन्तरं च तमेव भावमहासमुद्रमवगाहमानो भक्तो भावुकः शीघ्रमेव सविकल्पसमाधेर्वितर्कविचारानन्दास्मिताख्याश्चतस्रोदशाः समतिक्रम्य निर्विकल्पसमाधिमधिकरोति । अत्र ज्ञानस्य भक्तेश्चैक्यं जायते । परां भक्तिं प्राप्तः कृतकृत्यो योगी समस्तमपि जगत् ब्रह्ममयं पश्यति । इयमेवाद्वैतभावप्रदानकारिणी परमानन्ददायिनी पराभक्तिर्विज्ञेया ।

अत्र परमानन्दविषये स्मृतयः प्रोचुः—

तदा पुमान् मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः ।
निर्दग्धबीजानुशयो महीयसा
भक्तिप्रयोगेण समेत्यधोक्षजम् ॥
अधोक्षजालम्बमिहाशुभात्मनः
शरीरिणः संसृतिचक्रशातनम् ।
तद्ब्रह्मनिर्वाणसुखं विदुर्बुधाः
ततो भजध्वं हृदये हृदीश्वरम् ॥
त्वं प्रत्यगात्मनि तदा भगवत्यनन्त
आनन्दमात्र उपपन्नसमस्तशक्तौ ।
भक्तिं विधाय परमां शनकैरविद्या-
ग्रन्थिं बिभेत्स्यसि ममाहमिति प्ररूढम् ॥
मुक्ताश्रयं यर्हि निर्विषयं विरक्तं
निर्वाणमृच्छति मनः सहसा यथाऽर्चिः ।
आत्मानमत्र पुरुषो व्यवधानमेक-
मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥
सोऽप्येतया चरमया मनसो निवृत्त्या
तस्मिन् महीम्न्यवसितः सुखदुःखबाह्ये ।
हेतुत्वमप्यसति कर्त्तरि दुःखयोर्यत्
स्वात्मन् विधत्त उपलब्ध परात्मकाष्ठः ॥
वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानं यद्ब्रह्मदर्शनम् ॥

यदास्य चित्तधर्मेषु समेष्विन्द्रियवृत्तिभिः ।
न विगृह्णाति वैषम्यं प्रियमप्रियमित्युत ॥
स तदैवात्मनात्मानं निःसङ्गं समदर्शनम् ।
हेयोपादेयरहितमारूढं पदमीक्षते ॥
ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् ।
दृश्यादिभिः पृथग्भावैर्भगवान्नेक ईयते ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
पश्यति योगयुक्तात्मा सर्वत्र समदर्शनः ॥
परानुरक्त्या मामेव चिन्तयेद्यो ह्यतन्द्रितः ।
स्वाभेदेनैव मां नित्यं जानाति न विभेदतः ॥
मयि प्रेमाकुलवति रोमाञ्चिततनुः सदा ।
प्रेमाश्रुजलपूर्णाक्षः कण्ठगद्गदनिःस्वनः ॥
उच्चैर्गायंश्च नामानि ममैव खलु नृत्यति ।
अहंकारादिरहितो देहतादात्म्यवादतः ॥
इति भक्तिस्तु या प्रोक्ता पराभक्तिस्तु सा स्मृता ।
यस्यां देवाऽतिरिक्तं तु न किञ्चिदपि भाव्यते ।
इत्थं जाता पराभक्तिर्यस्य भूधर ! तत्त्वतः ॥
तदैव तस्यचिन्मात्रे मद्रूपे विलयोभवेत् ।
भक्तेस्तु या पराकाष्ठा सैव ज्ञानं प्रकीर्त्तितम् ।
वैराग्यस्य च सीमा सा ज्ञाने तदुभयं यतः ॥

इति ॥२०॥

रससमूहप्रवाहसीमा कुत्रेत्युच्यते—

**सर्वेषामेकत्रैव पर्य्यवसानम् ॥ २१ ॥**

सर्वेषामेव रसानां पर्यवसानं समाप्तिरेकत्रैवपरिबोध्या । रससमूहप्रवाहे बाधाभावात् सर्वरस परिसमाप्तिः परमपद एव । यथा किल देशकालपात्रानुकूलत्वे एकोऽप्यग्निस्फुलिङ्गः समस्तमपि विश्वं भस्मसात् कर्त्तुं प्रभवति, तथैवातिसाधारणोऽपि रसोऽबाध-

विकासः समुन्नतो भूत्वा भक्तचेतसि भगवन्तं प्रत्यनुरागमुत्पाद्य तं च भक्तं भक्तेः समुन्नततमां भूमिमासादयन् अन्ते नूनमेव परमानन्दमधिगमयति ॥

सर्वेषामेव रसानां परिसमाप्तिस्तत्रैव रससागरे परमात्मनि संजायते। तत एव समुत्पन्नास्तत्सम्बन्धयुक्ताश्च सर्वेऽपि रसास्तत्रैव सम्मिलन्ति। विषयरक्तेन विषयानन्दमनुभवता विषयेषु नैवानन्दोऽनुभूयते। विषयभोगेनान्तःकरणं शान्तः समाधिस्थं च जायते। तत्रैव ब्रह्मानन्दः प्रतिफलति। अतएव विषयासक्त आनन्दमनुभवति। भगवद्भक्तिभावे निमग्नस्य भाग्यशालिनो भक्तस्य हृदये, शुद्धो ब्रह्मानन्दः समुदेति सोऽपि तथैव विज्ञेयः। भक्तस्य पवित्रं हृदयं भक्तिपरिपूर्णं समाधिस्थं भवदेव ब्रह्मानन्दमुपभुङ्क्ते। इयानेव भेदो यद्विषयानन्दभोक्ता जीवो ज्ञानविरहितो भगवन्तं विस्मृत्य विषयानन्दं भजन् गमनागमनचक्रे परिभ्राम्यति। परन्तु ज्ञानी ब्रह्मानन्दपरिभोक्ता भाग्यवान् भक्तो भगवद्भावे भावितो गमनागमनचक्रं भेदयन् भगवच्चरणारविन्दे निलीयते। विषयानन्दभोगी जीवो विषयसुखेषु गुप्तपरोक्षरूपेणानन्दाधिगमनार्थमेव पुरुषार्थमाचरन् क्रमशः अग्रेसरति, कालान्तरे सात्त्विकस्य सुखस्याप्यधिकारितां प्रपद्यते। क्रमानुसारेण सत्त्वगुणभूमिमासाद्य भक्तिरससागरे निमज्जनोन्मज्जनाधिकारवान् जायते। फलतो जीवक्रमोन्नतिमार्गे रस एवाभ्युदयाधिकारं प्रयच्छति। विषयानन्दभोगी जीवो यावत्कालपर्यन्तमन्तःकरणेन विषयसुखमास्वादयति, तावदेवासौ गमनागमनचक्रे परिभ्राम्यति। परन्तु यदि जीवोऽसौ साधनराज्यपथपथिको विषयसुखासक्तोऽपि स्वीयं चेतो भगवच्चरणारविन्दे समर्पयेत्, तदानीं तस्य विषयरसास्वाद एव भगवत्सान्निध्यहेतुर्भूयते। मिष्टान्नभोगी विषयी जीवो नूनमेवात्मविमुखः, परन्तु तदेव मिष्टान्नं यदि भक्तः भगवत्प्रसादरूपेण भक्त्या भुङ्क्ते, तदानीं तस्य भाग्यवतो भक्तस्य चित्ततरङ्गपरिसमाप्तिर्भगवद्रससागरे बोभवीति। अन्यच्च—भक्तिरससागरावगाहनशीलो भाग्यशाली भक्तोऽसौ पूर्वोक्त सप्तप्रकारासक्तिषु कामप्येकामासक्तिं द्वारीकृत्य भगवच्चरणकमलमकरन्दास्वादनमधुकरमात्मानं कुर्यात्, किन्तु तदीय समस्त चेष्टापरिसमाप्तिरन्ते भगवच्चरणमुपेत्य भवत्येव। अतस्तत्रैव सच्चिदानन्दे परमात्मनि सर्वरसपरिसमाप्तिनिश्चप्रचा। यथा तरलतरङ्गिणी जाह्नवी भिन्नभिन्नेषु जनपदेषु प्रवहमाना स्वीयामृतधाराभिः सर्वानपि जनपदान् पुनाना समुद्रमासादयति तथैव भगवद्भावमूलकः समस्तोऽपि प्रवाहो। भक्तहृदयस्य विभिन्नदेशेषु प्रवहन् निजामृतमयभावसमूहद्वारा भक्तहृदयं समुन्नयन् पवित्रयन् अन्ते ब्रह्मानन्दरससागरे विसर्जयति ॥२१॥

भगवदभिमुखरसप्रवाहस्य परिणामं ब्रवीति—

## भक्तिर्निःश्रेयसकरी ॥ २२॥

भगवद्भक्तिर्निःश्रेयसकरी मुक्तिप्रदा विज्ञेया। कर्मोपासना ज्ञानतपोदानादिना धर्माङ्गसमूहेन साधकोऽभ्युदयं मोक्षं च लभते। परन्तु भगवद्भक्त्या भक्तः परमानन्दमयं कैवल्यपदमधिगच्छति। एतदेव भक्तेः श्रेष्ठतमं महत्त्वम्। समुन्नतमपि दैवं जगन्नास्ति त्रिगुणातीतम्। भक्तो भगवद्भक्त्या त्रिगुणातीतं पदं प्राप्य सर्वबन्धनाद्विमुच्यते। अतो विज्ञानसिद्धमिदं यत् भगवद्भक्तिमन्तरा काचिदपि भक्तिरन्या नैव भवितुमर्हति मुक्तिदायिनी। त्रिगुणमयेनाश्रयेण त्रिगुणातीतं पदं न लब्धुं शक्यते। केवलं नित्य-त्रिगुणातीत पदा-

वलम्बनेनैव निःश्रेयसाख्या मुक्तिरधिगम्यते। यथा चोक्तं स्मृतौ—

विसृज्य सर्वानन्यांश्च मामेव विश्वतोमुखम्।
भजन्त्यनन्यया भक्त्या तान् मृत्योरतिपारये ॥
समाश्रिता ये पदपल्लवप्लवं
महत्पदं पुण्ययशो मुरारेः।
भवाम्बुधिर्वत्सपदं परं पदं
पदं पदं यद् विपदां न येषाम् ॥
इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या
भक्तिर्विरक्तिर्भगवत्प्रबोधः।
भवन्ति वै भागवतस्य राजन्
ततः परां शान्तिमुपैति साक्षात् ॥
यस्मिन् मनो लब्धपदं यदेत–
च्छनैः शनैर्मुञ्चति कर्मरेणून्।
सत्त्वेन वृद्धेन रजस्तमश्च
विधूय निर्वाणमुपैत्यनिन्धनम् ॥

इत्यादि प्रमाणैरपि भगवद्भक्तिर्निःश्रेयसकरी सिद्धा ॥२२॥

अन्यदेव भक्तिपरिणामः प्रोच्यते—

## ऋषिदेवपितॄणां भक्तिरभ्युदयप्रदा ॥ २३ ॥

नित्यानाम् ऋषीणां, देवानां, पितॄणां भगवच्छक्तिस्वरूपाणां भक्तिः साधकेभ्योऽभ्युदयप्रदायिनी भवति। भगवतो विभिन्नशक्तिस्वरूपभूतानामवलम्बनेन क्रियमाणा भक्तिः साक्षान्मुक्तिदायिनी नास्ति, परमाभ्युदयकारिणी वर्त्तते एव। सच्चिदानन्दरससागररूपाद्वैत परमपदातिरिक्तानि सर्वाण्यपि दैवपदानि त्रिगुणमयानि वेदितव्यानि। सुतरां त्रिगुणमयस्य पदस्यावलम्बनेन विधीयमाना भक्तिस्त्रिगुणातीतं पदं प्रापयितुं नार्हति, तेषां भक्त्या भक्तः सर्वविधाभ्युदयाधिकारी भवतीत्यत्र नास्त्यणीयानपि संशीतिलेशः। ऐहलौकिक-पारलौकिक-भेदेन समुन्नतिर्द्विविधा। सांसारिकधन-जन-सुख-सम्पत्तिदात्री ऐहलौकिकी समुन्नतिरुच्यते। स्वर्गादि-समुन्नतलोकप्राप्तिजन्या दिव्यसुखभोगदायिनी पारलौकिकी समुन्नतिर्विज्ञेया। द्विविधापीयं समुन्नतिः ऋषिदेवपितृभक्तिसाध्या। यथा च श्रीमद्भगवद्गीतायाम्—

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोपि माम् ॥
काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥

एतादृशाः साधकाः प्रायशः सकामा भवन्ति। सकामकर्मसिद्धिलाभार्थमेव देवादीनामुपासनाऽनुष्ठीयते। तया चेहलोके सुखं मृत्योरनन्तरं च स्वर्गलोकाधिगमः। मानवलोके कर्मजा सिद्धिर्द्रुतमेव भवति। श्रुतौ यथा—

एतेषु यश्चरते भ्राजमानेषु
यथाकालं चाहुतयो ह्याददायन्।
तन्नयन्त्येताः सूर्यस्य रश्मयो
यत्र देवानां पतिरेकोऽधिवासः ॥
एह्येहीति तमाहुतयः सुवर्चसः
सूर्यस्य रश्मिभिर्यजमानं वहन्ति।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष
वः पुण्यः सुकृतो ब्रह्मलोकः ॥ इति ॥ २३ ॥

इदानीं निकृष्टविभूतीन् प्रति रसप्रवाहफलमभिधीयते–

## अन्येषामवरा ॥ २४ ॥

अन्येषां भूतप्रेतपिशाचादीनामासुरशक्तिशालिनां भक्तिस्तु पूर्वोक्त भक्तितो निकृष्टा विज्ञेया। दैवं राज्यं हि बहु विपुलम्। प्रत्येकब्रह्माण्डे चतुर्दशभुवनानि सन्ति,

तेषां चतुर्दशभागस्यैकश्चतुर्थो भागोऽस्माकं मृत्युलोकः। मृत्युलोकतो भिन्ना इतरे सर्वेऽपि देवलोका विभावयितव्याः, निम्नसप्तलोकनिवासिनोऽसुरा अपि देवश्रेण्यन्तर्गताः। अस्माकं मृत्युलोकस्य चतुर्दिक्षु निवसन्तः प्रेतपिशाचादयोऽपि देवश्रेणय एव। प्रेतपिशाचब्रह्मराक्षसवेतालादीनामासुरभावापन्नानां निकृष्टदेवयोनीनामुपासना या हि तामासिकैरनुष्ठीयते सा सर्वतो निकृष्टा। मतिरुचिविभिन्नतैवैतादृशनिकृष्टविभूतिभक्तिहेतुः। समुन्नताधिकारसम्पन्नैर्मानवैर्निष्कामैर्भगवत्यनन्या भक्तिरनुष्ठीयते, यया तैर्मुक्तिपदमासाद्यते। मध्यमाधिकारपरायणैः सकामकर्मभिरभ्युदयाभिलाषिभिर्ऋषिदेवपितॄणामुपासना क्रियते, यथैहलोकपरलोकसुखाधिगतिः, उपर्युक्तौ द्विविधावप्यधिकारिणौ शोभनौ मन्येते। परमधमाधिकारिणः स्वार्थान्धा विषयलोलुपा मलिनवासनापरिपूर्णमानसास्तमोमलीमससमीहामधिगन्तुं क्षुद्रान् विभूतिभूतान् भूतादीन् उपासते। एतदुपासना फलमपि तादृशमेव मलिनम्। एतादृशी निकृष्टा भक्तिर्भाग्यवद्भिर्भगवद्भक्तैः सर्वथा निन्द्यते॥ २४॥

भक्तेर्वैशिष्ट्यं वर्णयति—

**भक्त्याऽमृतत्वं तदास्वादादनवपातः॥ २५॥**

भक्त्या भगवद्भक्त्याऽमृतत्वं लभ्यते, तस्या आस्वादनेन अनवपातः अवपातस्याभाव इत्यर्थः। भगवद्भक्तिं द्वारीकृत्य भक्तशिरोमणयोऽमरतामापद्यन्ते। न कदापि स्वोन्नतपदेभ्यः परिच्यवन्ते। साधारणामृतपानेनैव यदि देवा अमरीभवन्ति, तदा परमामृतस्वरूपभगवद्भक्तिरसास्वादनेन साधका अमरतामापद्यन्त इत्यत्र कः सन्देहः? रसस्वरूपे भगवत्येकान्तानुरक्ता भक्ता भगवच्चरणारविन्दपरागरसलुब्धाः समस्तानपि विषयवासनाभोगान् परित्यजन्तः कृपासिन्धुभगवत्कृपापरवशतां प्रपद्यन्ते। तांश्च परमकारुणिको भगवान् स्वीयं सच्चिदानन्दमयं परमं स्वरूपं प्रत्याययति, येन जननमरणरूपसंसारक्लेशविरहितास्ते मुक्तिपदमासादयन्ति। तल्लभ्याऽमरतेयमुक्ता। तथा हि गीतायाम्—

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥

समुद्रवक्षसि गन्तुं समुत्सुकायास्तरङ्गमालाकुलायास्तरण्याश्चालका यथा ध्रुवं निरीक्षमाणाः कदापि भ्रान्तदिशो न जायन्ते, गन्तव्यस्थानमासादयन्ति, तथैव संसारसमुद्रे कोटिकोटिजन्मभ्यो भ्रमणशीलाः स्वजीवनतरणीचालका भक्ताः स्वकीयहृदयाकाशप्रकाशमानध्रुवतारारूपभगवद्भक्तिरसमास्वादयन्तः संसारसमुद्रे दिग्भ्रान्ताः कुपथगामिनो न भवन्ति कदाप्यवनतिं न प्राप्नुवन्ति, प्रत्युतोत्तरोत्तरमुन्नमन्तोऽन्ते सच्चिदानन्दमयभगवत्परमधामप्राप्ता निर्वृत्तिमासादयन्ति। जीवो भगवत्सम्बन्धादुन्नमति, इन्द्रियसम्बन्धेन च पतति। दृश्यप्रपञ्चस्वरूपपारावारैकस्मिन् तटे इन्द्रियाणि तद्विषयाश्च, परत्रतटे परमानन्दस्वरूपः परमात्मा। साधको यदा स्वेन्द्रियेभ्यो बहिर्मुखतां प्राप्य जगदात्मभगवदभिमुखतां प्रतिपद्यते, तदानीमसौ भक्तः कीदृगधिकारोपेतोऽपि न परावर्त्तते, समुन्नमत्येव। यत ऊर्ध्वदृष्टीनां न भवति निम्नावपातः। कस्याप्यधिकारस्य भक्तः कथं न स्यात्, भक्तिं द्वारीकृत्यासौ कीदृशो जायत इत्यत्र स्मृतय आचक्षते—

संकीर्त्यमानो भगवाननन्तः
श्रुतानुभावो व्यसनं हि पुंसाम्।
प्रविश्य चित्तं विधुनोत्यशेषं
यथा तमोऽर्कोऽभ्रमिवातिवातः॥

अविस्मृतिः कृष्णपदारविन्दयोः
क्षिणोत्यभद्राणि शमं तनोति च ।
सत्त्वस्य शुद्धिं परमात्मभक्तिं
ज्ञानं च विज्ञानविरागयुक्तम् ॥
तस्मिन् महन्मुखरिता मधुभिश्चरित्र-
पीयूषशेषसुरितः परितः स्रवन्ति ।
ता ये पिबन्त्यवितृषो नृपगाढकर्णै-
तान्न स्पृशन्त्यशनतृड्भयशोकमोहाः ॥
भक्तिं मुहुः प्रवदतां त्वयि मे प्रसङ्गो
भूयादनन्तमहतामभलाशयानाम् ।
येनाऽञ्जसोल्वणमुरुव्यसनं भवाऽब्धिं
नेष्ये भवद्गुणकथाऽमृतपानभक्तः ।
॥ इति २५ ॥

भक्तेर्द्वितीयं वैशिष्ट्यं वर्णयति—

## अकाम्या सा निरोधरूपत्वात् ॥ २६ ॥

सा अकाम्या कामनाशून्या, यतोऽसौ निरोधरूपिणी, यया सकलकामनानिवृत्तिर्न सा कामना शब्दवाच्या। सृष्टिकारणस्वरूपा विषयवासना न तथा, यतस्तया सर्वाः कामना विवर्धन्ते । यथा च स्मृतौ—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥

कामनापरायणा जीवाः काल्पनिकविषयसुखासक्ता लक्ष्यभ्रष्टा इतस्ततो विविधविषयसुखेषु शान्तिमन्विष्यन्ति, परन्तु प्रकृतेः परिणामिनीत्वात् सर्वेऽपि विषयसुखा नश्वराः क्षणभंगुराश्च । अतः नित्यानन्दप्रयासिनो जीवस्य नैवं भवितुमर्हति अनित्येषु विषयेषु सुखम् । यतश्चित्तशान्तिरेवसुखनिदानम् । स्मर्यते चात्र—

लक्षणं तु प्रसादस्य यथा स्वप्ने सुखं भवेत् ।
निवाते वा यथा दीपो दीप्यमानो न कम्पते ॥

वायुविरहितस्थाने प्रदीपवत् सुषुप्तिदशायां स्थिरे चित्ते जीवेन शान्तिरूपं लभ्यते । किन्तु क्षणभंगुरत्वाद्विषयेषु चित्तशान्तेरभावात् सुखाभावः । विषयभोगैरतृप्तं मनश्चञ्चलं सदनन्तामशान्तिं दुःखं च प्रादुर्भावयति, यतः सृष्टिकारणभूतवासनया अन्या अनन्ता वासनाः समुपद्यन्ते । तथाहि स्मृतौ—

यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥
यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ।
तृष्णानदी सारतरप्रवाह—
ग्रस्ताऽखिलाऽनन्तपदार्थजाता ।
तटस्थसन्तोषसुवृक्षमूल-
निकाशदक्षा वहतीह लोके ॥
तृष्णालता काननचारिणोऽमी
शाखाशतं काममहीरुहेषु ।
परिभ्रमन्तः क्षपयन्ति कालं
मनोमृगा नो फलमाप्नुवन्ति ॥
चित्तप्रसादेन यतिर्जहातीह शुभाशुभम् ।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमत्यन्तमश्नुते ॥

भगवच्चरणारविन्दमाश्रयश्चेतो भगवतो दयामधिगत्य प्रणष्टसमूलसकलवासनं पूर्णमानन्दमध्यात्मप्रसादमधिगच्छति । परमानन्दसत्ताच्छायारूपविषयसुखमाश्रित्य समुन्मत्तेन जीवेन यदि यथार्थानन्दोऽधिगम्येत, तदानीं तत्र विषयवासना कथं स्थितिमधिकुर्यात् । उक्तमपि भगवता गीतायाम्—

विषया विनिवर्त्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ॥

आहाररहितमानवस्य विषयव्यापारो निवर्त्तते

इति सत्यम्, किन्तु तदीय चित्तस्थवासना न प्रणश्यति वीजरूपेण तिष्ठत्येव। अतः पुनराहारे कृते वासनावीजान्यङ्कुरिता निजायन्ते। परन्तु भक्तचित्ते भगवच्चरणारविन्दलीने सर्वा अपि कामनाः समूले विनश्यन्ति, ततश्च मनोनाशपूर्वक तत्त्वज्ञानेन परमानन्दमय निर्विकल्पसमाधिरुदेति पराभक्तिश्चाधिगम्यते। यथाह श्रुतौ—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥
भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे॥

स्मृतावपि—

मुक्ताश्रयं यदि निर्विषयं विरक्तं
निर्वाणमृच्छति मनः सहसा यथाऽर्चिः।
आत्मानमत्र पुरुषोऽव्यवधानमेक-
मन्वीक्षते प्रतिनिवृत्तगुण प्रवाहः।
सोऽप्येतया चरमया मनसो निवृत्या
तस्मिन् महिम्न्यवसितः सुखदुःखवाह्ये।
हेतुत्वमप्यसति कर्त्तरि दुःखयोर्यत्
स्वात्मन् विधत्त उपलब्धपरात्मकाष्ठः॥

यद्यपि आर्त्तो जिज्ञासुः, अर्थार्थी च भक्तः कामनापरायणः किन्तु ज्ञानिनि भक्तौ कामनाया अभाव जायते। अतः सर्वविधभक्तानां चतुर्थदशायामेव लक्ष्यत्वात् परायामेव भक्तौ भक्तेः परिसमाप्तित्वाच्चेदमभ्युपगन्तव्यमेव यत् यथार्थस्वरूपे सर्वोत्तम भक्तिभावे कामनाया गन्धोऽपि न सम्भाव्यः। अन्यच्च यत्र सर्वकामनाविलयस्तत्पदं स्वतो निरोधरूपं निःसदिग्धम्। सर्वोऽपि विश्वप्रपञ्चो भगवतः प्रादुर्भवति, तत्रैव तिष्ठति विलीयते च। सर्वलयस्थानं तत्पदं निरोधस्वरूपम्, तस्मिन्नासादिते वासना विलयमुपगच्छन्ति। अन्यच्च यथा भक्तेनाकाम्यपदमधिगम्यते नासौ भवितुमर्हति, कामना शब्दवाच्या। अतो भगद्भक्तिर्न कामना॥२६॥

भक्तेस्तृतीयं वैशिष्ट्यं वर्णयति—

**स्वयं फलरूपत्वात् सर्वफलप्रदा॥२७॥**

भगवद्भक्तिः साधकाय सर्वविधं फलं प्रददाति, अतोऽसौ स्वयं फलरूपा विद्यते। भक्तिस्तु समस्तसाधनोदर्कभूता। यतो जन्मजन्मान्तरीय तपसा चित्तमले प्रणष्टे, परमेश्वरानुकम्पयैव भगवद्भक्तिभावः समुदेति। भक्त्याऽमृतत्वलाभः, तत्साधनेन न पतनसम्भावना निरोधरूपत्वान्नैव सा कामनापदवाच्या, अकाम्याऽसावित्यदिसिद्धान्ताः पूज्यपादेन महर्षिणा सूत्रकृता पूर्वमेव निर्णीताः, मुक्तेः कारणत्वादियममृतस्वरूपा। भक्तिं द्वारीकृत्य यदा साधकस्य लक्ष्यं तत्त्वातीते परमपदे प्रतिष्ठितं जायते, तच्चित्तस्य च पुनर्लक्ष्यान्तरगमनासत्त्वे पतनस्य नैव सम्भावना। भक्त्या यया सर्वविधा अपि सांसारिककामना निरुध्यन्ते, सा अकाम्यपदप्रदेत्यत्र कः सन्देहः। सूत्रकारो महर्षिः सर्वोत्तमफलस्वरूपं वर्णयित्वा सूत्रेणैतेनाभिधत्ते यत् भक्तिः स्वयं फलरूपाऽतो निखिलफलप्रदा। सर्वविधपुरुषार्थान्तिमलक्ष्यभूता मुक्तिरेवं, अतस्तत्प्राप्तिरेवान्तिमः पुरुषार्थः। यथा चोक्तं सांख्यदर्शने—

अथ त्रिविध दुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः,

सुतरां भक्तिर्यदि परमपुरुषार्थरूपनिःश्रेयसफलं प्रयच्छति, तर्हि सा फलस्वरूपैव प्रतिपाद्या। फलस्वरूपायास्तस्याः सर्वप्रदातृत्वं निर्विवादमेव। यत्र सर्वफलपरिसमाप्तिस्तत्पदं सर्वफलप्रदमित्यत्र कः सन्देहः। सिद्धान्तोऽयं प्रकारान्तरेणाभ्युपगन्तव्यः। तथाहि—धर्मार्थकाममोक्षा जीवपुरुषार्थाश्चतुर्धा विभक्ताः। एतेषु कामार्थौ धर्माधीनौ। मुक्तिस्तु धर्मस्य फलस्वरूपा।

सिद्धान्तमिममनुसृत्यापि मुक्तिदायिनी भक्तिः सर्वफलप्रदा । सकामभक्तस्य सर्वविधफलप्राप्तिस्तु सर्वफलप्रदातुः सर्वकर्मनियन्तुर्जगद्धातुः सर्वशक्तिमतो भगवतो भक्तिमेव निर्विभर्त्ति। यतो भगवान् सर्वशक्तिर्भक्तवत्सलश्च । परमेश्वरस्य करुणारूपो मलयपवनः सदैव प्रवहते, परन्तु यदा मनस्तरणी भक्तिरूपं पक्षं विस्तारयति तदैव जीवेन भगवत्कृपा प्राप्यते। परमेतादृशभक्तिलाभस्तु वहुजन्मार्जित तपःसाध्यो भवति। उक्तं च स्मृतौ—

जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥

भक्तिमेतादृशीमधिगत्य साधकः क्रमशोऽध्यात्मराज्याभिमुखमग्रेसरन् अन्ते परमानन्दपदमधिकरोति ।

यथा च स्मृतौ—

तदा पुमान् मुक्तसमस्तवन्धन-
स्तद्भावभावानुकृताशयाकृतिः ।
निर्दग्धवीजानुशयो महीयसा
भक्तिप्रयोगेण समेत्यधोक्षजम् ॥
अधोक्षजालम्भमिहाशुमात्मनः
शरीरिणः संसृतिचक्रशातनम् ।
तद्ब्रह्मनिर्वाणसुखं विदुर्बुधा-
स्ततो भजध्वं हृदये हृदीश्वरम् ॥

गीतायामपि —

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
नतो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥
यं लब्ध्वा नापरं लाभं मन्यते नाऽधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥

आनन्दमये ब्रह्मपदे समधिगते भक्तः कमपि लाभं प्रियतरं न मन्यते, सच्चिदानन्दसिन्धौ निमग्नश्च प्रारब्धकर्मजनितदुःखतीव्रतयाऽपि न कदापि विचलति। यथा चोक्तं तत्रैव गीतायाम्—

यावानर्थ उदपाने सर्वतः सम्प्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥

यथा किल विशालसमुद्रस्नानेन कूपतडागादि स्नानफलं लभ्यत एव, अधिकन्तु सर्वतो व्याप्तपयोनिधेरवगाहनेन परमोत्कृष्टा शान्तिरुपलभ्यते, तथैव सकामकर्मसाधनद्वारा तत्तल्लोकादिप्राप्तौ सत्यामपि स कामसाधकेन परिच्छिन्न आनन्दमासाद्यते। निष्कामसाधनलभ्यब्रह्मपदे तेषां सकलानाम् परिच्छिन्नानन्दानामन्तर्भावस्तु जायत एव, अधिकन्तु ब्रह्मानन्दस्यासीमत्वादपरिच्छिन्नत्वाच्च ब्रह्मानन्दसागरे निमग्नस्य भक्तस्यासीमानन्दाधिगमो जायते । यथा चोक्तं श्रुतौ—

"आनन्दं ब्रह्मेति व्यजानात् । एषोऽस्य परमानन्दोऽन्यानि भूतान्येतस्य मात्रामुपजीवन्ति ।"

भूमानन्दसत्ताया ब्रह्मणि विद्यमानतयाऽसीमानन्दोभगवद्भक्तैरेवाधिगम्यते। विषयमुग्धजीवैस्तु आनन्दस्य छायामात्रमुपभुज्यते । अतः समस्तसाधनपरिणामभूता भक्तिस्तु सर्वसिद्धिप्रदायिनीत्यत्र न कोऽपि सन्देहः। उपनिषदि च प्रतिपादितम्—

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥
यं यं लोकं मनसा संविभाति
विशुद्धः सत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जायते तांश्च कामान्
तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः ॥

इत्यादि प्रमाणैः पराया भक्तेः श्रेष्ठताऽवधेया ॥ २७ ॥

सम्प्रति भक्तेः स्वरूपं निर्णयति—

**नासौ ज्ञानं ज्ञानसत्वेऽपि द्विपतस्तदसत्त्वात् ॥२८॥**

असौ भगवद्भक्तिः ज्ञानं भगवद्ज्ञानं नास्ति, भगवद्भक्तिः भगवद्ज्ञानं च परस्परं भिन्नमित्यर्थः, ज्ञाने जायमाने भक्तिर्भविष्यतीति ज्ञानेन सह भक्तेः सम्बन्धो नास्ति, यतो शत्रुविपयकविशिष्टज्ञानसत्वेऽपि मानवस्य शत्रुपु विन्दुमात्रमपि प्रेम न दृश्यते। ज्ञानं हि द्विविधं स्वरूपाभिधं तटस्थाख्यं च। सूत्रकारो महर्षिः ज्ञानशब्दमत्र तटस्थज्ञानविषयकमुक्तवान्। स्वरूपज्ञानस्याद्वैते पदे स्थितत्वात् स्वरूपज्ञानमात्मा इति वक्तुं शक्यते। आत्मा ज्ञानस्वरूप इति स्वरूपज्ञानानुभवः। स्वरूपज्ञानमेतत्सूत्रतात्पर्य्यं नावधेयम्। एतत्सूत्रसम्बन्धस्तु तटस्थज्ञानेन बोध्यः। तटस्थज्ञानं भक्तिसहायकम्, किन्तु ज्ञाने भक्तौ च आकाशपातालवन्महदन्तरमित्यभ्युपगन्तव्यमेव। तटस्थ ज्ञानमतिसाधारणम्, तच्च शत्रुमित्रसदसत्सु सर्वेष्वेव सम्भवति, अन्यच्चानुरागेण भक्तेः सम्बन्धत्वाद् भक्तिर्ज्ञानं च नैकं तत्त्वम्। शत्रुमित्रयोः जडचेतनयोरनुभवे, सदसत्पदार्थयोर्विचारे च ज्ञानं हि समानभावेन क्रियाशीलं, तर्हीदं स्वीकर्त्तव्यमेव यत् मनसोऽनुरागवृत्या सम्बन्धनिवन्धना भक्तिर्नैव ज्ञानेन सहैकतां भजते। ज्ञानेन ज्ञातव्यस्य भगवतः सम्बन्धे अनुरागोत्पत्तौ साहाय्यं लभ्यते, किन्तु भगवदनुरागो न ज्ञानसापेक्षः। अनुरागस्तु कोऽपि विलक्षणः पदार्थः। अत्र चित्तस्यैकतानताभावो, दीनवन्धोर्भगवतो दया चैतदेवैकमत्रावलम्बनम्। तथाहि स्मृतौ—

कथं विना रोमहर्षं द्रवता चेतसा विना।
विनाऽऽनन्दाश्रुकलया शुद्ध्येद्भक्त्या विनाऽऽशयः॥
मयि प्रेमाऽऽकुलवति रोमाञ्चित तनुः सदा।
प्रेमाश्रुजलपूर्णाक्षः कण्ठगद्गदनिस्वनः॥

यया च शरीरं मन आत्मानं च पवित्रयन् साधक आनन्दसागरे निमज्जति तस्याः प्रकाशो ज्ञाने भवितुं नार्हति प्रत्युत प्राणस्पन्दने भावोच्छ्वासे अङ्गप्रत्यङ्गपुलकत्वे, हृदयस्यार्द्रतायां नेत्रानन्दाश्रुधारायामेव सम्भवति, इयमेव भक्तहृदयविहारिण्या भक्तेर्माधुरी। सूत्रेऽत्रापिशब्दप्रयोग उपर्युक्त विज्ञानपरिपोषकः। द्वेषभाजने रिपौ रागसद्भावो न सम्भवः। अतोह्यत्र"अपि" शब्दः प्रयुक्तः॥ २८॥

भक्तेरुन्नततमं भावं वर्णयति—

**परा तु स्वरूपज्ञानरूपा ॥ २९ ॥**

स्वरूपज्ञानमेव रूपं यस्याः सा भक्तिः परा इत्यभिधीयते, परमात्मनः स्वरूपज्ञानं पराभक्तिश्चैकमेवतत्त्वम्। तटस्थ स्वरूपभेदेन ज्ञानं द्विविधमिति प्रागेवनिर्णीतम्। तटस्थे ज्ञाने ज्ञातृज्ञानज्ञेयरूपिणी त्रिपुटी तिष्ठति। अर्थात् दशायामत्र ज्ञेयस्य, परमात्मनः ज्ञातुः साधकस्य ज्ञानरूपव्यापारस्य सत्त्वे आत्मन उपलब्धिर्जायते। परन्तु स्वरूपज्ञानदशायां ज्ञातृज्ञानज्ञेयस्वरूपिण्यास्त्रिपुट्याः पूर्णरूपतो विलयेनैकमात्रमद्वितीयं सच्चिदानन्दस्वरूपं परं ब्रह्मैवावशिष्यते। निर्विकल्प समधिस्थितो राजयोगयुक्तो ज्ञानी महापुरुष एतद् द्वैतदशामनुभवति, भगवतः सच्चिदानन्दस्यानन्दभावनिमग्नः साधको भक्तेः प्रकृष्टदशायां सर्वत्रैवानन्दरूपस्य परमात्मनः साक्षात्कारं कुर्वन् तमेवाद्वैतभावमधिगच्छति। ब्रह्मसद्भावस्योदयेन स्वरूपज्ञाने जाते कार्यकारणब्रह्मणोर्द्वयोरेवैक्यतोऽद्वैतभावो यथोदेति, तथैव प्रकृष्टायाः पराभिधानाया भक्तेरुदयेन भाग्यशालिना भक्तेन केवलं परमात्मैवानुभूयते न तनद्भिन्नः कश्चिदपरः पदार्थः। सुतरां भक्तेर्दशायामत्र द्वैतभावो विनश्यति। तदानीमेतादृशो भक्तः कार्यब्रह्मस्वरूपं जगत्प्रपञ्चं कारणब्रह्मस्वरूपपरमात्मन्येव

विलीनमनुभवति, कालेऽत्र सूक्ष्मस्थूलजगत्प्रपञ्चेन सदैव भक्तमानसं रससागरस्वरूपकारणब्रह्मपरमात्मनि जलाशये जलविन्दुरिव मिलित्वैकरसतां प्रपद्यते। अतः कारणात् पराभक्तिः स्वरूपज्ञानं चैकपदार्थः। स्मृतावप्युक्तम्—

उच्चैर्गायंश्च नामानि ममैव खलु नृत्यति।
अहंकारादिरहितो देहतादात्म्यवर्जितः॥
इति भक्तिस्तु या प्रोक्ता पराभक्तिस्तु सा स्मृता।
यस्यां तदतिरिक्तं तु न किञ्चिदपि भाव्यते॥
इत्थं जाता पराभक्तिर्यस्य भूधर! तत्वतः।
तदैवं तस्य चिन्मात्रे मद्रूपे विलयो भवेत्॥
भक्तेस्तु या पराकाष्ठा सैव ज्ञानं प्रकीर्त्तितम्।
वैराग्यस्य च सीमा सा ज्ञाने तदुभयं यतः॥

भगवतो मधुरगुणकीर्त्तनानुरक्तः साधको भगवत्येवात्मानं निवेदयन् अहंभावशून्यो देहाध्यासविरहित आत्मारामतां प्रतिपद्यते। तदानीं साधकस्य चेतसि तटस्थभावविलयेन निखिलेऽपि संसारे ब्रह्मव्यतिरिक्तं न किञ्चिदप्यवभासते। इयमेव पराभक्तिदशा। एतया किल स्वरूपज्ञाननिर्विकल्पसमाधि-परवैराग्यावस्थानां नाणीयानपि विभेदः। येन भाग्यशालिना भक्तेन दशैषा समधिगम्यते, सहि शास्त्रे भागवतोत्तमोऽभिधीयते। यथा च स्मृतौ—

सर्वभूतेषु यः पश्येत् भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥

श्रुतावप्युक्तम्—

आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्तभिसंविशन्ति। सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत"

एवं किल शान्तः साधकः सर्वतो व्याप्ते आनन्दस्वरूपे भगवत्येव स्वचेतो विलीय पराया भक्तेर्दशायां स्वरूपज्ञानमधिगच्छति। एतद् भक्तेरुपलब्धौ श्रीभगवत्स्वरूपे च न विद्यते भेदलेशोपि। अस्यामेव दशायां तत्त्वमसीत्यादि महावाक्यचरितार्थता॥ २९॥

पराया भक्तेर्दशायां स्वरूपज्ञानोदये किं स्यादित्युच्यते—

## तदाविर्भावात्तटस्थज्ञानालयः॥ ३०॥

पराया भक्तेरवस्थायां स्वरूपज्ञानस्याविर्भावे तटस्थज्ञानस्य लयो जायते। गौण्याभक्तेर्वैध्या रागात्मिकया चेति उभाभ्यां सहैव तटस्थज्ञानसम्बन्धः। अर्थात् वैध्याभक्तेः प्रथमसोपानमारभ्य रागात्मिकाया भक्तेः तन्मयासक्तिपर्यन्तं सर्वास्वप्यवस्थासु ध्यातृध्येययोः पृथक् सम्बन्धस्तिष्ठति। परन्तु पराया भक्तेर्दशायां स्वरूपज्ञानोदयेन साधकेन सर्वत्रैवाद्वितीयं सच्चिदानन्दं ब्रह्मैव परिदृश्यते। तदानीं ध्यातृध्येययोरेकत्वेन साधकः स्वस्वरूप एव तिष्ठति। अतः श्रुतावुक्तम्—

"यत्र हि द्वैतमेव भवति यत्र वाऽन्यदिव स्यात् तत्राऽन्योऽन्यत् पश्येदन्योऽन्यद् विजानीयात्, यत्र त्वस्य सर्वात्मतैवाऽभूत् तत् केन कं पश्यत् केन कं विजानीयात्"।

यावत् तटस्थज्ञानापरनामकं द्वैतज्ञानं तिष्ठति, तावत् द्रष्टृदृश्ययोर्भेदो जायते। यदा च तटस्थज्ञानविलयस्तदा स्वरूपज्ञानमुदेति तदानीं पूर्णरूपेण द्वैतभावे विनष्टे साधकोऽद्वितीयपरब्रह्मभाव एव तिष्ठति, इयमेव पराभक्तिर्भक्तैः काम्यते। इयं हि भक्तिराज्यसीमा, इयमेव शास्त्रे जीवनमुक्तावस्था प्रोक्ता॥ ३०॥

ज्ञानापेक्षया भक्तेर्वैशिष्ट्यं वर्णयति—

## नानुष्ठात्रनुष्ठानविषया ज्ञानवत्॥ ३१॥

भक्तिः अनुष्ठातुः अनुष्ठानस्य विषया ज्ञानवन्नास्ति ज्ञानवदनुष्ठानद्वारा भक्तिर्न लभ्यत इत्यर्थः। यथा ज्ञानस्य जिज्ञासा-श्रवण-मननादिभिस्तटस्थज्ञानस्य श्रेष्ठा

दशासमुदयति, तथा भक्तिर्नास्ति। ज्ञानसाधनविषये भगवता गीतायामुक्तम्—

तद् विद्धि प्राणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥

शास्त्रान्तरे च—

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येयम् एते दर्शनहेतवः।

परन्तु भक्तेरधिगमाय नसन्त्येतेह्युपायाः। भक्तिस्तु केवलं भगवत्कृपालभ्या। सूत्रेऽत्र ज्ञानशब्दस्तटस्थ-ज्ञानपरो वोध्यः। गुरुचरणप्रणिपातेन, गुरुसेवया, गुरुभ्यो जिज्ञासया, ततश्च मननिदिध्यासादिना, सत्सङ्ग-स्वाध्यायादिभिश्च सत्पुरुषार्थैर्यथा शनैः शनैस्तत्त्व-ज्ञानमुदेति, तथा पुरुषार्थसाध्या भक्तिर्नास्ति। रागात्मिकया परया भक्त्या च सह अन्तकरणस्य विशिष्टा-वस्थासम्वन्धः सच परानुरागमूलकात्वाद् विलक्षणः।

यद्यपि वैध्याभक्तेः साधनकालेऽनुष्ठानस्यावश्यकत्वम्, तथापि वैधीतो रागात्मिकायाः सन्धौ ततश्च पराभक्तेः सन्धौ, केवलं भगवत्कृपाया एवालौकिकः सम्वन्धस्तिष्ठति। अर्थात् वैध्या भक्तेस्तत्तद् विषयाणामनुष्ठानेन रागात्मिकायाः समुदयः, रागात्मिकायाश्च परिपूर्ण साधनेन पराभक्तिलाभ इत्येवं न भवति, वैधीतो रागात्मिका दशाधिगमस्तु भगवत्कृपयैव साध्यः। तथैव रागात्मिकावस्थातः पराभक्तिप्राप्तिरपि भगवत्कृपामूलकाऽवगन्तव्या। अतः श्रुतावक्तम्—

नाऽयमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैवात्मा विवृणुते तनुं स्वाम्॥ ३१॥

पात्रापात्रविचाराभावाद्भक्तेर्वैशिष्ट्यमाह—

**ज्ञाननिष्ठेतरयोस्तल्लाभः सर्वाश्रयत्वात्॥३२॥**

सर्वाश्रयत्वात् सर्वेषामाश्रयत्वात् ज्ञाननिष्ठेतरयो-र्ज्ञान्यज्ञानिनोस्तल्लाभस्तस्या भक्तेर्लाभो जायते। भक्तिं द्वारीकृत्य ज्ञानिनोऽज्ञानिनश्च समुदयं लभन्ते, यत इयं सर्वेषामाश्रयस्थलमास्ते। यथा कर्मकाण्डे आर्यानार्य-चतुर्वर्ण-चतुराश्रम-स्त्रीपुरुषादि भेदमनुसृत्याधिकार-निर्णयः, यथा च ज्ञानकाण्डे साधनचतुष्टयापेक्षा, तथा भक्तिविषये किमपि विधानं नास्ति। समदर्शिनः करुणावरुणालयस्य भगवतश्चरण-कमलाश्रयणे स्त्रियः पुरुषाः, बालावृद्धाः, आर्या अनार्याः, ज्ञानिनोऽज्ञानिनश्च सर्वे समानाधिकाराः सन्ति।

अतिसरलो भक्तिमार्गः। साधनस्य यावन्त्यङ्गानि सन्ति, तेषु साफल्याधिगमाय येषां येषां विषयाणामावश्यकत्वमास्ते, भक्तौ न तथा, दातृत्वे धनैश्वर्यादीनाम्, तपस्वित्वे योग्यशरीरशक्तिप्रभृतीनाम्, कर्मयज्ञे द्रव्य-मन्त्रक्रियादीनाम्, योगित्वे योगकौशलादीनाम्, ज्ञानित्वे साधनचतुष्टयप्रभृतीनां यथाऽऽवश्यकत्वम् तथा भक्तौ नास्ति। द्वेषवृत्तिं निरुध्य रागवृत्तिं च चित्ते धारयित्वा स्वचेतसो वृत्तिप्रवाहस्य श्रीजगन्नाथस्य भक्त मनोमन्दिरविहारिणो भगवतोऽभिमुखं परिचालनेनैव भक्तिरुदेति। नास्यां केषाञ्चिदानुषङ्गिकविषयाणामपेक्षिता। यतो भगवद्रसतरङ्गिणी भक्तिः स्वयं सिद्धस्वरूपिणी। यथा प्रोक्तं स्मृतौ—

बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः।
प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते॥
भक्त्याऽहमेकया ग्राह्यः श्रद्धयाऽऽत्माप्रियःसताम्।
भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सर्वथा॥

सुतरां भक्तिः किल सकलप्राणिमात्रस्य समानरूपेण परममाश्रयस्वरूपा॥ ३२॥

भक्तेः सर्वसाधनमूलत्वात्तद्विशिष्टानां प्रतिपादयति—

**सा परार्ध्या निखिलसाधकापेक्षित्वात्॥ ३३॥**

निखिलानां साधकानां समपेक्षित्वात् सा भक्तिः पराध्यों सर्वश्रेष्ठाऽवगन्तव्या। साधनमार्गेऽग्रे गन्तुं भक्तेराश्रयणं सर्वैरेव कर्त्तव्यं भवतीत्यर्थः। यथोक्तं स्मृतिशास्त्रे—

यथा समस्तलोकानां जीवनं सलिलं स्मृतम्।
तथा समस्तसिद्धीनां जीवनं भक्तिरिष्यते॥

कर्मासक्तेनाज्ञेन, तत्त्वदर्शिना ज्ञानिना, प्रवृत्तिमार्गसेविना गृहस्थेन, निवृत्तिपथचारिणा सन्यासिना सर्वविधसाधकवर्गेण साधनमार्गे धीरतां, स्थिरधारणां, तीव्रसंवेगं चाधिगन्तुं भगवद्भक्तिर्हि नूनमाश्रीयते। एतत्सूत्रस्थभावं सुस्पष्टमवधारयितुमिदमुच्यते यत् आत्मचैतन्यप्रकाशकसाधनप्रणाली योगतत्त्ववेत्तृभिश्चतुर्धा विभक्ता यथा (१) ध्यानमूलिका मन्त्रयोगप्रणाली, (२) ज्योतिर्ध्यानमूलिका हठयोगप्रणाली, (३) विन्दुध्यानमूलिका लययोगप्रणाली, (४) ब्रह्मध्यानमूलिका राजयोगप्रणालीति। सर्वास्वासु साधनप्रणालीषु परमानुरागात्मिका गुरुभक्तेः, स्वेष्टदेवभक्तेश्चादितोऽन्तपर्यन्तमावश्यकत्वमङ्गीकृतम्। अतः सर्वत्रैव साधनप्रणाल्यां भक्तिः प्राणरूपा वेद्या। पूज्यपाद महर्षि पतञ्जलिना योगदर्शने प्रोक्तम्—

"तीव्रसंवेगानामासन्नतमः" इति

भक्त्यैव साधकस्तीव्रसंवेगमधिगच्छति। स्मृतावप्युक्तम्—

अजातपक्षा इव मातरं खगाः
स्तन्यं यथा वत्सतराः क्षुधार्ताः।
प्रियं प्रियेव व्युषितं विषण्णा
मनोऽरविन्दाक्ष दिदृक्षते त्वाम्॥

साधकस्यान्तःकरणे भक्त्यैवैतादृशी सदाकाङ्क्षासमुत्पत्तुमर्हति। अतो भक्तिः सर्वतो गरीयसी॥३३॥

अन्यदप्यभिधीयते—

## सर्वधर्माङ्गप्रपन्ना च॥ ३४॥

भक्तिः किल निखिलधर्माङ्गानां सहायिका विद्यते। स्मृतिशास्त्रे धर्माङ्गस्वरूपभेदमित्थमाह—

अहमेवास्मि भो देवा धर्मकल्पद्रुमस्य च।
वीजं मूलं तथाऽऽधीरो नात्र कश्चन संशयः॥
स्कन्धस्तस्य द्रुमस्यास्ते धर्मो वै विश्वधारकः।
मुख्यं शाखात्रयं चास्य यज्ञो दानं तपस्तथा॥
ब्रह्मार्थाभयदानादि देवास्त्रैगुण्ययोगतः।
दानस्य प्रतिशाखाःस्युर्नवधा नात्र संशयः॥
तपोऽपि त्रिविधं ज्ञेयं कायवाणीमनोभवम्।
त्रैगुण्ययोगेनास्यापि प्रतिशाखा नवासते॥
प्रतिशाखा अनेकाः स्युर्यज्ञशाखासमुद्भवाः।
काम्याध्यात्माधिदैवाधिभूतनैमित्तनित्यकाः॥
कर्मयज्ञप्रशाखाया भेदात् त्रैगुण्ययोगतः।
त एवाष्टदशास्या हि प्रतिशाखा मनोहराः॥
पितृदेवर्षिवृन्दानामवतारगणस्य च।
पञ्चानां सगुणब्रह्मरूपाणां निर्गुणस्य च॥
ब्रह्मणश्चासुरौघाणामुपास्ते पञ्चभक्तितः।
मन्त्रो हठो लयो राज एते योगेन च ध्रुवम्॥
अस्या भेदाश्च चत्वारो भेदा एवं नवासते।
एते भेदा नवैवाहो देवास्त्रैगुण्ययोगतः॥
उपास्ते प्रतिशाखा स्युः षड्रूपाः सप्तविंशतिः।
श्रवणं मननं चैव निदिध्यासनमेव च॥
त्रयोमी ज्ञानयज्ञस्य भेदास्त्रैगुण्ययोगतः।
नवधा संविभक्ता हि प्रतिशाखा नवासते॥
द्विसप्तत्या प्रशाखाभिः शाखाभिश्चैवमेव भोः।
निजानां ज्ञानिभक्तानां धर्मकल्पद्रुमात्मना॥
हृदे शेऽत्र विराजेऽहं नात्र कश्चन संशयः॥

कर्मोपासना ज्ञानयज्ञतपोदानादि धर्मस्य सकलानामङ्गानां परिपूर्तये भगवद्भक्तिरपेक्षिता। अनुरागमन्तरेण न कस्यापि धर्मानुष्ठाने प्रवृत्तिः। प्रथमतो गुरुभक्तिं विना कर्मोपासना ज्ञानादिषु कस्यापि योग्यता मानवेन नाधिगन्तुं शक्यते। शास्त्रगुर्वाचार्यपुरोहितादिषु विनानुरागं तदाज्ञापरिपालनधर्मानुष्ठाने कदापि प्रवृत्तिर्न स्यात्। अन्यच्चेदमपि विचारणीयं यत् दाने तपसि कर्मसु च कर्तुः पुरुषस्य चेतसि दम्भाहंकारोन्मादादीनामाविर्भावः सम्भाव्यः। उपासनायामालस्यं ज्ञाने चाहङ्कारादय उद्भवितुमर्हन्ति, तेषां निराकरणपुरस्सरं धर्मस्याभ्युदयमार्गं सरलीकर्तुमनुरागात्मकविश्वासश्रद्धाभक्तिप्रभृतीनां सदैवावश्यकता भवितुमर्हति। एतदनुरागादि संवर्द्धनार्थं धार्मिकमानवचेतसि धर्मस्य दार्ढ्यसम्पादनार्थं च भगवद्भक्तिः प्रधानरूपेण सहायिका विज्ञेया। अयमेव भक्तेरसाधारणो महिमा ॥ ३४ ॥

अन्यच्च—

**लघूदितायामपि महाकल्मषहानम् ॥ ३५ ॥**

लघूदितायां स्वल्पाया भक्तेरुदयेऽपि महापापनाशो जायते। महापापिनोऽपि भगवद्भक्तिमाश्रित्य पापशून्याः सन्तः पुण्यमयेऽध्यात्मराज्येऽग्रेसरा भवन्तीत्येषोऽपूर्वो भक्तिमहिमा। स्मृतावेवमेवाह—

संकीर्त्यमानो भगवाननन्तः
श्रुतानुभावो व्यसनं हि पुंसाम्।
प्रविश्य चित्तं विधुनोत्यशेषं
यथा तमोऽर्कोऽभ्रमिवातिवातः ॥
अविस्मृतिः कृष्णपदारविन्दयोः
क्षिणोत्यभद्राणि शमं तनोति च।
सत्त्वस्य शुद्धिं परमात्मभक्तिं
ज्ञानं च विज्ञानविराजयुक्तम् ॥

यथाऽग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात्।
तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥
यथाऽग्निना हेममलं जहाति
ध्यातं पुनः स्वं भजते च रूपम्।
आत्मा च कर्मानुशयं विधूय
मद्भक्तियोगेन भजत्यथो माम् ॥
कथं विना रोमहर्षं द्रवता चेतसा विना।
विनाऽऽनन्दाश्रुकलया शुध्येत् भक्त्या विनाशयः ॥

अस्य विज्ञानस्य तात्पर्यमेतद् यत् आध्यात्मिकस्थितिविचारमनुसृत्यावस्था द्वितयी निर्दिष्टा, एका भगवद्भावमयी ऊर्द्ध्वगामिनी, द्वितीया चेन्द्रियविषयभावमयी अधोगामिनी। ऊर्द्ध्वगामिनी अभ्युदयस्य, अधोगामिनी च नरकादीनां हेतुः। सुतरां कामप्यवस्थामधिगतस्य भक्तस्यान्तःकरणे समुदितया भक्त्या तदधोगतिर्निरुध्यते, तदीय चेतसः सम्बन्धस्य भगवद्भावमय्या उच्चगामिन्याऽवस्थाया सत्त्वात् स हि भगवद्भावप्रभावेण निर्मलतां पवित्रतां चाधिगच्छति। यथा प्रकाशस्योदयेनान्धकारो विनश्यति, तथैव निर्मलपरमपूतभगवद्भावसम्बन्धसंयुक्तदशायां पापानां स्वतो विनाशः सम्भवः। फलतो विषयसेविनो जीवस्य चेतसा सह भगवद्भावराज्यसम्बन्धे जातेऽधोगामी तदीय चित्तनदीवेगोह्यूर्द्ध्वगामी भवति, तत्र च भगवद्ज्योतिषामुदयसमारम्भो बोभवीति, भगवज्ज्योतिरनुदिनं प्रवर्धते न कदापि ह्रसति। यदि चिरकालाद् विषयैः सम्बद्धो महापापी चापि साधीयस्या रीत्या स्वचेतसो वेगं श्रीमत्भगवच्चरणकमलाभ्यर्णं प्रापयेत्, तर्हि तेन श्रीभगवतो नित्यस्थितविकारविहीनपवित्रताऽऽश्रयो नूनमधिगम्येत। यतो ह्येकवारमपि चित्तवेगपरिवर्त्तनं सदैव स्थितिशीलं जायते। एकदापि भगवत्संस्कारसंस्कृतमन्तःकरणं नूनमेव विषयमलेन विमुच्यते, तच्च भगवदुन्मुखे तिष्ठत्येव। यथा

ज्ञानोदयेनाज्ञानस्य लेशोऽपि न दृश्यते, सत्त्वगुणोदयेन तमो विलीयते, तथैव भगवत्पवित्रानुरागोदयात् पापानि समूलं विनाशमापद्यन्ते। स्मृतिशास्त्राणि बहुशः प्रोचुर्यद् यथा प्रज्वलितोऽग्निः शुष्ककाष्ठानि भस्मसात् सम्पादयति, तथैव भगवद्भक्त्या पापराशिर्दह्यते, यथाऽग्निना सुवर्णनिर्मलं सत् स्वीयं स्वाभाविकं स्वरूपं प्रतिपद्यते, तथा जीवो भगवद्भक्त्या मलिनसंस्कारपरिच्युतोऽध्यात्ममार्गेऽग्रेसरति। भक्त्या यावद्भक्तः पुलकिताङ्गो द्रवीभूतमानसो विगलितानन्दाश्रुर्न भवति तावदान्तरिकीं पवित्रतां नासादयति। यथा समाधिद्वारा चेतसः समताधिगमः, समाधेरुदयेन मानसिको वैषम्यभावः समूलमपसरति, तथैव भक्त्या सह परमानन्दपदसम्बन्धसत्त्वाल्लघूदितायामपि तस्यां निरानन्दमयः पापराशिः प्रणश्यति।

कर्ममीमांसादर्शनस्य सिद्धान्तोऽयं यत् प्रबलं पापकर्म प्रबलेनैव प्रायश्चित्तेनोपनोद्यते। अतो हि स्मृतौ—महापातकातिपातकानां पृथक् पृथक् प्रायश्चित्तश्रेणयो निर्धारिताः सन्ति। परन्तु भक्तेरेवायं महिमा यत् सामान्ययाऽपि भक्त्या महोग्रपापानि प्रणश्यन्ति। एतद्साधारणमहत्त्वद्योतनार्थमेव सूत्रेऽत्र 'अपि' शब्दप्रयोगो वेद्यः॥ ३५॥

अन्यच्चापि—

**अन्त्यजोऽप्यधिकारी तत्र साम्यात्॥ ३६॥**

तत्र भक्तौ साम्यात् समानभावात्वदन्त्यजोऽधमजाति मानवोऽप्यधिकारी समधिकृतः। भगवद्भक्तौ सर्वेऽपि समानाः सन्ति। एषा भक्तिमहिमा। भगवद्भक्तिमासादयितुं विचारकाठिन्यं, योगपरिश्रमः, ज्ञानकाण्डीय शक्तिशालित्वं किमपि नापेक्षितम्। तदर्थं तु भगवन्तं प्रति चित्तानुराग एवापेक्षितः। अतः स्वत इदं प्रमाणितं जायते यद् भगवद्भावभावितोभावुको भक्त कीदृगधिकारोपि कीदृक्श्रेणिगोऽपि किंजातीयोऽपि भगवदनुरागमयचित्तसाम्यविमर्शतः सर्वोऽपि समान एव। कर्मकाण्डे पात्रापात्रविचारः, योगेऽधिकारविभेदः, ज्ञानकाण्डाधिकारासाधनै साधनचतुष्टयादीनामपेक्षा, परन्तु भक्तेरिदं महत्त्वं यदत्राधिकारभेदादीनां नास्ति प्रयोजनीयता। एतदसाधारणमहत्त्वप्रतिपादनार्थमेव सूत्रेऽत्र 'अपि' शब्दः प्रयुक्तः। पूर्वजन्मार्जितपुण्यपुञ्जप्रभावाद् यदि कस्यापि नीचस्यान्त्यजस्य चेतसि भगवदनुरागोदयो जायेत, तर्हि पराया भक्तेः पथः कस्तं विच्युक्तं कर्तुं शक्नुयात्? स्वयमेव भगवता गीतायां प्रोक्तम्—

> अपि चेत् सुदुराचारो भजते मामनन्यभाक्।
> साधुरेव समन्तव्यः सम्यग्व्यवसितो हि सः॥

समदर्शी परमकृपालुर्भगवान् निजान् समस्तानपि भक्तान् समानयैव दृशा पश्यति। एतमादर्शमनुसृत्यैको भक्तोऽन्यं समभावेनैव विजानाति। भक्तचित्तसमदर्शिता चिरप्रसिद्धा। भक्तेर्वैध्यामवस्थायां शीलादिकं द्वारीकृत्य, रागात्मिकाया दशायां प्रेमसाम्यभावद्वारा, पराया भक्तेरवस्थायां समत्वबुद्धिद्वारेण च समता समदर्शिता च विकासं प्राप्नुतः॥३६॥

अन्यदपि—

**विधिनिषेधागोचरत्वमनुभवे॥ ३७॥**

अनुभवे जाते विधिनिषेधयोः अगोचरत्वं स्यात् कर्तव्याकर्त्तव्यपरिज्ञानाभावो भवतीत्यर्थः। भक्तिभूमावग्रेसरन् साधकोऽन्ते यदा परायाभक्तेर्दशामधिगच्छति, तदानीं विधिनिषेधदशामतिक्रामति। रागात्मिकायाभक्तेस्तीव्रावस्थायामेव विधिनिषेधयोस्तिरोधानारम्भो जायते। वैधभक्तिदशायां तु विधिनिषेधौ

तिष्ठतः। विधिनिषेधौ कर्तव्याकर्त्तव्ये च त्रिगुणमय्याः प्रकृतेर्विषयीभूते। तटस्थज्ञानदशायां विधिनिषेधावावश्यकौ। किन्तु पराभक्तौ प्राप्तायां निस्त्रैगुण्यां पदवीं लभमानः प्रकृतिराज्यमतिक्रामति। अतएव जीवन्मुक्तदशायां धर्माधर्मौ विधिनिषेधौ वा न तिष्ठतः।

स्मर्यते चात्र—

त्यज धर्ममधर्मं च तथा सत्यानृते त्यज।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज॥
त्यज धर्ममसंकल्पात् अधर्मं चाप्यलिप्सया।
उभे सत्यानृते बुध्या बुद्धिं परमनिश्चयात्॥
रजस्तमश्च सत्त्वेन सत्त्वं चानशनेन च।
यद् यदा चरति श्रेष्ठस्तत् तदेवेतरो जनः॥
स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते।
सर्वे विधिनिषेधा स्युः एतयोरेव किंकराः॥

एतस्यां दशायां बुद्धिभेदं दूरयितुं लोकशिक्षार्थं यदि वर्णाश्रमधर्माचाराणां गीतोक्तदिशा नैवापलापं भक्तशिरोमणिरनुतिष्ठति, तथापि वस्तुतः समाधिदशायामसौ परमानन्द समभावविरोधिनः कस्यापि वैषम्यभावस्यासत्त्वात् विधिनिषेधौ सर्वथाऽतिक्रामति। तदा विधिनिषेधौ तस्य किंकरायमाणौ जायेते। अतएव स्मृतिशास्त्रे प्रतिपादितं यत् जीवन्मुक्तो ज्ञानी भक्तः स्वान्तःकरणे भेदभावाभावेऽपि लोकशिक्षणार्थं द्वैतभावानुकूलमुपदिशति। तथा हि स्मृतौ—

बाले बाला विदुषि विबुधा गायके गायकेशाः
शूरे शूरा निगमविदि चाम्नायलीलागृहाणि।
सिद्धे सिद्धा मुनिषु मुनयः सत्सुसन्तो महान्तः
प्रौढे प्रौढाः किमिति वचसा तादृशा यादृशेषु॥
मौने मौनी गुणिनि गुणवान् पण्डिते पण्डितोऽसौ
दीने दीनः सुखिनि सुखवान् भोगिनि प्राप्तभोगः।
मूर्खे मूर्खो युवतिषु युवा वाग्मिषु प्रौढ वाग्मी
धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः॥

एतादृशो जीवन्मुक्तो ज्ञानीभक्तो महात्मा संसारेऽत्र सर्वानपि स्वस्वाधिकारानुसारं समुन्नमयन् क्रियाद्वैततां परिपालयन्नपि भावे सर्वदैवाद्वैततामवलम्बमानो विधिनिषेधौ विजहाति॥ ३७॥

अन्यदप्यभिधत्ते—

## क्रमानपेक्षा च॥ ३८॥

भक्तिलाभार्थं साधने क्रमस्यानपेक्षा क्रमापेक्षा नास्तीत्यर्थः। भक्तेरिदमन्यतं वैशिष्ट्यं यद् यथा साधनान्तरेषु क्रमविधिर्निर्दिष्टो न तथात्र। यद्यपि गौणी भक्तिः क्रियासाध्या, उपासनाकाण्डक्रियाणां ज्ञानकाण्डतत्त्वविचाराणां च द्वारा परम्परया भक्तिभावोद्रेको भवति; तथापि कर्मकाण्डे योगे, ज्ञानमार्गे च यथा साधनविधिक्रमो निर्दिष्टो भक्तिमार्गे तथा नावधेयः। आनन्दकन्दस्य भगवतः कृपामधिगतो भक्तो लोकोत्तरभावेन विधिवन्धनमतिक्रामन् आनन्दसागरे निमज्जति। श्री गुरुदेवपरीक्षिताधिकारनिर्णयापेक्षतया गौण्यां भक्तौ कश्चित् क्रमोऽपेक्षितः, परन्तु रागात्मिकायां पराभक्तौ च नैव क्रमापेक्षता॥ ३८॥

भक्तेर्नानाविधमहत्त्वं प्रतिपाद्येदानीं तत्र वैफल्याभावं निरूपयति—

## अविपक्वभावानामपि तत्सालोक्यम्॥ ३९॥

न विपक्वो भावो येषां तेषां अविपक्वभावानामपि भक्तिमार्गे प्रविष्टसाधकानां भक्तिभावदृढता सद्भावराहित्येऽपि तत्सालोक्यं तस्य भगवतः सालोक्यमधिगम्यते। भगवद्भक्तिमधिगच्छन्नपि प्रारब्धवशात् कारणान्तरेण वा परां भक्तिं नासादयति, तथाप्ययं न पततीत्यत्र भक्तेरेव विशिष्टो महिमा सोऽपि नूनमेव स्वेष्ट-

देवलोकं प्राप्नोति। सूत्रेऽत्र "अपि" शब्दनिर्देशस्वारस्य-मेतदेवावगन्तव्यम्।

शास्त्रेषु आध्यात्मिक्याः समुन्नतेः प्रधानतो गतिद्वयं निर्दिष्टम्। एका सहजगतिर्द्वितीया क्रमोद्ध्र्वगतिरिति। यो हि भगवति स्वीयं चित्तमर्पयन् क्रमेण समुन्नतिं लभमानोऽन्ते पराभक्तिदशामवाप्नोति स जगतेरधिकारितां प्रपद्यते। अर्थात् संसारेऽत्र वर्त्तमानोऽप्यसौ बन्धनाद् विमुच्यते। श्रुतावप्युक्तम्—

"न तस्य प्राणा ह्युत्क्रामन्त्यत्रैव समवलीयन्ते"। स्मृतावपि—

त्वं प्रत्यगामिनि तदा भगवत्यनन्त-
आनन्दमात्र उपपन्न समस्तशक्तौ।
भक्तिं विधाय परमां शनकैरविद्या-
ग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढाम्॥
इहैव यस्य ज्ञानं स्याद्धृद्गतप्रत्यगात्मनः।
मम संवित्परतनोस्तस्य प्राणा व्रजन्ति नः॥
ब्रह्मैव संस्तदाप्नोति ब्रह्मैव ब्रह्म वेद यः।
कष्टचामीकरसममज्ञानात्तु तिरोहितम्॥
ज्ञानादज्ञाननाशेन लब्धमेव हि लभ्यते।
घृतमिव पयसि निगूढं भूतेभूते च वसति विज्ञानम्।
सततं मन्थयितव्यं मनसा मन्थानभूतेन॥

किन्तु दैवेयोगेन येन भक्तेन सहजगतिर्नाधिगम्यते, तेन शरीरपरित्यागकाले स्वीयस्य भावस्य दार्ढ्येन श्रेष्ठो देवलोकं आसाद्यते। कस्यचिन्मते सालोक्यमुक्तिरियमेवाभिधीयते। उक्तमपि भगवता गीतायाम्—

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय! सदा तद्भावभावितः॥

शास्त्रेषु गतिरियमुत्तरायणगत्यन्तर्गता निर्णीता गतिमिमामनुसृत्य कश्चिद्भक्तः शिवलोकं कोऽपि च विष्णुलोकं कश्चिच्च ब्रह्मलोकादि विविधलोकान् प्रपद्यते। ब्रह्मलोकप्राप्तिविषये श्रुतिराह—

तपः श्रद्धे ये ह्युपवसन्त्यरण्ये
शान्ता विद्वांसो भैक्ष्यचर्यं चरन्तः।
सूर्यद्वारेण ते विरजाः प्रयान्ति
यत्रामृतः स पुरुषो ह्यव्ययात्मा॥
एह्येहीति तमाहुतयः सूर्यवर्चसः
सूर्यस्य रश्मिभिर्यजमानं वहन्ति।
प्रियां वाचमभिवदन्तोऽर्चयन्त्य
एष वः पुरुषः सुकृतो ब्रह्मलोकः॥
तस्य हैतस्य हृदयस्याग्रं
प्रद्योतते तेन प्रद्योतेनैष आत्मा।
निष्क्रामति चक्षुषो वा
मूर्द्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः॥
अथ यत्रैतदस्माच्छरीरा—
दुत्क्रामत्यथैतैरेषो रश्मिभिरुद्ध्र्वमाक्रमते॥

तदूद्ध्र्वगमनप्रकारः परमाद्भुतरूपेण श्रुतावन्यत्रापि वर्णितस्तथाहि—

"स एतं देवयानपन्थानमासाद्य अग्निलोकमागच्छति, स वायुलोकं स वरुणलोकं स आदित्यलोकम् स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं तस्य ह वा एतस्य ब्रह्मलोकस्य अयो ह्रदो मुहूर्त्तो येष्टिहा विरजा नदीभ्यो वृक्षस्तत्र स आगच्छति विरजां नदीं तां मनसैवाऽत्येति स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति"।

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥

एवं प्रकारेण स्मृतावपि देवलोकविष्णुलोकादीनां पर्याप्तवर्णनमुपलभ्यते। यथा देवलोकविषये—

भक्तौ कृतायां यस्यापि प्रारब्धवशतो नग !
न जायते मम ज्ञानं मणिद्वीपं स गच्छति ॥
तत्र गत्वाऽखिलान् भोगान् अनिच्छन्नपि चार्च्छति ।
तदन्ते मम चिद्रूपज्ञानं सम्यग् भवेन्नग ।
तेन मुक्तः सदैव स्यात् ज्ञानान्मुक्तिर्न चान्यथा ॥

एवं किल विष्णुलोकविषयेऽपि वर्णितमुपलभ्यते—

वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्त्तयः ।
येऽनिमित्तनिमित्तेन धर्मेणाराधयन् हरिम् ॥
यत्र चाऽऽद्यः पुमानास्ते भगवान् शब्दगोचरः ।
सत्त्वं विष्टभ्य विरजं स्वान्तं नो मृडयन् वृषः ॥
यत्र नैःश्रेयसं नाम वनं कामदुघैर्द्रुमैः ।
सर्वर्त्तु श्रीभिर्विभ्राजत् कैवल्यमिव मूर्त्तिमत् ॥
वैमानिकाः सललनाश्चरितानि शश्वद्
गायन्ति यत्र शमलक्षपणानि भर्त्तुः ।
अन्तर्जलेऽनुविकसन्मधुमाधवीनां
गन्धेन खण्डितधियोऽप्यनिलं क्षिपन्तः ॥
पारावतान्यभृतसारसचक्रवाक-
दात्यूहहंसशुकतित्तिरिबर्हिणां यः ।
कोलाहलो विरमतेऽचिरमात्रमुच्चैः
भृङ्गाधिपे हरिकथामिव गायमाने ॥
मन्दारकुन्दकुरबोत्पलचम्पकार्ण-
पुन्नागनागबकुलाम्बुजपारिजाताः ।
गन्धेऽर्चिते तुलसिकाभरणेन तस्या
यस्मिँस्तपः सुमनसो बहुमानयन्ति ॥
श्रीरूपिणि कणयती चरणारविन्दं
लीलाम्बुजेन हरिसद्मनि मुक्तदोषा ।
संलक्ष्यते स्फटिकदूत्य उपेत हेम्नि
सम्मार्जतीव यदनुग्रहणेऽन्ययत्नः ॥

एवं हि त्रैलोक्यमोहनविष्णुधामनि प्रलयपर्यन्तं निवसन् भक्तोऽन्ते परमपदे विलीयते । अविपक्वभक्तिरपि साधको ह्येवं प्रकारेण सालोक्यं लभते । भक्तेर्वैशिष्ट्यमिदं यद् यदि भक्तो ह्यन्तिम सीमानं पराभक्तिरूपं कैवल्यं नासादयन्नपि सालोक्यादिगतिमवश्यमेवाधिगच्छति । विज्ञानमिदं प्रकारान्तरेणाप्यवधेयं यत् भक्त्या निःश्रेयसाधिगमाभावेऽपि अभ्युदस्य चरमसीमानं भाग्यवन्तं भक्तं भक्तिर्नूनमेव प्रापयति । अभ्युदयस्य परायाः काष्ठायाः समनन्तरं निःश्रेयसाधिगमो निश्चप्रचः । इदमेवभक्तेः सर्वाभ्यर्हितं वैशिष्ट्यम् ॥ ३९ ॥

इदानीं भक्तिविषये आत्मानन्दपरायणमहर्षीणां मतानि प्रदर्श्यन्ते—

## केचिदैश्वर्यपरां भेदात् ॥ ४० ॥

केचित् भक्ता महर्षयो भक्तिम् ऐश्वर्यपरां भगवद्भिन्नता विमर्शतो मन्यते । भृगु-कश्यप-नारदादयो ह्येतत्सिद्धान्ताचार्या विज्ञायन्ते । भक्तेः समुन्नतदशायामपि तन्मयता प्राप्ता अनेके महात्मनो भेदबुद्धया भगवन्तमुपासते आनन्दं चाधिगतुमिच्छन्ति । ते किल परमात्मनोऽलौकिके ऐश्वर्ये दृष्टिपाते कुर्वाणास्तद्भावभाविता भगवद्गुणान् वर्णयन्त आनन्दसागरे निमज्जन्ति । भगवतो लीलाया विमर्शतो मुक्तिदशायां सांख्यविज्ञानमनुसृत्यावस्थाद्वयं प्रतिभासते । यतो हि सांख्यविज्ञानज्ञानभूमौ सिद्धिलाभं कुर्वतः परमपुरुषसाक्षात्कारप्राप्त्याऽपि प्रकृतेर्विद्यमानत्वाद् व्यष्टिज्ञानं न प्रणश्यति । अतः प्रकृतिपुरुषात्मको भेदो जागर्त्येव । एवं रीत्या भेदभावमवलम्बमाना भक्तशिरोमणयो भगवदनन्तैश्वर्यं वर्णयन्त आनन्दसागरे निमज्जन्ति । इयमवस्था ऐश्वर्यपरा भक्तिरित्युच्यते । परायाभक्तेरद्वैतदशामस्वीकुर्वाणानि मतान्तराणि श्रेणावत्रान्तर्भवन्ति ॥ ४० ॥

द्वितीयं मतमुच्यते—

## आत्मैक परामपरे अभेदात् ॥ ४१ ॥

अपरे महर्षयो भक्तिमात्मैकपरां मन्यन्ते। यतस्तेषां विशुद्धा बुद्धिर्भेदभावं परित्यजन्ती अभेदभावमाश्रयते, एतन्मतस्य प्रधानाचार्या अङ्गिरो वशिष्ठवेदव्यासादयो विद्यन्ते। एतेषां मते निर्विकल्पसमाधिदशायां यदा पराभक्तिर्लभ्यते, तदाऽद्वैतभावसमुदयेन भक्तः परां भक्तिं लभमानोऽद्वितीयं सच्चिदानन्दमनुभवन् आनन्दसागरे निमज्जति। पराभक्तेरन्तिमावस्थायां परमात्मव्यतिरिक्तमन्यमननुभवन् भक्तः कार्यकारणब्रह्मणोरैक्यं विश्वसिति। श्रेष्ठतमदशायामस्यां सर्वमपि दृश्यप्रपञ्चं परमात्ममयं जानन् भक्तशिरोमणिः "अहमस्मि ब्रह्म" इत्यनुभवति। तदानीमभेदात् अद्वैतस्थितिजागरूकतामापद्यते। सैव पराभक्तेरन्तिमावस्था ब्रह्मसद्भावनाम्ना गीयते। दशायामेनस्यां भगवतो भक्तस्य चाभेदः। भक्तः परमात्मना सहाद्वैतभावं प्रतिपद्यते। अत इयं भक्तिरात्मैकपरा व्याह्रियते॥ ४१॥

तृतीयं मतमुपपादयति—

**उभय परामितरे भेदाभेदाभ्याम्॥ ४२॥**

इतरे याज्ञवल्क्यवाल्मीकिशाण्डिल्यादयो महर्षय कार्यकारणविमर्शपूर्वकं भेदाभेदसम्बन्धेन भक्तिमुभयपरामामनन्ति। कार्यदशायां भेदभावे विद्यमाने ऐश्वर्यपरया भक्त्या कारणदशायां भेदतिरोधाने सच्चिदानन्दभावेन सहैकत्व प्राप्त्या आत्मैकपरया भक्त्या परमानन्दमनुभवन्ति भक्तशिरोमणयः। कार्यकारणयोर्भेदमनुसृत्योभयदशायामेवैते महर्षय आनन्दमनुभवन्ति। विज्ञानमेतदव धारयितुमुदाहरणान्तराण्यपि दातुं शक्यन्ते, यैः ऐश्वर्यपरामात्मैकपरामित्यवस्थाद्वयीमवगन्तुं सौकर्यमासाद्येत। सृष्टिदशायामैश्वर्यपरायाः, जीवन्मुक्तिदशायां तु आत्मैकपरायाः सद्भावो युक्तियुक्तः प्रतीयते। प्रकारान्तरमप्यभिधातुं शक्यते यत् रागात्मिकाया भक्तेरन्तिमदशायां यदा भक्तो रससागरे निमज्जनमुन्मज्जनं विधत्ते, तदानीमैश्वर्यपरावस्था प्राकट्यमापद्यते। इयमेकावस्था, अनन्तरं च परायां भक्तेरन्तिमायां स्थितौ अद्वैतस्वरूपस्य ब्रह्मसद्भावस्य समुदयो जायते, सैव द्वितीया आत्मैकपरा दशा वेद्या। विषयोऽयं प्रकारान्तरेणाप्यवगन्तुं शक्यते। भक्तेरुन्नतावस्थायां यदा भक्तस्य मानसं व्युत्थानदशां प्राप्नोति, तदा ऐश्वर्यपरा, यदा च भक्तचेतः स्वरूपावस्थामधिगच्छति तदा आत्मैकपरा स्वभावसिद्धा परिज्ञातव्या। महर्षिमतेषु कथं भेदप्रतीतिरिति शंकां निराकर्तुमिदमुच्यते यत् बद्धमुक्तावस्थयोर्द्वयोर्भेदादेव ऐश्वर्यपरा चैका आत्मैकपरा द्वितीया च दशा निर्णीता। समुन्नतदशामधिगतस्य भक्तस्य प्रकृतिप्रवृत्तिसंस्काराननुसृत्य उपर्युक्त विज्ञानानुसारेण ऐश्वर्यपराया आत्मैकपराया इति द्वयोरवस्थयोः सद्भावो युक्तियुक्तः। जीवन्मुक्तो यदा जगता सह स्थापितसम्बन्धो व्युत्थानदशामधिगच्छति तदानीमैश्वर्यपराया भक्तेरधिकारवान्, यदा च स्वरूपदशामधिकरोति तदानीमसौ आत्मैकपराया भक्तेरधिकारी जायते। अतः पूज्यचरणानां महर्षीणां भक्तिविषये पारस्परिको मतभेदो न तात्त्विकोऽभ्युपगन्तव्यः। अतः कारणादेव रससागरे निमग्नस्य पराभक्तिपरायणस्य भक्तस्य भक्तिः किल उभयपरा निर्णीता॥ ४२॥

इति रसपादः समाप्तः।

# अथ उत्पत्तिपादः

श्रीभगवन्तं प्रत्यनुराग एवोपासनातत्त्वस्य प्राणरूपः। अतो विषयानुरागो विषवदित्यवगत्य वैराग्यावलम्बनेनैव तदधिगमात् सांसारिकोत्पत्तिस्थितिप्रलयज्ञानमावश्यकमिति उत्पत्तिपादः प्रारभ्यते यस्येदमादिमं सूत्रम्—

**ब्रह्मतच्छक्त्योरभेदः शक्ति शक्तिमतोरभेदात् ॥१॥**

शक्तिश्च शक्तिमांश्च तयोरभेदादभिन्नतया ब्रह्मणि तदीयशक्तौ चाभेदः। मयि मम शक्तौ च यथाऽभिन्नता दृश्यते तथैव ब्रह्मणि तदीय शक्तिस्वरूपिण्यां मूलप्रकृतौ च शास्त्रेष्वभिन्नता प्रतिपादिता। एतद् विज्ञानं हृदयङ्गमं विधातुं शक्तिशक्तिमद्विज्ञानमवश्यमवधेयम्। यथा किलासाधारणसामगानपरायणस्य सामगानशक्तिः सामगानमकुर्वति तत्राव्यक्तदशायां तिष्ठति, न कश्चिदप्यवधारयितुमर्हति यदयं सामवेदस्याचार्यः, परन्तु सामगानकाले सर्वोपि विजानाति यदत्र सामगानशक्तिर्विद्यत इति, तथैव ब्रह्मशक्तिर्यदा ब्रह्मण्यव्यक्तदशायां तिष्ठति तदानीं जागतिकप्रपञ्चानां विलयः, नैव सृष्टिसत्ता, किन्तु यदा च ब्रह्मशक्तिर्व्यक्तदशामापद्यते तदैव सूक्ष्मस्थूलभावपरिपूर्णं सृष्टिवैचित्र्यमिदं प्राकट्यमासादयति। वस्तुतस्तु ब्रह्म तत्प्रकृतिश्चाहं ममेति वदन्योन्यमभेदमृच्छतः। अन्यच्चयथा गानपरायणं पुरुषम् अदृष्ट्वाऽपि नद्याः परपारवर्त्ती श्रोता तद्गानेन विमुग्धो भवति, तथैव ब्रह्मस्वरूपानभिज्ञोऽपि जीवो महामायाया ब्रह्मशक्तौ ग्रस्तो मोमुह्यमानो दरीदृश्यते। सुतरां अहं ममेतिवत् सम्बन्धयुक्ताया ब्रह्मशक्तेर्महामायायाः सत्ताऽतिशयसुगमरूपेण जिज्ञासु हृदयंगमा भवितुमुचिता। सर्वदर्शनान्तरविज्ञानापेक्षया "अहंममेतिभेदवत्" ब्रह्मतच्छक्तिविज्ञानं सुस्पष्टं सरलं चावधेयम्। यथा च प्रोक्तं स्मृतिशास्त्रे—

स एव क्षोभको ब्रह्मन् क्षोभ्यश्च पुरुषोत्तमः।
स संकोचविकासाभ्यां प्रधानत्वेऽपि च स्थितः॥
केचित्तां तप इत्याहुस्तमः केचिज्जडं परे।
ज्ञानं मायाप्रधानं च प्रकृतिं शक्तिमप्यजाम्॥
सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका।
मायानाम महाभाग ययेदं निर्ममे विभुः॥

एवं हि शक्तिमता परमपुरुषेण सह शक्तिस्वरूपिण्याः प्रकृतेर्नाणीयानपि भेदः। अग्नौ दाहिकाशक्तिरिव भगवति शक्तिस्वरूपिणी प्रकृतिर्निहिता तिष्ठति। सर्गादौ समष्टिजीवप्रारब्धानुसारेण परमेश्वरे यदा सिसृक्षा समुत्पद्यते तदैव शक्तेरेतस्या विकासो जायते। अतः स्मृतिरपीत्थमुवाच—

योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव ह।
पुमांश्च दक्षिणार्द्धांगो वामार्धो प्रकृतिः स्मृता॥
सा च ब्रह्मस्वरूपा च नित्या सा च सनातनी।
यथाऽऽत्मा च तथा शक्तिर्यथाऽग्नौ दाहिका स्थिता॥
तस्य चेच्छास्म्यहं दैत्य सृजामि सकलं जगत्।
सा मां पश्यति विश्वात्मा तस्याहं प्रकृतिः शिवा॥

या विद्येत्यभिधीयते श्रुतिपथे
शक्तिः सदाऽऽद्या परा
सर्वज्ञा भवबन्धछित्तिनिपुणा
सर्वाशये संस्थिता।
शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः॥
यथैकं स्पन्दपवनौ नाम्ना भिन्नौ न सत्तया।
तथैकमात्मप्रकृती नाम्ना भिन्ने न सत्तया॥१॥

ब्रह्मतच्छक्तिसमुत्पन्नसृष्टिस्वरूपवर्णनमुपक्रामति—

## अनाद्यनन्ताऽध्यात्मिकी सृष्टिः ॥ २ ॥

आध्यात्मिकी सृष्टिरनादिरनन्ता च विज्ञेया, दृश्या अनुभवगम्याः सर्वेऽपि पदार्थास्त्रिप्रकारा भवन्ति। एतन्नियमानुसारं सृष्टिरपीयमाध्यात्मिक्याधिदैविक्याधिभौतिकीति त्रिधा विभक्ता परिदृश्यते। कारणे ब्रह्मणि भावत्रयसत्त्वात् कार्यब्रह्मस्वरूपसर्गेऽत्र सर्वत्रैव त्रयो भावा विद्यन्ते। अतः स्मृतिकारैरिदमुक्तं यत् परमपुरुषोऽसौ आध्यात्माधिदैवाधिभूतात्मकत्रिविधरूपेण साधकानां दृष्टिगोचरतां प्रतिपद्यते। तस्य ब्रह्मण आध्यात्मिकं रूपं मयातीतं परब्रह्मपदवाच्यम्, आधिदैविकं सगुणपरमेश्वरनाम्नाभिधीयते, आधिभौतिकं च अनाद्यनन्तविराट्पुरुषसंज्ञया स्वीकृतमास्ते। भगवतः स्थूलशरीरस्वरूपस्य विराट्सृष्टिप्रवाहस्यैव आध्यात्मिकसृष्टिसंज्ञया शास्त्रेषु वर्णनमुपलभ्यते। मायामाश्रित्य स्ववीर्यं त्रिधा विभज्य त्रिविधां सृष्टिमसौ चक्रे।

योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः।
यस्तत्रोभयविच्छेदः पुरुषोह्याधिभौतिकः॥
एकमेकतराभावे यदा नोपलभामहे।
त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः॥

अधिदैवमथाध्यात्ममधिभूतमिति प्रभुः।
अथैकं पौरुषं वीर्यं त्रिधाऽभिद्यत तच्छृणु॥

अत्राध्यात्मिकी सृष्टिराद्यन्तरहिता विराड्ब्रह्मणो रूपमेतद् बुद्धेरतीतम्। दशस्वपि हरित्सु परिव्याप्यमानमनन्तमन्तरिक्षं दृष्टिगोचरीकुर्वतो भावुकसाधकस्य चित्तसिन्धुर्व्यापकतामिमामनुभूय उद्वेलितो जायत इत्यत्र नास्ति सन्देहलेशोऽपि, जगत्सु जीवानां प्राणदाता सविता संख्यातीतैर्ग्रहोपग्रहैर्ग्रहोपग्रहचन्द्रधूमकेतुभिस्तारापुञ्जैश्च परिवेष्टितमबाधरूपेण एतद्ब्रह्माण्डवर्तुलस्य केन्द्ररूपेण कस्य महासूर्यस्य चतुर्दिक्षु भीषणवेगेन सदैव घूर्णायमानस्तिष्ठति, सोऽपि महासूर्यः कथमिव संख्यातीतैः साकं ब्रह्माण्डैः कं महासूर्यं परितो भ्राम्यति निरन्तरम्? अस्मिन् चतुर्दिक्परिव्याप्तानाद्यनन्ताकाशसमुद्रे कोटिकोटि ब्रह्माण्डानि जलबुद्बुदवत् शोभन्ते? सर्वेषामेषामन्तः कुत्र? अनन्तगगनस्यानन्तोद्याने ये च विविधवर्णाः कुसुमराशयः प्रस्फुटिता विलोक्यन्ते, तेषामेतेषां कियती संख्या? कुतः कालात् प्रस्फुटिताः? कियत्कालं यावत् प्रस्फुटिताः सन्तो गगनोद्यानशोभां वर्धयिष्यन्तीति सर्वं मानवबुद्धेरतीतमित्यत्र न सन्देहलेशोऽपि। यथा मृत्युलोकेऽत्र मृत्युमुपगतस्य मानवस्य पिण्डरूपं तदीयं शरीरं प्रणश्यति, परन्तु अन्यान्यानन्ताः स्वस्वशरीराणि धारयन्तस्तिष्ठन्ति, तथैवैकस्मिन् ब्रह्माण्डे प्रलयंगते, अनन्तकोटिब्रह्माण्डानि विद्यमानानि विलसन्ति, एतेनैव विज्ञानेन आध्यात्मिक्याः सृष्टेरनादिरनन्ता च धारा सिध्यति, अतः श्रुतिरप्याह—

अस्य ब्रह्माण्डस्य समन्ततः स्थितान्येतादृशान्यनन्तकोटिब्रह्माण्डानि सावरणानि ज्वलन्ति, चतुर्मुखपञ्चमुखषण्मुखसप्तमुखाष्टमुखादिसंख्याक्रमेण सहस्रावधिमुखान्तैर्नारायणांशैः रजोगुणप्रधानैरेकैकसृष्टिकर्तृभिरधिष्ठितानि, विष्णुमहेश्वराख्यैर्नारायणांशैः सत्त्वतमोगुणप्रधानैरेकैकस्थितिसंहारकारकैरधिष्ठितानि महाजलौघ मत्स्यबुद्बुदानन्तसंघवद् भ्रमन्ति।

तेजसा षोडशांशोऽयं कृष्णस्य परमात्मनः।
आधारः सर्वविश्वानां महाविष्णुश्च प्राकृतः॥
प्रत्येकं लोमकूपेषु विश्वानि निखिलानि च।
अद्यापि तेषां संख्यां च कृष्णो वक्तुं न हि क्षमः॥
संख्या चेद् रजसामस्ति विश्वानां न कदाचन।
ब्रह्मविष्णुशिवादीनां तथा संख्या न विद्यते॥
प्रतिविश्वेषु सन्त्यैवं ब्रह्मविष्णुशिवादयः।
पातालब्रह्मलोकान्तं ब्रह्माण्डं परिकीर्तितम्॥
नित्यौ गोलोकवैकुण्ठौ प्रोक्तौ शश्वदकृत्रिमौ।
प्रत्येकं लोमकूपेषु ब्रह्माण्डं परिनिश्चितम्॥

एषां संख्या न जानाति कृष्णोऽन्यस्यापि का कथा।
प्रत्येकं प्रतिब्रह्माण्डं ब्रह्मविष्णुशिवादयः॥
कोटि कोटयुतानिशे चाण्डानि कथितानि तु।
तत्र तत्र चतुर्वक्त्रा ब्रह्माणो हरयो भवाः॥
असंख्याताश्च रुद्राख्या असंख्याताः पितामहाः।
हरयश्च ह्यसंख्याता एक एव महेश्वरः॥
ब्रह्माण्डा भान्ति दुर्दृष्टे व्योम्नि केशोऽण्ड्रको यथा।

एवं ह्यनन्त ब्रह्माण्डमयी अध्यात्मिकी सृष्टिरनादिरनन्ता च विद्यते॥ २॥

कार्यकारणविमर्शेण सृष्टिकार्याः प्रकृतेः स्वरूपं निरूप्यते—

## प्रकृतेस्तथात्वम्॥ ३॥

प्रकृतेरपि तथाविधत्वमवगन्तव्यम्। आध्यात्मिक्याः सृष्टेरनाद्यनन्तत्वात् ब्रह्मसत्तावत् प्रकृतिरप्यनाद्यनन्ता विज्ञेया। प्रकृतिर्ब्रह्मस्वरूपिणी अतस्तस्या अनाद्यनन्तता स्वतः सिद्धा। एतद् विज्ञानसम्बन्धे नूनं वक्तव्यमिदं यत् प्रकृतेरव्यक्तदशायां परमात्मा ब्रह्मनाम्ना, व्यक्तदशायां सगुणत्वात् ईश्वरनाम्ना, सृष्टेरनाद्यनन्तधारासम्बन्धेन विराट्पुरुषसंज्ञया चाभिधीयते। वस्तुतः प्रकृतिमातुः सम्बन्धेनैव भगवतस्त्रिविधं स्वरूपवेदे समुपवर्णितं निभाल्यते। आध्यात्मिक्याः सृष्टेरनाद्यनन्तत्वाद् यस्या महाप्रकृतेर्गर्भेऽध्यात्मिकी सृष्टिर्बोभूयते सा किलानाद्यनन्ता भवितुमर्हतीत्यत्र कः सन्देहः।

अतएव श्रुतौ स्मृतौ चेदमुपलभ्यते यत्—
"त्वं सर्वाऽऽदिरनादिस्त्वं कर्त्री हर्त्री च पालिका"॥
"अजामेकां लोहितशुक्लकृष्णाम्"।
"विकारजननीं मायामष्टरूपामजां ध्रुवाम्।
"प्रकृतिं पुरुषं चैव विध्यानादी उभावपि"॥

अतः कार्यकारणविचारेण प्रकृतेरनाद्यनन्तसत्ता प्रमाणैरुपर्युक्तै सिध्यति॥ ३॥

तद्व्यतिरिक्तसृष्टिद्वयं वर्ण्यते—

## आधिदैविकाऽधिभौतिकसृष्टिः सादिः सान्ता॥४॥

आधिदैविकी ब्रह्माण्डसृष्टिः आधिभौतिकी पिण्डसृष्टिश्च सादी सान्ते च विज्ञातव्ये। प्रथमा तु संख्यातीतजीवसमष्टिस्वरूपब्रह्माण्डसृष्टिः, द्वितीया तु व्यष्टिरूपजीवपिण्डसृष्टिरुदीर्यते। आद्या ब्रह्माण्डसृष्टिर्नाम्ना द्वितीया च पिण्डसृष्टिसंज्ञया गीयते। द्वे अप्येते सादी सान्ते विज्ञातव्ये। तथाहि श्रुतिरभिधत्ते—

"यथापूर्वमकल्पयद्दिवं च पृथिवीं चान्तरिक्षम्"।

प्रत्येकब्रह्माण्डे पृथक् पृथक् ब्रह्मविष्णुमहेश्वराः सन्ति। तदीयाः कार्यविभागा अपि स्वतन्त्राः। एतदनुसारेणैव विभिन्नब्रह्माण्डानां सृष्टिस्थितिप्रलयक्रमा अपि विभिन्नतामुपयान्ति। यथाचोक्तं श्रुतौ—

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।
अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्॥
यथोर्णनाभिः सृजते गृह्णते च
तथाक्षरात् सम्भवतीह विश्वम्॥
रूपं रूपं प्रतिरूपो बभूव
तदस्य रूपं प्रतिचक्षणाय।
इन्द्रो मायाभिः पुरुरूप ईयते
युक्तो ह्यस्य हरयः शता दश॥

एतानि प्रमाणानि किल ब्रह्माण्डसृष्टेः सादित्वज्ञापकानि। एवं हि जीवसमष्टिस्वरूपस्यैकैकब्रह्माण्डस्य प्रलयोऽपि विज्ञेयः। यथा स्थूलशरीरस्य जरारोगमृत्यवः स्वतःसिद्धास्तथैव ब्रह्माण्डेऽत्र ब्रह्मदिवसावसाने खण्डप्रलयः, रुद्रस्यायुषोऽवसाने च महाप्रलयो बोभवीति।

श्रुत्याप्याज्ञप्तम्—

यथाक्षराद् विविधाः सौम्यभावाः
प्रजायन्ते यत्र चैवापियन्ति।

स्मृतौ चाप्यभिहितम्—

त्रिलोक्यायुगसाहस्रं बहिराब्रह्मणो दिनम्।
तावत्येव निशा तत्र यन्निमीलति विश्वसृक्॥
तमो मात्रामुपादाय प्रतिसंरुद्धविक्रमः।
कालेनानुगताशेष आस्ते तूष्णीं दिनात्यये॥
तमेवान्वपिधीयन्ते लोका भूरादयस्त्रयः।
निशायामनुवृत्तायां निर्मुक्तशशिभास्करम्॥
त्रिलोक्यां दह्यमानायां शक्त्या संकर्षणादिना।
यान्त्यूष्मणा महर्ल्लोकाज्जनं भृग्वादयोऽर्दिताः॥

ब्रह्माण्डस्यैकस्यायुषो विषये ज्योतिःशास्त्रे प्रमाणितम् तथा हि—

चतुर्युगसहस्राणि दिनं पैतामहं भवेत्।
पितामहसहस्राणि विष्णोश्च घटिका स्मृता॥
विष्णोर्द्वादशलक्षाणि कलार्द्धं रौद्रमुच्यते॥

एवं हि त्रिमूर्त्तौ ब्रह्मविलीनायां ब्रह्माण्डस्यैकस्य महाप्रलयः सम्पद्यते। अथ च पिण्डसृष्टिविषये च स्मृतिषु वर्णनमुपलभ्यते। तथा हि—

निखिला एव संस्काराः साद्यन्ताः संप्रकीर्त्तिताः।
अतो जीवप्रवाहेऽस्मिन्ननाद्यन्तेऽपि जन्तवः॥
मुक्तिशीलास्तथोत्पत्तिशालिनः सन्ति सर्वथा।
नैवात्र विस्मयः कार्यो भवद्भिरमृतान्धसः॥

अन्यच्च—

सहजो मानवो दैवो जीवपिण्डस्त्रिधा मतः।
मर्त्त्येभ्यश्चेतरे निम्ना भूतसंघाश्चतुर्विधाः॥
यैस्तु कर्मफलं पिण्डैर्भुञ्जते सहजा हि ते।
मर्त्योपयुक्तपिण्डा हि कथ्यन्ते मानवाभिधाः॥
देवपिण्डाश्च ये ख्याता भुवनानि चतुर्दश।
वर्त्तन्ते पितरो दैवभोगायतनरूपिणः॥

एकब्रह्माण्डीयजीवानां स्थूलानि सूक्ष्मणि च शरीराणि ब्रह्माण्डस्यावयवाश्च प्रणाशमापद्यन्ते। आधिदैविकाधिभौतिकसृष्ट्योः सादिसान्ताये प्रमाणान्येतानि विज्ञातव्यानि॥ ४॥

प्रसङ्गेन ब्रह्माण्डपिण्डयोर्नश्वरत्वं व्याचष्टे—

**ततो ब्रह्माण्डपिण्डे नश्वरे॥ ५॥**

तस्मात् कारणादेव ब्रह्माण्डपिण्डयोर्नश्वरता सिध्यति, ब्रह्माण्डं जीवदेहश्चोभौ विनश्वरे भवतः। त्रिगुणात्मिकायाः प्रकृतेर्वैभवस्वरूपे ब्रह्माण्डपिण्डे त्रिगुणविलासपार्थक्यात् सृष्टिस्थितिप्रलयाधीने भवतः। स्मर्यतेऽत्र यथा—

यदा सिसृक्षुः परमात्मनः परो
रजः सृजत्येष पृथक् स्वमायया।
सत्त्वं विचित्रासु रिरंसुरीश्वरः
शयिष्यमाणस्तम ईरयत्यसौ॥
अण्डकोशस्य संघातो विघात उपपादिते॥

अन्यच्च—

सृष्ट्वाखिलं जगदिदं सदसत्स्वरूपं
शक्त्या स्वया त्रिगुणया परिपाति विश्वम्।
संहृत्य कल्पसमये रमते तथैका
तां सर्वभूतजननीं मनसा स्मरामि॥

अनन्तकोटिब्रह्माण्डमयी आध्यात्मिकीसृष्टिधारा अनाद्यनन्ता; किन्तु प्रकृतेस्त्रिगुणमयत्वात् प्रत्येकं ब्रह्माण्डं नश्वरमभ्युपगन्तव्यम्। प्रागेवेदं निरूपितं यत् भगवतो रुद्रस्य आयुषा सह ब्रह्माण्डस्यैकस्यायुर्निर्णीतमिति। रुद्रायुषोऽन्ते, यश्च विष्णुर्यो वा ब्रह्मा स्तः, ताभ्यां सहैव, अर्थात् त्रिमूर्त्त्या साकं ब्रह्माण्डं विलीयते, अतो व्यष्टिरूपेण प्रत्येकब्रह्माण्डस्य सृष्टिस्थितिप्रलयाः जायन्ते, अस्मादेव कारणात् प्रतिब्रह्माण्डं सृष्टिकर्त्ताब्रह्मा, स्थितिकर्त्ता विष्णुः, संहारकर्त्ता रुद्रश्च पृथक्-पृथग् विद्यन्ते। ब्रह्माण्डवत् जीवदेहात्मकः पिण्डोऽपि नश्वरः। जीवः संसारेऽत्र समुत्पन्नो भूत्वा नैजं प्रारब्धं भुञ्जानो निधनतां प्रपद्यते। उद्भिज्जस्वेद-

जादिसहजं मनुष्यसम्बद्धं मानवं, देवसम्बन्धनिबन्धनं दैवमिति पिण्डानां त्रैविध्यं पूर्वमेव निर्णीतम्, त्रिविधा अपि पिण्डाः स्वस्वकर्मभोगानन्तरं विलयमुपगच्छन्ति। स्मर्यते चात्र—

यदिदं दृश्यते किञ्चिद् जगत्स्थावरजंगमम्।
पुनः संक्षिप्यते सर्वं जगत्प्राप्ते युगक्षये॥

अस्मिन् महामोहमये कटाहे
सूर्याग्निना रात्रिदिवेन्धनेन।
मासर्तुदर्वीपरिघट्टनेन
भूतानि कालः पचतीति वार्त्ता॥

अतो जीवस्य नश्वरता स्वतःसिद्धा॥ ५॥

सृष्टिसम्बन्धेन जीवस्वरूपमुच्यते—

**चिज्जडग्रन्थिर्जीवः॥ ६॥**

चित्चैतन्यं, जडः जड़पदार्थः, तयोश्चिज्जडयोर्ग्रन्थिरेव जीवनाम्ना प्रोच्यते। प्रकृतिपुरुषशृङ्गारसमुत्पन्नसृष्टिलीलायामस्यां प्रवाहद्वयमभ्युपगम्यते एको ह्यूर्ध्वगामीचेतनप्रवाहो द्वितीयश्चाधोगामी जडप्रवाहश्चेति। सृष्टिधारायाः प्रकृतिचाञ्चल्यहेतुना यावत्कालं किञ्चिद् वस्तु तस्यां धारायां तिष्ठति, तावत् तत्परिवर्त्तने नियमाधीनत्वं भजते। अतः कारणात् जडचेतनयोरुन्नतावनतगती स्वतःसिद्धे इत्यत्र न सन्देहलेशः। उदाहरणरूपेणेदमवधारयितुं शक्यते यत् जीवो ह्यनन्तयोनिषु परिभ्राम्यन् उद्ध्वगामिनी चेतनधारामवलम्बमानः क्रमशः समुन्नमनन्ते तदुन्नतिपराकाष्ठां मुक्तिं लभते, ततस्तदन्तर्गतो जडांशः प्रकृतिधारायां निलीयते। चेतनधारायाः पराकाष्ठा ब्रह्मसद्भाव एव, यत्र प्रकृतेः पृथक्सत्ता सच्चिदानन्दस्वरूपे विलीयते। सिद्धान्तमिममनुसृत्य चेतनप्रवाहः प्राकृतिकं रजस्तमोराज्यमतिक्रामन् सत्त्वगुणराज्ये समुपस्थितः समुन्नतेः परायां काष्ठायां प्रकृतेस्त्रिगुणमयं राज्यमाक्रम्य व्यापिकायां चेतनसत्तायां विलीयते। जीवन्मुक्तमहापुरुषान्तःकरणस्थचेतनसत्ता पूर्णरूपेण विकासमापन्ना प्रकृत्यवच्छेदं परित्यजन्ती व्यापके चैतन्ये विलीना जायते। तदीयो देहः अधोगामिन्याः प्रकृतेः समुद्भूतो मृत्योरनन्तरं चैतन्याभावात् क्रमशः प्रणाशमुपगच्छति। यया प्राणशक्त्या देहान्तर्गताः परमाणवः समाकृष्टाः शरीरं निर्मितवन्तः, तस्याः प्राणशक्तेरभावात् परमाणुपुञ्जेषु आकर्षणात्मिकाशक्तिर्विनाशमुपगता, विकर्षणशक्तिश्चाविर्भवति। अतएव देहस्थितपरमाणवः परस्परं विच्छिन्नाः सन्तो जडायाः प्रकृतेरधोगतिरूपं तमोऽभिमुखं प्रयान्ति। प्रकृतिः परिणामिनी चञ्चला चेति हेतोः पूर्वोक्तः चेतनप्रवाहः क्रमशः समुन्नतो भवन् सत्वराज्यमतिक्रामन् त्रिगुणमय्याः प्रकृतिमातुः स्वाभाविकीं धारां निस्तीर्य यद्यपि परिणामशून्यः स्थिरो जायते, किन्तुजडप्रवाहस्तु नियतपरिणामशीलायाः प्रकृते सदैवान्तर्गतत्वात् परिणामशून्यः स्थिरो भवितुं नार्हति। उदाहरणस्वरूपेणैतदवगन्तव्यं यत् जडायाः प्रकृतेः अन्तिमसीमा प्रस्तरादयः स्थावरपदार्थाः सन्ति, इयमेव प्रकृतितमोगुणपराकाष्ठा विज्ञेया। यथा किल सामुद्रिकास्तरंगा घातप्रतिघाताभ्यां तीरमायाताः पुनरग्रेगतिनिरोधत्त्वात् समुद्राभिमुखं प्रयान्ति तथैव प्राकृतिको निम्नगामी प्रवाहः क्रमशो निम्नत्त्वमुपढौकमानस्तमोगुणस्य परां काष्ठां प्राप्तोऽग्रेस्थानमनवाप्य पुनरपि तमसो रजोऽभिमुखम् अर्थात् जडतश्चैतन्याभिमुखं स्वभावत एवाग्रेसरति। तदानीं तमोगुणतो रजोगुणाभिमुखं प्रतिष्ठमानस्य प्रकृतिप्रवाहस्य किञ्चित्समुन्नत्या तमोगुणबहुलमालिन्यापसृत्या स्वल्पायाः स्वच्छताया आविर्भावस्तत्र जायते। यथाकिल भगवतः सूर्यदेवस्य किरण-

च्छटायाः सर्वत्र विद्यमानत्वेऽपि मलिनदर्पणः प्रतिबिम्बग्रहणासमर्थः, किन्तु स एव यदि निर्मलीकृतो भवेत्तदैव तत्र व्यापकस्य सूर्यस्य प्रतिबिम्बो निपतति, तथैव सर्वव्यापकस्य आत्मश्चित्सत्तायाः सर्वत्रैव समतायां सत्यामपि, तामसिकप्रवाहमालिन्यात् तत्र चित्सत्ता नैव विकासमापद्यते, किन्तु परिवर्त्तननियमानुसारेण प्राकृतिकः प्रवाहस्तमोगुणस्यान्तिमकाष्ठातोऽल्पमपि समुन्नतः स्वच्छतां प्रपद्यते, तदैव स्वच्छीभूते सूक्ष्मप्रकृतिकेन्द्रे व्यापकस्य परमात्मनः प्रतिबिम्बो निपतति। इयमेवदशा चिज्जडग्रन्थिरुच्यते।

यथा च गीतायाम्—

ममैवांशो जीवलोके जीवभूतः सनातनः।
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्॥

अन्यत्रापि—

बालाग्रशतभागस्य शतधा कल्पितस्य च।
जीवो भागः स विज्ञेयः सचानन्त्याय कल्पते॥

एवं हि कुत्रचनांशशब्देन कुत्रचिच्च प्रकृतिशब्देन जीव उक्तः। यद्यपि सिद्धान्तोऽयं परस्परविरुद्धवत् प्रतीयते, किन्तु विचारदृष्ट्या पर्यालोच्यमाने विरोधप्रतीतिरपसरिष्यत्येव। जीवात्मनः प्रथमविकाससमये अविद्यायाः प्रबलेनान्धकारेणाच्छन्ने तमोमयान्तःकरणे एतावत्तारल्यभावमापन्नमात्मज्योतिः प्रतिफलति यत् तच्चिदाभासतः चित्प्रतिबिम्बाद् वा नान्यत् किमप्यभिधातुं शक्यते। तदेव ज्योतिः प्रकृतिराज्ये समुन्नमन् यथा यथाऽविद्यान्धकारतो विमुच्यते, तथा तथा तत् स्वीयां ज्ञानप्रभामयीं छटां प्रदर्शयति, यया व्यापकेन चिन्मयस्वरूपेण सह तस्य अंशांशिभावसम्बन्धो ज्ञानराज्यविचरणशीलैः साधकैः सदैवानुभूयते। विषयमिमं सुस्पष्टयितुं भगवान् वेदव्यासो वेदान्तदर्शने प्रोवाच—

"अंशो नाना व्यपदेशात्" इति।

यथा किलैकएवाकाशो घटाकाशमठाकाशादिना भिद्यते, वस्तुतोऽसावेकएव, तथैवान्तःकरणोपाधिभेदेन एकमेव ब्रह्म संख्यातीतजीवरूपेण परिव्याप्तं दृश्यते। अतः सिद्धान्तितमिदं यदेकएव विभुः परमात्मा उपाधियुक्तः सन् अंशस्वरूपतो नानात्वं भजते। सुतरां जीव उपाधितन्त्रत्वात् प्रकृतेरधीनः, ईश्वरस्तु प्रकृतेः अधीश्वरः। जीवे प्रकृतेरेव प्राधान्यम्। अतएव प्रकृतिस्वरूपो निर्दिष्टः। प्रस्तुतः प्रकृतिर्जीवो नास्ति, किन्तु प्रकृतिवत् प्रतीयते। तात्पर्यमेतद् यत् अंशांशिभावकल्पनं प्रकृतिसाहचर्येण प्रोक्तम्। जीवस्य केशाग्रशतभागस्वरूपनिर्देशः सातिशयसूक्ष्मत्वाद् विज्ञेयः। "एषोऽणुरात्मा" इति श्रुतिरपि व्याजहार। अतो ब्रह्मप्रतिबिम्ब एव जीवसंज्ञां धत्त इति निर्णीतं भवति। तमसः तत्वाभिमुखं प्रकृतिर्यदा परिणमति, तदैव चिज्जडग्रन्थिर्जायते। प्रकृतिपुरुषात्मके भगवल्लीलाविलासरूपप्रपञ्चेऽत्र सर्वप्रथमं उद्भिज्जयोनौ ग्रन्थेः प्रारम्भो जायते। यथोक्तं स्मृतौ—

अविद्यायां तु यत् किञ्चित् प्रतिबिम्बं नगाधिप।
तदेव जीवसंज्ञं स्यात् सर्वं दुःखाश्रयं पुनः॥

प्रकृतेरतिसूक्ष्मोंऽशो यत्र चैतन्यं प्रतिबिम्बितं जायते स एव कारणशरीरनाम्ना प्रणिगद्यते। ततश्च प्रकृत्या सम्बन्धनिबन्धनस्य जीवस्येच्छया सूक्ष्मशरीरमुत्पद्यते, तद्गतसंस्कारसमूहतीव्रवेगानुसारेण च स्थूलं शरीरमुद्भवति। एवं शरीरत्रयेण भोगादिना च बद्धो जीवः उद्भिज्जस्वेदजाण्डजजरायुजानां योनीरतिक्रामन् मानवशरीरमुपढौकते। एतद्योनिसंख्याक्रमः स्पष्टरूपेण स्मृतौ निर्दिष्टस्तथाहि—

स्थावरे लक्षविंशत्यो कृमिजं रुद्रलक्षकम्।
जलजं नवलक्षं च पक्षिजं दशलक्षकम्॥

पश्वादीनां लक्षत्रिंशत् चतुर्लक्षं च वानरे।
ततो हि मानुषा जाताः कुत्सितादेर्द्विलक्षकम्॥

ततश्च उत्तमोत्तमा मानवयोनयो लभ्यन्ते। अन्यच्च दैव्यां सृष्टौ दैवपिण्डधारिणामनेके भेदास्तद्भिन्ना विज्ञातव्याः।

मानवेतर चतुर्विधभूतसंघस्य योनिषु एकमात्रस्वाभाविकसंस्काराश्रयेण तद्गता जीवाः क्रमोदूर्ध्वगामिनो भवन्ति। कुत्सितमानवयोनयोऽपि बुद्ध्यहंकारविकासस्वल्पतया क्रमोदूर्ध्वगामिन एव विज्ञेयाः। अत एतासां योनीनां संख्याः संयमशीलैस्त्रिकालदर्शिमहर्षिभिर्निर्धारिताः। किन्तु समुन्नतमानवयोनौ जीवः स्वतन्त्रः सन् स्वस्वसंस्काराधीनो जायते, अतोऽसौ क्रमोन्नतिसम्प्राप्तो निजकर्मानुसारेण कदाचिदुन्नतः, कदापि चावनतो भिन्नां भिन्नां गतिमासादयति। अतो मानवयोनिसंख्यानिर्धारणमसम्भवम्। फलतः कारणेनैतेनैव मानवदैवपिण्डश्रेणीनां संख्यावस्थानिर्धारणं न कुत्रापि शास्त्रेषु समुपलभ्यते। केवलम् उद्भिज्जादि चतुर्विधभूतसंघस्य कुत्सितमानवानां च संख्या निर्धारिता विलोक्यते। एतदेव जीवभावविकासक्रमाभिव्यक्तिविज्ञानस्य सारभूतं तत्त्वम्, एतदेव च चिज्जडग्रन्थिस्वरूपजीवविज्ञानस्य रहस्यमवगन्तव्यम्॥ ६॥

जीवमुक्तिप्रकारं वर्णयति—

## तद्भेदनादुभयमुक्तिः॥ ७॥

तयोश्चिज्जडयोः ग्रन्थेर्भेदनेन उभययोश्चिज्जडयोर्मुक्तिः सम्पद्यते। यथाचोक्तं पूज्यपादेन महर्षिणा कपिलेन सांख्यदर्शने—

"विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य"।

विवेकद्वारा पुरुषप्रकृत्योरुभयोरेव मुक्तिर्जायते। विज्ञानमिदं पूज्यपादेन महर्षिणा पतञ्जलिनाऽपि योगशास्त्रे समर्थितम्। तथाहि—

"पुरुषार्थमुख्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चिच्छक्ते" रिति।

उद्भिज्जयोनिमारभ्य मानवयोनिव्यतिरिक्तासु अन्यान्ययोनिषु जीवो निर्वन्धं क्रमोन्नतिमासादयति। यतो हि मानवव्यतिरिक्तास्वन्ययोनिषु बुद्धेर्मालिन्येन जीवः स्वकर्मणा स्वतन्त्रसंस्कारार्जनं न कर्तुं पारयति, केवलं प्रकृतिरेव माताशिशुमिव स्वाभाविकसंस्कारान् अनुसृत्य क्रमशो जीवान् संवर्धयति। नद्या प्रवहमाणो यथा काष्ठखण्डोऽपवेगेनैव समुद्राभिमुखमानीयते, तथैव मानवभिन्ना जीवाः प्रकृतेरूर्ध्वगामिना प्रवाहेण उद्भिज्ज-स्वेदजाण्डजजरायुजान्तं क्रमशः समुन्नतां योनिं नीयन्ते। तदानीं काले प्रकृतिमातुरधीनत्वात् जीवानां निर्वाधं क्रमोन्नतिर्जायते। परन्तु मानवयोनिमधिगते जीवे पूर्णरूपेण पञ्चकोषा विकासं प्राप्नुवन्ति, तत्राहंकारबुद्ध्योरपि विकासो जायते। तदानीं मानवः प्रकृतौ स्वामित्वं स्थापयति प्रकृतिमातुरधीनतां च परित्यजति। अतः प्रागिव प्रकृतिदायित्वं तिरोदधाति स्वयं मानवोऽसौ स्वकृतकर्मणां दायित्वं भजते। अतो मानवयोनावेव धर्माधर्मयोरधिकारः समाम्नातः। तथा प्रोक्तं स्मृतावपि—

मानुषेषु महाराज! धर्माधर्मौ प्रवर्त्ततः।
न तथान्येषु भूतेषु मनुष्यरहितेष्विह॥

उपभोगैरपि त्यक्तं नात्मानं सादयेन्नरः।
चाण्डालत्वेऽपि मानुष्यं सर्वथा तात! शोभनम्॥

इयं हि योनिः प्रथमा यां प्राप्य जगतीपते!
आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः॥

मनुष्ययोनौ कर्मानुष्ठानस्वाधीनत्वात् स्वीयपुरुषार्थैः स्वीयां मानवः समुन्नतिमनुष्ठातुमर्हति, स्वीयेन पापकर्मणा नीचां योनिमप्यासादयितुं शक्नोति। अतएव शास्त्रेषु सर्वापेक्षया मानवजन्मनः सर्वाभ्यर्हितत्व-

मुपपादितम् । मानवशरीरे श्रेष्ठाधिकारेष्वधिगतेषु निजशरीरस्वामित्वालाभेन इन्द्रियाधिकारेषु प्रावल्यमधिगतेषु मानवो जीवः प्राय उच्छृङ्खलत्वमवाप्नोति, अतः कारणादेव तस्य निम्नयोनिषु पतनमपि सम्भवति । उद्भिज्जयोनितो न केवलं पशुयोनिमेव, किञ्च मानवशरीरमपि प्रापयन्तं प्रकृतेरूर्ध्वगामिप्रवाहं परित्यजन् मनुष्यः प्रकृतेश्चाधीनत्वं च विहाय स्वेच्छाचारी सन् विपरीतगतिस्वरूपामवनतिं लभते । तस्मिन् समये धर्मो हि मानवसाहाय्यमाचरन् शास्त्रीयविधानद्वारा तस्यावनतिं निरुध्य क्रमोन्नतिमार्गे तं परिचालयति । यथा-चोक्तं स्मृतौ—

उन्नतिं निखिला जीवा धर्मेणैव क्रमादिह ।
विदधानाः सावधाना लभन्तेऽन्ते परं पदम् ॥इति॥

प्रकृत्यनुकूलो धर्म एव वर्णाश्रमविधिविहितो मानवस्योच्छृङ्खलगतिं निरुध्य क्रमशो मानवमुन्नमयति । आत्मतत्त्वं विज्ञाय सांसारिकीं वासनां च परित्यज्य मनुष्य आत्मारामो भवितुं धर्मेणैव चेष्टते । सहजं जैवमैशं चेति मीमांसाशास्त्रे कर्म त्रिविधमुक्तम् । तानि त्रिविधकर्माण्यनुसृत्य चिज्जडग्रन्थिभेदनमपि त्रिप्रकारमवधेयम् । सहजेन कर्मणा जीवन्मुक्तिः, ऐशेन त्रिमूर्त्तित्वम्, जैवेन च धर्मानुकूलेन सूर्यमण्डलभेदनकाले शुक्लगतिद्वारा सप्तमलोके गमनं जायते । त्रिविधैः कर्मभिस्त्रिप्रकारकश्चिज्जडग्रंथिभेदो जायते । यथाचोक्तं स्मृतौ—

जैवेशसहजाख्यानां द्रष्टा सन् कर्मणामहम् ।
गत्या स्वतन्त्रयाऽमीभिस्त्रिभिरेव स्वतन्त्रया ॥
सम्प्रयच्छामि कैवल्यं त्रिविधं वै विशेषतः ।
नैव कश्चन सन्देहो विद्यतेऽत्र स्वधाभुजः ॥
जैवेन कर्मणा दत्त्वा पदं शुक्लपथानपि ।
ऐशेन कर्मणा नूनं पदं त्रैमौर्तिकं वरम् ॥
जीवन्मुक्तिपदं श्रेष्ठं कर्मणा सहजेन च ।
सार्थकं स्वं त्रिनेत्रत्वं विदधेऽहं स्वधाभुजः ॥

आनन्द एव जीवस्य जीवनशक्तेरखिलपुरुषार्थानां च मौलिक आधारः । अतोह्यानन्दप्रयासी जीव आनन्दकन्दसच्चिदानन्दचरणसरसीरुहमाश्रयन् क्रमशो वैध्यारागात्मिकायाश्च भक्तेरानन्ददायिनीं समुन्नतकक्षामतिक्रमन् परां भक्तिमासाद्य कृतकृत्यतामधिगच्छति । परायाः भक्तेः पदमारूढोजीवन्मुक्तो महात्मा ज्ञानमधिगम्य निजेनात्मना साकं व्यापकस्य परमात्मनः सादृश्यमुपलभते । तदात्मनस्तदानीं जडेन बन्धनं तिरोदधाति । यतस्त्रिविधैः शरीरैः सहात्मबन्धननिदानं वासनैव गीयते । परां भक्तिं द्वारीकृत्य परमात्मस्वरूपावगतौ सत्यां श्रुतिराह—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

अतोह्यवस्थायामस्यां जडेन चितो ग्रन्थिः प्रणश्यति, श्रूयते स्मर्यते चात्र—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्त्योऽमृतोभवत्यत्र ब्रह्म समश्नुते ॥
यदा सर्वे प्रभिद्यन्ते हृदस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतोभवत्येतावदनुशासनम् ॥
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति ।
यथा नद्यः स्पन्दमानाः समुद्रेऽ-
स्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान् नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्यम् ॥

प्रमाणैरेतैः परां भक्तिं लभमानस्य जीवन्मुक्तमहापुरुषस्य प्रकृत्यंशो महाप्रकृतौ चित्सत्तां च सच्चिदानन्दसागरे विलीयते ॥ ७ ॥

प्रसंगादुच्यते—

## स बीजदाता प्रकृतिश्च क्षेत्रम् ॥ ८ ॥

स ईश्वरः सृष्टिकर्मणि बीजदाता पितृस्वरूपः, क्षेत्ररूपा प्रकृतिश्च जननी निर्धारिता। यथाङ्कुरोत्पत्तये क्षेत्रे बीजमुप्यते, तथैव प्रकृतिक्षेत्रे परमपुरुषस्य बीजवपनेन सृष्टिविस्तारो जायते। मानवजगति यथा सृष्टिविस्तारहेतवे मातुःक्षेत्रे पितुर्वीर्याधानप्रयोजनीयता, तथैव प्रकृतिमातुःक्षेत्रे परमपितुः परमेश्वरस्य वीर्याधानेन अनन्तकोटिब्रह्माण्डस्वरूपिण्या विराट्सृष्टेः समुद्भवः। तथाचोक्तं गीतायाम्—

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत!॥
तेषां ब्रह्म महद्योनिरहं वीर्यप्रदः पिता।

वर्णनमेतादृशं श्रुतिषु स्मृतिषु चाप्युपलभ्यते—

कामस्तदग्रे समवर्त्ताऽधिमनसो रेतः प्रथमं यदासीत्।
त्वं नः सुराणामपि सन्निधानात् कूटस्थ आद्यः पुरुषः पुराणः॥
त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः।

ततः स च परिश्रान्तस्तस्या योनौ जगत् पिता।
चकार वीर्याऽऽधानं च नित्यानन्दे शुभक्षणे॥
अथ सा कृष्णचिच्छक्तिः कृष्णगर्भं दधार ह।
शतमन्वन्तरं यावज्ज्वलन्ती ब्रह्मतेजसा॥
शतमन्वन्तरान्ते च कालेऽतीतेऽपि सुन्दरी।
सुषाव डिम्भं स्वर्णाभं विश्वाधारालयं परम्॥

मनुसंहितायामपि विज्ञानमेतत् समर्थितमास्ते। तथाहि—

द्विधाकृत्वाऽऽत्मनो देहमर्धेन पुरुषोऽभवत्।
अर्धेन नारी तस्यां स विराजमसृजत् प्रभुः॥

एतद्दर्शनविज्ञानमनुसृत्य प्रकृतिर्ब्रह्मशक्तिस्वरूपिणीति यदुक्तं तत् उक्त संहितयाऽपि प्रमाणितम्। अन्यत्रापि बहुत्र स्मृतिकारैः स्पष्टरूपेण वर्णितमुपलभ्यते। तथाहि—

योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः।
पुमांश्च दक्षिणार्धाङ्गो वामार्धो प्रकृतिः स्मृता॥
सा च ब्रह्मस्वरूपा च नित्या सा च सनातनी।
यथाऽऽत्मा च तथा शक्तिर्यथाऽग्नौ दाहिका स्थिता॥

इयमेव मातृशक्तिस्वरूपिणी प्रकृतिर्वेदे स्मृतौ निरुक्ते स्थानान्तरे च संस्त्यानशक्तिः सलिलस्वरूपा अप्शक्तिर्वा प्रोक्ता। यथा च ऋक्संहितायाम्—

"कश्चिद् गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे"।

"संस्त्यानं स्त्रीप्रवृत्तिश्च पुमान्" इति महाभाष्ये।

"स्त्रिया आपो भवन्ति स्त्यायनात्" इतिनिरुक्ते।

"तम आसीत् तमसागूढमग्रे प्रचेतं सलिलं सर्वं मा इदम्" इति ऋक्संहिता।

"सलिलं सल्गतौ औणादिकः इलच् इदं दृश्यमानं सर्वं जगत् सलिलं कारणेन संगतं आपः आसीत्" इति सायणभाष्यम्।

एषां प्रमाणानां निष्कर्षोऽयं यत् सूक्ष्मभावावस्थितं कारणब्रह्मविलीनं विश्वं जगत् यां शक्तिमाश्रित्य स्थूलभावमधिगच्छति तन्नाम अप् इति। विश्वस्य संस्थानशक्तिरियमेव। संस्त्यानरूपा स्त्री, प्रवृत्तिरूपः पुरुष इति महाभाष्यकारमतम्! स्त्यायनसंहननसम्मिलनशक्तिसद्भावात् अप इति प्रकृतेर्नाम। यतः अप्सु सलिले वा विद्यते मेलनशक्तिः। इति निरुक्तमततात्पर्यम्। सृष्टेः प्राक् किमपि नासीत्, केवलं सलिलमभवत् इति ऋक्संहितातात्पर्य्यम्। इयं हि महाप्रलयकाले प्रकृतेरवस्था, अव्याकृतमहाप्रकृतिगर्भे समस्तोऽपि विश्वप्रपञ्चः सूक्ष्मभावेन तदानीं विलीनस्तिष्ठति। ब्रह्माण्डोऽपादानभूतं सर्वमपि प्रच्छन्नभावेन प्रकृतेरङ्के विलीनं तिष्ठति। अनन्तकोटिजीवसंस्कारा अपि तत्समये महाकाशे निलीना आस्ते।

"नाऽसदासीन्नो सदासीत्तदानीं
नासीद्रजो नो व्योमपरोयत्।
किमावरीवः कुहकस्य शर्म्मन्
अम्भः किमासीद् गहनं गभीरम्"
इति ऋग्वेदसंहिता।

"आपो अग्रे विश्वभावन् गर्भं दधाना अमृतो ऋतव्याः।
यासु देवीष्वधिदेव आसीत् कस्मै देवाय हविषे विधेम"॥
—इति अथर्ववेदसंहिता।

"आपो वत्सं जनयन्ती गर्भमग्रे समैरयन्"
—इति अथर्ववेदसंहिता।

अर्थात् प्रलयावस्थां सदसत् किमपि नासीत्। केवलम् अम्भः अभवत्। एतदेव स्मृतिपुराणेषु कारणवारिशब्देन प्रोक्तं दृश्यते, इयमेवानन्तजीवसंस्कारराशिसंवलिता अव्याकृता प्रकृतिर्भविष्यतो विश्वस्य संस्थानशक्तिरुक्ता, अस्यामेवाव्याकृतप्रकृतौ सर्वतः प्रथमं परमपुरुषेण वीर्यप्रदानपूर्वकं गर्भाधानं क्रियते। इत्येव श्रुतिस्मृतिवर्णितो गुणमय्या प्रकृत्या साकं लीलापूर्वकगर्भाधानद्वारा अनन्तजीवोत्पत्तिप्रकारोऽवधेयः। परमपुरुषवीर्याधानेनैव क्रमतो महत्तत्त्वादयः समुत्पन्नाः सृष्टिविकाशं समेधयन्ति। एतत्सर्वं मनुसंहितायां रूपान्तरेण व्यक्तं समुपलभ्यते। तथाहि—

सोऽभिध्याय शरीरात्स्वात्ससृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु बीजमवासृजत॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
तस्मिन् यज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥
तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम्।
स्वयमेवात्मनो ध्यानात्तदण्डमकरोद् द्विधा॥
ताभ्यां च शकलाभ्याञ्च दिव्यं भूमिं च निर्ममे।
मध्ये व्योम दिशश्चाष्टावपां स्थानं च शाश्वतम्॥
उद्ववर्हात्मनश्चैव मनः सदसदात्मकम्।
मनसश्चाप्यहंकारमभिमन्तारमीश्वरम्॥
महान्तमेव चात्मानं सर्वाणि त्रिगुणानि च।
विषयाणां गृहीतॄणि शनैः पञ्चेन्द्रियाणि च॥
तेषांत्स्ववयवान् सूक्ष्मान् यन्नामाप्यमितौजसाम्।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे॥ इति॥

एवं प्रकारेण भगवता महदहंकारमनः पञ्चतन्मात्रेन्द्रियादीनि सर्जयता निखिलं विश्वमुदपाद्यत। अयमेव प्रकृतिक्षेत्रे परमपुरुषस्य बीजदानप्रकारः। नैतद् बीजं मनुष्यलोकबीजवदवधेयम्। यस्याश्चित्सत्तायाः प्रभावात् जडा प्रकृतिः स चेतना भूत्वा सृष्टिस्थितिप्रलयान् विदधाति सैव बीजरूपेण निर्दिष्टायतो जडवस्तुनि कर्तृत्वशक्तेरभावात् प्रकृतौ चेतनशक्तिरपेक्ष्यते। उपर्युक्तश्रुतिस्मृतिप्रतिपादितं प्रकृतिक्षेत्रे परमात्मनो गर्भाधानमेतदेव। अत्र विषये वर्णानान्तरमपि स्मृतौ समुपलभ्यते। तथाहि—

जडाहं तस्य संयोगात् प्रभवामि सचेतना।
अयस्कान्तस्य सान्निध्यादयसश्चेतना यथा॥

सांख्यदर्शने तु प्रकृतेश्चेतनवत्तायाः पुरुषसान्निध्यमात्रमेव कारणमुक्तम्। समष्टिव्यष्टिसम्बन्धेन ब्रह्माण्डपिण्डयोरेकैव सम्बन्धनिष्ठता। ब्रह्माण्डसृष्टेः पूर्वोक्तं इयमनुसृत्य प्रकृतिक्षेत्रे पुरुषवीर्याधानेनैव पिण्डस्यापि सृष्टिः। उद्भिज्जस्वेदजाण्डजरायुपशुमानवसृष्टिनैसर्गिकनियमाधीना। उद्भिज्जायां सृष्टौ प्रकृतिशक्तिविकासस्य पुष्पपरागे एवारम्भः, अनन्तरं च बीजभूमिसम्बन्धेन कार्यरूपेण फलदायित्वम्। स्वेदजाण्डजादावपि नैसर्गिकोऽयं नियमः सुस्पष्टरूपेण कार्यकारी दृश्यते। सुतरां ब्रह्माण्डपिण्डयोरुभयत्रैव लिङ्गरूपेण सिद्धान्तोऽयं परिदृश्यते॥ ८॥

सृष्टिकार्ये प्रकृतिपुरुषभिन्नानपेक्षित्वमुच्यते—

चिदचितोर्नान्यत्॥ ९॥

चिदचितोर्ब्रह्मप्रकृत्योर्नान्यदपेक्षितं सृष्टिविस्ताराय, चित्प्रधानः पुरुषः सत्प्रधाना प्रकृतिश्चोभौ परस्परं मिलित्वा चराचरं जगदुत्पादयतः। विराट्सृष्टेरानन्त्यमूले प्रधानकारणीभूतौ प्रकृतिपुरुषावगन्तव्यौ। उपनिषदाप्येतदेव वर्णितम।

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥

स्मर्यते चात्र—

"एका शक्तिः शिवैकोऽपि"

यावत्संजायते किञ्चित् सत्त्वं स्थावरजङ्गमम्।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ॥

चिदचितोः पुरुषप्रकृत्योर्भिन्नं न किमपि तृतीयं वस्तु सृष्टिमूलेऽवगन्तव्यम्। जगज्जनन्या ब्रह्मप्रकृतेः प्राकृतिकी, भगवतो ब्रह्मणो ब्राह्मी, प्रजापतीनां मानसी, स्त्रीपुरुषयोर्बैजीति चतसृषु मौलिकं विज्ञानमेतदेव निहितमास्ते। प्रथमायां सृष्टौ ब्रह्मतत्प्रकृत्योः, द्वितीयायां चतुराननतत्प्रकृत्योः, तृतीयायां प्रजापतितदिच्छाशक्त्योः, चतुर्थ्यां स्त्रियः पुरुषस्य च सम्मेलनेन सृष्टिकार्यमुत्पद्यते। अतः सर्गस्य सर्वविधेषु स्तरेषु शक्तिद्वयस्यास्तित्वं निभाल्यते॥ ९॥

सृष्टेः प्राग् द्वयोरेकतासम्बन्धः प्रतिपाद्यते—

## प्राग् विमुक्तेर्युक्तौ॥ १०॥

सृष्टेः पूर्वं परिदृश्यमानसृष्टेर्विकाशस्य पूर्वं ब्रह्मणस्तच्छक्तिस्वरूपिण्याः प्रकृतेश्चाद्वैतभावापन्नता बोध्या। यथा कस्यचित् शक्तिमतः पुरुषस्य शरीरे विद्यमाना शक्तिराविर्भावात् पूर्वम् अरणिकाष्ठेस्थितोऽग्निरिव तत्पुरुषशरीरेऽन्तर्हिता तिष्ठति, तथैव ब्रह्मशक्तिस्वरूपिणीप्रकृतिमाता सृष्टिविलासविस्तारपूर्वं परमपुरुष एव विलीना तिष्ठति। तदानीं तद्गुणवैषम्याभावात् अव्याकृतावस्थायां सच्चिदानन्दसत्तायामेव निमग्ना भवति। यथा कस्यचित् गायकस्य गानशक्तिस्तद्गानस्य प्राक् तत्रैव गायके विलीनाऽद्वैतभावं धत्ते, तथैवाहं ममेतिवत् प्रकृतिपुरुषदशाऽनुज्ञेया। गायकेऽन्तर्हिता तत्संगीतशक्तिर्यदा ततः पृथग् भूत्वा व्यक्तावस्थां प्रपद्यते, तदैवासौ नानाप्रकारसुमधुरगीतिभिः श्रोतृमनांसि रञ्जयति, तथैव प्रकृतेर्व्यक्तायां दशायां जगत्प्रपञ्चसृष्टिरनुमातुमुचिता। यथा गायकस्य संगीतशक्तेर्लयकाले गीतेन सहैव गानशक्तिर्गायके तत्रान्तर्हिताऽव्यक्तावस्थायां प्रतिपद्यते, तथैव मूलप्रकृतिरपि अव्यक्तावस्थायां संस्कारस्वरूपेण जगत्प्रपञ्चेन सहैव सच्चिदानन्दस्य ब्रह्मणोऽद्वैतसत्तायां विलयमुपढौकते। एतद्भावप्रतिध्वनिः ऋग्वेदेऽपि सम्प्राप्यते। तथाहि—

नासदासीन्नो सदासीत् तदानीं,
नासीद् रजो नो व्योम परो यत्।
किमावरीवः कुहकस्य शर्मन्
अम्भः किमासीद् गहने गभीरम्॥
न मृत्युरासीदमृतं न तर्हि
न रात्र्या अह्न आसीत् प्रकेतः।
आसीदवातं स्वधया तदेकं
तस्मादन्यन्न परः किञ्चनास॥
कामस्तदग्रे समवर्त्तताऽधिमनसो रेतः प्रथमं यदाऽऽसीत्।
सतो बन्धुरसति निरविन्दन्
हृदि प्रतिष्ठ्या कवयो मनीषा॥इत्यादि।

एतत्प्रमाणतात्पर्यमिदं यत् प्रलयकाले सदसत् किमपि नासीत्, आकाशादिपञ्चभूतानामस्तित्वमपि नास, मृत्योरमरत्वस्य नासीत् सत्ता, केवलमव्याकृतप्रकृतिगर्भे विलीनाः संस्कारसमूहास्तदवबोधकोऽद्वितीय-

चैतन्यमयः परमात्मैवाविद्यत। सर्गारम्भे परमात्मैव सृष्टिप्रारम्भे एकत्वाद् बहुत्वकामनया प्रलयगर्भविलीन जीवसंस्कारनुसारेण कल्पसृष्टिं प्रकाशयति। एकभावापन्नः परमात्मैव स्वशरीरं द्विधा विभज्य प्रकृतिं विकाशयति, तस्या एव गर्भे विराड् विश्वमुत्पादयति। सुतरां सर्गतः प्राक् प्रकृतिरव्यक्तां पुरुषे विलीना भवति, अयमेवाद्वैतदशाया अनुभवो विज्ञेयः॥ १०॥

सृष्टिसम्बन्धान्मतविशेषो निराक्रियते—

## नानृतत्वं शक्तित्वात्॥ ११॥

शक्तित्वात् शक्त्यात्मकत्वाद् जगतो मिथ्यात्वं नास्ति। वेदान्तादिदर्शनशास्त्रेषु स्वस्वज्ञानभूमेस्तारतम्यमनुसृत्य जगतो मिथ्यात्वं निर्णीतम्, किन्तु दर्शनेऽत्र नित्यायाः प्रकृतेरुत्पन्नत्वाज्जगतः सत्यता प्रतिपादिता। यस्यां ज्ञानभूमौ साधकः प्रकृतेरतीतं परं ब्रह्म साक्षात् करोति, तत्र प्रकृतेरतद् विलासस्य च दृष्टिगोचरत्वाभावात्, तद् भूमिदर्शनशास्त्रे जगत् मिथ्यात्ववर्णनं युक्तिसंगतमेव। वेदान्तादि शास्त्रमेतद् भूमिदर्शनमवधेयम्। परन्तु यत्र भूमौ परमात्मनः साक्षात्कृतावपि प्रकृतिविलासदर्शनमव्याहतं तद् भूमिदर्शनशास्त्रे प्रकृतेस्तद् विलाससम्भूतसृष्टेरपि नित्यतेति सिद्धान्तः समीचीन एव। अतो हि दर्शनशास्त्रेऽत्र सत्यस्वरूपस्य ब्रह्मणः शक्तिसमुत्पन्नायाः सत्यस्वरूपिण्याः प्रकृतिमातुर्लीलावैभवरूपं जगदपि सत्यमेव निर्णीतम्। यथोक्त स्मृतौ—

सत्याद् भूतानि जातानि सत्यं भूतमयं जगत्।
ध्रुवो द्यौः ध्रुवा पृथिवी ध्रुवा स पर्वता इमे॥
ध्रुवं विश्वमिदं जगत्, ध्रुवो राजा विचापमयेम्॥
ध्रुवं ते राजावरुणा ध्रुवं देवो बृहस्पतिः।
ध्रुवं ते इन्द्राग्निश्च राष्ट्रं धारयतो ध्रुवम्॥

आध्यात्मिक्याः सृष्टेरनाद्यनन्तत्वात् प्रवाहरूपेण अनन्तकोटिब्रह्माण्डसृष्टिनित्यता दार्शनिकविज्ञानसम्मता। यदि च चिज्जडग्रन्थिस्वरूपजीवोत्पत्तिप्रवाहात्मक पिण्डोत्पत्तिरूपिणी सृष्टि दार्शनिकसिद्धान्तानुकूला तदैतदभ्युपगन्तव्यमेव यत् ब्रह्मशक्त्या समुत्पन्नस्तद् विलासस्वरूपसर्गप्रपञ्चोऽपि सत्य एवेति॥११॥

मतान्तरं निराकरोति—

## ब्रह्मेशयोरैक्यं पार्थक्यं तु प्रकृतिवैभवात्॥१२॥

ब्रह्मेश्वरयोरभिन्नता, पार्थक्यप्रतीतिस्तु मायासम्बन्धनिवन्धना वेद्या। वेदान्तादिशास्त्रेषु स्वीयज्ञानभूमिपरिपुष्टये सोपाधिक ईश्वरो ब्रह्मपदनिम्नगो निरूपितः शास्त्रे प्रतिपादितश्च। तथाहि—

चिदानन्दमयब्रह्म प्रतिविम्बसमन्विता।
तमोरजः सत्वगुणा प्रकृतिर्द्विविधा च सा॥
सत्त्व शुद्धिविशुद्धिभ्यां मायाविद्ये च ते मते।
मायाविम्बं वशीकृत्य तं स्यात् सर्वज्ञ ईश्वरः॥
मेघाकाशमहाकाशौ विविच्येत न पामरैः।
तद्वद्ब्रह्मेशयोरैक्यं पश्यन्त्यापातदर्शिनः॥
उपक्रमादिभिर्लिङ्गैस्तात्पर्यस्य विचारणात्।
असङ्गं ब्रह्म मायावी सृजत्येव महेश्वरः॥
सत्यं ज्ञानमनन्तञ्चेत्युपक्रम्योपसंहृतः।
यतो निवर्त्तते·········इत्यसङ्गत्वनिर्णयः॥
मायी सृजति विश्वं सन्निरुद्धस्तत्र मायया।
अन्य इत्यपरा ब्रूते श्रुतिस्तेनेश्वरः सृजेत्॥
आनन्दमय ईशोऽयं वहुस्यामित्यवैक्षत।
हिरण्यगर्भरूपोऽभूत् सुप्तिः स्वप्नो यथा भवेत्॥

ईदृशानि बहूनि प्रमाणानि वेदान्तशास्त्रे समुपलभ्यन्ते। सांख्यदर्शने स्वीयां ज्ञानभूमिमनुसृत्य प्रत्यक्षानुमानलक्षणं निर्णीतम्, अलौकिकप्रत्यक्षानुमानाभ्यामीश्वरसिद्धेरभावात् तस्यालौकिकप्रत्यक्षसिद्धावपि स्वभूमौ तत् सिद्धिरसम्भवा। विज्ञानमेतत् सांख्य-

दर्शनान्तर्गतं "ईश्वरासिद्धेः" इतिसूत्रं द्वारीकृत्य प्रतिपादितम्। अतस्तद्भूमावीश्वरासिद्धिः प्रकल्पिता। "योगिनामवाह्य प्रत्यक्षत्वान्नदोषः" इतिसूत्रेण अलौकिकप्रत्यक्षविचारणया ईश्वरसिद्धिरपि साधिता। परन्तु दर्शनेऽत्र ब्रह्मेश्वरयोरेकत्वमङ्गीकृतम्, भेदभ्रान्तिस्तु प्रकृतिसम्बन्धहेतुभूतेति प्रमाणितम्। सत्यद्रष्ट्री श्रुतिस्तु भावद्वयस्य तस्यैकाधारे वर्णनार्थं सच्चिदानन्दसत्तया सहानन्तसमुद्रस्य तुलनानुष्ठिता। वायुसंयोगेन समुद्रोपरिभागे उत्तालतरङ्गमालालीलाविस्तारसद्भावेऽपि, तलप्रदेशे पयोनिधिः प्रशान्त एव तिष्ठति। श्रुत्या तु तलस्थप्रशान्तजलेन सह ब्रह्मणः, तदीयोपरिभागस्थ तरंगितसलिलेन साकं परमेश्वरस्य तुलना कृता। वस्तुतो जलस्वरूपविचारदृष्ट्या ऊर्द्ध्वभागस्थमधोभागस्थं च जलमेकमेव परस्परमभिन्नं च। तथैव ब्रह्मेश्वरयोः परस्परमभिन्नता। वायुवेगसंगेन तरङ्गाणामिव मायासंयोगसृष्टिवैभवविलासेन तयोर्भेदप्रतीतिः। मायायाः सम्बन्धाभावात् ब्रह्मभावः सृष्टेरतीतः। किन्तु मायासम्बन्धने परमेश्वरे सिसृक्षा सृष्टिविलासश्च समुत्पद्यते। अतएव ब्रह्मभावेन सह ईश्वरभावस्य पार्थक्यप्रतीतिः।

यत्र दर्शनशास्त्रे परमेश्वरं मायिनमुक्त्वा ब्रह्मभावस्तदुन्नतः प्रतिपादितस्तद्रहस्यमिदं यत् जीवं मुक्तिपदं नेतुं मायातीतपदस्य लक्ष्यनिर्धारणमेव सौविध्याधायकं प्रतिभाति। यतो मुक्तिपदं मायातीतमेव। सुतरां परमेश्वरस्य ब्रह्मणश्च पार्थक्यं प्रदर्श्य स्वरूपज्ञानदार्ढ्याय मायातीतपदाभिमुखं मुमुक्षुलक्ष्यनिर्देशस्थिरीकरणं तद्दर्शनसिद्धान्तानुसारं समुचितमेव। वस्तुतो भक्तिदर्शनमिदं भक्त्या मुक्तिं जगच्च ब्रह्मविलासरूपमङ्गीकरोति चेत् तर्हि एतद्दर्शनसिद्धान्तमनुसृत्य ब्रह्मेश्वरयोः पार्थक्यसिद्धिरनावश्यकी। भावद्वयमिदं सुस्पष्टयितुं श्रुतिरभिधत्ते—

"सोऽयमात्मा चतुष्पात्, पादोऽस्य सर्वभूतानि त्रिपादस्यामृतं दिवि" इति।

भगवता गीतायामपि प्रतिपादितं, यथा—

"विष्टभ्याहमिदं सर्वमेकांशेन स्थितो जगत्" इति।

एकेनांशेन सह ईश्वरभावस्य, अन्यैस्त्रिभिरंशैर्ब्रह्मभावस्य सम्बन्धोऽवगन्तव्यः। ब्रह्मभावप्रतिपादकमन्त्राः क्लीवलिङ्गाः, मायया सह सम्बन्धत्वादीश्वरवाचका वेदमन्त्रास्तु पुल्लिङ्गा दृश्यन्ते। यथा चोक्तमीशोपनिषदि—

सपर्यगाच्छुक्रमकायमव्रणम्
अस्नाविरं शुद्धमपापविद्धम्।
कविर्मनीषी परिभूः स्वयंभूः
याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यःसमाभ्यः॥

समष्टिभावेन प्रकृतेस्त्रिविधशरीरैर्ब्रह्मणः सम्बन्धाभावात् मायासम्बन्धशून्यब्रह्मभावप्रतिपादकं शुद्धम्, अकायम्, अव्रणम् अस्नाविरमित्यादि ब्रह्मणो विशेषणानि क्लीवलिङ्गपराणि समाम्नातानि। अन्यच्च अस्यैव मन्त्रस्य द्वितीयपादे कविर्मनीषी स्वयम्भू आदीनि विशेषणानि ईश्वरभावप्रतिपादकानीति हेतोः पुंल्लिङ्गपराणि निर्दिष्टानि। मन्त्रेऽत्रभावद्वयस्यापि चित्रं प्रदर्शितमास्ते। तात्त्विकदृष्ट्या भावद्वयस्यैकत्वेऽपि प्रकृतिवैभवस्य तदभावस्य च सम्बन्धेन द्विधा प्रतीयते। अतः कारणादेव स्मृतिकारैरुक्तम्, यथा—

शक्तिरस्यैश्वरी काचित् सर्ववस्तु नियामिका।
तच्छक्त्युपाधिसंयोगात् ब्रह्मैवेश्वरतां व्रजेत्॥

ब्रह्मभावस्य पृथक् प्रदर्शनप्रसंगेन श्रुतिराह—

न तत्र चक्षुर्गच्छति न वाग् गच्छति न मनः।
यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन॥
यत् तददृश्यमग्राह्यमगोत्रमचक्षुः श्रोत्रम्।
तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम्।
तदव्ययं तद्भूतयोनिं परिपश्यन्ति धीराः॥

प्रकृतेरतीतस्य अवाङ्मनसगोचरस्य परब्रह्मणो वास्तविकतत्त्वविषये श्रुतिराह, यथा—

नान्तः प्रज्ञं न बहिः प्रज्ञं नोभयतः प्रज्ञम्।
न प्रज्ञा न धनं न प्रज्ञं नाऽप्रज्ञम्॥ इत्यादि।

सर्वव्यवहारातीतं गुण-लक्षण-चिन्ता-निर्देशादिभिश्चातीतं आत्मप्रत्ययमात्रसिद्धम्, प्रपञ्चातीतम्, शान्तं शिवं सुन्दरमद्वैतपदवाच्यम् ब्रह्म। ब्रह्मणो भावेनैतेन सह निर्मलस्याकाशस्य तुलना विहिता दृश्यते। यथा च श्रुतौ—

आकाशवत् सर्वगतश्च नित्याऽविनाशी आत्मा।
आकाशवत् सर्वगतश्च नित्यः स वा एषोऽज आत्मा॥

ईश्वरभावेन सह श्रुतिस्तु मायासम्बन्धं वर्णयति, यथा—

अदृष्टमव्यवहार्य्यमग्राह्यमलक्षणम्,
अचिन्त्यमव्यपदेश्यमेकात्म्यप्रत्ययसारम्।
प्रपञ्चोपशमं शान्तं शिवमद्वैतम्
चतुर्थं मन्यते स आत्मा स विज्ञेयः॥
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतैश्च व्याप्तं सर्वमिदं जगत्॥

ऐतरेयश्रुतिरपि प्रोवाच—

स ईक्षते मे नु लोकाः लोकपालानुसृजा इति।
सोऽद्भ्यः एव पुरुषं समुद्धृत्यामूर्च्छयत्॥
स ईक्षते मेनुलोकाश्च लोकपालाश्च मेभ्यः सृजा इति।

एतद्भावार्थोऽयं यत्—सर्गस्य प्राक् ईश्वरः प्रकृतिम् ईक्षते, तदीक्षणेन प्रकृतिः शक्तिमती भूत्वा चराचरं विश्वं सृजति, मुण्डकोपनिषदपि—

यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति।

सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत।
स्वेच्छा मायाख्यया यत् तज्जगज्जन्मादिकारणम्॥
ईश्वराख्यं तु तत्तत्त्वमधिदैवमिति स्मृतम्।
सर्वज्ञः सद्गुरुर्नित्यो ह्यन्तर्यामी कृपानिधिः।
सर्वसद्गुणसारात्मा दोषशून्यः परः पुमान्॥

अन्यच्च—

अपाणिपादो यवनो ग्रहीता,
पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति सर्वं न च तस्य वेत्ता,
तमाहुरग्र्यं पुरुषं महान्तम्॥

ब्रह्मण ईश्वरभावोऽयं मायया सम्बद्धोऽपि तदधीनो नास्ति, स्मृतिकारैरपि सुस्पष्टरूपेण भावद्वयमिदमुपवर्णितम्। ते तु परमात्मनोऽध्यात्मभावस्वरूपेण परं ब्रह्म वर्णयन्ति, यथा—

यत् तद् ब्रह्ममनो वाचामगोचरमितीरितम्।
तत् सर्वकारणं विद्धि सर्वाध्यात्मिकमित्यपि॥
अनाद्यनन्तमजं दिव्यमजरं ध्रुवमव्ययम्।
अप्रतर्क्यमविज्ञेयं ब्रह्माग्रे संप्रवर्त्तते॥

इत्यादि निर्गुणब्रह्मभावप्रतिपादितम्। येन भावेन सह सम्बद्धा तदिच्छारूपिणी महामाया अनन्तकोटिब्रह्माण्डरूपं विराजं सृजति, तस्यैवाधिदैवभावस्य नाम ईश्वर इति। स च सर्वज्ञः सद्गुरुः, नित्यः, अन्तर्यामी करुणासिन्धुः अनन्तसद्गुणाधारो महांश्चेति, एवं हि मध्यमीमांसापरनामक दैवीमीमांसादर्शनेऽत्र ब्रह्मेश्वरभावयोरैक्यनिर्देशेनापि मायाविलासभेदमनुसृत्य भावद्वयपार्थक्यं निर्दिष्टम्॥१२॥

उपासनायां दृढतासम्पादनाय ब्रह्मप्रकृत्योः प्रधानविभूतीनां वर्णनमुपक्रामति—

**विभूतित्वात् सेव्याः पितृकालमहाकालाः॥१३॥**

शरीरदाता पिता, कालो महाकालश्चेतित्रय ईश्वरस्यैवं त्रिभावात्मक्यो विभूतयः, अतः सेवनीयाः सन्ति। स्मर्यते चात्र—

महाकालश्च कालश्च पिता चैव स्वधाभुजः।
सगुणस्य स्वरूपस्य सन्तीमा मे विभूतयः॥

श्रीभगवत आधिभौतिकविभूतिर्जन्मदः पिता, आधिदैविकविभूतिः कालः, आध्यात्मिकविभूतिर्महाकालो वेद्यः। ऋषिदेवानां यथाऽवताराः सम्भवन्ति, न तथाऽर्यमादि नित्यपितृणाम्। पितर्य्येव नित्यपितृणामवतारणा जायते। पितृगणाः पितृसाहाय्येनैव यथोचितकर्मभोगाय तदुपयोगीनः स्थूलदेहा जीवेभ्यः प्रदीयन्ते। अतो नित्यपितृप्रतिनिधिभूतः पिताऽवश्यं सेवनीयः। कालमहाकालावपि व्यष्टिसमष्टिसम्बन्धोपेतौ। यथाऽध्यात्मिकस्वरूपो ब्रह्मणो विराड्देहः, आधिदैविकसृष्टिरूपो ब्रह्माण्डश्चैक समष्टिव्यष्टि स्वरूपोपेतौ, तथैव महाकालकालावपि वेद्यौ। तावेतौ भगवतः साक्षाद् विभूतित्वान्नूनं सेवनीयौ। भौतिके जगति भगवद्विभूतिस्वरूपत्वात् सकलशास्त्रेषु पिता परमपूजनीयो वर्णितः। तथाहि—

आचार्यो ब्रह्मणो मूर्त्तिः पिता मूर्तिः प्रजापतेः।
येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः॥
मातरं पितरं चैव शुश्रूषन्ते जितेन्द्रियाः।
भ्रातॄणां चैव सस्नेहास्ते नराः स्वर्गगामिनः॥
दशाचार्यानुपाध्याय उपाध्यायात् पिता दश।
पितृशुश्रूषया विद्याऽयुर्यशांसि वर्द्धन्ते।

श्रुतावप्युक्तम्—
पितृदेवोभव! देवपितृकार्याभ्यां न प्रमदितव्यम्।
अर्चयित्वा पितॄन् देवान् नियतो नियतासनः।
सर्वकामसमृद्धश्च यज्ञस्य फलमश्नुते॥

कालमहाकालविषये शास्त्रेष्वेतन्निर्णीतं यत् कालो ब्रह्माण्डप्रकृतिपरिच्छिन्नः, महाकालस्तु अनाद्यनन्तौ विराड्व्यापी अपरिच्छिन्नश्च। मानवो दैवो वा कालः सादिः सान्तश्च, महाकालस्त्वनाद्यनन्तः। यथा संगीतशास्त्रस्य ध्रुवपदादि तालकार्यम्, कालरूपकारणं चोभयमेव कारणरूपत ऐक्यमभजमानमपि एकमेवास्ते, तथैव समष्टिव्यष्टिरूपौ महाकालकालावगन्तव्यौ। उभावप्येते चित्सत्तारूपज्ञानस्य प्रमापकाविति परमपुरुषस्य भगवतो विभूतिभूतौ स्तः। कालो हि परमात्मन आधिदैविकविभूतिस्वरूप इति स्मृतिशास्त्रेषु बहुत्र परमेश्वरेण संतुलितः। यथा—

कालोऽयं भगवान् विष्णुरनन्तः परमेश्वरः।
तद्वेत्ता पूज्यते सम्यक् पूज्यः कोऽन्यस्ततो मतः॥

एवं च कलनात्मकः कालः परमेश्वर इव निर्लिप्तो अपि स्थूलसूक्ष्मभेदेन अमूर्तो मूर्तश्च शास्त्रेषूपवर्णितः।

लोकानामन्तकृत् कालः कालोऽन्यः कलनात्मकः।
स द्विधा स्थूलसूक्ष्मत्वान्मूर्त्तश्चामूर्त उच्यते॥
जन्यानां जनकः कालो जगतामाश्रयो मतः।
परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः॥
सत एव पदार्थस्य स्वरूपावस्थितस्य यत्।
कैवल्यं परममहान् अविशेषो निरन्तरः॥
एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तमे।
संस्थानमुक्त्या भगवान् अव्यक्तो व्यक्तभुग् विभुः॥
स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्।
सतो विशेषभुग् यस्तु स कालः परमो महान्॥

तात्पर्यमेतद् यत् कालः सर्वथा निर्लिप्तोऽपि सकलजन्यपदार्थजनकः परिच्छिन्नो जीवप्रकृतेः कर्मविभागमन्तर्विभागं चाप्यनुसृत्य क्षण-काष्ठा-निमेष-मुहूर्त्त-दिन-रात्रि-मास-पक्ष-वर्ष-प्रभृतिस्वरूपेण बहुधा विभक्तो जायते। जगति जीवानामुत्पत्तिस्थितिप्रलयाः कालस्य महिमानं विद्योतयन्ति, भावाभावसुखदुःखशुभाशुभादीनि कालप्रभावादेव संघटितानि। तथाहि—

कालः सृजति भूतानि कालः संहरते प्रजाः।
संहरन्तं प्रजाः कालं कालः शमयते पुनः॥

विधातृविहितं सर्गं न कश्चिदतिवर्त्तते।
कालमूलमिदं सर्वं भावाभावौ सुखासुखे॥
कालो हि कुरुते भावान् सर्वलोके शुभाशुभान्।
कालः संक्षिपते सर्वाः प्रजा विसृजते पुनः॥
कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः।
कालः सर्वेषु भूतेषु चरत्यविकृतः समः॥
अस्मिन् महामोहमये कटाहे
सूर्याग्निना रात्रिदिवेन्धनेन।
मासर्त्तु दर्वी परिघट्टनेन
भूतानि कालः पचतीति वार्त्ता॥
बहूनीन्द्र सहस्राणि दैत्येन्द्र नियुतानि च।
विनष्टानीह कालेन मनुजेष्वथ का कथा॥
राजर्षयश्च बहवः सर्वे समुदिता गुणैः।
देवा ब्रह्मर्षयश्चैव कालेन निधनं गताः॥
ये समर्था जगत्यस्मिन् सृष्टिसंहारकारिणः।
तेऽपि कालेन लीयन्ते कालो हि बलवत्तरः॥

इत्यादि स्मृतिप्रतिपादितः कालस्य महिमा सर्वैरवगम्यते। अननुकूले काले बुद्धयाकृतस्य शास्त्राध्ययनस्य च न किमपिविशेष फलमधिगम्यते। अनुकूले च काले मूर्खोऽपि स्वामीप्सितमधिगन्तुमर्हति। शिल्पमन्त्रौषधयः कालेऽपूर्णे नैव कदापि सिद्धिदानप्रभवः। कालप्रभावादेव नियमेन पवनगतिः, जलवारिधारावर्षा सरोवरेषु पङ्कजविकाशः, अरण्येषु कुसुमसुषमाविस्तारश्च संसारेऽत्र परिदृश्यते। जन्ममृत्युबाल्ययौवनजरादिप्राप्तिरपि नैव कालमतिवर्त्तते। किंबहुना, क्षेत्रेषु समुप्तं बीजमपि अननुकूले काले नाङ्कुराय प्रकल्पते। एवं सर्वत्रैव शास्त्रे कालस्य महिमा प्रोक्तः। कालानुकूलधर्मसाधनेन कालस्य सेवा सिध्यति। धार्मिक कर्माण्यपि कालप्रकृत्यननुकूलत्वेऽधर्मतां प्रतिपद्यन्ते। अतो विद्वांसो मानवाः कालानुकूलधर्मानुष्ठानमेव धर्मसेवां मन्यन्ते। कालप्रकृत्यनुकूलधर्मसाधनेन साधकाः शनैः शनैराध्यात्मिकमार्गे समुन्नमन्तो नैजं जीवभावं परित्यज्य जीवन्मुक्तिपदमासादयन्ति, तदानीं जीवन्मुक्तमहापुरुषस्य पृथक् सत्ता विलुप्ता जायते, विश्वजीवनेन सहैकताप्राप्तिर्भवति, तस्य च व्यष्टिसत्ता विराडनन्तसत्तया साकमैक्यभावं भजते। उक्तं च—

न बुद्धिशास्त्राध्ययनेन शक्यं
प्राप्तुं विशेषं मनुजैरकाले।
मूर्खोऽपि चाप्नोति कदाचिदर्थान्
कालो हि कार्यं प्रति निर्विशेषः॥
नाभूतिकालेषु फलं ददन्ति
शिल्पानि मन्त्राश्च तथौषधानि।
तान्येव कालेन समाहितानि
सिध्यन्ति वर्धन्ति च भूतिकाले॥
कालेन शीघ्राः प्रवहन्ति वाताः
कालेन वृष्टिर्जलदादुपैति।
कालेन पद्मोत्पलवज्जलं च
कालेन पुष्पन्ति वनेषु वृक्षाः॥
नाकालतो म्रियते जायते वा
नाकालतो व्याहरते च बालः।
नाकालतो यौवनमभ्युपैति
नाकालतो रोहति बीजमुप्तम्॥

कालेऽस्मिन् योगी न किमप्यनुतिष्ठति। तस्य क्रियमाणाः संस्कारा नैव तिष्ठन्ति। विराट् केन्द्रेण परिचालितः सन् परमेश्वरीयां शक्तिमधिगत्य जगत्कल्याणकरं भगवत्कार्यं विधत्ते। विराट्समुद्रतरङ्गे तरङ्गायितो भूत्वा प्रवाहपतितं भावेन कार्यमनुतिष्ठति। इयमेव महाकालसेवा, एवं हि भगवतस्त्रिविधविभूतिस्वरूपाणां पितृकालमहाकालानां सेवा बोभूयते॥१३॥

इदानीं प्राकृतिकविभूतिसमूह पूज्यतोपवर्ण्यते—

## मातृ-देह-जन्मभूमयश्च ॥१४॥

स्थूलशरीरदात्री माता, क्षेत्रस्वरूपो देहः, जन्मभूमिश्च यथाविधि सेवनीयाः पूजनीयाश्च सन्ति, माता देहो जन्मभूमिश्च भगवतः शक्तिभूताया महामायाया विभूतयः। अतः सन्ति सेवनीयाः। सृष्टिकर्मणि मातुः प्राधान्यम्। स्थूलशरीराणां दातारो रक्षकाश्च पितृगणा मातुःपितुश्च शरीरेषु गर्भाधानकाले पीठनिर्माणे जाते प्रादुर्भवन्ति, छिन्ने च पीठे मातुर्गर्भे स्वीयं स्थायिनं सम्बन्धं रक्षन्तः स्थूलशरीरं निर्माय तद्रक्षन्ति। अतो गर्भे जीवाविर्भावकालादारभ्य मनुष्यत्वलाभं यावत् मातुः कृपाप्राधान्यम्।

स्मर्यते चात्र—

मृत्युलोके ततो जन्म गृह्यते च यदा तदा।
यूयं यद्यपि तेभ्यो वै स्वस्वकर्मानुसारतः॥
उपयुक्तं प्रयच्छेत भोगायतनरूपकम्।
पित्रोः स्थूलं रजो वीर्यं साहाय्याद् वपुरद्भुतम्॥
परिश्रमेण महता पाञ्चभौतिकमण्डलात्।
तत्त्वानि किल सञ्चित्य तद्योग्यान् पितरोऽनिशम्॥
मातृगर्भेषु निर्माय स्थूल देहान् न संशयः।
लभंते मातृगर्भेपु दुःखान्येव तथापि ते॥
गुह्यमेकं रहस्यं वो ब्रवीम्यत्र निशम्यताम्।
रजस्तमोभ्यां जनिते गुणानां तु प्रभावतः॥
दाम्पत्योर्द्विविधे शक्ती ह्याकर्षणविकर्षणे।
भजेते समतां यावत् तावदेव सुधीरयोः॥
दाम्पत्यं सात्विकं पीठं तिष्ठेन्नैवात्र संशयः।
दाम्पत्योर्हि तदा धैर्य-ज्ञानभक्ति-प्रभावतः॥
तस्मात् पीठात् सन्ततिः स्यात् सात्त्विकी ज्ञानिनी तथा।
यावत् स्यात् सात्त्विकं पीठं तदा सत्त्वगुणान्वितम्॥
दम्पत्योर्यत्नतो यावदधिकं योगयुक्त्योः।
स्यात् तावज्ज्ञानसम्पन्ना धार्मिकी सन्ततिर्ध्रुवम्॥

माता पृथिव्या मूर्तिः। तस्याः प्रसन्नतया धरित्री प्रसीदति। संसारे मातृसदृशो गुरुर्नास्ति। श्रुतिस्मृतिश्च निदिशतो यत् मातृश्रद्धालुर्भक्तो जगति विद्याधनयशांसि लभन्ते। मातृभक्ता जितेन्द्रियाश्च पुत्रादयो दीर्घायुषः स्वर्गगामिनश्च जायन्ते। स्मर्यतेऽत्र, तथाहि—

देशश्च जन्मभूमिश्च माता चैव बुभुत्सवः।
मुख्या मत्प्रकृतेर्नूनमिमाः सन्ति विभूतयः॥
निजान्तःकरणेऽप्येव त्रिविधाकाशरूपतः।
सर्वव्यापक देशोऽयमनुभूयत एवह॥
अतोऽपि स्वशरीराणि मन्यन्ते प्राणिनां कृते।
योगिनः प्रकृतेर्मुख्य विभूत्यात्मकतः स्वतः॥
आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः।
भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात् क्षितेस्तनुः॥
दश चैव पितॄन् माता सर्वां वा पृथिवीमपि।
गौरवेणाभिभवति नास्ति मातृसमो गुरुः॥
मातृ देवो भव! मातृमान् पुरुषो वेद।
यं मातापितरौ क्लेशंसते संम्भवे नृणाम्।
न तस्य निष्कृतिः शक्या कर्त्तुं वर्षशतैरपि॥
तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा।
तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते॥
त एव हि त्रयो लोकास्त एव त्रय आश्रयाः।
त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः॥
जीवतो वाक्यकरणात् क्षयाहे भूरिभोजनात्।
गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता॥
विद्याधनमदोन्मत्तो यः कुर्यान्मातृहेलनम्।
स याति नरकं घोरं सर्वधर्मबहिष्कृतः॥
मातरं पितरं चैव शुश्रूषन्ते जितेन्द्रियाः।
भ्रातॄणां चैव सस्नेहास्ते नराः स्वर्गगामिनः॥

मातापितरमुत्थाय पूर्वमेवाभिवादयेत् ।
आचार्यमथवाऽप्यन्यं तदायुर्विन्दते महत् ॥१४॥

द्विविधविभूतिसेवा फलं वर्णयति—

**तथात्वात्पुण्यशक्तिमुक्तयः ॥१५॥**

तथात्वात् अर्थात् ब्रह्मतत्प्रकृतिविभूतिसमूह-सेवया पुण्यशक्ति-मुक्त्यधिगमः। मातुःपितुश्च सेवनेन पुण्यस्य, देह-कालयोः सेवया शक्तेः, जन्म-भूमिमहाकाल्योश्च सेवातो मोक्षस्य लाभो जायते। मातृपितृसेवापरायणः पुत्रः स्वर्ग-सुखमुपभुङ्क्त इति श्रुतेः स्मृतेश्च निर्देशः। स्वर्गसुखावाप्तिः पुण्यविपाक-जन्या। अतः पित्रोः सेवया महापुण्यमासाद्यते, इत्यत्र कः सन्देहः। अतः स्मृतिऽशास्त्रे श्रीभगवता पितॄनुद्दिश्य प्रोक्तम् तथाहि—

यस्यां मनुष्यजातौ स्यात् पित्रोः पूजा यथार्थतः।
ऋषीणां देवतानां चावताराणां यथायथम् ॥
मद्विभूत्यवताराणां स्यादाराधनमप्यलम्।
यत्र सप्तविधानां च वृद्धानाममलात्मनाम् ॥
पूजा स्यात् सततं सम्यक् सत्कारेण समन्विता।
स्वयं संवर्द्धिता जातिरसौ संवर्द्धयेद्धि वः ॥

कालप्रकृत्योऽविरुद्धाचरणेन समुत्पन्नविषम-प्रतिक्रिया स्थूलां सूक्ष्मामुभयविधामेव प्रकृति-माघातप्रदानेन दुर्बलां विधत्ते। अन्यच्च कालदेहानु-कूलं कार्यं सर्वदा किलानुकूलप्रतिक्रियामुत्पादयत् शक्तिं वर्धयति, देशकालपरिच्छिन्नं सर्वमपि दृश्यं जगत् तयोरधीनं वेदितव्यम् अतः कालात्मनो साक्षात् सम्बद्धयोर्देशशरीरयोः सेवनात् शक्तिः समेधत इत्यत्र कः सन्देहः। पूर्वमिदं प्रमाणितं यत् काल-महाकालयोः कार्यकारणसम्बन्धो व्यष्टिसमष्टिसम्बंधश्च, तद्वदेव सम्बन्धो देश-शरीरयोरप्यवधेयः। अतएव कालदेहयोः सेवया शक्तेः प्राप्तिः। जन्मभूमेः सेवया देशकल्याणे जाते आधिभौतिकमुक्तिलाभः, महाकालस्य च सेवनेन व्यष्टिप्रकृतिर्महाप्रकृतिमिश्रिता जीवभावं विनाश्य शिवभावं प्रापयति, येनाध्यात्मिकमुक्तिलाभः। अतएव शास्त्रे समुद्घोषितम्—

"जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" इति।

देशस्य स्वाधीनतां समुन्नतिमन्तरेण व्यक्तेः स्वाधी-नता समुन्नतिश्चासम्भवा। अतो जन्मभूमि सेवाऽभ्यु-दयनिःश्रेयसयोः साहाय्यमाधत्ते। "वसुधैव कुटुम्बकम्" इति भावयतो जगदात्मनो मुक्तिः स्वतः सिद्धा। सर्व-शास्त्रसिद्धान्तितमेतदेव प्रकृतिपुरुषविभूतिसेवासमु-त्पन्नं परमं फलमवधेयम् ॥ १५ ॥

उपासनायाः सिद्धिविषये हेयोपादेयौ वर्ण्येते—

**सृष्टिर्मनसा लयो बुद्ध्या ॥ १६ ॥**

सृष्टिस्तु मनसा समुत्पद्यते लयश्च बुद्ध्येति विज्ञे-यम्। सृष्टिविस्तारविषये संकल्पविकल्पात्मकस्य मनसो मूलकारणत्वम्। सृष्टिप्रवाहं लयाभिमुखमानेतुं निश्च-यात्मिका बुद्धिरेव मूलकारणीभूताऽवगन्तव्या। पञ्चा-नामपि तत्त्वानां स्थूलतत्त्वांशतोऽन्तःकरणमुत्पद्यत इति सिद्धान्तो वेदान्तस्य। मनोबुद्धिचित्ताहङ्काराश्चेति तस्य चत्वारो भेदाः। अत्रापि सूक्ष्मविचारणया समष्टि-सत्त्वांशेन बुद्धिः, समष्टिरजोंशेन मनः, समष्टितमोगुणां-शेन च चित्ताहंकारो भवन्तीति स्वीकृतिर्नासंगता। अन्तःकरणे मनसो बुद्धेश्च प्राधान्याम्। मनसश्चित्तं, बुद्धेरहंकारश्च अन्तर्विभागः। रजोगुणप्राधान्यान्मनः किल वासनोत्पादकत्वाज्जीवबन्धनकरणम्। बुद्धिस्तु सत्त्वगुणप्राधान्यान्मुक्तिहेतुः। स्मर्यते चात्र—

मनो बुद्धिरहंकारश्चित्तमेतच्चतुर्विधम्।
अन्तः करणमस्तीति वित्त यूयं पितृव्रजाः ॥
मनसोऽन्तर्विभागोऽस्ति चित्तं चाहं कृतिर्धियः।
मायापाशैर्दृढैर्बध्वा योषित् संसारगोचरम् ॥

यथा संसारिभिर्जीवैः कार्यं कारयतेऽनिशम्।
तथा चित्तं मनो बुद्धिमहंकारो नियम्य च॥
कार्यं कारयते शश्वत् नाना वैचित्र्यसंकुलम्।
संस्कारानुचरा जीवा वर्त्तन्ते सर्वथा खलु॥

वासनोत्पन्नसंस्कारा अभिवर्धन्ति प्राणिनः।
आसक्तिरेव मूलं च बन्धनस्यास्य कारणम्॥

संस्कारो वासनाजन्यः संस्कारात् कर्म जायते।
वासनोत्पद्यते भूयः कर्मणो नात्र संशयः॥

वासनायाः पुनर्विज्ञाः संस्कारो जायते ध्रुवम्।
सदैवं वासनाचक्रं जीवानां च गतागतम्॥
घूर्णायमानमस्तीह चक्रनेमिर्यथा रथे।
पूर्वजन्मार्जिता यादृक् कर्मसंस्कारसन्ततिः॥

अन्यच्च—

एतज्जन्मकृतानां वा कर्मणां यादृशी स्मृतिः।
अङ्किता जीवचित्ते स्यादासक्तिः स्याद्धि तादृशी॥
यदा सक्त्यनुरूपेषु विषयेषु निरन्तरम्।
आसज्जन्तेऽमितो जीवास्तदा सक्त्यानुसारतः॥
आसक्तिश्चित्तसाहाय्यान्मनस्युत्पद्यते ध्रुवम्।
दम्पत्योः सङ्गमाल्लोके मनश्चित्तस्वरूपयोः॥
आसक्तेर्जायते जन्म नात्र कार्या विचारणा।
प्रजातन्तुं यथा पुत्रः संरक्षन् लभते पितुः॥
तस्याधिकारमासक्तिर्बिभ्राणा विषयांस्तथा।
सृष्टिं वर्धयते शश्वदिह दैवी च मानवीम्॥
बुद्धिराज्यस्य सिद्धान्तमपरं वित्त किन्त्वहो।
बुद्ध्यहंकारसंयोगाद् भावतत्त्वोदयो भवेत्॥
भावो हि द्विविधो ज्ञेयः शुद्धाशुद्धप्रभेदतः।
भावोऽशुद्धस्तयोर्बुद्धिं विधत्ते विषयाकृतिम्॥
शुद्धो भावः क्रमाच्चित्तं कुर्वाणो निर्मलं तथा।
बुद्धिं ब्रह्मपदं नूनं नयन्नुच्छान्तिं प्रयच्छति॥

अन्यदपि—

नन्वासक्तेर्वशाज्जीवाः अथवा भावनोदिताः।
एतत्तत्त्वद्वयस्यैव साहाय्यात् कर्म कुर्वते॥
कायिकं वाचिकं चैव तथा मानसमेव च।
आसक्तौ किन्तु वैवश्यं भावे स्वातन्त्र्यमस्ति ह॥
आनन्त्याद् विषयाणां तु बहुशाखासमन्विता।
आसक्तिर्विद्यते नूनं शुद्धो भावो न तादृशः॥
एकाद्वैतदशां नेतुमीष्टेऽसौ नात्र संशयः।
यतो ब्रह्मपदं विज्ञाः! विद्यतेऽद्वैतमेव हि॥
आसक्त्या कार्यकर्त्तारो जीवाः प्रारब्धयोगतः।
श्रीगुरोर्देवतानां वा प्रसादादेव सर्वथा॥
पाशतुल्याद्धि विषयात् स्वान्निवर्त्तयितुं क्षमाः।
अन्यथा विषये तेषां प्रसक्तिस्तत्र निश्चिता॥
किन्तु शुद्धस्य भावस्य साहाय्यात् कार्यकारिणः।
भाग्यवन्तो न सज्जन्ते विषयेषु कदाचन॥
उत्तरोत्तरमेतेषां सर्वथोद्ध्वंगतिर्भवेत्।
संगृहीता हि संस्काराः पूर्वजन्मनि यादृशाः॥
आसक्तिस्तादृशी जीवे प्ररुरोक्ष्यति निश्चितम्।
तस्या एवानुसारेण जीववर्गो जनिष्यते॥

अन्यच्चापि—

हेयोपादेयता ज्ञानं नास्ति कोऽप्यत्र संशयः।
आसक्तिमूलके चैवमसद्भावे प्रसज्य वै॥
जीवो बन्धदशातः स्वं रक्षितुं नैव शक्ष्यति।
सम्बन्धेन मया सार्धं सद्भावे न तु संयुतः॥
यत् कर्म कुरुते जीवः सततं भावशुद्धितः।
हेतुतां वहते विज्ञाः! मुक्तेस्तत्कर्म निश्चितम्॥
पापकर्माण्यतः पुण्यं सद्भावेन समन्वितम्।
एष मे निश्चयो विज्ञाः! एषा मे धारणास्त्यलम्॥

श्रुतिरप्युवाच—

मनो दृश्यमिदं द्वैतं यत् किञ्चित् सचराचरम्।
मनसोह्यमनीभावे द्वैतं नैवोपलभ्यते॥

स्मर्यते चात्र—

आदौ मनस्तदनुबन्ध वियोक्षदृष्टिः
पश्चात्प्रपञ्चरचना भुवनाभिधाना।
इत्यादि का स्थितिरियं हि गता प्रतिष्ठा-
माख्यायिका सुलभबालजनोदितेव च॥

पुनरपि—

नायं मनो मे सुखदुःखहेतु-
र्न देवतात्मा ग्रहकर्मकालाः।
मनः परं कारणमामनन्ति
संसारचक्रं परिवर्त्तयेद् यः॥
मनो गुणान् वै सृजते वलीय-
स्ततश्च कर्माणि विलक्षणानि।
शुक्लानि कृष्णान्यथ लोहितानि
तेभ्यः सवर्णाः सृतयो भवन्ति॥
अनीहमात्मा मनसा समीहता
हिरण्मयो मत्सख उद्विचष्टे।
मनः स्वलिङ्गं परिगृह्य कामान्
जुषन् निवद्धो गुणसंगतोऽसौ॥
दानं स्वधर्मो नियमो यमश्च
श्रुतं च कर्माणि च सद्व्रतानि।
सर्वे मनोनिग्रहऽलक्षणान्ताः
परो हि योगो मनसः समाधिः॥
समाहितं यस्य मनः प्रशान्तं
दानादिभिः किं वद तस्य कृत्यम्।
असंयतं यस्य मनो विनश्य-
द्दानादिभिश्चेदपरं किमेभिः॥
देहं मनो मात्रमिदं गृहीत्वा
प्रमाणमित्यन्धधियो मनुष्याः।
एषोऽहमन्योयमिति भ्रमेण
दुरन्तपारे तमसि भ्रमन्ति॥

एतत्प्रमाणभावार्थोयं यत् संसारेत्र देव-मानव-मनुष्यग्रहकर्मकालादयः केऽपि न दुःखकारणम्। सुख-दुःखादि कारणं केवलं मन एव। मनसो विकार, भूतेन देहेन साकं तादात्म्यभावमधिगतो जीवो "अहं मम" इति वदन् अन्धबुद्धिर्भयावहे भवान्धकारे निमज्जति। एतेन मनसैव सृष्टि सम्वंधो दर्शितः।

श्रुतावपि यथा—

"चन्द्रमा मनसो जातश्चक्षोः सूर्योऽजायत मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा यद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा। आदित्यो ह वै प्राणो रयिरेव चन्द्रमा रयिर्वा एतत्सर्वं यन्मूर्त्तं चामूर्तं च तस्मान्मूर्तिरेव रयिः"।

"मनोऽध्यात्ममिति प्राहुर्यथा शास्त्रविशारदाः।
मन्तव्यमधिभूतं तु [चन्द्रमाश्चाधिदैवतम्।"

"अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते। धूममभिसम्भवन्ति, धूमाद्रात्रिं रात्रेरपरपक्षाद्यान् षड् दक्षिणेति"।

एतादृक् सम्बन्धस्य दैवे जगति असंवादितसत्यात्वात् श्रुतिषु स्मृतिषु चापि मनसोऽधिदैवरूपेण चन्द्रो वर्णितः। श्रुतिस्तु भगवतो मनसश्चन्द्रोत्पत्तिमवर्णयत्। स्थाने स्थाने च सृष्टिकर्त्रा ब्रह्मणा सह चन्द्रमसो मनसश्च सम्बन्धो दर्शितः। चन्द्रमसोऽमृतधारया ओषधिगणानां परिपोषकत्वात् चन्द्रेण साकं जीवजगतो विशिष्टसम्बन्धत्वाच्च श्रुतिस्तु मूर्तममूर्तमुभयविधमपि प्राकृतिकपदार्थं "रयि" शब्देन "अन्न" शब्देन प्रोवाच, रयि रपि चन्द्र एव। प्रत्येकपदार्थत्रिभावनिरूपणप्रसङ्गे स्मृतिरपि प्रोक्तवती यत् मन अध्यात्म, मन्तव्यमधिभूतम्, चन्द्रमाश्चाधिदैवमिति। चन्द्रमसा सह मनसः सर्गस्य च विशिष्टसम्बधत्वादेव भगवद्गीतायामुपनिषत्सु च

धूमयानगत्या चन्द्रलोकसम्बन्धो दर्शितः।

मासांस्तानैते संवत्सरमभिप्राप्नुवन्ति। मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा देवानामन्नं तं देवा भक्षयन्ति। तस्मिन् यावत् सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्त्तन्ते।

धूमो रात्रिस्तथा कृष्णः षण्मासा उत्तरायणम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते॥

प्लवा ह्येते आरूढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापि यान्ति॥

इष्टापूर्त्तं मन्यमाना वरिष्ठं
नान्यच्छ्रेयो वेदयन्ते प्रमूढाः।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वे-
मं लोकं हीनतरं चाविशन्ति॥

नैमित्तिकाः पितरो धूमयानगतिमिमामासाद्य धूमाभिमानिनो रात्रिदेवादीनां लोकसमूहमतिक्रमन्तश्चन्द्रलोकं गच्छन्ति। तत्र च पुण्यक्षयकालपर्यन्तमुषित्वा पुनः पृथ्वीतलमायान्ति। सकामकर्मणा चैवैतादृशी गतिरवाप्यते। नैतया सर्गप्रवाहो न वर्त्तते। मानसिकी वासनैव सर्वस्यैतस्य निदानम्। तथैव घटीयन्त्रमिव जन्ममरणचक्रे जीवो बभ्रम्यमाणो विलोक्यते। अतः किल—

मनो विसृजते भावं बुद्धिरध्यवसायिनी।
हृदयं प्रियाऽप्रिये वेद त्रिविधा कर्मचोदना॥
ऋतम्भरेति तत्र प्रज्ञा।

तपः श्रद्धे येह्युपवसन्त्यरण्ये शान्ता विद्वांसो
भैक्ष्यचर्यं चरन्तः। सूर्यद्वारेण ते विरजाः प्रयान्ति॥

दर्शनेऽत्र सृष्टिप्रवाहविस्तारकारणं मन एव समाम्नातम्। बुद्धिस्तु निश्चयात्मिकेति हेतोर्नेयं मनोवच्चञ्चला। अतो बुद्धिमवलम्ब्य जीवः सत्यासत्यं परिज्ञाय मुक्तिपथमारोहति। बुद्धिरियं क्रमशः सात्त्विकं भावमवलम्बमाना ऋतम्भरास्वरूपं दधाति तदैव साधकः स्वरूपोपलब्ध्या मुक्तिपदमधिकरोति। अतएव शास्त्रे सूर्येण सह बुद्धेरधिदैवसम्बन्धो निर्णीतः। सूर्यलोकेन साकं देवयानगतेरस्ति सम्बन्धः। अतएव विचारपरायणाः साधका इहामुत्रफलभोगेषु विवेकशीला वैराग्यमवलम्ब्य ज्ञानेन तपस्यया च देवयानगतिमासाद्य सूर्यद्वारेण ब्रह्मलोकमुपस्थाय मुक्तिपदं लभन्ते।

"यत्राऽमृतः सपुरुषो ह्ययमात्मा।"

"तद्य इत्थं विदुर्य्येये मेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाण पक्षमापूर्य्यमाणपक्षाद्यान् यद्गुदङ्ङेति मासास्तान्। मासेभ्यः सम्वत्सरं सम्वत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतां ब्रह्मगमयत्येष देवयानः पन्था इति।"

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥
आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥
यस्त्वविज्ञानवान् भवत्यक्तेन मनसा सदा।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः॥
यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः॥
विज्ञानसारथिर्यस्तु मनः प्रग्रहवान् नरः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥
एवं सर्वेषु भूतेषु गूढात्मा न प्रकाशते।
दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥

त्यज धर्ममधर्मं च तथा सत्यानृते त्यज।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज॥
त्यज धर्ममसंकल्पात् अधर्मञ्चाप्यलिप्सया।
उभे सत्यानृते बुद्ध्या बुद्धिं परमनिश्चयात्॥

गतिरियं गीतायामुत्तरायणगति नाम्ना प्रोक्ता। गतिमिमामधिगत्य साधकोऽग्निदेवस्य ज्योतिर्देवस्य अहर्लोकादिदेवानां लोकानतिक्रम्यान्ते ब्रह्मलोकमासादयति। नासौ ततः पुनरावर्तते। एवं हि सुबुद्धिप्रभावात् वासनाविमुक्तः सप्तमलोकमुपस्थाय जीवो ब्रह्मणि विलयमुपैति। सहजगतिमवलम्बमानस्तु संसारेऽत्रैव हि ब्रह्मणि विलीयते, तस्य क्रमोद्र्ध्वगत्या लयस्यावश्यकता न भवति। एतत्सम्बन्धेऽपि श्रुतिभिः स्मृतिभिश्च बुद्धेरेवलयहेतुत्वं प्रतिपादितम्। कठोपनिषदि प्रतिप्रादितं यत् शरीररथस्य आत्मैव रथी, इन्द्रियाणि हयाः, हयसंचालनार्थं मन एव प्रग्रहः, विषया एव मार्गः, सारथिस्तु बुद्धिः। एवं हि मनोबुद्धीन्द्रियादि संयुक्त आत्मैव भोक्ता। मनसश्चाञ्चल्यपरायणत्वे दुष्टाश्वयुक्तसारथिरिव जीवो दुःखमनुभवति जन्ममरणचक्रे भ्राम्यति। परन्तु सुबुद्धेः सारथेर्द्वारा रथसंचालनवत् जीवो यदा मनसश्चाञ्चल्यं दमयति, सुबुद्धेः साहाय्येन ज्ञानपथेऽग्रेसरति, तदानीमेवासौ भवभयमपास्य परपदं लभते, आत्मा किल सर्वेषु देहेषु व्याप्नोति। केवलम् ऋतम्भरयैव बुद्ध्या लभ्यते। अतो बुद्धिरेवलयहेतुः। अतः स्मार्तोऽयं सिद्धान्तो यत् त्रिगुणातीते पदे विलयार्थ-धर्माधर्म-सत्यासत्यादि सकलद्वन्द्वातीतेन भवितव्यम्। सत्यासत्यत्यागकारिणीं बुद्धिमपि परमनिश्चयद्वारा साधकस्त्यजेत्। अत एव द्वन्द्वत्यागसम्बन्धे स्मृतिकारैर्बुद्धेरेव प्राधान्यं प्रदर्शयद्भिस्तस्या एव लयहेतुता प्रतिपादिता। अतो लयसाधनं मनसैव सम्पद्यते॥१६॥

सम्प्रति सृष्टिविभागो वर्ण्यते—

## वैजी मानसी च॥१७॥

वैजी बीजसम्बन्धिनी, मानसी मनःसम्बन्धिनीति द्विविधा सृष्टिर्वेद्या। स्त्रीपुंयोगेन प्रादुर्भूता सृष्टिर्मानसीत्युच्यते। भौतिकजगदुत्पत्तिमूले दृष्टिं ददता अन्तर्दृष्टिपरायणेन मानवेनेदं ज्ञातुं शक्यते यदाणविकसंयोगप्रक्रियायामपि द्विविधशक्तिसमावेशः। स्त्रियः पुंसश्च परमाणवः परस्परं संयुक्ताः स्थूलं जगद् विस्तारयन्ति। एवं हि द्विविधशक्तिसंयोगादुभिज्जेऽपि सृष्टिक्रिया दृश्यते। भ्रमरेण वा पवनेन वा पुंरागः स्त्रीपरागेण सह सम्मिलित उद्भिज्जश्रेणीमुत्पादयति। एवं किल महामायायाः प्रभावेण वैज्याः सृष्टेः सर्वत्रैव लीलाविलासः परिदृश्यते। सर्वमिदं साधारणसृष्टेरर्गन्तमेवधेयम्। परन्तु मानससृष्टेरधिकारः साधारणतामतिशेते। इयं विशिष्टा सृष्टिरवधेया। उद्भिज्जस्वेदजाण्डजजरायुजेषु, सर्वाङ्गकोषपरिपूर्णेषु मानवेषु च वैज्यासृष्टेरेव प्राधान्यम्। स्त्रीपुरुषसंगमसमुद्भवा वैजी सृष्टिः किलासु योनिषु परिदृश्यते। मानसी सृष्टिस्तु देवलोकसाक्षात्सम्बन्धनिबन्धना। अतो देवाः स्वेच्छामनुसृत्यैव सृष्टिं कुर्वन्ति। सर्वेऽपि देवलोका मानससृष्टि वैभवस्वरूपा अवगन्तव्याः। समुन्नतयोगिषु चापि मानससृष्टिविधानयोग्यता तिष्ठति। सर्वमेतद् योगशास्त्राणि सुस्पष्टं प्रमाणयन्ति, साधारण्येन मानससृष्टेरधिकारः पञ्चकोषपरिपूर्णमनुष्यदेह एव प्रादुर्भवति। समुन्नतयोगिषु तत्परिपूर्णता भवति। एतत् उदाहरणं पुराणप्रतिपादित महर्षि विश्वामित्रचरित्रमेवास्ते। श्रुतिषु स्मृतिषु चापि प्रजातन्तुविस्तारविषये बहुत्र स्थानेषु असाधारणमानससृष्टेर्विलासकथा प्राप्यते। तथाहि श्रुतौ—

"मनसा साधु पश्यति मानसाः प्रजा असृजन्त"

महाभारतेऽपि—

आदिदेवसमुद्भूता ब्रह्ममूलाऽक्षया व्यया।
सा सृष्टिर्मानसी नाम ब्रह्मतन्त्रपरायणा॥
इति॥१७॥

पुनरपि द्विविधां सृष्टिं वर्णयति—

**काचिदायत्ताप्यव्यक्ते काचिदन्यस्य ॥१८॥**

काचिद् वैजी सृष्टिः प्रकृतेरधीना, मानसी तु न तदधीना सा तु दैवाधीना वेद्या। मानवयोनितः प्राग्वर्त्तिनीषु उदभिज्जादियोनिषु वैज्या सृष्टेरधिकारः। यतो मानवेतरजीवाः प्रकृतेरधीनतां भजन्तः सर्गं विस्तारयन्ति। बुद्धितत्त्वविकासाभावात् उद्भिज्जस्वेदजाण्डजजरायुजान्तर्गता सर्वेऽपि जीवाः प्राकृतिकसृष्टिप्रवाहविस्तारनियमान् नोल्लङ्घितुं क्षमाः। तेषामाहारनिद्रामैथुनादीनि कर्माणि प्रकृत्यधीनानि भवन्ति। एतेषु नूतनः संकल्पो नवीना वासना वा नोद्भवति। यदा प्राकृतिकनियममनुसृत्य सृष्टिविस्तारप्रयोजनीयता समापतति, तदानीं तेषु समुद्भूतः कामः सृष्टिं वितनुते। तेषां किल सृष्टिविस्तारकार्यं स्वायत्तं न भवति, प्रत्युत प्रकृतेरधीनं वेद्यम्। अतो वैजीसृष्टिः प्रकृत्यधीना। समुन्नतमनुष्ययोनिमारभ्य सर्वेष्वपि देवेषु मानससृष्टेरधिकारो जायते। पञ्चकोषापरिपूर्णतया उद्भिज्जादि चतुर्विधभूतसंघेषु केवलं वैज्याः सृष्टेरेव विलासः। एतद्व्यतिरिक्तचतुर्दशभुवनव्याप्तबहुविधदेवजीवेषु मानसी सृष्टिरेव कार्यकारिणी विलसति ॥ १८ ॥

मानवयोनेः सर्वाभ्यर्हितत्वमाचष्टे—

**स्वतन्त्रा मनुष्याः परतन्त्रास्त्वन्ये ॥१९॥**

मानवास्तु स्वाधीनाः सन्ति, न तद्भिन्नाः। चतुर्विधजीवसंघसृष्टिषु वैज्याः सृष्टेरेव सम्बन्ध इति प्रतिपादिति पूर्वम्, परन्तु मनुष्ये तु वैज्याः मानस्याश्च प्राधान्यत्वात् पूर्णसम्बन्धविद्यमानत्वात् मनुष्यस्य सर्वश्रेष्ठता सिध्यति। अतः कारणादेव कर्मविधाने मानवः स्वाधीनः अन्यश्च पराधीन इति। वेदान्तसिद्धान्तप्रतिपादित पञ्चकोषविज्ञानासंयमेनेदं विज्ञायते यत् प्रकृतेर्निम्नस्तरमारभ्य क्रमोद्ध्र्वस्तरेषु चापि शनैः शनैः कोषविकासमाप्नुवन्ति। तथाहि—उद्भिज्जेषु अन्नमयस्या स्वेदजेषु अन्नमयप्राणमययोः, अण्डजेषु अन्नप्राणमनोमयानां, जरायुजपशुषु अन्न-प्राणमनो विज्ञानमयानां, मनुष्येषु अन्नप्राण-मनो-विज्ञानानन्दमयानां पञ्चानामपि कोषाणां विकासः परिलक्ष्यते। पञ्चमस्यानन्दमयस्य कोषस्य तु मानवेष्वेव विकासः। अत एवानन्दस्य स्थूललक्षणानि हास्यादीनि मनुष्येष्वेव समुपलभ्यन्ते। एवं हि पञ्चानामपि कोषाणां सम्यग् विकासहेतुना बुद्धिजीविनो विचारकुशला मानवाः प्रकृतावाधिपत्यलाभेन स्वाधीना जायन्ते। मनुष्यव्यतिरिक्ताः प्राणिनस्तु बुद्धिविकाशाभावात् नैव स्वातन्त्र्यं लभन्ते। अतएव ते पूर्णरूपेण प्रकृतेरधीनत्वात् पापपुण्याधिकारणो न भवन्ति। परन्तु मानवास्तु विचारबुद्धिशालित्वात् पापपुण्यभागिनो धर्माधर्मनिर्णयं कुर्वन्तोऽध्यात्मिकीं समुन्नतिं लभन्ते। अतः कारणादेव मनुष्यजन्मनः श्रेष्ठत्वं शास्त्रेषु प्रतिपादितमुपलभ्यते। तथाहि—

मानुषेषु महाराज धर्माधर्मौ प्रवर्त्तितौ।
न तथाऽन्येषु भूतेषु मनुष्यरहितेष्विह॥
उपभोगैरपि त्यक्तं नात्मानं सादयेन्नरः।
चाण्डालत्वेऽपि मानुष्यं सर्वथा तात शोभनम्॥
इयं हि योनिः प्रथमा यां प्राप्य जगतीपतेः।
आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः॥
कथं न विप्रणश्येम योनितोऽस्या इति प्रभो!
कुर्वन्ति धर्मं मनुजाः श्रुतिप्रामाण्यदर्शनात्।
यो दुर्लभतरं प्राप्य मानुष्यं द्विषते नरः।
धर्मावमन्ता कामात्मा भवेत्स खलु वध्यते॥

एवं हि श्रुतावपि गवाश्वादितुलनायां मनुष्यस्य सर्वश्रेष्ठता प्रतिपादिता। अन्य जीवेषु स्वाधीनकार्यकर्तृत्वं नास्ति अतः प्रकृतिमातैव तान् निजाधीनान् विधाय, समुन्नमयति मुक्तप्रद मानवयोनिं च प्रापयति, वैज्या मानस्याश्च सृष्टेर्विधाने मानवा एव समर्थाः पञ्चकोषविकासपरिपूर्णा धर्माधर्माधिकारसम्पन्नाः। अतएव मनुष्याः स्वाधीना अन्ये च पराधीनाः सन्ति।

विशेषतया साधकलक्षणं निर्दिशति—

**बुद्धयुन्नतिशीलः साधकः ॥ २० ॥**

बुद्धौ बुद्धिराज्ये समुन्नतिशीलो मानवः साधकः प्रोच्यते। साधको यथा आध्यात्मिके जगति समुन्नतिं लभते, तथा तत्र विशुद्धा बुद्धिर्विकसति तत्सम्बद्धकार्यकलापलक्षणं च परिदृश्यते। प्रकृतिर्निम्नस्तरजीवैः सह तदुच्चतरश्रेणिस्थितजीवानामात्मनो भेदस्यात्यन्ताभावेऽपि त्रिगुणमय्याः प्रकृतेर्गुणविकाशतारतम्यमनुसृत्यैव द्वैतता ज्ञेया। अनन्तवैचित्र्य च विजृम्भते। प्रकृतेर्निम्नतरस्तरसमूहे तमोगुणविकासाधिक्याद् बुद्धेर्ज्ञानस्य च विकासो न दृश्यते। परन्तु जीवो यथा-यथा प्रकृतिराज्ये समुन्नमन् आत्माभिमुखमग्रेसरति तथातथासौ तमोगुणावरणविमुक्तः विकसितसत्वगुणो बुद्धेर्ज्ञानस्य च विकासमासादयति। अस्मादेवकारणात् मानवानां मानवेतर-जीवसमूहेन सह मनुष्यान्तरेण च साकं ज्ञानविकासपार्थक्यमनुसृत्य उच्चावच मानवभेदः परिलक्ष्यते। प्रथमदशायां तु मनुष्योऽज्ञानकारणात् पशुसमानस्तिष्ठति, पश्चाच्च क्रमोन्नत्या शनैः शनैः मानवत्वमुज्जृम्भते। एतत् मानवत्व-विकासपरिचायकाः किलाऽऽर्यानार्यभेदा वर्णभेदाश्चावगन्तव्याः एवं हि मनुष्यत्वस्य समुन्नते सोपानमधिरोहन् धर्माधमतत्त्वमधिगच्छन् शुद्ध्यशुद्धिविवेकसाहाय्येन यदा मानवोऽध्यात्मिकीं समुन्नतिं भजते तदानीमेवासौ साधकपदवीं प्राप्नोति। साधकः कर्मपथपथिको वा स्यात् उपासनासम्बन्धीय भक्तियोगस्याधिकारी वा भवेत् किं वा ज्ञानकाण्डीयश्रवणमननिदिध्यासनरूपपुरुषार्थमवलम्बमानो वा स्यात् सर्वत्रैव सिद्धान्तमिममनुसृत्यैव साफल्यमधिगच्छतीत्यत्र नास्त्यणीयानपि सन्देहः। साधकसाधनयोरन्योन्यं स्वविधात्मोन्नतिशीलमार्गस्य साक्षात् सम्बन्धो वेद्यः। कर्ममार्गे बुद्धेः समुन्नतिशीलत्वमेव सर्वाभ्यर्हितमभिप्रेतम्। यतो निष्कामकर्मयोगएव कर्ममार्गस्यान्तिमो लक्ष्यभूतः। उत्तरोत्तरं बुद्धितत्वोदयमन्तरेण कर्मयोगाधिकारो नासाद्यते। यतो बुद्धितत्त्वक्रमोन्नतिमन्तरा वासनानाशः कर्त्तव्यपरायणता च न भवितुमर्हतः। ऋते चैताभ्यां साधको निष्कामकर्मयोगिनो लोकातीत पदमधिगन्तुं न प्रभवति। मन्त्रहठलयराजाख्ययोगचतुष्टयेषु चान्तिमलक्ष्यभूतो राजयोग एव, स च विचारप्रधानः समुन्नतिशीलयैव बुद्धया साध्यते, तर्हि स्वीकर्त्तव्यमेव यत् योगमार्गेऽपि स एव सिद्धान्तोऽभिप्रेतः। भक्तिसिद्धान्ते त्वेतत् स्वीकृतमेव यत् स्वेष्टसम्बन्धीय ज्ञानाभिवृद्धिरेव भगवद्भक्ति समुन्नति सहायिका चेति॥ २०॥

साधकलक्षणनिर्देशानन्तरं साधनलक्षणे निरूपयति—

**सृष्टिनिवर्त्तकं लयोन्मुखताप्रवर्त्तकं साधनम् ॥२१॥**

यतो हि—

भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धि जीविनः।
बुद्धिमात्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः॥
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः॥
तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः।
गुणागुणेषु वर्त्तन्त इति मत्वा न सज्जते॥
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्॥

शनैः शनैरुपरमेत् बुद्ध्या धृतिगृहीतया।
विचारबुद्धेः प्राधान्यं राजयोगस्य साधने।
उपलब्धमहाभावा महाबोधान्विताश्च वा।
महालयं प्रपन्नाश्च तत्वज्ञानावलम्बतः॥
योगिनो राजयोगस्य भूमिमासादयन्ति ते॥
तेषां हि नित्ययुक्तानां भजतो प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥
एष सर्वेषु भूतेषु गूढात्मा न प्रकाश्यते।
दृश्यते त्वग्रया बुद्ध्या सूक्ष्मात्मा सूक्ष्मदर्शिभिः॥

फलाभिसन्धिविरहितकर्मयोगस्य यैर्यैरुपायैः सृष्टि-कार्यं निवर्त्तते प्रकृतेश्च लयाभिमुखिनी गतिः सम्पाद्यते, तन्नाम साधनमिति। कर्मयोगस्य, भक्ति-योगस्य, ज्ञानयोगस्य, मन्त्रादियोगचतुष्टयसाधनस्य वा क्रियाकलापेषु सृष्टिनिवर्त्तको लयोन्मुखता प्रवर्त्तकश्च भावोऽवश्यमधिगम्यते। जीवेन कर्मणैव बन्धो मोक्षो वा प्राप्यते। ग्रन्थेः बन्धने मोचने चोभयत्र हस्तचालनस्यावश्यकत्वम्; किन्तु एकेन हस्तचालनप्रकारेण ग्रन्थेर्बन्धनं द्वितीयहस्तचालन-प्रकारेण ग्रन्थिमोचनं यथा जायते, तथैव वासनामय कर्मणा सृष्टिप्रवाहविस्तारः संसारचक्रे च परिभ्रमणं भवति, निष्काम-वासनाविरहित-पवित्रकर्मसमूहेन जगच्चक्रविघूर्णनं निवर्त्तते, जीवश्च मुक्तिं लभते। येनैतादृशजन्ममृत्युमयसंसारो निवर्त्तते, मानवश्च मुक्तिभूमावग्रेसरति तदेव साधनमुच्यते॥२१॥

साधनतत्त्वनिर्णयाय सृष्टिलयहेतुरुच्यते—

**अज्ञानचाञ्चल्याभ्यां सृष्टिर्ज्ञानधैर्याभ्यां लयः॥२२॥**

अज्ञानं च चाञ्चल्यं च ताभ्यां सृष्टिः, ज्ञानधैर्याभ्यां तु लयः सम्पद्यते। तथाहि—

स एव मायापरिमोहितात्मा
शरीरमास्थाय करोति सर्वम्।
स्त्रियन्नपानादिविचित्रभोगैः
स एव जाग्रत्परितृप्तिमेति॥

नकर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥

आत्मन्यनात्मज्ञानं असति सत् ज्ञानमेवाज्ञानम्। अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्याति-रज्ञानम्। एतत्पदार्थयाथातश्च स्वरूपपरिचय एव ज्ञानमुच्यते। शरीरमनो बुद्धीनां तदेकस्य वा व्यर्थ-चालनमेव चाञ्चल्यम्। तच्चाञ्चल्याभाव एव धैर्यम्। आत्मानात्मविवेकशून्यतया मिथ्यामायामयसंसारस्य वास्तविकता स्वीकारेण तत्रासक्तिरेव सृष्टिविस्तारकार-णमज्ञानम्। जीवो मायामुग्धो देहान् बिभ्रत् स्रक्चन्दन-वनितादि भोगेषु रमते। गीतोक्तिमनुसृत्य जीवस्य कृते परमात्मा कर्तृत्वं वा कर्म वा किम् न सृजति। अज्ञानेनाच्छन्ने ज्ञाने जीवो मोहग्रस्ततामुपैति। अज्ञानजनिता देहात्मबुद्धिश्चित्ते चाञ्चल्यमुत्पादयन्ती जीवान् संसारजाले निपातयति। जीवानां वासनावासित-चेतसु तादृशसंसारविस्तारो वोभूयते। अत एव स्मृतिकारैरुच्यते यत् चञ्चलं चित्तमेवानेकत्वसृष्टिं विदधत् सात्त्विकराजसिकतामसिकरूपतो विविधां क्रियां सृजति, येन कर्ममयप्रपञ्चोविस्तृतिमापद्यते। चञ्चलेन मनसा तादृशसम्बन्धसंयुक्तत्वादेव निर्वि-कारस्याप्यात्मनो बन्धनदशा समुत्पद्यते। ज्ञानधैर्यादि विकाशेन बन्धनावस्था तिरोदधाति मुक्तिरप्या-साद्यते। ज्ञानोदयेनाज्ञानजनिता देहात्मबुद्धिर्विगलति जीवश्च संसाराद् विमुच्यते। सांसारिकमिथ्याभोगादितो विरतं चित्तं परमात्मसाक्षात्कारसाधनेषु प्रवर्त्तते।

अन्ते च जीवो मुक्तिपदमासादयति। यथोक्तमुपनिषदा—

मनो गुणान् वै सृजते बलीय-
स्ततश्च कर्माणि विलक्षणानि।
शुक्लानि कृष्णान्यथलोहितानि
तेभ्यः सवर्णाः सृतयो भवन्ति॥
अनीह आत्मा मनसा समीहता
हिरण्मयो मत्सख उद्विचष्टे।
मनः स्वलिङ्गं परिगृह्य कामान्
जुषन् निबद्धो गुणसंगतोऽसौ॥
आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
ज्ञाननिर्मथनाभ्यासात् पापं दहति पण्डितः॥
ज्ञात्वा देवं सर्वपाशापहानिः
क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः।
ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यते निष्कलं ध्यायमानः॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥
तद्विज्ञानेन परिपश्यन्ति धीराः
आनन्दरूपममृतं यद्विभाति।
तमेव धीरो विज्ञायाऽतिमृत्युमेति॥

एवं किल योगी धैर्यमावहन् सात्त्विकीं धृतिमवलम्बमानः सर्वभूतेषु परमात्मनोऽद्वैतसत्तामनुभवन् मुक्तिपदमधिकरोति। धैर्यं किल विषयविलासचाञ्चल्याद् बुद्धिं विमोचयति साकमात्मनाचैकतानतां प्रयच्छति, येन परमात्मलीनबुद्धिना साधकेन निःश्रेयसमासाद्यते। ज्ञानं तु प्रकाशमयम् चाञ्चल्यं च तं प्रकाशमाच्छाद्याऽऽत्मोन्नतिपथं कण्टकाकीर्णं विधत्ते। शारीरिकी, मानसिकी बौद्धिकी वा चञ्चलता ज्ञाननाशहेतुर्भूत्वा हृदये ह्यात्मचैतन्य-प्रकाशबाधिका जायते। सुतरां किं विधेऽपि चाञ्चल्ये विद्यमाने मुक्तिद्वारमावृतं भवति, धैर्ये च समुदीयमाने मुक्तिद्वारमपावृतं जायते। अतो यथा यथा साधके चाञ्चल्यं ह्रासमुपैति, तथा तथा तत्र धैर्यमाविर्भवति येन तदीयमन्तःकरणं लयोन्मुखतां प्रपद्यते। मुमुक्षुः साधकः कर्मोपासनाज्ञानाख्ययोगानां साहाय्येन त्रिविधां शुद्धिं सम्पादयन् यावदज्ञानमपसारयति तावदेव ज्ञानज्योतिः स्वीयेऽन्तःकरणे विकासयन् मुक्तिभूमेरभिमुखमग्रेसरति। मलं, विक्षेप, आवरणं चेति त्रीणि मुक्तिद्वाररोधकानि। त्रयाणामपि चाञ्चल्यमज्ञानं च वर्द्धकं भवति धैर्यं ज्ञानं च नाशकमवधेयम्। ज्ञानं धैर्यं च यथा यथा साधकोऽधिगच्छति, तथा तथाऽसौ कैवल्यभूमावग्रेसरति। फलतश्चाञ्चल्याज्ञाने सृष्टिप्रवाहं वर्धयतः, ज्ञानधैर्याभ्यां च सृष्टिप्रवाहो निवर्त्तते, लयरूपं मुक्तिपदमुदेति चेति॥ २२॥

साधननिष्पत्तिः प्रोच्यते—

## प्रवृत्तिनिवृत्त्यवलम्बनात्॥ २३॥

प्रवृत्तिश्च निवृत्तिश्च तयोरवलम्बनात् साधननिष्पत्तिर्जायते। प्रवृत्तिनिवृत्तिभेदेन साधनप्रकारो द्विविधः। प्रथमः प्रवृत्तिसहगामी कामनासंपर्कसंयुक्तः, द्वितीयश्च निवृत्तिसहयोगी निष्कामभावमूलकः। सृष्टिनिवर्त्तनकरी लयोन्मुखतासम्पादिका क्रियैव साधनशब्द वाच्येति प्रागुक्तम्। अभ्युदयराज्य भागद्वय विभक्तम्। रजस्सत्त्वमयं शुद्धसत्त्वमयं चेति। आद्येन ऐहलौकिकपारलौकिकाभ्युदयावाप्तिः, द्वितीयेन च निःश्रेयसाधिगमः। उक्तं च पूज्यपादमहर्षिणा कणादेन—"यतो निःश्रेयससिद्धिः स धर्मः" इति। एतत्क्रमानुरोधेन साधनमपि द्विधा विभक्तम्। साधके यावत् सत्त्वगुणेन साकं रजोगुणसम्बन्धस्तिष्ठति तावदसौ प्रवृत्तिपथपथिका मन्यते, यदा च तदीयमन्तःकरणशुद्धसत्त्व-

गुणमयं जायते, तदासौ निवृत्तिमूलकसाधनाधिकारी जायते। अतएव पूज्यपादेन सूत्रकृता साधनस्य द्वैविध्यमुक्तम्—

द्वावेव पन्थानावनुनिष्क्रान्ततरौ भातः।
क्रियापथश्चैव पुरस्तात् संन्यासश्च।
प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥

प्रवृत्तिस्तु अभ्युदयप्रदा परम्परया च निःश्रेयससहायिका, निवृत्तिस्तु साक्षान्निःश्रेयसकरी। वैदिकविज्ञानानुमोदितस्य साधनस्य कौशलपूर्णेनावलम्बनेनानुष्ठानात् उभयोरपि मार्गयोः परमं कल्याणं संसाध्यते। अतो द्वाभ्यामपि साधननिष्पत्तिः। अतः श्रुतिस्मृतिषु मार्गद्वयस्योपदेशः॥ २३॥

द्विविधसाधनपरिणामं व्याचष्टे—

**उभयत्र त्रिविधशुद्धावपि प्रत्यूहतारतम्याच्च गौणी मुख्याऽपरा तु॥ २४॥**

उभयत्र प्रवृत्तिनिवृत्तिरूपयोरुभयोरेव साधनयोस्त्रिविधशुद्धिसत्त्वेऽपि प्रत्यूहस्य विघ्नस्य तारतम्यात् प्रथमा प्रवृत्तिः गौणी, अपरा निवृत्तिस्तु मुख्याऽवगन्तव्या। विघ्नबाहुल्यात् प्रवृत्तिमार्गसाधनानि गौणानि, प्रत्यूहाभावाच्च निवृत्तिमार्गसाधनानि सरलान्यतो मुख्यानि। प्रकृतिसम्बन्धतारतम्यमनुसृत्य मायातीतः परमात्मा त्रिभिर्भावैःपरिलक्षित इति प्रागेव निर्णीतम्। परमात्मनः प्रकृतेरतीतो भावोऽध्यात्मसंज्ञकः, प्रकृतेरीक्षणेन सम्बद्धोऽधिदैवाख्यः, प्रकृतिवैभवविलासमयः स्थूलस्त्वधिभूताह्वयो विज्ञातव्यः। भावत्रयमेतद् ब्रह्मेश्वरविराट्संज्ञया गीयते। कारणे ब्रह्मणि समुल्लिखितभावत्रयविद्यमानतयैव कार्यब्रह्मस्वरूपायाः सृष्टेः प्रत्येकाङ्गे भावत्रयं परिदृश्यते। पूर्णो द्रष्टा प्रत्येकमपि वस्तु भावत्रयेण पश्यति। स्मृतिशास्त्रे भावत्रयविज्ञानं विशिष्य प्रोक्तम्। तथाहि—पादेन्द्रियमध्यात्मं, गन्तव्यमधिभूतम्, विष्णुरधिदैवम्। पाणीन्द्रियमध्यात्मं, कर्त्तव्यमधिभूतम्, इन्द्रोऽधिदैवम्। वागिन्द्रियमध्यात्मं, वक्तव्यमधिभूतम्, अग्निरधिदैवम्। मन अध्यात्मं, मन्तव्यमधिभूतम्, चन्द्रमा अधिदैवम्। बुद्धिस्तत्त्वमध्यात्मं, बोद्धव्यमधिभूतम्, क्षेत्रज्ञोऽधिदैवमित्यादि। तथाहि—

पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः।
गन्तव्यमधिभूतं च विष्णुस्तत्राधिदैवतम्॥
चक्षुरध्यात्ममित्याहुर्यथा श्रुतिनिदर्शिनः।
रूपमत्राधिभूतं तु वह्निस्तत्राधिदैवतम्॥
हस्तावध्यात्ममित्याहुर्यथासंख्यानदर्शिनः।
कर्त्तव्यमधिभूतं तु इन्द्रस्तत्राधिदैवतम्॥
वागध्यात्ममिति प्राहुर्यथा श्रुतिनिदर्शिनः।
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम्॥
मनोध्यात्ममिति प्राहुर्यथा शास्त्रविशारदाः।
मन्तव्यमधिभूतं तु चन्द्रमाश्चाधिदैवतम्॥
बुद्धिरध्यात्ममित्याहुर्यथावदभिमर्शिनः।
बोद्धव्यमधिभूतं तु क्षेत्रज्ञश्चाधि दैवतम्॥ इति॥

प्रत्येक पदार्थे भावत्रयविद्यमानता। त्रिविधभावपरिपूर्णतयैव प्रत्येक पदार्थपरिपूर्णता संसाध्यते। अतो हि कार्यब्रह्मणः प्रधानाङ्गभूते मानवशरीरेऽपि भावत्रयमुपर्युक्तं विद्यते इति निःसन्दिग्धम्। मानवस्य पूर्णतामुक्तिश्च अध्यात्माधिदैवाधिभूताख्य त्रिविधभावानां शुद्धया परिपूर्णतया सम्पद्यते, नान्यथा। दर्शनेऽत्र साधनापथं द्विधा विभज्य विघ्नानां बहुलताऽल्पताभ्यां प्रवृत्तिमार्गस्य गौणतायां निवृत्तिमार्गस्य मुख्यतायां ख्यापितायामपि, एतदुभाभ्यामेव सम्पादिता त्रिविधशुद्धिः साक्षाद्रूपेण परम्परया वा साधकेभ्योऽपवर्गं प्रयच्छतीति राद्धान्तो विवृतः।

त्रिविधशुद्धिमत्तरा साधनसिद्धिरसम्भवा। तदभावात् मानवः साधको भवितुं नार्हति। त्रिविधशुद्धि-सम्बन्धसत्त्व एव साधकः क्रमोन्नतिं लभते, नान्यथा। अध्यात्मशुद्धया बुद्धिः, अधिदैवशुद्धया मनः, अधिभूत-शुद्धया च शरीरं क्रमशः सत्त्वगुणमयतां प्रपद्यन्ते। अध्यात्मशुद्धया आवरणस्य, अधिदैवशुद्धया विक्षेपस्य, अधिभूतशुद्धया च मलस्य नाशो जायते। एवं हि त्रिविधसाधनेन क्रमोन्नतिरबाधा तिष्ठति। फलतो रजोगुणसम्बन्धात् प्रवृत्तिसाधनं गौणं शुद्धसत्त्वसम्बन्धाच्च निवृत्तिसाधनं मुख्यमाम्नातम्। वासनावासितत्वाद् प्रवृत्तिमार्गः पङ्किलः, अत्र पदे पदे स्खलन सम्भावना। किन्तु निवृत्तिमार्गो वासनालेशशून्यत्वान्निर्बाध सरल इत्यत्र नास्ति सन्देहः। द्विविधेऽपि मार्गे त्रिविधशुद्धेरपेक्षिता, परमियान् भेदो यत् प्रवृत्तिमार्गे त्रिविधायाः शुद्धेः पूर्णता पराकाष्ठां नासादयति निवृत्तिमार्गे तु शुद्धित्रयपरिपूर्णता जायत एव। सूत्रेऽत्र अपिशब्द एतद्विज्ञानपरिचायकोऽवधेयः॥२४॥

साधनसौकर्य्याय निवृत्तिमार्गंत्रिविधशुद्धिरुदीर्य्यते—

**निवृतौ स्वाध्यायोपासना कर्मयोगैस्त्रिविध-शुद्धिः॥२५॥**

निवृत्तिपथपरायणशीलः साधकः स्वाध्यायेन, उपासनया कर्मयोगेन च त्रिविधा शुद्धि सम्पादयितु-मर्हति। वेदस्तदनुमोदितशास्त्राणां मननपूर्वकमध्ययनेन स्वाध्याय उच्यते। भक्तियोगसाहाय्येन भगवत्सान्निध्यलाभाय यत्न एवोपासना। वेदतत्सम्मतशास्त्र-विहितकर्मणा निष्काममनुष्ठानमेव कर्मयोगः। कर्मोपासना स्वाध्यायप्रसूतज्ञानेन त्रिभावशुद्धि-पूर्वकं साधका विमुच्यते। परमात्मनः सच्चिदानन्द-सत्तायाः प्रकृतिराज्ये सर्वत्रैव विद्यमानत्वात् प्रत्येकजीवजीवत्वेन साकं तत् विशिष्टः सम्बन्धः, किन्तु अविद्यावरणस्यैव जीवतत्त्वनिदानत्वात् जीवभावे त्रिविधसत्ता प्रच्छन्ना तिष्ठति। अविद्यावरणविमोचनेन साकं सच्चिदानन्दसत्ता क्रमशो विकसति, आवरणस्य पूर्णरूपेण नाशे सति जीवभावः प्रणश्यति। तदैव साधकः सच्चिदानन्दस्वरूपो जायते। एतदावरण-मोचनार्थं यत्न एव साधनमुच्यते। सच्चिदानन्दः परमात्मा स्वयं प्रकाशस्वरूपः तत्प्रकाशनार्थ-मुपायान्तरं नापेक्ष्यते। केवलं प्रकाशबाधकावरणे दूरीभूते मेघमुक्तो दिनमणिरिव सच्चिदानन्दभावः समुपलभ्यते। साधनस्य द्विविधौ प्रवृत्तिनिवृत्तिमार्गौ विविधविधिविहितौ साधक चेतसोऽविद्यान्धकार-मपसार्य समुन्नतिमार्गं निष्कण्टकं विधत्तः। सूत्रेणै-तेन निवृत्तिमार्गे त्रिविधशुद्धेरुपायो वर्णितः। शरीर-मलनाशः अधिभूतशुद्धेः, विक्षेपविनाशेन मनश्चा-ञ्चल्यह्रासोऽधिदैवशुद्धेः, बुद्धेरावरणप्रणाशश्चाध्यात्म-शुद्धेः फलमवगन्तव्यम्। एतत्त्रितये सम्पद्यमाने साधने सफल्यमासाद्यते। निवृत्तिमार्गे कर्मोपासनाज्ञानद्वारा त्रिविधा शुद्धिः सम्पद्यते। यथाचोक्तं स्मृतौ—

योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कश्चन॥
मार्गास्त्रयो मे विख्याता मोक्षप्राप्तौ नगाधिप।
कर्मयोगो ज्ञानयोगो भक्तियोगश्च सत्तम!॥

कर्मणाऽधिभूतशुद्धिम्, उपासनयाऽधिदैवशुद्धिं, ज्ञानेन चाध्यात्मशुद्धिं सम्पाद्य साधकः सच्चिदानन्द-रूपतां प्रतिपद्यते। पुनर्न तस्य जीवत्वबन्धनं तिष्ठति। कर्मणा सह स्थूल जगतः सम्बन्धत्वात् निष्कामेन कर्मणा परमात्मनः सत्सत्ता समुपलभ्यते। निष्कामः कर्मयोगी साधकः स्वीयां सत्तां शनैः शनैः विस्तारयन् परमात्मनो विश्वव्यापिन्या सत्तया सहैकीभावं प्रपद्यते। तदीयं जीवनं विश्वजीवनेन साकमेकी भवति। साधको

भगवतो विराट्स्वरूपमाधिभौतिकं भावं स्वात्मन्यनुभवति। उपासनया सह परमात्मन आनन्दभावस्य विशिष्टसम्बन्धत्वाद् योगी भक्तो विषयानन्दविरतः संसारतरुमूलकारणभूतस्य भगवत आनन्दकन्दस्य चरणसरोरुहं शरणीकुर्वन् तदीयं व्यापकमधिदैवभावमानन्दमयमुपलभते। ज्ञानेन सह परमात्मनश्चित्सत्ताया विशिष्टसम्बन्धत्वात् साधकः स्वाध्यायबलेन वेदादिज्ञानगर्भशास्त्राणां गभीरतत्त्वं हृदयङ्गमं कुर्वाणः परिपूर्णं ज्ञानमासाद्य अध्यात्मभावमयं भगवतश्चिद्भावमधिगच्छति। एवं किल कर्मयोगेनाधिभौतिकीं उपासनयाऽऽधिदैविकीं, स्वाध्यायेन चाऽऽध्यात्मिकीं शुद्धिं लभमानः त्रिविधभावमयं सच्चिदानन्दरूपं भगवन्तमधिगत्य साधको निःश्रेयसपदवीं प्रतिष्ठते।।२५।।

प्रवृत्तिमार्गे त्रिविधशुद्धिस्वरूपं वर्ण्यते—

**अध्यात्मचिन्तनशक्तिपूजनभावशुद्धिभिरितरत्र ।।२६।।**

इतरत्र प्रवृत्तिमार्गे अध्यात्मविचारेण शक्तिपूजया, भावशुद्ध्या च त्रिविधशुद्धिः सम्पाद्यते। समस्तानां कार्याणामाध्यात्मिककारणान्वेषणप्रवृत्तिरेवाध्यात्मचिन्तनमुच्यते। यथा किल ब्रह्मेश्वर विराट्संज्ञकेषु त्रिषु भावेषु अन्यभावकारणत्वाद् ब्रह्मभाव एवाऽऽध्यात्मिकः परिगण्यते तथैव सर्वेषु पदार्थेषु कार्येषु च तन्मूलकारणाध्यात्मभावाभिमुखं सदैव साधकलक्ष्यस्थिरतया तदीय क्रमोन्नतौ बाधाभावः, सर्वकारणस्वरूप परमात्मनोऽभिमुखं तद्गतिः स्थायिनीतिहेतोस्तदीयान्तःकरणतः प्रवृत्तिमार्गाधिकारलोपे जाते तदन्तःकरणं निवृत्तिभूमिमधिरोहति। अतोऽध्यात्मचिन्तनाधिकारः सर्वमतिशेते। यत्र जातौ अध्यात्मचिन्तनं सर्वोत्कृष्टं मन्यते सा आर्यजातिरितिशास्त्रैरुद्घुष्टम्। धर्मशक्तिर्जीवस्य जीवनधारां नियम्य जगदादिकारणसच्चिदानन्दसमुद्राभिमुखं प्रवहतीति हेतोर्मानवस्य प्रत्येकाचारव्यवहारादि कार्यकलापे आध्यात्मिकः सम्बन्धो विद्यते। प्रत्येकमपि कार्यं धर्मभावविरुद्धानुष्ठानेनाधोगतिनिदानम्, प्रकृतिप्रवाहानुकूलं तत् मुक्तिहेतुः। यथा बीजे वृक्षस्य पूर्णशक्तिस्तिष्ठति,तथैव प्रत्येककार्ये मोक्षप्रदायिनी शक्तिर्विराजते। तत्तत्त्वमनुसन्धाय क्रमोन्नतेरनुष्ठानमेवाध्यात्मचिन्तनम्। तद्द्वाराऽध्यात्मशुद्धिः सम्पद्यते। श्रीमतो भगवतः स्थूलसूक्ष्मशक्तिसमूहस्य स्वेष्टदेवसम्बन्धतः पूजैव शक्तिपूजनमुच्यते। शक्तिशक्तिमतोरभेद इत्येतद्दर्शनसिद्धान्तः। यावत्साधकस्यान्तःकरणं ब्रह्मभावभावितं न भवति, तावदसौ प्रवृत्तिमार्गमाश्रित्य ब्रह्मणस्त्रिविधशक्तेः सप्तविधविशिष्टशक्तिस्वरूपाणां विभूतिप्रभृतीनामवलम्बनेन स्वकीयान्तःकरणे शक्तिं लभमानः स्वीयं विक्षेपं विदूरयन् निजान्तःकरणं योगमुक्तं विधातुं क्षमते। शक्तेरुपासनया शक्तिलाभः। अन्तःकरणस्य शक्तियुक्तत्वे चित्तविरोधयोग्यता समधिगम्यते। तयाच योग्यतया साधकस्याधिदैवशुद्धिः स्वतः सिध्यति। सर्वव्यापकस्य सर्वशक्तिमतो भगवतः शक्तौ सर्वत्र व्याप्तायामपि केन्द्रभेदेन तद्विकाशो महत्त्वमादधाति। एवं विकासं प्राप्ता दैवीशक्तिर्देवदेवीस्वरूपेण जगतीतलेऽत्र बहुधा फलदायिनी भवति। तस्यां पूज्यत्वबुद्धि द्वाराऽधिदैवशुद्धिर्लभ्यते।

नैसर्गिकतीव्रतरवासनाप्राप्त भोग्यपदार्थानां शुद्धभावनया सदुपयोग एव भावशुद्धिः। वासना तु भोगवासिता मानवमधिकाधिकं संसारपङ्के निपातयति। अतो वासना भोगद्वारा न नाशयितुं शक्यते। सा तु घृताहुतो वह्निरिव पुनः पुनः प्रवर्धत एव। अतः सुकौशलपूर्णसाधनावलम्बनमन्तरेण नैसर्गिकवासनापरायणमानवस्य समुन्नतिर्भवितुं नार्हति। सैव साधना साधनराज्ये भावशुद्धिशब्देन प्रोच्यते। आसक्तेर्भावस्य

च सम्बन्धे पूर्वमेव बहु व्याहृतम्। तदनुसारत आसक्तिपरित्यागपूर्वकं भावशुद्धेरभिवृद्धया कल्याणप्राप्तिर्निश्चयेति चापि व्याहृतं प्राग्। दृष्टान्तरूपेणेदमुच्यते यत् यदि भाग्यवशात् यदि कस्यचिदुपादेयवस्तुनोऽधिगतिः स्यात् तर्हि तस्य लोभपूर्वकं रसनेन्द्रियतृप्तये भोगेन वासना परिवर्धते, बन्धना धायते। परन्तु तदेव भोग्यं वस्तु भगवते समर्प्य अतिथये वा प्रदाय यज्ञावशेषरूपेण स्वीक्रियेत, तर्हि शनैः शनैर्वासना निवर्त्तेत। तस्य भोग्यवस्तुनो भोगो न भवितुमर्हति बन्धनकारणम्। भावशुद्धिबलेनासौ मोक्षसाहाय्यमाचरति। एवं प्रारब्धलब्ध वासनावीजमय सकलानां पदार्थानां भावशुद्ध्योपभोगेनाधिभौतिकी शुद्धिर्लभ्यते। यथोक्तं श्रुतौ स्मृतौ चापि—

ईशावास्यमिदं सर्वं यत् किं च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्॥

—इति श्रुतिः।

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्त्तमानोऽपि स भोगी मयि वर्त्तते॥
अहमात्मा गुडाकेश सर्वभूताशयस्थितः।
अहमादिश्च मध्यं च भूतानामन्त एव च॥
यदा भूतपृथग्भावमेकत्वमनुपश्यति।
वत एव च विस्तारं ब्रह्मसम्पद्यते तदा॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
सम्पश्यन्नात्मया जीवै स्वाराज्यमधिगच्छति॥

उपर्युक्तैः श्रुतिस्मृतिप्रमाणैः अध्यात्मचिन्तनविज्ञानस्य परिपुष्टिर्जायते। शक्तिपूजनसम्बन्धे निम्ननिर्दिष्टस्मृतिप्रमाणतो विज्ञानमेतद् दृढीक्रियते। तथाहि—

अहं हि कारणं ब्रह्म कार्यं ब्रह्मासि चाप्यहम्।
देवाः! कारणरूपेण सच्चिदानन्दमप्यहम्॥
भूतैकादशसत्तायां भासमाना भवामि वै।
सत्सत्ता परिविस्तृत्या ह्यहमेव पुनः सुराः!॥
अहं ममेतिवद् द्वैतभावं चैव विभर्म्यहो।
सदा ममैव चित्सत्ता पुरुषे प्रकृतौ तथा॥
सत्सत्ता प्रकटीभूय निश्चितं विबुधर्षभाः।
जगदानन्दसत्ताया विलासं सृजतः स्वयम्॥
तदाहमेव भूत्वा वै पुरुषो वीजदस्तथा।
प्रकृतिक्षेत्ररूपाऽस्मि कार्यब्रह्मणि भासिता॥

अन्यच्च—

कार्यब्रह्मस्वरूपेऽत्र विश्वस्मिन् जङ्गमे मम।
वर्त्तते चिद्विलासस्तु स्थावरे सद्विलासिता॥
ममानन्दविलासोऽसौ व्याप्नुवन् सच्चिदन्तरम्।
मयैव परमानन्दसत्तां समनुभावयेत्॥
शक्तिशक्तिमतोर्भेदं तत्त्वज्ञानविवर्जिताः।
वालिशा एव पश्यन्ति न तत्त्वज्ञानिनो जनाः॥
अभेदज्ञानसम्पन्नाः शक्तिः शक्तिमतस्तथा।
तत्त्वज्ञाननदीष्णाता ज्ञानाब्धिपारदर्शिनः॥

अपरमपि—

संक्षेपतोऽधुना देवाः! वर्णिता मद्विभूतयः।
त्रिविधाः सप्तधा चैव मया युष्माकमन्तिके॥
सर्वस्थानेष्वहं नूनं राज्ययोः स्थूलसूक्ष्मयोः।
सप्तभेदैस्त्रिभेदैश्च प्रकटत्वं गतास्म्यहो॥
भेदत्रयानुसाराच्च सप्तभेदानुसारतः।
देशे काले च सर्वत्र द्रष्टुमीष्टे हि यश्च माम्॥
ज्ञानी भक्तः स एवाशु मां प्राप्नोति न संशयः।
प्राप्यैव मां निमज्जेच्च परमानन्दसागरे॥
मत्सर्वव्यापकाखण्ड-सत्ता नैवानुभूयते।
यावत्कालमहो देवास्तावत्कालं ममैव हि॥
शक्तिप्रकाशवैशिष्ट्याद् विशिष्टानां च दर्शनम्।
विभूतीनां विधायाथ यूयं स्मरत मामलम्॥

भावशुद्धिविषये स्मृतावाह—

शुद्धो भावः क्रमाच्चित्तं कुर्वाणो निर्मलं तथा।
बुद्धिं ब्रह्मपदं नूनं नयन् शान्तिं प्रयच्छति॥
एकाद्वैतदशां नेतुमीष्टेऽसौ नात्र संशयः।
यतो ब्रह्मपदं विज्ञाः! विद्यतेऽद्वैतमेव हि॥
सम्बन्धेन मया सार्द्धं सद्भावेन तु संयुतः।
यत् कर्म कुरुते जीवः सततं भावशुद्धितः॥
हेतुतां वहते विज्ञाः! मुक्तेस्तत् कर्मनिश्चितम्॥
पापकर्माण्यतः पुण्यं सद्भावेन समन्वितम्।
एष मे निश्चयो विज्ञाः! एषा मे धारणास्त्यलम्॥

एवं त्रिःलाध्यात्मचिन्तन-शक्तिपूजन-भावशुद्धिभिश्च प्रवृत्तिमार्गपरायणः साधकः शनैःशनैरुन्नतिं लभते॥२६॥

प्रवृत्तिमार्गाश्रयेण त्रिविधशुद्धिलाभोदर्कः कथ्यते—

## एतया तल्लाभः॥२७॥

एतया प्रवृत्या तल्लाभः तस्याः निवृत्तेर्लाभो जायते, निवृत्तिमार्गाश्रयेण साधकः परां भक्तिं लभमानः साक्षाद्रूपेण निःश्रेयसपदमधिगच्छति। सच निवृत्तिमार्गः वासनागन्धलेशविहीनत्वात् जीवस्य जीवत्वविनाशेऽनायासतः साक्षात् हेतुः। परन्तु प्रवृत्तिमार्गे नैतत् सौविध्यमासाद्यते। स्वाभाविकवासना-परायण-सावधानतापुरस्सरवैधाचरणासद्भावे नैसर्गिकी वासना बलवती भूत्वा जीवस्याधोगतेः करणतामापद्यते। अतः प्रवृत्तिपथाधिकारिणा साधकेन गुरूपदेशमनुसरता भावेनैतेन कर्मानुष्ठातव्यं येन शनैः शनैर्वासना तिरोदध्यात्। एतदेव पूर्वसूत्रे आत्मचिन्तन–शक्तिपूजन–भावशुद्धिनामतो व्याख्यातम्। एतदुपायत्रयावलम्बनेन त्रिविधशुद्धौ सम्पादितायां प्रवृत्तिपथपथिकः साधको निवृत्तिमार्गाधिकारी भवन्नमृतत्वं लभते। अतएवोपनिषदा, भगवता मनुनापि प्रोक्तम्—

"यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः।
अथ मर्त्योऽमृतो भवत्येतावद्धयनुशासनम्॥"
"तेषु सम्यग्वर्त्तमानो गच्छत्यमरलोकताम्।"

अध्यात्मचिन्तनेन साधकस्य चेतः क्रमशोऽध्यात्मभावापन्नं सदावरणं विजहत् तत्त्वज्ञानमधिकरोति निवृत्तिमार्गाधिकारं लभते। शक्तिसमर्चनेन भगवतः शक्तिं समाश्रयतः साधकस्यान्तःकरणं स्वतः शक्तिमयं योगयुक्तं सत् जीवस्वभावसुलभविक्षेपविरहितनिवृत्तिमार्गोपयोगि भूत्वोपासनाभक्तियोगाधिकारित्वमासाद्यते। तदानीं स्वत एव समुन्नतसाधके चित्तवृत्तिनिरोधशक्तिः समुत्पद्यते। सैवोपासनायोगस्य चरमं फलमवगन्तव्यम्। भावशुद्धिस्तु कालस्वरूपांधकारविनाशो दिनकरतुल्य एव। श्रीभगवता गीतायामपि प्रोक्तम्—

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति॥

स्वीयां प्रकृतिमनुसृत्य प्रसह्य जीवानां स्वाचारप्रवृत्तिः स्वतः सिद्धा। बलवतः प्रकृतिवेगादात्मरक्षणं साधकस्तदेव कर्त्तुं प्रभवति, यदाऽसौ स्वीयं कार्यं भावशुद्धिपूर्वकमनुतिष्ठेत्। भावशुद्धिद्वारा तत्प्राकृतिकवेगतः साधक आत्मरक्षां साधकः कथङ्कारं कर्त्तुं क्षम इति पूर्वमेव सुविवेचितम्। एवमध्यात्मचिन्तन–शक्तिपूजन-भावशुद्धिद्वारा प्रवृत्तिसाधनमनुतिष्ठन् साधकोऽन्ते निवृत्तिमार्गाधिकारी जायते। निवृत्तिमार्गस्य चरमं फलं परामक्तिप्राप्तिः कैवल्यं चेति॥२७॥

मार्गद्वयस्वरूपं निर्णीयते—

## नैसर्गिकी प्रवृत्तिस्तद्विपरीता निवृत्तिः॥२८॥

प्रवृत्तिस्तु स्वाभाविकी, निवृत्तिः विपरीता बोध्या। प्रवृत्तिमार्गे मानवानां स्वाभाविकी गतिः। परं निवृत्तिस्तु

महाफला भवति। संसारकारणीभूतवासनाबद्धो जीवः संसारे सुखं वा दुःखं भुङ्क्ते। मायामुग्धो जीवात्मा शरीररूपोपाधिसंयोगतः सर्वं कार्यं विधत्ते। जाग्रद्दशायां दाराऽन्नपानादि विचित्रभोगैस्तत्परितृप्तिः। स्वप्नावस्थायां च स्वमायाकल्पिते जगति जाग्रद्दशागतवस्तूनां मानसिको भोगः क्रियते। सुषुप्तिसमये जाग्रद्दशागतवस्तुसमूहानां विलयेऽपि कारणशरीरएवाविद्यापरिच्छिन्नो जीवः सुखमुपभुङ्क्ते। एवं हि मायासंयोगेन जीवप्रवृत्तेर्नैसर्गिकी लीला श्रुतिभिः बहुधा प्रतिपादिता। कामनाभावात् किमपि कार्यं नानुष्ठीयते। संसारस्य कर्ममयत्वात् प्रवृत्तिः स्वाभाविकी। प्रवृत्तिमूलिका अन्तर्निहितसुखेच्छैव कर्ममये लोके जीवान् प्रेरयति। संसारयात्रायामनादिरूपतः प्रचरन्त्या गत्या सहसम्बन्धत्वात् प्रवृत्तिः स्वाभाविकी वेदितव्या। उक्तं च भगवता मनुना—

अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्।
यद्यद्धि कुरुते किञ्चित् तत् तत् कामस्य चेष्टितम्॥

स एव मायापरिमोहितात्मा
शरीरमास्थाय करोति सर्वम्।
स्त्रियन्नपानादिविचित्रभोगैः
स एव जाग्रत् परितृप्तिमेति॥
स्वप्ने सजीवः सुखदुःखभोक्ता
स्वमायया कल्पितजीवलोके।
सुषुप्तिकाले सकले विलीने
तमोऽभिभूतः सुखरूपमेति॥

एवं हि श्रुतिस्मृतिषु प्रवृत्तेर्नैसर्गिकत्वं वर्णितमुपलभ्यते। प्रवृत्तेः स्वाभाविकत्वेऽपि निवृत्तिस्तु महाफलप्रसविनीति श्रुतावप्युक्तम्—

"न कर्मणा न प्रजया धनेन, त्यागेनैकेनामृतत्वमानशुः"।

गीतायामपि—

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति॥
इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ॥

मुमुक्षुणा महाफलानिवृत्तिरेवानुसरणीया।

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत॥

अतो विवेकिनाऽपायिनि सुखेन मुग्धेन भवितव्यम्। कामक्रोधवेगं सहमान एव योगी सुखमधिगच्छति। मुण्डकोपनिषदि उक्तं च—

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
तृणाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥
चित्तप्रसादेन यतिर्जहातीह शुभाऽशुभम्।
प्रसन्नात्माऽत्मनि स्थित्वा सुखमत्यन्तमश्नुते॥
निबन्धनी रज्जुरेषा या ग्रामे वसतां रतिः।
छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः॥
सुखाद् बहुतरं दुःखं जीविते नाऽत्रसंशयः।
स्निग्धत्वं चेन्द्रियार्थेषु मोहान्मरणमप्रियम्॥
परित्यजति यो दुःखं सुखं वाप्युभयं नरः।
अभ्येति ब्रह्म सोऽत्यन्तं तं न शोचन्ति पण्डिताः॥
सञ्चिन्वानकमेवैनं कामानामवितृप्तकम्।
व्याघ्रः पशुमिवाऽसाद्य मृत्युरादाय गच्छति॥
तथाप्युपायं संपश्येद् दुःखस्य परिमोक्षणम्।
अशोचन्नारभेच्चैव मुक्तश्चाव्यसनी भवेत्॥
धृत्वा शिश्नोदरं रक्षेत् पाणिपादं च चक्षुषा।
चक्षुःश्रोत्रे च मनसा मनो वाचं च विद्यया॥
प्रणयं प्रतिसंहृत्य संस्तुतेष्वितरेषु च।
विचरेदसमुन्नद्धः स सुखी स च पण्डितः॥

एवं किल विषयाणां दुःखमूलकत्वमवधार्य सर्वैरेव

निवृत्तिपथावलम्बिभिर्भवितव्यम्। विचारवान् पुरुषो धृतिद्वारा शिश्नोदरवेगं निगृह्णाति। यः किल निवृत्तिमार्गपरायणः समस्तेन्द्रियवेगं निरुणद्धि स्तुतिनिन्दया समो भूत्वा विचरति स एव सुखी पण्डितश्च वेद्यः। तात्पर्यमेतद् यत् जीवमात्रस्य स्वाभाविकी गतिर्विषयाभिमुखी, प्रवृत्तिमार्गः स्वाभाविकः। मनुनोक्तमपि—"प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला" इति।

अतः प्रथमदशायां प्रवृत्तिमार्गमाश्रयता जीवेनात्मनोऽभिमुखमग्रे सर्त्तव्यम्। अतएव वेदेषु सकामकर्मणामेव समधिकवर्णनमुपलभ्यते। पूर्वं किल शास्त्रविहितां प्रवृत्तिमाश्रित्य साधनमनुतिष्ठता साधकेनान्ते महाकालस्वरूपा निवृत्ति भूमिः समासाद्यते, प्रवृत्तिस्तु शुद्धरजोगुणेनैव जायते यतोऽसौ रजोगुणधर्मः। तमसि प्रमादालस्याज्ञानादि सत्त्वात् साधनकृते तमसोऽपेक्षया रजसो महत्त्वमधिकं समाम्नातम्। सुतरां तामसिकाधिकारे राजसिकाधिकारप्रवृत्तौ वृद्धिंगतायां साधकोऽवश्यमेव आध्यात्मिकराज्याभिमुखमग्रेसरिष्यति। साधके तत्र जडता ह्रसति चेतनता तु प्रवर्धते। ततश्च राजसिकः साधकः सत्वगुणमाश्रयन् नूनमध्यात्मराज्ये प्रवेशं लभते। एवं हि तमोगुणराज्याद् रजोगुणराज्यं, ततश्च रजःसत्त्वराज्यमनन्तरं च पूर्णसत्त्वगुणराज्यमासादयन् भाग्यवान् साधको निवृत्तिमार्गमधिगत्य महाफलरूपमात्मपदं प्राप्नोति। अस्मादेवं हेतोः प्रवृत्तिमार्गसाधनद्वारा निवृत्तिमार्गसाधनमधिगम्यत इति पूज्य पादसूत्रकार सम्मतिः। एतत्सूत्राविर्भावकारणमेतदपि भवितुमर्हति यत् साधनराज्ये निवृत्तिसाधनमेव साधकहिताधायकम्, किन्तु प्रवृत्तिमार्गसाधनान्यपि न सन्त्युपेक्षणीयानि, यतो हितानि द्वारीकृत्यान्ते पूर्णो निवृत्तिमार्गः समासाद्यते। अतः प्रवृत्तिमार्गोऽभ्युदयकरः ॥२८॥

इदानीं साधनपरिपुष्टये साधकाधिकारो निर्णीयते—

**अहितं कर्मसङ्गिनामज्ञानां बुद्धिभेदात् ॥२९॥**

कर्मसङ्गिनां कर्ममार्गानुरक्तानामज्ञानामज्ञानिनां बुद्धिभेदेन अहितममङ्गलं जायते। साधनमार्गेऽधिकाराणां प्राक्तनकर्मविपाकजनितत्वात् प्रवृत्तिपरायणता निवृत्तिबहुलता वा प्रकृतिगता जायते। अतः पूर्वसंस्कारमनुसृत्य यस्य यत्र मार्गेऽभिरुचिस्तत्र हस्तक्षेपविधानात् अनिष्टफलोत्पत्ति सम्भावना यतो यस्य यत्र मार्गेऽभिरुचिः प्राकृतिकी, तदर्थं तद्भिन्नमार्गोपदेशो न भवितुमर्हति हिताधायकः। "सति मूले तद् विपाको जात्यायुर्भोगाः" इति योगदर्शनसिद्धान्तः। सर्वमिदं प्रारब्धकर्मणैव समुत्पद्यते। अन्यच्च कर्ममीमांसाया एष सिद्धान्तो यत् प्रबलसंस्कारसमुत्पन्नौ प्रकृतिस्वभावौ नैव परिवर्त्तितुं शक्येते। सुतरां यस्य साधकस्य प्रबलसंस्कारजन्यो यः स्वभावः प्रकृतिर्वा भवति, यस्य जीवस्य जातिर्भोगो वा यादृशस्तदनुसारेणैव तत्र क्रियायाः सम्भावना। अतः प्रबलसंस्कारजन्य प्रकृतिप्रवृत्तिविरुद्धोपदेशो बुद्धिभेदस्यावनतेश्च हेतुरिति निश्चप्रचम्। संस्कारविपरीतस्योपदेशस्य श्रवणेन प्रकृतिसाधनयोरननुकूलत्वात् बुद्धिभेदे सति साधकस्याहितमवश्यम्भावि।

पूर्वजन्मोपार्जितकर्माण्यनुसृत्य प्रवृत्तिपरायणस्य कर्मासक्तस्य सकाम साधकस्य समुन्नतये भावशुद्ध्याद्युपायैः सकाममार्गसाधनोपदेशादेव निष्काममार्गसाधने प्रवर्त्तनं सुविचारशालिनो ज्ञानवतो गुरोः कर्त्तव्यमास्ते। अन्यथा पूर्णकर्मासक्तसकामाय निष्कामकर्मोपदेशो बुद्धिभेदकारणत्वात् साधकस्योन्नतिसाधको न भवति, तदवनतिमेव साधयति। अतोऽसावितो नष्टस्ततो भ्रष्टो भूत्वाऽवनतिकर मूढदशाग्रतो भविष्यतीत्यत्र नाणीयानपि संशयः। अतएवोक्तं भगवता

गीतायाम्—

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।
योजयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन्॥

एष एव वेदान्तशास्त्रानुमोदितः पन्थाः॥ २९॥

तदानीं किमनुष्ठेयमिति निर्णयति—

## तदुपयुक्तोपदेशात् पथ्यम् ॥३०॥

तस्य प्रवृत्तिपरायणस्य पुरुषस्य उपयुक्तो हिताधायको यो हि उपदेशस्तस्मात् एव पथ्यं कल्याणं सम्पद्यते। निवृत्तिस्तु साक्षान्मोक्षदायिनीति हेतोस्तन्मार्गावलम्बिनां ज्ञानिनां प्रज्ञा एकतत्त्वपरायणा। परन्तु प्रवृत्तिमार्गगामिनामधिकारीणां बुद्धिर्बहुभेदभिन्ना भवति। यथा चोक्तं गीतोपनिषदि—

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्॥

प्रवृत्तिनदी बहुधारावाहिनी बहुविधाधिकारसाधकानामभीष्टं साधयति। अतो यस्य साधकस्य यादृशी ज्ञानशक्तिः, प्रकृतिः, प्रवृत्तिरधिकारश्च प्राक्तनकर्मविपाकेन लभ्यन्ते, तदनुसारमेव यथोचित त्रिविधशुद्धिसाधक-प्रवृत्तिमार्ग-सम्बन्धीयोपदेशदानेन तस्य सर्वं प्रकारकं कल्याणं सम्पद्यते, नात्र सन्देहलेशः। एकतत्त्वपरायणो निवृत्तिमार्गावलम्बी वा स्यात, बहुशाखासमन्वित प्रवृत्तिमार्गगामी वा साधको भवेत्, तस्य यथायोग्यमधिकारमनुसृत्य समुपदिष्टा साधनपद्धतिरेव हिताधायिकी। जीवस्य प्रबलसंस्कारवेगादेव जातिभोगशक्तिः प्रकृतिप्रवृत्त्यादयस्तत्रोत्पद्यन्त इति प्रागेव निर्णीतम्। यथा रोगार्त्ताय दीयमानेन समीचीनेन औषधेनापि अननुकूले पथ्ये रोगनिवृत्तिर्न जायते, तथैव प्रबलसंस्कारजन्मप्रकृतिप्रवृत्ति शक्त्यादीनां प्रतिकूलसाधनोपदेशेन साधककृते समुन्नतं साधनं तत् हितकरं भवितुं नार्हति। निवृत्तिमार्गाधिकारीणां प्रवृत्तिमार्गसाधनोपदेशेन शान्तिरसम्भवा। तथैव प्रवृत्तिमार्गावलम्बिनां निवृत्तिमार्गोपदेशस्तदर्थं न रुचिकरो नैव च ते साधकाः साधनमार्गेऽग्रेसर्तुं शक्ताः। उदाहरणरूपेणावधेयं यत् सात्त्विक-राजसिक-तामसिकभेदेन कर्त्तुस्त्रैविध्यमास्ते। तामसिकसाधके पुरुषार्थाप्रवृत्तिरालस्यं तामसिकी श्रद्धा तामसिकं ज्ञानं चावश्यं तिष्ठति, राजसिके कर्त्तरि पुरुषार्थता, प्रवृत्तिशीलता राजसिकश्रद्धा चञ्चलबुद्धिता सन्दिग्धता च नूनं दृश्यन्ते। उभौ तामसिकराजसिकौ साधकौ सकामौ भवतः। सात्त्विकः कर्त्ता साधको वा ज्ञानी कर्त्तव्यपरायणः, सात्त्विकबुद्धिः सात्त्विकश्रद्धासम्पन्नो वैराग्यवान् दृढव्रतो भवति। सुतरां तत्तत्साधकानुकूला तत्तत्प्रकृतिप्रवृत्तिशक्तिसहायिका साधनशैली यदि समुपदिष्टा भवेत्, तर्हि सैव तत्तत्साधकानां कृते क्रमोन्नतिकारणं भवितुमर्हति नान्यथेति। सुतरां यथोचितमधिकारमनुसृत्य समुपदिष्टा साधनप्रणाली साधकं पथ्यकरीति निश्चप्रचम्। भगवता गीतायामुक्तमपि—

स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम्।
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः॥

प्रकृत्यनुकूलकार्यानुष्ठानात् साधकः पापग्रस्तो न जायते। प्रकृतिप्रवृत्त्यादीनामनुसारेण साधको धर्ममार्गनिरतो निजाधिकारे सिद्धिं लभते॥ ३०॥

शङ्कां समाधत्ते—

## वैषम्यादसिद्धमिति चेन्न लक्ष्यैक्यात् ॥३१॥

वैषम्यात् साधकसाधनयोर्विषमतया, असिद्धम् इति चेत् असिद्धेराशङ्का इति चेत् न, अर्थात् असिद्धेराशंका व्यर्था, कथं लक्ष्यैक्यात् लक्ष्यस्यैकत्वादित्यर्थः।

प्रवृत्तिनिवृत्तिसाधनानि बहुविधानि। अधिकारविभेदात्साधनमार्गा अपि बहुविधाः। तर्हि सर्वेषां फलं एकविधं कथमिति संदेहो निर्मूलः। यतः सर्वेषां साधनानां लक्ष्यमेकमेव। विभिन्नपथवाहिन्यः स्रोतस्विन्य एकस्मिन् एव समुद्रे विलयं गच्छन्ति। स्वस्वप्रकृतिप्रवृत्त्यनुरूपेण सर्वेऽपि जना भगवतो भक्तये प्रयतन्ते। सर्वेषामाध्यात्मिकसमुन्नतिसाधनसमीहा। अभ्युदयनिःश्रेयसपदप्रतिष्ठायामेव यदि सर्वेषां लक्ष्यं वर्त्तते, तर्हि साधनविभिन्नत्वेऽपि समुन्नतौ बाधा नास्ति। देशकालप्रकृतिविभिन्नतया साधनभेदसत्त्वेऽपि विहितसर्वविधेनापि साधनेन साधकः स्वीयं लक्ष्यमवश्यमेवाधिगमिष्यतीत्यत्र नास्ति सन्देहः। इहलोकपरलोकाभ्युदयौ निःश्रेयसपथगामिनौ। अभ्युदयनिःश्रेयससमीहाऽपि समानैव। सुतरां सर्वेषां लक्ष्यमेकमेव विद्यते। यथा चोक्तं पुष्पदन्ताचार्येण—

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
रुचीनां वैचित्र्याद् ऋजुकुटिल नाना पथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥

अतः सकलसाधनानां लक्ष्यभूत एकएव परमात्मेति हेतोः वैषम्यदोषः सन्देहजनको हानिकारको वा न सम्भवति॥ ३१॥

साधनं निरुपयन् तत्रोपलब्धैश्वर्यसम्बन्धादुच्यते—

**नैश्वर्यदोषः परस्मिन् विशेषात्॥३२॥**

ऐश्वर्यस्य दोषः परस्मिन् परमात्मनि नास्ति यतस्तत्र विशेषो विशिष्टता वर्तते। भगवत् ऐश्वर्यं स्वाभाविकमिति विशेषः, तस्मात् तत्रैश्वर्यदोषासम्भवः। ऐश्वर्यस्य प्रकृतिराज्यविषयतो प्रकृतेरधिपतिः परमात्मा। अत ऐश्वर्येण परमात्मसम्बन्धः स्वाभाविकः। साधनदशायामैश्वर्याधिगम ईश्वरीयैश्वर्यस्य कणरूपोऽवगन्तव्यः। ऐश्वर्यदोषः साधकमिव भगवन्तं कथं न स्पृशतीति शंकां समाधत्ते—जीवस्य लौकिकमलौकिकं वा ऐश्वर्यं सहेतुकं तपः साधनलभ्यमतस्तद्दोषावहं भवितुमर्हति, परमनन्तवैभवशालिनः, समस्तानामैश्वर्याणामाकरस्य, वीर्ययशःश्रीज्ञानवैराग्याणामेकाधारस्य प्रकृत्यधीशस्य सर्वशक्तिमतो भगवतः समस्तान्यप्यैश्वर्याणि नैसर्गिकत्वान्नैव कदापि भगवन्तं स्पृशन्ति। परमपुरुषः सर्वशक्तिमान्, सर्वव्यापको देशकालापरिच्छिन्नः सर्वात्मा, जगदीश्वरो विद्यासेवितः सर्वज्ञश्च। जीवस्त्वल्पशक्तिः एकशरीराभिमानी, देशकालपरिच्छिन्नः, अविद्यासेवितोऽल्पज्ञश्च, सुतरामीश्वरे वैशिष्ट्यादैश्वर्यदोषो न भवति, स च जीवं स्पृशति। यतः सर्वाण्यैश्वर्याणि समुत्पद्यन्ते यः किलैश्वर्यातीतः, सर्वविधैश्वर्यभोक्ता तथापि तं किमप्यैश्वर्यं स्प्रष्टुं नार्हति। वासनापरायणस्यैवैश्वर्यदोषः, परमात्मनो वासनासम्बन्धशून्यत्वात् ऐश्वर्यस्पर्शदोषस्तत्रोत्पत्तुन्नार्हति। अतएव योगदर्शने समुल्लिखितम्—

"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति।

अविद्याजनितरागद्वेषसमुत्पन्नं दुःखमेव क्लेशः, प्राकृतिकस्पन्दनोद्भूतजगदुत्पादकक्रियैव कर्म, कर्मणां शुभाशुभभोगो विपाकः, कर्मबीजसंस्कार आशय इति। एतेनैवाशयेन हेतुभूतेन जन्ममृत्युरूपगमागमचक्रे जीवो भ्राम्यति, बन्धनहेतवस्ते जीवे स्वभावतस्तिष्ठन्ति। परमीश्वरे तेषामसद्भावात् ऐश्वर्यदोषो न तं स्पृशति। यत्राशयसम्बन्धस्याभावस्तत्र विपकस्पर्शसम्बन्धो भवितुं नार्हति, यस्तु प्राकृतिकस्पन्दनरूपकर्मराज्यतः परः, यत्र च सुखदुःखयोर्गतिर्नास्ति, तत्र परधाम्नि परमात्मनि भोगवासनादिसम्बद्ध ऐश्वर्यदोषो भवितुं नार्हति। श्वेताश्वतरोपनिषदि तदैश्वर्यविषये बहुवर्णनमुपलभ्यते। तथाहि—

तमीश्वराणां परमं महेश्वरम्
तं देवतानां परमं च दैवतम्।

पतिं पतीनां परमं परस्तात्
विदाम देवं भुवनेशमीड्यम्॥
न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते।
पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च॥

सुतरां परमात्मानमैश्वर्यदोषो न स्पृशति॥ ३२॥

जीवस्यैश्वर्यदोष उपवर्ण्यते—

**अविशेषेषु तथातद्वत्त्वाऽभावात् ॥३३॥**

अविशेषेषु जीवेषु तथा तद्वत्त्वस्य भगवदैश्वर्य-विशिष्टताया अभावात्। सर्वशक्तिमति भगवति सर्व-विधमैश्वर्यं नित्यं नैसर्गिकं च, किन्तु जीवेषु तथा नास्तीत्यर्थः। भगवति शक्तेरैश्वर्यस्य च परिपूर्णता। जीवस्तु क्लेशकर्मविपाकाशयैः परामृष्टः, रक्तवीज इव सृष्टिविस्तारसमर्थो वासनाजालविजडितऐश्वर्यग्रस्तश्च। यथा वीजाद् वृक्षो वृक्षाच्च वीजः, पुनरपि वृक्षः, पुनश्च वीज इत्थं सृष्टिधारा प्रचलति, तथैव वासनात ऐश्वर्यमैश्वर्याच्च वासनेति चक्रं परिभ्रमति। एवमैश्वर्यवासना-सम्बन्धो जीवे स्वभावसिद्धः। पूर्वसूत्रवर्णितमीश्वर-वैशिष्ट्यं जीवे नास्ति। ऐश्वर्यद्वारा जीवविनिपातः सर्वदा सम्भवः।

भगवदैश्वर्यशक्तिसमृद्धा देवर्षिपितरः संसार-रक्षाकार्यं विदधते। पूर्णशक्तिमतो भगवत ऐश्वर्य्येषु कदापि न्यूनाधिक्यं न सम्भवति। परन्तु जीवे न तथा, जीवे तु देशकालानुसारेण ऐश्वर्यस्य न्यूनाधिक्ययोः सम्भावना तपस्यादिना जीव ऐश्वर्य-मधिकरोति। हिंसादिनाऽनुचितेन कर्मणा तत्तिरो-दधाति। ऐश्वर्यं हि सम्पत्तेरेव स्वरूपमिति साधकं मुग्धमवनतिग्रस्तं च विदधाति। अतो योगशास्त्रे सर्वविधमैश्वर्यं निन्दता भगवता साधकास्ततः साव-धानीकृताः। ऐश्वर्यप्रदर्शनं शास्त्रे कुलकामिन्या अङ्ग-प्रदर्शनमिव निषिद्धमुक्तम्। यथा कुलाङ्गना परपुरुषं स्वकीयमङ्गं न दर्शयति, यदि प्रदर्शयति तदा तस्याः कुलाङ्गनात्वं नश्यति, तथैव ऐश्वर्यप्रदर्शनं योगिना-मवनतेर्निदानं मन्यते। स च योगी विषयी मन्यते यः स्वीयमैश्वर्यं प्रदर्शयति। परन्तु कदाचिद् घटनाचक्रेण पितापुत्रोऽपि कुलाङ्गनाया अङ्गं निभालयतः। तथैव यदि योगिनो भक्तास्तदीयमैश्वर्यं घटनाचक्रवशात् पश्यन्ति तदा न दोषः। अतः स्वेच्छया ऐश्वर्य-सम्बन्धः साधकानां कृते निषिद्धः। ऐश्वर्यपरायणः साधकोऽध्यात्मिकसमुन्नतिशाली न जायते। स च विषयी मानव इवैश्वर्यलिप्तो विद्याकूपे निमज्जति। अतः स्वेच्छयैश्वर्ययुक्ततां बुद्धिमन्तो विनिन्दन्ति॥ ३३॥

ऐश्वर्यं कतिविधमिती निर्णयति—

**तच्चतुर्विधम्॥ ३४॥**

तत् पूर्वोक्तमैश्वर्यं चतुर्विधमवगन्तव्यम्। यथा आधिभौतिकम्, आधिदैविकम्, आध्यात्मिकं साहजिकं चेति। लौकिकालौकिकभेदेन आद्यं द्विविधम्। सांसा-रिकमैश्वर्यं लौकिकम् रसायनकल्पादि समुत्पन्नमलौ-किकम्। औषधिप्रयोगद्वारा ताम्रस्य सुवर्णतासम्पादनं, वृद्धस्य यौवनदीर्घायुष्ट्वप्राप्तिरलौकिकैश्वर्यदृष्टान्तः। मन्त्रतपस्यादि जनितमाधिदैविकम्। सुतरां चतुर्णामपि भेदद्वैविध्यात् सिद्धीनामष्टौ भेदा भवन्ति, यथा आधि-भौतिकस्य लौकिकालौकिकसिद्धिद्वयम्, आधिदैविकस्य अध्यात्माधिदैवसिद्धिद्वयम्, मारणवशीकरणादि षट्-कर्माधिगतम्, अणिमा महिमा चेत्यादिर्योगद्वारा प्राप्ता-धिदैवसिद्धिः। आध्यात्मिकसिद्धेरपि द्वौ भेदौ परोक्षानु-भूतिरपरोक्षानुभूतिश्चेति साहजिकसिद्धेरपि भेदद्वयम्, जीवन्मुक्तिरवतारो शक्तिश्चेति। एवं किल सिद्धीनामष्टौ श्रेणयो योगिभिः समादृताः। उक्तं च योगदर्शने—

"जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः"। इति। आधिदैविकैश्वर्यसम्पन्ना दैवबलेन बलवन्तो भवन्तोऽनेकान्यलौकिककार्याणि साधयन्ति। एतदाधिदैविकमैश्वर्यं मलिनं शुद्धं चेति भेदेन द्विधा विभक्तम्। त्रिविधैर्यज्ञैराध्यात्मिकमैश्वर्यं लभ्यते। ऋतम्भरायाः प्रज्ञाया विकास एवैतल्लक्षणभूतः। वेदादीनामाविर्भाव ईदृशैश्वर्यशालिनाम् ऋषीणां परमपवित्रान्तःकरणे बोभूयते। साहजिकमैश्वर्यं जीवन्मुक्तदशायां स्वतः समधिगम्यते। पराभक्तियुक्तो जीवन्मुक्तो महापुरुषो यदा आत्मसाक्षात्कार द्वारा जीवभावं परिजहाति, तदा व्यष्ट्यहंकारनाशात् असौ विराट्केन्द्रद्वारा भगवदिङ्गितानुसारेण परिचाल्यते। तदानीं काले जगत्कल्याणसम्पादनाय तत्र यावत्यः सिद्धय आविर्भवन्ति, तन्नामैव साहजिकसिद्धिरिति।

उक्तं च—

चतुर्विधाः सिद्धयः स्युः प्राप्याया योगवित्तमैः।
आध्यात्मिकी चाधिदैवी सहजा चाऽधिभौतिकी॥
औषधिमन्त्रतपोभिः प्राप्यन्ते सिद्धयः सर्वाः।
स्वरोदयेनापि तेषां संयमेनेति निश्चयः॥
इत्थं चतुर्विधा भेदाः सिद्धेः प्रोक्ता मनीषिभिः।
भौमस्थूलपदार्थानां सिद्धिः स्यादाधिभौतिकी॥
दैवशक्तिसमापत्तिर्यत्र सा चाऽधिदैविकी।
आध्यात्मिकी च विज्ञेयाः प्रज्ञासम्बद्धसिद्धयः॥
उन्नतश्चाधिकारोऽस्याः परमः प्रोच्यते बुधैः।
आविर्भावो हि वेदानां जायते यत्र निश्चितम्॥
सहजाः सिद्धयः प्रोक्ता जीवन्मुक्तस्य सिद्धयः।
सिद्धेर्हि बहवो भेदा निर्दिशन्ति स्म योगिनः॥

अतः सिद्धिश्चतुर्विधेति निर्णीतम्॥३४॥

आशङ्कामैश्वर्यविषयिणीं समाधत्ते—

**लक्षितलक्ष्येषु क्वापि तत् किमिति चेन्न प्रकृतिभेदात्॥३५॥**

लक्षितं निश्चितं लक्ष्यं येषां एवंभूतेषु साधनेषु क्वापि कुत्रापि तत् ऐश्वर्यं किमिति शंका चेत् न, अर्थात् तादृशी शंका नोचिता, प्रकृतिभेदात् रुचिविभिन्नत्वात्। सर्वेषां प्रकृतिर्भिन्ना भिन्ना भवतीत्यर्थः। यदि भगवद्भक्तिर्हि मुक्तिदात्री, सैव यदि मानवजीवनस्य श्रेष्ठतमलक्ष्यभूता तदानीमैश्वर्यापेक्षा कथमिति शंकां समाधत्ते—संसारेऽत्र प्रकृतिविभिन्नतायां सत्यामपि वैराग्यपरायणो वीतरागो भक्तिमान् पुमान् ऐश्वर्यमुपेक्षते। तथाहि श्रुतौ—

अन्धंतमः प्रविशन्ति येऽसम्भूतिमुपासते।
ततो भूय इव ते तमो य उ सम्भूत्यां रताः॥

ऐश्वर्यग्रहग्रस्तः साधकोऽन्धतमसि निमज्जति। उच्चाधिकारवतां कृते ऐश्वर्यमुपेक्षाविषयम्, साधारणाधिकारिणस्तत् आध्यात्मिके मार्गे प्रेरयति। यथा मिष्टान्नलोभेन बालको विद्यमभ्यस्यति, तथैव साधारणाधिकारीणामैश्वर्यविश्वासवर्धकं चित्तसंयोगविधायकं च। ऐश्वर्यमाधुर्यमहत्त्वमपेक्ष्य साधकोऽध्यात्ममार्गे विशिष्य विश्वासपरायणतामधिगच्छति, तेन च तदुन्नतौ सहाय्यलाभः। योगदर्शने प्रोक्तं यत्—

"ते समाधावुपसर्गा व्युत्थाने सिद्धयः"

ते सिद्धिसमूहाः समाधौ विघ्नभूताः, किन्तु व्युत्थानदशायां हितकरा एव। सूक्ष्मदृशा विचारे क्रियमाणे निर्णीतं भवतीदं यत् सहजाः सिद्धयो न भवन्ति बाधिकाः, यतस्ता ईशकोटिजीवन्मुक्तेष्ववतारेषु वा प्राकट्यमापद्यन्ते। तथा चाध्यात्मिकसिद्धिभेदद्वयेऽपरोक्षानुभूतिप्रादुर्भूतसिद्धयो न जायन्ते साधकभक्त बाधिकाः। यतस्ते निश्चितसत्यमार्गे प्रतिष्ठिताः। परन्तु ज्ञानराज्येऽपरिपक्वदशायां परोक्षानुभूतेरधिकारी साधको यदि गुरुराचार्यो ग्रन्थकर्त्ता वा बुभूषति तर्हि अध्यात्मिकी सिद्धिस्तदीयां हानिमुत्पादयति। एतद् भिन्नाः सिद्धयः समाधिविघ्नाः संत्योऽपि अधमश्रेणिकसाध-

कानां वहुत्र मङ्गलमनुतिष्ठन्ति। यतो येषु पुरुषार्थशक्तेर्न्यूनता तेषां चित्तेषु तीव्रसंवेगमुत्पादयितुं सिद्धीनां प्रलोभनं दत्वा तेऽग्रे सारयितुं शक्यन्ते ॥३५॥

सकलसाधनपरिणामभूतो मोक्षः कथमधिगम्यत इत्याह—

समर्पणान्मुक्तिः ॥३६॥

समर्पणेन मुक्तिर्मोक्षो लभ्यते। सप्तभूमीरनुसृत्य सप्तसु दर्शनेषु पृथक् पृथक् मुक्तेरुपायो दर्शितः। चित्तवृत्तिनिरोधेन द्रष्टुः स्वरूपेऽवस्थानान्मुक्तिरिति योगदर्शनसिद्धान्तः। एवं हि न्यायसांख्यादि दर्शनेष्वपि स्वस्वज्ञानभूमीनामनुसारेण मुक्तिसिद्धान्तो निर्णीतः। समर्पणेन मुक्तिरित्येतद्दर्शनराद्धान्तः। अहंकार एव जीवस्य जीवत्वहेतुः। मायापाशबद्धो जीवः सांसारिकेषु क्षुद्रस्वार्थेषु ग्रस्तो निजस्वरूपं विस्मरति। परमात्मनो देशकालापरिच्छिन्नत्वे सर्वव्यापकत्वेऽपि तदंशरूपो जीवोऽहङ्कारात्तन्मूलकस्वार्थभावेन च देशकालपरिच्छिन्नो जायते। स हि देहेन्द्रियादि सुखनिदानमवधार्य तत्रैव रमते। अत एव तस्य जीवभावो बन्धनं वा न निवर्त्तते। परन्तु यदा जीवो नैजं सर्वस्वमपि भगवन्तमर्पयति, अर्थात् येन पदार्थेन तं संसारबद्धं कृत्वा तदीयः केन्द्रो लघुकृतः तमेव पदार्थमहाङ्काररूपं भगवतो व्यापकसत्तायां विलीनं विदधाति, तदा पुनरपि ममताऽहन्ताद्यभावान्ममेति बुद्धिः पूर्णरूपेण तस्य विगलति। ममतानाशेन जीवस्य देशकालपरिच्छिन्नता विनश्यति। जीवभावश्च विनाशमुपगच्छति। असावेव ममत्वसंयुतो जीवभावस्तदीयं केन्द्रं देशकालपरिच्छिन्नं विदधत् सर्वव्यापकसत्तातो जीवं पृथग्भूतमकार्षीत्। अतो ममतानाशेन जीवत्वविनाशस्तेन च मुक्तिरासाद्यते। भगवान् सर्वव्यापकः। जीवोऽहङ्कारसद्भावाद् देशकालपरिच्छिन्नः। अहङ्कारविरहितो जीवो भगवद्भावं प्रपद्यते। भक्तो मानवो नैजं सर्वस्वमपि श्रीभगवन्तं समर्पयति। तदैवासौ अहङ्कारविलयेन ब्रह्मणि विलीयते। स च स्वीयां सत्तां सच्चिदानन्दभावे विलीनां विधाय निःश्रेयसपदमधिगत्य परमानन्दमनुभवति। शास्त्रेषु चैतस्य परमकल्याणमय समर्पणभावस्यानेके दृष्टान्ताः समुपलभ्यन्ते। उपनिषदि यथा—

तमेवैकं जानथ आत्मानमन्या वाचो
विमुञ्चथाऽमृतस्यैव सेतुः।
इह चेदवेदीदथ सत्यमस्ति
न चेदिहावेदीन्महन्ती विनष्टिः॥

भगवता गीतायामप्युक्तम्। तथाहि—

दैवीह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥
ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते॥
तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम्॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥

श्रीमद्भागवतेऽप्युक्तम्—

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वाऽनुसृतस्वभावात्।
करोति यद् यत् सकलं परस्मै
नारायणायेति समर्पयेत् तत्॥
मर्त्यो यदा त्यक्तसमस्तकर्मा
निवेदितात्मा विचिकीर्षितो मे।

तदाऽमृतत्वं प्रतिपद्यमानो
मयात्मभावाय च कल्पते वै ॥

साधको यदा स्वीयमन्यत् समस्तमपि कार्यं भगवते समर्पयति तदैवाऽमृतत्वं लभते सच्चिदानन्दभावं चाऽधिगच्छति। समर्पणभावः किंविध इत्यत्र विषयो विष्णुपुराणे प्रह्लाद आह—

या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्माऽपसर्पतु ॥

शास्त्राणामयं सिद्धान्तो यत् सृष्टेर्मूलकारणं मायैव, किन्तु वस्तुतोऽहन्तत्वमेव सर्गजनकम्। एतदेव जीवस्वतन्त्रतानिदानम्। भगवतो विराड्देहे जीवस्तद्भिन्नमात्मानं मनुते। एतत्कारणमहङ्कृतिरेव। सुतरां येन सुकौशलपूर्णसाधनेन जीवभावोत्पादकोऽहंकारो विनश्यति तदेव जीवमुक्तिहेतुकम्। श्रीभगवति नैजमात्मानं समर्पयता भक्तेन स्वीयाहङ्कारेण साकं निजा स्वतन्त्रसत्ता परित्यज्यते। दशायामस्यां जीवभावस्य स्वतएव नाशो जायते।

विज्ञानमिदं प्रकारान्तरेणापि बोधयति—जीवलक्ष्यभूताः सर्वेऽपि पुरुषार्था धर्मार्थकाममोक्षरूपेण चतुर्धा विभज्यन्ते। तेषु कामार्थौ इन्द्रियसुखमूलकौ। यत्र साधके प्राबल्यमुपगतौ, तत्र जीवभावस्य पूर्णरूपेण विद्यमानता भवति। अतो धर्मविहीनावर्थकामौ नरकप्रदौ जीवभाववर्धकौ चापि यस्य साधकस्य धर्मएव लक्ष्यभूतस्तस्यान्तर्दृष्टिर्वर्धते। जीवस्य धार्मिकी दशेयं भागद्वयविभक्ता, प्रथमा धर्मानुकूलाऽर्थकामचेष्टा, द्वितीया च धर्मार्थमात्मसमर्पणस्वरूपा। धर्मानुकूलाभ्यामर्थकामाभ्यां जीवक्रमोन्नतिर्जायते। केवलं धर्मलक्ष्ययुक्तपुरुषार्थं द्वारा निःश्रेयसाधिगम इति कर्ममीमांसादर्शनसिद्धान्तः। समुन्नतधर्मसंयुक्तदशायामत्र केवलं धर्मप्रवाहएव धार्मिक आत्मानं समर्पयति, धर्मो हि जीवं क्रमशः समुन्नयन् ब्रह्मपदस्वरूपं निःश्रेयसं प्रापयति। शास्त्रेणाप्येतदेवोक्तम्—

उन्नतिं निखिला जीवा धर्मेणैव क्रमादिह।
विदधानाः सावधाना लभन्तेऽन्ते परं पदम् ॥

तात्पर्यमिदं यत् धार्मिक्यां समुन्नतदशायां सत्त्वमयधर्माश्रयेण साधकः क्रमशः पूर्णं सत्वगुणाधिकारमासाद्य मुक्तिपदमासादयति। तदानीं सात्त्विकाधिकारबलेन तस्य जैवाहङ्कारः प्रणश्यति। समुन्नतावस्थां प्रथमं धर्मानुकूलार्थकामचेष्टया सत्त्वगुणाभिवृद्धिः, ततश्च केवलेन धर्मार्थमनुष्ठितेन पुरुषार्थेन सत्त्वगुणस्य परिपूर्णताप्राप्तिः, तदनन्तरं परिपूर्णेन सत्वगुणेन तमोभावव्यञ्जकस्य जैवाहङ्कारस्य विनाशः, तदनन्तरं च भगवद्भावस्वरूपमुक्ति पदाधिगतिः। धार्मिके पुरुषार्थे क्रमोऽयं स्वाभाविकः। किन्तु सारल्याद् भक्तिमार्गस्य भगवत्यात्मसमर्पणेनैव मुक्तिरधिगम्यते। यतो ह्यात्मसमर्पणसमकालमेव धर्म-साधनचरमफलरूपस्य पूर्णसत्त्वगुणस्योदयः, अहन्तत्त्वमयजीवभावस्य नाशश्च सहैव जायते। ततश्च भाग्यवान् साधको भगवच्चरणरूपं मुक्तिपदमधिकरोति।

विभिन्नशास्त्रप्रतिपादिता विविधा मुक्तिमार्गाः पुरुषार्थसापेक्ष्याः। परन्तु भक्तिमार्गो ह्यतीव सरलः। अत्रात्मसमर्पणेनैव मुक्तिर्लभ्यते। स्वीयानि शरीरेन्द्रियमनो बुद्धयादीनि स्वकीये प्रियतमे भगवति यथार्थभावेन समर्पयतः साधकस्य जीवभावमूलकारणमहत्तत्वं विनश्यति। लुप्ते च जीवभावे जीवः शिवो भूत्वा विमुच्यते। जीवभावरूपस्याहंकारस्य पूर्णो लय एव मुक्ति साधकमास्ते ॥३६॥

समर्पणप्रसङ्गेन पूजायजनं च वर्ण्यते—

## विशिष्टापूजायजनमितरत् ॥ ३७ ॥

पूजा विशिष्टा मुख्या यजनम् इतरत् तद्भिन्नमित्यर्थः। भगवन्तं प्रति भक्तिप्रवणो मानवो यत् कर्मा-

नुष्ठीयते, तदेव पूजा। अत्र समर्पणबुद्धेः प्राधान्यम्। तदतिरिक्तं यत् क्रियाप्रधानमनुष्ठानम्, यत्र कर्मशक्तेः प्राधान्यम्, तद्यजनपदवाच्यम्। यत्र साधने बाहुल्येनोपासनाकाण्डसम्बन्धस्तत्पूजेति प्रोच्यते, यत्र चाधिक्येन कर्मकाण्डसम्बन्धस्तत्साधनं यजनमिति। सिद्धान्तमिममनुसृत्य आत्मसमर्पणसम्बन्धो यजनापेक्षया पूजायामधिक इति विज्ञानसिद्धम्। सुतरां यजनस्यापेक्षया पूजाया मुख्यता सिध्यति। अतो दर्शनशास्त्रेऽत्र पूजायाः श्रेष्ठता यजनस्य च गौणता प्रतिपादिता। शास्त्रेषु पूजोपचारा एकविंशतिविधाः प्रोक्ताः। तथाहि—

उपचारा विनिर्दिष्टाः पूजायामेकविंशतिः।
आवाहनं स्वागतं च स्वासनं स्थापनं तथा॥
पाद्यमर्घ्यं तथा स्नानं वसनं चोपवीतकम्।
भ्रमणं गन्धपुष्पे वै धूपदीपौ तथैव च॥
नैवेद्याचमने चैव ताम्बूलं तदनन्तरम्।
माल्यं नीराजनं चैव नमस्कार विसर्जने॥

एतेषामेकविंशत्युपचाराणां विधिपूर्वकमनुष्ठानेन पूजायाः सार्थकता सिध्यति। पञ्चोपचार-दशोपचार-षोडशोपचारैकविंशत्युपचारभेदेन पूजाप्राधान्येन चतुर्विधा ज्ञेया। पुनश्च सा बाह्य-मानसभेदेन द्विप्रकारा। मन्त्रशुद्ध्या इतरक्रियाशुद्ध्या च साकं यजनस्य सम्बन्धाधिक्यादनेके भेदाः। श्रौत-स्मार्त-पौराणिक-तांत्रिकभेदेन यजनं प्रधानतश्चतुर्धा विभक्तम्। सुतराम् आचारभेद-क्रियाभेद-सम्प्रदायभेदादयो यजनस्यानेके भेदा अवगन्तव्याः॥ ३७॥

यजनपूजनप्रसंगेन समर्पित वस्तूनामवलम्बनीया भावा निरूप्यन्ते—

**न तदर्पितात्मीयत्व मनोचित्यात्॥३८॥**

तस्मै परमात्मने अर्पितेषु आत्मीयत्वं नास्ति, अनौचित्यात्। तदात्मीयत्वमुचितं नास्ति तस्मात्। समर्पणेन मुक्तिरिति प्रागेव निर्णीतम्। साधकः समर्पणेन स्वीय जीवभावविलयेन मुक्तो भवति। साधको नैजमात्मानं महत्तत्त्वेन सह स्वकीयहृदयनाथे श्रीमति भगवति समर्पयेत्। बहिःपूजायां यजनादौ च समर्पणभावस्यैतस्य प्राथमिकी शिक्षा समधिगम्यते। अतो महर्षिः पूज्यपादः सूत्रकार इदं वक्ति यत् भगवति समर्पितेषु वस्तुषु ममत्व बुद्धिर्नोचिता। पूजायां नानोपचारसम्बन्धेन तत्तत्पदार्थानां स्वेष्टदेवाय, अन्यस्मै वा समर्पणं विहितमास्ते। अन्यच्च यजनेऽपि तादृशस्य समर्पणस्य दानस्य वा समधिकः सम्बन्धो निर्दिष्टः। अतः समर्पणे दानक्रियायां च समर्पणभावं समुन्नतं विधातुं, साधकस्य क्रमोन्नतिं स्थायिनीं च कर्तुमेतन्मूलोक्तं विज्ञानं वर्णितमास्ते।

धर्माङ्गेषु दानमतिसरलम्। दानधर्मे धर्माङ्गान्तरवत्काठिन्यं नास्ति। एतेन स्वभावत एव चित्ते भक्तिभावोद्रेको जागर्त्ति। परन्तु दानवत् प्रदत्तवस्तुभ्य आत्मीयतात्यागः सरलो न भवति, प्रत्युतातीव कठिनो वर्त्तते। अतो दर्शनशास्त्रमिदं सिद्धान्तयति यत् स्वेष्टदेवसमर्पितवस्तुषु आत्मीयतास्थापनं कदाप्युचितं नास्ति। अन्यथा ईश्वरपरायणत्वे, भक्तिभावे, आध्यात्मिकसमुन्नतौ दानधर्मे च हानिरुत्पद्यते। निष्कर्षोऽयं यत् बाह्यपूजा-मानसपूजा यजनादौ दानधर्मे वा समर्पितेषु वस्तुषु आत्मीयतास्थापनं पापजनकमाध्यात्मिकसमुन्नतिरोधकं चेत्यत्र न सन्देहलेशः। यदि लौकिके दाने आत्मीयताबुद्धिर्दोषजननी, दानधर्मविरोधिनी, तर्हि भगवदर्पितपारमार्थिकवस्तुषु आत्मीयता नितरामाध्यात्मिकावनतिकरीति निश्प्रचम्॥ ३८॥

प्रसादफलं वर्णयति—

**प्रसादेन निष्कल्मषत्वशान्तत्वम्॥ ३९॥**

प्रसादेन प्रसादग्रहणेन निष्कल्मषत्वं पापनाशः

शान्तत्वं शान्तिश्च समुपलभ्यते। आत्मप्रसाद-धर्म-प्रसाद-पूजाप्रसादभेदेन प्रसादस्य त्रैविध्यमुक्तम्। आध्मात्मिक्या आलोचनया आत्मप्रसादलाभः। आत्मन ह्यानन्दमयत्वादात्मसम्बन्धी ययाऽऽलोचनया साधक आध्यात्मिकमानन्दमात्मप्रसादमधिगन्तुं सामर्थ्यं लभते। उक्तं चापि भगवता गीतायाम्—

रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन्।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति॥
प्रसादे सर्वदुःखानां हानिरस्योपजायते।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते॥

महाभारतेऽप्युक्तम्—

चित्तप्रसादेन यतिर्जहातीह शुभाशुभम्।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमत्यन्तमश्नुते॥
लक्षणं तु प्रसादस्य यथा स्वप्ने सुखं स्वपेत्।
निवाते वा यथा दीपो दीप्यमानो न कम्पते॥

धर्मसाधनेन समुचितप्रसन्नताप्राप्तिरेव धर्मप्रसादः। साधवो हि जगदिदं भगवत्स्वरूपमवधार्य भगवत्सेवाबुद्धया सेवमाना धर्मप्रसादं लभन्ते। भागवते चोक्तम्—

अथ मां सर्वभूतेषु भूतात्मानं कृतालयम्।
अर्हयेद्दानमानाभ्यां मैत्र्या भिन्नेन चक्षुषा॥

स्वेष्टदेवसमर्पितं वस्तु पूजाप्रसादः। एवं किल प्रसादमहिमा श्रीक्षेत्रापरनामनि जगन्नाथधामनि स्पष्टतः प्रतिभासते। सुतरां प्रसादेन भक्तो निष्कल्मषत्वं शान्तिं च लभते। आत्मप्रसादे, धर्मप्रसादे, पूजाप्रसादे च निष्कल्मषत्वं शान्तत्वं नूनमेवाधिगम्यते। आध्यात्मिकचर्चया श्रवण-मनन-निदिध्यासनादिना च साधको ह्यात्मराज्यमासादयति। ततश्च भगवद्भावसान्निध्यलाभात् भक्तेभ्यो मलविक्षेपावरणरूपकल्मषस्य विनाशो जायते, भक्तैश्चाध्यात्मिकी शान्तिरवाप्यते। धर्मो हि भगवत्स्वरूपः। स च धार्मिकं पुरुषं भगवद्राज्याभिमुखं सारयति। तेनाधर्मरूपकल्मषस्य निवृत्तिर्जायते। धर्मस्य साधनेन धार्मिकस्यान्तःकरणं यदा सर्वधर्माश्रयस्य श्रीभगवतोऽभिमुखतां प्रपद्यते, तदानीं भक्तस्य साधकस्य हृदये भगवद्राज्यशान्तेः स्थितिः स्वतः सिद्धा। पूजाप्रसादलाभे आत्मप्रसाद धर्मप्रसादव्यतिरिक्तस्य प्रसादद्रव्यस्य प्राप्तिरप्याधिक्येन भवति। अतः पूजाप्रसादविषये निष्कल्मषत्वे शान्त्यधिगमे च सन्देहलेशोऽपि नास्ति। ज्ञानवान् भक्तो यदि स्वकीयाध्यात्मिकज्ञाननेत्र द्वारा नैजं प्रियतमं भगवन्तमीक्षमाणः समर्चयेत् तर्हि नूनमात्मप्रसादमधिगच्छेत्। इष्टदेवपूजास्वरूप उपासनायज्ञो महान् धर्मः। अतः सात्त्विकरीत्यैतादृशधर्मकार्यानुष्ठानेन पूर्वनिरूपितधर्मप्रसादो धार्मिकभक्तेनावश्यमेव लभ्यते। पूजाप्रसादे चैतदाधिक्यं यत् पूजायै समर्पितभोग्यपदार्थानां भावशुद्ध्योपभोगेन निष्कल्मषत्वं शान्तिश्च लभ्यत एव, प्रत्युत सद्भावद्वारा शुद्धभोग्यपदार्थसेवनेन भक्तः पवित्रताजनकं फलमपि प्राप्नोति। तादृशभक्तस्येन्द्रियसुखभोगोऽसौ तदवनतेर्निदानं न भवति, किन्तु तदुन्नतय एव कल्पते। यतोऽसौ न विषयः, किन्तु प्रसादः। पूजाप्रसादस्यैतद् वैलक्षण्यम्। आत्मप्रसादे आध्यात्मिकस्य, धर्मप्रसादे आधिदैविकस्य, पूजाप्रसादे आधिभौतिकस्य भावस्य प्राधान्येऽपि विलक्षणरूपप्रसादेऽत्र त्रयाणामपि समावेशः। त्रिविधः प्रसादस्त्रिभावात्मकः समशक्तिसम्पन्नश्च। अतस्तत्सेवनेन पापनाशः शान्तिलाभश्च चोभवीति॥३९॥

पूर्वविज्ञानमनुसरति—

## सर्वत्र फलैक्यम् ॥ ४० ॥

सर्वत्रैव फलस्यैकता वेद्या। भावप्रधानतया समर्पितवस्तूनां स्थूलमूलस्याप्रधानतया च सर्वविध समर्पणानां समानं फलमुत्पद्यते। लौकिके दानकर्मणि दातुर्महीतु-

देयवस्तुनो मूल्यस्य वैशिष्ट्यस्य च, तदुपभोगस्यानुसारेण दानफलतारतम्यम्। परन्तु स्वेष्टदेवसमर्पणे विचार एतादृङ् नापेक्षितः। यतो निखिलैश्वर्यशालिनः सर्वशक्तिमतोभगवतः सन्निधाने कस्यचन पदार्थस्य स्थूलांशो न गच्छति, भावगम्यो भावग्राही भगवान् भावमूल्यमेव गृह्णाति, सर्वत्रैव शास्त्रे वर्णितमिदं यत् भावमहिम्नाऽतिसामान्यस्यापि वस्तुनः शुद्धभावेन भगवन्तमुद्दिश्य समर्पणेन महत् फलमासाद्यते। गीतायां भक्तिभाववर्णनप्रसङ्गेन श्रीभगवतोक्तम्—

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतं गृह्णामि प्रयतात्मनः॥

स्मर्यते चापि—

भावेन लभ्यते सर्वं भावेन देवदर्शनम्।
भावेन परमं ज्ञानं तस्माद् भावावलम्बनम्॥
भावात् परतरं नास्ति येनाऽनुग्रहवान् भवेत्।
भावादनुग्रहप्राप्तिरनुग्रहान् महासुखी॥
भावात्परतरं नास्ति त्रैलोक्ये सिद्धिमिच्छताम्।
भावं हि परमं ज्ञानं ब्रह्मज्ञानमनुत्तमम्॥
भावेन लभ्यते सर्वं भावाधीनमिदं जगत्।
भावं विना महाकाल! न सिद्धिर्जायते क्वचित्॥

श्रीमद्भागवते चापि—

त्वं भावयोगपरिभावित हृत्सरोज
आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम्।
यद्यद्धिया त उरुगाय विभावयन्ति
तत्तद्वपुः प्रणयसे सदनुग्रहाय॥

प्रत्येकमपि कार्यं प्रकारद्वयेन संसाध्यते आसक्त्या भावेन च। आसक्तिर्बन्धनकारणम्, भावावलम्बनं मुक्तिहेतुः। प्रमाणप्रमेयसहितं विस्तृतं विज्ञानमिदं प्रागेव प्रपञ्चितम्। आसक्त्या योगिनोऽपि भक्तस्य कल्याणमसम्भवं तयाऽकल्याणमेव सम्पद्यते। परन्तु भगवद्भावभावितेन यद्यत्कार्यमनुष्ठीयते, तत्तत् सर्वमपि कल्याणाय कल्पते। विशेषतस्तु भगवद्भावस्य मुख्यतया सर्वास्वप्यवस्थासु सर्वविधैरपि कार्यकलापैराध्यात्मिकसमुन्नतिरूपं फलैक्यं सम्भवति। बहुमूल्यममूल्यमल्पमूल्यं वा वस्तु समर्पितं भावमुख्यतया समानमेव फलं प्रसूते। अतः सर्वविधोऽपि प्रसादो भावमुख्यतया तुल्यफलप्रदो बोभूयते॥ ४०॥

प्रसङ्गादपराधभेदमुदीरयति—

## निमित्तसंगगुणानपेक्षाकृताश्चत्वारोऽपराधाः॥ ४१॥

निमित्तकृतः, संगकृतः, गुणकृतः, अनपेक्षाकृतश्चेति चत्वारोऽपराधा भवन्ति। इच्छाया राहित्येऽपि यद्याकस्मिकेन कारणेन कश्चिदपराधो जायते तर्हि स एव निमित्तकृतो विज्ञेयः। मानवकर्मणां दैवेन जगता साकं बहुविधसम्बन्धाल्लौकिकजीवनेऽनेका अलौकिक्यो घटनाः सम्भवन्ति, सर्वस्मिन्नपि काले तत्तत्कारणसन्धानमसम्भवमेव। उक्तं च श्रीमद्भागवते—

पथि च्युतं तिष्ठति दिष्टरक्षितम्,
गृहे स्थितं तद्विहतं विनश्यति।
जीवत्यनाथोऽपि तदीक्षितो वने,
गृहेऽपि गुप्तोऽस्य हतो न जीवति॥

एवमिच्छाया असद्भावेऽपि केनाप्यलौकिकेन कारणेन मानवो यद्यपराधं करोति तस्यैव नाम निमित्तकृत इति, कुसङ्गेन समुद्भूत एव सङ्गकृतोऽभिहितः। कस्य कीदृशी प्रकृतिरिति तत्सङ्गपरीक्षणेनैव परिज्ञायते।

संसर्गजा दोषगुणा भवन्ति।

भागवतेऽप्युक्तम्—

रहूगणैतत् तपसा न याति
न चेज्यया निर्वपणाद् गृहाद्वा।
न च्छन्दसा नैव जलाग्निसूर्यैः
विना महत् पादरजोऽभिषेकम्॥

महत्सेवाद्वारमाहुर्विपत्तेः
तमोद्वारं योषितां सङ्गिसङ्गम् ॥

अतो दुःसङ्गजनित एवं संगकृतोऽपराधो वेद्यः। महात्मना भर्तृहरिणाऽप्युक्तम्—

सन्तप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनी पत्रस्थितं राजते।
स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते
जायन्तेऽधममध्यमोत्तमगुणाः संसर्गतः प्रायशः॥

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्र स्थितास्तु तरवस्तरवस्त एव।
मन्यामहे मलयमेव यदाश्रयेण
कङ्कोलनिम्बलकुचा अपि चन्दनाः स्युः॥

साधकस्वभावोद्भूत एव गुणकृतोऽपराधो विज्ञातव्यः।

'अतीत्य हि गुणान् सर्वान् स्वभावो मूर्ध्नि वर्त्तते।' भगवता गीतायामपि गीतम्—

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति॥
इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ॥

एवं किल जीवः स्वभाववशवर्त्ती भूत्वाऽनुकूले वस्तुनि रागं प्रतिकूले च द्वेषं विधत्ते। एतेन यो ह्यपराधः समुत्पद्यते तस्यैव नाम गुणकृत इति। प्रमादजन्योऽनपेक्षाकृतोऽपराधः कथ्यते। यतस्तमोगुणोद्भूतत्वात् प्रमादस्य तद्युक्तमानवस्य विपरीतबुद्धिसम्भावना स्वाभाविकी। कारणमन्तरेणापि प्रमादग्रस्तमनुष्यद्वारा बहवोऽपराधा जायन्ते। अतोऽपेक्षाया अभावे क्रियमाणोऽपराधोऽनपेक्षाकृतः स्वीक्रियते। एवं किलापराधाश्चतुर्धा विभक्ताः। सकला अप्येते भक्तानामवनतिहेतवः। तस्मान्मुमुक्षुभिर्भक्तैः सर्वविधेभ्योऽपराधेभ्य आत्मा पृथक् कार्यः। तदैव भक्तिमार्गं सरलो जायते॥ ४१॥

प्रसङ्गात्साधकस्य पतनकारणं व्याचष्टे—

## पीठगुरुप्रसादेषु भौतिकलौकिकभोगभावादवपतनम् ॥ ४२ ॥

पीठे भौतिकत्वस्य, गुरौ लौकिकत्वस्य प्रसादे च भोगस्य भावेत साधकस्य पतनं जायते। सर्वव्यापकत्वाद् भगवतः सत्ता सर्वत्रैव व्याप्नोति। "आब्रह्मस्तम्बपर्यन्तं तन्मयं सकलं जगदिति" स्मार्त्तो राद्धान्तः। सेयं सत्ता साधकस्य श्रद्धाविश्वासाभ्यां वैदिक्याः क्रियायाश्च बलेन पीठे प्राकट्यमापद्यते। प्राणमयकोषसाहाय्येन स्थूले सूक्ष्मे च जगति यत् प्राणावर्त्तस्वरूपं देवानामुपयोगि आसनं देवाविर्भावस्थानं वा निर्मीयते तदेव पीठनाम्नोच्यते। पञ्चविधेषु पीठेषु उपासनापीठश्चैकम्। तदेतद् दिव्यदेशानाम्नाऽप्युक्तम्। तच्च यथा—

"तन्त्रेषु दिव्यदेशाः षोडश प्रोक्ता यथाऽत्र कथ्यन्ते। अग्न्यम्बुलिङ्गवेदीभित्तिरेखा तथा च चित्रञ्च॥ मण्डलविशिखं देवो नित्यं पात्रं पीठं च भावयन्त्रञ्च। मूर्त्तिर्विभूतिर्नाभिर्हृदयं मूर्धा च षोडशैते स्युः॥" इति।

(१) अग्निः, (२) जलम्, (३) लिङ्गं शिवलिङ्गादि, (४) वेदी, (५) भित्तिरेखा, (६) चित्रम्, (७) मण्डलम्, (८) विशिखः शस्त्रादि, (९) नित्ययन्त्रम्, शालग्रामनर्मदेश्वरादिशिला, (१०) पीठं तीर्थनाम, (११) भावयन्त्रम् यथा शिव-विष्णु-कालीप्रभृतिदेवतायन्त्राणि, (१२) मूर्त्तिः—मृण्मयी, अष्टधातुमयी, दारुमयी प्रभृति, (१३) विभूतिः—कुमारीबटुकादिः, (१४) नाभिः, (१५) हृदयम्, (१६) मूर्धा—भ्रूवोर्मध्यस्थानम्। एते दिव्यदेशा उपासनापीठनाम्ना प्रोच्यन्ते। पञ्चसु द्वितीयं मन्दिरतीर्थादिविशिष्टं स्थानम्। तच्च

नैमित्तिकभेदेन द्विप्रकारकम्। तृतीयं जीवयान्त्रिकपीठम्—यथा कुमारीवटुकादौ देवाविर्भावना, सर्वविधसाधनेषु देवाविर्भावो वा। चतुर्थं स्थूलं यान्त्रिकं पीठम्—यथा घटादिस्थूलयन्त्रेषु प्राणशक्तिसाहाय्येन दैवशक्तीनामाविर्भावः। पञ्चमं सहजपीठम् यथा स्त्रीपुरुषसमागमरूपम्। कुत्रापि शास्त्रे पीठस्य चतुःप्रकारता प्रोक्ता। प्रथमं यथा स्थावरपीठम्, द्वितीयं सहजपीठम्—नरनारीसमागमरूपम्, तृतीयं दैवपीठम्—यथेन्द्रलोकादि, चतुर्थं यौगिकं पीठम् यथा—पूर्वोक्तोपासनापीठादि। चतुर्ष्वेतेषु पूर्वोक्तपञ्चविधपीठानामन्तर्भावः। एतत्पीठविज्ञानविषये दर्शनशास्त्रे स्थानान्तरे विस्तृतवर्णनमनुसन्धेयम्।

एवं किल विग्रहादौ भगवत्कलाया विकासाय आवाहनाय वा साधकस्य श्रद्धाभक्तिविश्वासानां महती प्रयोजनीयता। भगवतः किं स्वरूपेऽपि विग्रहे दैवशक्तिर्विकसति, यत्र बहुजनश्रद्धाभक्तिविश्वासा भवन्ति। अतो यदा कस्यचिन्मानवस्य बुद्धिः पीठेषु भगवद्भावविरहिता जायते, तदा भगवतः सर्वव्यापकसत्ताया अपमानजनको भौतिको भावो भगवद्विग्रहादि पीठेषु समुत्पद्यते। स च साधकस्य आस्तिक्यविनाश-भक्तिश्रद्धादिहीनत्वदोषाध्यात्मिकपतनादीनां निदानत्वं प्रपद्यते। पूर्वोक्तपीठेषु यदा सर्वदैव देवर्षिपितॄणामाविर्भावस्तिष्ठति, तदा सर्वाण्यपि पीठानि देवरूपाण्यवगन्तव्यानि, विशेषतश्च यदा दिव्यदेशेषु स्वेष्टदेवोपासनायां क्रियमाणायां पीठैः सह सगुणस्य स्वेष्टदेवस्य साक्षात् सम्बन्धस्तिष्ठति। अतः पीठेषु भौतिकभावोऽनुचितः पापजनकश्च। अत एतादृश निकृष्टभावनया भक्तस्य पतनमवश्यम्भावि, तथैव गुरौ लौकिकबुद्धिः साधकस्य सिद्धिलाभं निरुणद्धि। यतो "गुरु" तत्त्वनिर्णयावसरे स्पष्टमेतत्प्रतीयते यत् यथार्थगुरुः परमात्मैव। किन्तु परमात्मनो निराकाराज्ञेयागोचरतया जीवानां संसारसागरसमुत्तारणाय निराकारेश्वरगुरुत्वस्वीकारः साध्यातीतः। अतो येन मानवकेन्द्रेण परमात्मनो भावज्ञानादीनि प्रकटीभूय साधकानामज्ञानतिमिरान्धनेत्रं ज्ञानाञ्जनशलाकया प्रकाशितं जायते, तद्धि "गुरुः" इत्युच्यते। अतः शास्त्रेषु गुरुः परमात्मभावनया पूज्यो निर्दिष्टः। यथाहि—

गुरुर्ब्रह्म स्वयं साक्षात् सेव्यो वन्द्यो मुमुक्षिभिः।
नोद्वेजनीय एवायं कृतज्ञेन विवेकिना॥
ब्रह्मा विष्णुश्च रुद्रश्च पार्वती परमेश्वरः।
इन्द्रादयस्तथा देवा यक्षाद्याः पितृदेवताः॥
गङ्गाद्याः सरितः सर्वा गन्धर्वाः सर्पजातयः।
स्थावरा जङ्गमाश्चान्ये पर्वताः सार्वभौतिकाः॥
एते चान्ये च तिष्ठन्ति नित्यं गुरुकलेवरे।
श्रीगुरोस्तृप्तिमात्रेण तृप्तिरेषां च जायते॥
ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम्।
मन्त्रमूलं गुरोर्वाक्यं सिद्धिमूलं गुरोः कृपा॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः 'साक्षात्' परब्रह्म 'तस्मै श्री गुरवे' नमः॥
गुरुस्तीर्थं गुरुर्यज्ञो गुरुर्दानं गुरुस्तपः।
गुरुरग्निर्गुरुः सूर्यः सर्वं गुरुमयं जगत्॥
आचार्यं मां विजानीयात् नावमन्येत कर्हिचित्।
न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः॥
यस्य साक्षाद् भगवति ज्ञानदीपप्रदे गुरौ।
मर्त्यबुद्धिः श्रुतं तस्य सर्वं कुञ्जरशौचवत्॥

पूर्वोक्त त्रिविधप्रसादेषु पूजाप्रसादस्य महत्त्वमिदमवधेयं यत् अत्र भोगबुद्ध्या धर्मप्रसादात्मप्रसादयोः प्राप्तिस्तु भवत्येव नहि, साधको बन्धनमवाप्नोति, खाद्यवस्तुनि विद्यमाना स्वाभाविकी रसनेन्द्रियलालसा जीवे विद्यमाना तिष्ठति भगवत्प्रसादबुद्ध्या सा निवर्तते। यतः प्रसादबुद्धिः भावशुद्धिं विदधती प्राकृतिकं लोभं प्रशमयति। प्रसादे भोगबुद्ध्या भावशुद्धेरभावो जायते। अतः प्रसादे भोगबुद्धिः साधकस्याधःपतनकारणम्॥ ४२॥

क्रमोन्नतिसाधनानि निरूप्यन्ते—

**मुख्यान्येतानि सहायकत्वात् ॥४३॥**

सहायकस्य भावः सहायकत्वं तस्मात् एतानि पूर्वोक्तानि मुख्यानि भवन्ति । पूर्वप्रतिपादितभावानां याथातथ्यसाधनेन साधकसमुन्नतौ साहाय्यमासाद्यते, अतस्तादृशा भावा मुख्यसाधननिरूपेण समाम्नाताः । पीठे भौतिकभावं परित्यज्य पवित्रदिव्यभावस्थापनेन पूर्वसिद्धान्तमनुसृत्य साधकस्याध्यात्मिकी समुन्नतिर्जायते । जगद्गुरुस्वरूपे गुरौ ब्रह्मभावात् प्रसादे भोगबुद्धेरभावाच्च आध्यात्मिक्यां समुन्नतौ साहाय्यमधिगम्यते । स्वेष्टदेवाय गुरवे वा समर्पितवस्तुभ्यो भोगबुद्धिसम्बन्धापसारणेन स्थूलः प्रसादोऽसावात्मप्रसादमुत्पादयन् साधकस्याध्यात्मिकोन्नतिकरो जायते । त्रिविधेन तेन साधकक्रमोन्नतिविज्ञानरहस्य पूर्वमेव सुविवेचितम् । अतः पूर्वसूत्रप्रतिपादितस्य त्रिभावस्य मुख्यताऽवगन्तव्या ॥ ४३ ॥

साधकोन्नतिलक्षणं निरुच्यते—

**दिव्यभावविकाशो लिङ्गमुन्नतेः ॥४४॥**

दिव्याश्च ते भावास्तेषां विकाशो हि समुन्नतेर्लिङ्गम् । दिव्यभावविकासेनैव साधकोन्नतिर्भवतीत्यर्थः । पूज्यपादो महर्षिः सूत्रकारः सूत्रेणैतेन स्वमतानुसारेण साधकोन्नतेः प्रधानलक्षणं निर्वक्ति । वक्ष्यमाणसूत्रैर्विविधमहर्षिमतानि निर्वक्ष्यन्ते ।

सृष्टावत्र दैवी आसुरी चेति द्विविधा सम्पत्तिर्विद्यते । एतत्सम्पत्तिद्वयप्रतिद्वन्द्वितैव शास्त्रेषु देवासुरसंग्राम नाम्ना प्रोक्ता । दैवीसम्पत् जीवमुन्नमयति, आसुरी चाधोगमयति । दैवीसम्पत्तिः पुण्यमयी, आसुरी च पापमयी प्रतिपादिता । गीतायां यथा—

अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥
अहिंसासत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥
दैवी सम्पद्विमोक्षाय निबन्धायासुरीमता ।
मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥

अन्यच्चापि—

द्वौ भूतसर्गौ लोकेऽत्र दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥
प्रवृत्तिं च निवृत्तिं च जनानविदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥
असत्यमप्रतिष्ठं जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रताः ॥
चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥
आढ्योऽभिजनवानस्मि कोऽन्योस्ति सदृशा मया ।
यक्ष्ये दास्यामि मोदिस्ये इत्यज्ञानविमोहिताः ॥
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥

आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम्॥
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः।
मामात्मपरदेहेषु विद्विषन्तोऽभ्यसूयकाः॥
तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्॥

आसुरसम्पन्नाशपुरस्सरं दैवसम्पद्विकासेन साधके भक्तेरुदयो जायते, साधकस्य क्रमोन्नतिश्च सम्पद्यत इत्यङ्गिरो महर्षिमतम्॥ ४४॥

साधनराज्यसमुन्नतिसम्बन्धे तत्तन्महर्षीणां मतानि क्रमशो निर्दिश्यन्ते—

## पूजादिषुरतिरिति पाराशर्यः ॥४५॥

पूजादिषु रतिरनुराग एव समुन्नतेर्लक्षणम् इति वेदव्यास उवाच। भगवत्पूजादावनुरागी हि साधकस्य चेतसो गतिं कल्याणकरीं कुर्वन् तामाध्यात्मिके मार्गे समुन्नमयति। अतो भगवतः पूजायामनुराग एव साधनराज्ये समुन्नतिकर इति महर्षि वेदव्यासमतम्। बहिः-पूजा, अन्तःपूजेति भेदेन पूजा द्विविधा। स्थूलमूर्त्तौ पुष्पधूपनैवेद्यादि बाह्यार्चनीय द्रव्यादिना बहिः-पूजा सम्पद्यते। द्विदले हृदयकमलासने वा भगवतो मनोमयीं मूर्त्तिं संस्थाप्यान्तःकरणेनैव समनुष्ठिताऽन्तःपूजा प्रोच्यते। इयं द्विविधपूजापद्धतिरतिरेव साधनमार्गे साधकमग्रेसारयतीत्यतः इयमेव साधकोन्नतिलक्षण-स्वरूपा वेद्या।

वृत्तिपुत्तलिकास्वरूपो मानवः साधकः स्वेन्द्रिय-तृप्तये आनन्दमधिगन्तुं प्रयतते। येन भावेन भावितः साधकमानवो येषु पदार्थेषु आनन्दमनुभवति, तयैव पद्धत्या तेनैव भावेन भाविताऽसौ निज प्रियजनाय तानेव पदार्थान् समर्प्य आनन्दमनुभवति। सुतरां भक्तिमान् साधकः स्वीयायाः स्वभावसिद्धाया भावनायाः साहाय्येन स्वकीयप्रियवस्तूनां समर्पणेन निज-हृदयनाथं भगवन्तं सन्तोष्य स्वयमपि साधकः सन्तोष-मेति। पूजारहस्यमेतदेव, साधके यथायथा सद्भाव-सेविता इष्टपूजा प्रवृत्तिर्वर्धते, तथा तथा तत्र भक्तिरप्यु-देति। स्वप्रकृति-प्रवृत्ति-सद्भाव-जनित सुख-भोग-संस्काराभ्यासो यथा यथा स्वस्मिन् ह्रसति स्वेष्टदेवं प्रति च प्रवर्धते, तथातथैव भक्तिरपि दृढायते। भावः शब्दप्रकाश्यः। शब्दस्तु मुखनिस्सृतोऽन्तर्भावद्योतकः। साधकस्यान्तरिको भावस्तन्मुखोच्चरित शब्दश्रवणेन विज्ञायते। सुतरां साधकमुखेभ्यो यदा अन्य-विषयक कथा सदैव न निःसरेत्, किन्तु भगवद् गुणानुवादचर्चैव समधिकरूपेण निर्गच्छेत्, तदा साधको तत्र भक्तिभावोदयो जात इत्यवधेयम्। अन्तर्भावपरिज्ञानमतिकठिनमतो भगवत्कथासाहाय्येन साधकान्तःकरणभक्तिभावपरिज्ञानपद्धतिरेव मुख्येति महर्षि वेदव्यासमतम्।

अन्तिमतत्त्वं भाव एव। अतो भगवान् भावातीतः प्रोक्तः। नामरूपजनकोऽपि भाव एवति पूर्वमेव सुनिर्णितम्। अतो भावसम्बद्धस्थूलमूर्तिरवलम्बनेन बहिःपूजाया अन्तःपूजायाश्च विधानमुपासनाकाण्डस्य प्रधानमवलम्बनमवधेयम्। एतदुपासनाकाण्डप्रधाना-वलम्बनस्य यत्र सत्पुरुषैः विकासस्तत्र भक्तिलक्षणं विकासं प्राप्नोतीत्यत्र नास्ति सन्देहलेशोऽपि॥ ४५॥

महर्षि गर्गमतमाचष्टे—

## कथादिषु रतिरिति गर्गः॥ ४६॥

भगवत् कथादिषु रतिरनुराग एव साधकं भक्ति-मार्गेऽग्रे सारयतीति महर्षि गर्गमतम्। भगवत् कथानु-

राग एव भक्तसमुन्नतिलक्षणस्वरूपः। साधनातिरिक्त-समयेऽपि यदि स्वभावत एव भक्तचित्ते भगवत्कथा श्रवणप्रीतिरुदीयात् तर्हि ज्ञातव्यं यत् भक्त आध्यात्मिकमार्गेऽग्रेसरति। तथाचोक्तं भागवते—

संसारसिन्धुमतिदुस्तरमुत्तितीर्षो-
नान्यः प्लवो भगवतः पुरुषोत्तमस्य।
लीलाकथारसनिषेवणमन्तरेण
पुंसो भवेद् विविधदुःखदवार्दितस्य॥
संकीर्त्यमानो भगवाननन्तः
श्रुतानुभावो व्यसनं हि पुंसाम्।
प्रविश्य चित्तं विधुनोत्यशेषम्
यथा तमोऽर्कोऽभ्रमिवातिवातः॥
मृषागिरस्ता ह्यसती रसत्कथा
न कथ्यते यद् भगवानधोक्षजः।
तदेव सत्यं तदुहैव मङ्गलं
तदेव पुण्यं भगवद्‌गुणोदयम्॥
तदेव रम्यं रुचिरं नवं नवं
तदेव शश्वन्मनसो महोत्सवम्।
तदेव शोकार्णव शोषणं नृणाम्
यदुत्तमश्लोकयशोऽनुगीयते॥

भगवत एतादृशकथारतिरवश्यमेव समुन्नतिसाधयित्री दिव्यभावलक्षणस्वरूपेत्यत्र नास्ति सन्देहलेशोऽपीति॥ ४६॥

मतान्तरं व्याहरति—

**आत्मन्यविरोधेनेति शाण्डिल्यः॥ ४७॥**

अविरोधेन बाधामन्तरेण आत्मनि परमात्मनि रतिरेव अध्यात्मराज्याग्रेसरत्वलक्षणमिति महर्षि शाण्डिल्यमतम्। आत्मनः स्थिरायां रतौ बाधाभावमूलिकाया धारणायाः समुत्पत्तिरेव महर्षि शाण्डिल्यमते भक्तेरुदयस्य लक्षणम्। आसक्त्या बन्धनं भावेन च मोक्ष इति सिद्धान्तः पूर्वमेव निर्णीतः। तमेव विज्ञानमनुसृत्य विषयासक्तिं त्यजतो भक्तसाधकस्य चेतो भगवद्भावभावितं सत् यदा भावावेशादात्मरतियुक्ततामुपैति, तदैव भक्तस्य तस्यावस्था उत्तमाङ्गीकृता। साधकस्य चित्तं बहिर्मुखमन्तर्मुखं वा भवेत्, सर्वदैव तत् यदि अध्यात्मभावसंयुक्तं भवेत्, साधकः शरीरमनोवचोभिः सर्वमपि कार्यं भगवद्भावभावितः कुर्यात्, तदैव साधके दृढभक्तिरूपाया आत्मरतेरुदयो जायेत। एतदेव त्रिलोकपवित्रकारिण्या भक्तेराविर्भावस्य प्रधानं लक्षणमवधेयम्। यथा चोक्तं भगवता व्यासदेवेन योगदर्शने—

चित्तं नदीनामुभयतो वाहिनी।
वहति कल्याणाय वहति पापाय॥

चित्तं सत्वगुणाभिमुखं प्रवाहयन् मानवः पुण्यात्मा साधकः, तमोभिमुखं प्रवाहयन् विषयपरायणः पापात्मा च मानवः प्रोच्यते। भक्तशिरोमणिना प्रह्लादेन भगवान् प्रार्थितः—

या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्माऽपसर्पतु॥

यदा साधकस्य भक्तिभावपरिपूर्णः चेतो जाह्नव्या अविरलपवित्रप्रवाह इव सच्चिदानन्दसमुद्रे प्रधावेत्, सांसारिकी काऽपि बाधा तदीयचित्तप्रवाहगतिरोधं नैव कदापि विदध्यात्, तदा स्वीकार्यमेतद् यत् साधकभक्ते आत्मरतिवृत्तिस्वरूपसाधनमार्गीय समुन्नतिलक्षणं प्रकाशमापन्नमिति॥ ४७॥

अन्यन्मतमुच्यते—

**महिमाख्यानमिति भरद्वाजः॥४८॥**

भगवतो महत्त्ववर्णनमिति भरद्वाजमतम्। यदा साधकस्य चेतसि भगवल्लोकातीतानुपममाहात्म्यवर्णनसमीहा समुत्पद्येत, तदानीमवधेयं यत् साधकः समु-

न्नतिमार्गाभिमुखमग्रेसरतीति महर्षि भरद्वाजसम्मतम्। साधनसमयव्यतिरिक्ते कालेऽपि यदा साधको भगवत्प्रेममुग्धो भूत्वा तदीयसुमधुरगुणगणनकीर्त्तयन् समस्तमपि भुवनं पवित्रयन् विचरति तदा विज्ञेयमेतद् यद्भक्तस्य हृदयसरोजं भगवत्प्रेममयसुमधुरकिरणद्वारा प्रफुल्लितं जातम्। भक्त एतादृशः शीघ्रमेव अध्यात्मराज्ये प्रतिष्ठामधिगमिष्यतीति नात्र सन्देहलेशोऽपि। साधकचित्ते भगवन्महत्वे सुप्रतिष्ठिते जाते तदीयं च महत्वं जगत्यहर्निशं प्रकाशयितुं प्रवर्त्तमानो दृश्यते, तदा सूत्रोक्तं विज्ञानं सार्थकमभूदित्यवगन्तव्यम्। दशायामत्र साधको भगवन्महत्ववर्णनमन्तरेण नैव स्थातुं शक्नोति। वस्तुतो भक्तिभावप्रकाशकलक्षणमिदं भक्तेर्द्योतकमास्ते। उक्तं च भगवता व्यासेन भागवते—

निवृत्ततर्षैरुपगीयमानाद्-
भवौषधाच्छ्रोत्रमनोऽभिरामात्।
क उत्तमश्लोकगुणानुवादात्
पुमान् विरज्येत विना पशुघ्नात्॥
शृण्वन् सुभद्राणि रथाङ्गपाणे-
र्जन्मानि कर्माणि च यानि लोके।
गीतानि नामानि तदर्थकानि
गायन् विलज्जो विचरेदसङ्गः॥

गीतायामप्युक्तम्—

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥

अतो भगवन्महत्त्वकीर्त्तनपरायणोऽनुकम्पापात्र साधको भक्तोऽचिरादेव समुन्नतिमार्गमधिरोहतीत्यत्र कः सन्देहः? एतदेव पूज्यचरणमहर्षि भरद्वाजनिर्दिष्टमहिमाख्यानं रूपं साधकसमुन्नतिलक्षणमवगन्तव्यम्॥ ४८॥

अन्यमतमभिधत्ते—

**जगत्सेवाप्रवृत्तिरिति वशिष्ठः॥ ४९॥**

जगत्सेवायां प्रवृत्तिरेव समुन्नतिलक्षणमिति महर्षेर्वशिष्ठस्य मतम्। यदा साधकस्य प्रवृत्तिर्जगत्सेवायामाकृष्टा नियोजिता च जायते तर्हि ज्ञातव्यं यत् साधकः साधनराज्ये समुन्नतिमकार्षीदिति महर्षिवशिष्ठसम्मतिः। भगवता गीतायामपि प्रोक्तम्, तथाहि—

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥

आब्रह्मस्तम्बपर्य्यन्ते सर्वत्रैव संसारे भगवत्स्वरूपं निरीक्षमाणो भक्तः स्वभावत एव भगवतः स्वरूपस्य जगतः सेवायां प्रवर्तत इत्यत्र कः सन्देहः? अतो जगद्ब्रह्मस्वरूपमवधार्य जगत्सेवैव भगवत्सेवाज्ञानी भक्तो यदा मन्यते तदा जगत्सेवाप्रवृत्तिरवश्यमेव साधनमार्गेसमुन्नतिपरिचायिका। कार्ये कारणे च ब्रह्मण्यभेदः। कार्यं कारणं च ब्रह्मैकमेवेति सर्वशास्त्रैरुच्चैरुद्घुष्टम्। कार्यब्रह्मस्य सेवया कारणब्रह्मसेवा स्वतःसिध्यति। एतादृशपरमोदारसेवाकार्येण भगवद्भक्तेरवाप्तिः स्वाभाविकी।

एतद्धि महर्षि वशिष्ठप्रोक्त जगत्सेवाप्रवृत्तिस्वरूपं साधकसमुन्नतिलक्षणमवधेयम्। भगवद्व्यासप्रणीते श्रीमद्भागवते परमात्मस्वरूपपरिज्ञानपूर्वक जागतिक हितसाधनपरायणभक्त विशिष्टमहत्त्ववर्णनं समनुष्ठितमास्ते। तत्र च जगत्सेवाविमुखभक्तस्य निन्दाऽपि विहिताऽस्ति।

तथाहि—

निषेवितानिमित्तेन स्वधर्मेण महीयसा।
क्रियायोगेन शस्तेन नाऽति हिंस्रेण नित्यशः॥

मद्धिष्ण्यदर्शनस्पर्शं पूजास्तुत्यभिवन्दनैः।
भूतेषु मद्भावनया सत्त्वेनाऽसङ्गमेन च॥
महतां बहुमानेन दीनानामनुकम्पया।
मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च॥
मद्धर्मणे गुणैरेतैः परिसंशुद्ध आशयः।
पुरुषस्याञ्जसाभ्येति श्रुतमात्रगुणं हि माम्॥
अहं सर्वेषु भूतेषु भूतात्माऽवस्थितः सदा।
तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम्॥
यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम्।
हित्वाऽर्चां भजते मौढ्यात्भस्मन्येव जुहोति सः॥
द्विषतः परकाये मां मानिनो भिन्नदर्शिनः।
भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति॥
अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे।
नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः॥
आत्मनश्च परस्यापि यः करोत्यन्तरोदरम्।
तस्य भिन्नदृशो मृत्युर्विदधेम यमुल्वणम्॥
अथ मां सर्वभूतेषु भूतात्मानं कृतालयम्।
अर्हयेद्दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा॥
मनसैतानि भूतानि प्रणमेद् बहुमानयन्।
ईश्वरो जीवकलया प्रविष्टो भगवानिति॥

अतः किल भगवत्स्वरूपं जगदवधार्य यथाधिकारं द्रव्येण विद्यया ज्ञानादिना च जगदिदं सेवमानो भक्तः साधको भगवद्भक्तिं लयते। एतादृशजगत्सेवाप्रवृत्तिर्यत्र भक्ते दरीदृश्यते स किल नूनमेव मुक्तिदाया भक्तेरधिकारीति। एतद्धि महर्षिं वशिष्ठं प्रोक्तं साधनोन्नतिलक्षणम्॥ ४९॥

अन्यन्मतं निरूपयति—

**तदर्पिताऽखिला चरण इति कश्यपः॥ ५०॥**

तस्मिन् परमात्मनि अर्पितमखिलमाचरणं येन सः साधकोऽधिगतसमुन्नतिमार्ग इति महर्षिं कश्यपस्य मतम्। मुक्तस्वरूपोऽप्यात्मा स्थूलसूक्ष्मकारणशरीररूपोपाधिग्रस्तस्त्रिविधशरीरजनितशुभाशुभकर्मभिर्निजाभिमानाद् बद्धः। यथाचोक्तं श्रुतौ—

नैव स्त्री न पुमानेष नचैवाऽयं नपुंसकः।
यद्यच्छरीरमादत्ते तेन तेन सयुज्यते॥
गुणान्वयो यः फलकर्मकर्त्ता
कृतस्य तस्यैव सचोपभोक्ता।
स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा
प्राणाधिपः संचरति स्वकर्मभिः॥
संकल्पनस्पर्शनदृष्टिमोहै-
र्ग्रासाम्बुवृष्ट्यात्मविशुद्धजन्म।
कर्मानुगान्यनुक्रमेण देही
स्थानेषु रूपाण्यमभिसंप्रपद्यते॥
स्थूलानि सूक्ष्माणि बहूनि चैव
रूपाणि देही स्वगुणैर्वृणोति।
क्रियागुणैरात्मगुणैश्च तेषां
संयोगहेतुरपरोऽपि दृष्टः॥

गीतायामप्युक्तम्—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहंकारविमूढात्मा कर्त्ताहमिति मन्यते॥
पुरुषः प्रकृतिस्थो हि भुक्ते प्रकृतिजान् गुणान्।
कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु॥

अतः कर्मासक्तिरेव जीवबन्धननिदानम्। यः साधकः सकलान्यपि कर्माणि भगवते समर्प्य कर्मविपाकजनितफलाफलनिर्लिप्तो भवति, सच शीघ्रमेव कर्मासक्तिमहंकारं च परित्यज्य प्रकृतिबन्धननिर्मुक्तो जायत इत्यत्र नास्ति सन्देहः। श्रीमद्भगवच्चरणारविन्दे नैजानि सर्वाण्यपि कर्माणि समर्पयतः साधकस्य चेतसः कर्तृत्वाभिमानः समूलं विनश्यति। एवं व्यष्टिसत्तया अहंकारे विनष्टे साधकः शीघ्रमेव समष्टि-

सत्तायामात्मानं विलीय स्वस्वरूपोपलब्धिं करुते। अतो महर्षि कश्यपमतेन तदर्पिताखिलाचरणं समुन्नति-लक्षणमित्यत्र सन्देहलवोऽपि नास्ति। उक्तं च भगवता गीतायाम्—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनः।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि॥
ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते॥
तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्।
भवामि न चिरात्पार्थ! मय्यावेशितचेतसाम्॥

एतद्धि तदर्पिताखिलाचरणसाधकस्य भक्तिराज्य-समुन्नतेः परमं परिचायकमवगन्तव्यम्॥ ५०॥

पुनर्मतान्तरमभिधत्ते—

## तद्विस्मरणाद् व्याकुलतेति नारदः॥ ५१॥

तस्य भगवतो विस्मरणेन व्याकुलताप्राप्तिरेव समुन्नतेर्लक्षणम्। यदा भक्तचित्ते भगवन्तं प्रति तादृश-माकर्षणमुत्पद्यते, यस्य विरहेण भक्तमनो नितरां व्याकुलत्वमनुभवेत्, तदाऽवधेयं यत् साधनमार्गे भक्तः साधक उन्नम्यते इति महर्षि नारदमतमास्ते। यदा साधकस्य चित्तं भगवदभिमुखं तिष्ठेत्; येन वैकल्या-भावात् शान्तेरानन्दस्य लाभो भवेत्; यदा च गुणः प्रभावतो भक्तस्य चेतो भगवतोऽसान्निध्याद् घोररूपाऽ शान्तिं दुःखं चानुभवेत्, तदैव देवर्षि नारदमतेन साधके भक्तेरुदयस्य लक्षणं प्राकट्यमापद्यत इति विज्ञातव्यम्। लौकिके जगति साधारणतः प्रेमपात्रं प्रति प्रेम्णोऽवस्थाद्वयं दृश्यते। प्रेमाधारस्य सन्नि-धावागमनेन प्रेमविकास इति प्रथमावस्था, तस्य च प्रेमपात्रस्य विदेशगमने तस्य सान्निध्याभावात् आकर्ष-णस्याल्पता, प्रीतेर्विस्मृति स्वल्पस्मृतिर्वा जायते; इयं प्रीतेः साधारणी द्वितीयाऽवस्था वेद्या। परन्तु यथा पतिप्राणायाः सत्याः पत्युरसान्निध्ये परदेशगमने प्रेम तीव्रत्वं भजते, तथैव यदि प्रेमपात्रे चक्षुर्विषयातिक्रान्ते प्रेमासक्तस्य मानवस्य हृदयं विरहयन्त्रणा व्याकुलीभूतं जायेत, तदाऽवधेयं यत् प्रेमविशिष्टां समुन्नतदशाम-धिगतवदिति। एतादृशलौकिकप्रेमवत् भगवन्तं प्रति यदा भक्तहृदयप्रेमप्रवाहो गम्भीरभावेन तथा प्रवहेत् येन भगवतो विरहे भगवद्भक्तः, क्षणार्धमपि सुस्थिरो न स्यात्, भक्तहृदयसिन्धुरुद्वेलितो भूत्वाऽविरलयाऽ श्रुधारया भक्तवक्षःस्थलं परिप्लावितं विदध्यात्, भगवत् विरहदवाग्निर्दिवानिशं भक्तहृदयकाननं दग्धं विदधीत, तदाऽवगन्तव्यं यत् प्रेममये साधनराज्ये भक्तेन साधी-यसी समुन्नतिरनुष्ठितेति। "तीव्र संवेगानामासन्नतमः" इति योगदर्शनसूत्रद्वारा महर्षिणा पतञ्जलिनाऽपि देवर्षि-नारदमतमनुमोदितम्। श्रीमद्भागवते भगवता श्री-कृष्णेन गोपीनां प्रश्नस्योत्तरे विरहमहत्त्वं समुद्घुष्टम्। तथाहि—

नाहं तु सख्यो भजतोऽपि जन्तून्
भजाम्यमीषामनुवृत्तिवृत्तये।
यथाऽधनो लब्धधने विनष्टे
तच्चिन्तयाऽन्यन्निभृतो न वेद॥
एवं मदर्थोज्झितलोकवेद-
स्वानां हि वो मय्यनुवृत्तयेऽबलाः।
मया परोक्षं भजता तिरोहितं
मा सूयितुं मार्हथ तत् प्रियं प्रियाः॥

भगवत्प्रेममग्नगोपीनां विशिष्टं प्रेमावधायापि मध्ये मध्ये भगवत्तिरोधानकारणमेतदेव यद् विरहे न्यूनमपि प्रेम महदाधिक्यं प्राप्नुयाद् येन गोप्यो मोक्षप्रदं पूर्णप्रेमाधिगच्छेयुः, यतस्ताः संसारस्य सर्व-विधमाकर्षणं परित्यज्य समागताः। तासां परिपूर्णप्रेम-

मार्गे सर्वविधानामन्तरायाणां विरहाग्निना दहनमत्यावश्यकम्। अतएव गोपीभिर्विरहे भगवतः पूर्णा यन्त्रणाऽनुभूता। भगवदन्तर्धाने व्याकुला उन्मादिन्यो भूत्वा समस्तेऽपि वने दास्यमाना महता परिश्रमेण भगवदन्वेषणमकार्षुः। उक्तं च भागवते—

अन्तर्हिते भगवति सहसैव व्रजाङ्गना।
अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम्॥
गायन्त्य उच्चैरमुमेवसंहता
विचिक्युरुन्मत्तकवद् वनाद् वनम्।
पप्रच्छुराकाशवदन्तरं बहि-
र्भूतेषु सन्तं पुरुषं वनस्पतीन्॥
हा नाथ रमण प्रेष्ठ! क्वासि क्वासि महाभुज।
दास्यास्ते कृपणायां मे सखे दर्शय सन्निधिम्॥

अतो महर्षिं नारदोक्ता भगवद् विरहव्याकुलताप्राप्तिः साधनसमुन्नतेरुत्तमं लक्षणभूतेत्यत्र न मनागपि संशयलेशः॥ ५१॥

भगवद्भक्तौ किमपेक्षितमित्युच्यते—

**माहात्म्यज्ञानमपेक्ष्यम्॥ ५२॥**

भगवत्प्रेम मौलिकं कारणं माहात्म्यविज्ञानमेव। भगवत्प्रेम्णि तदेवापेक्षितम्। तेनैव साधकसमुन्नतिरिति। पूज्यपादेन महर्षिणा सूत्रकारेण पूर्वं स्वीयं मतमुक्त्वा ततश्चान्येषां सप्त महर्षीणां भगवद्भक्तिसमुदयरूपाणि स्वतन्त्रमतानि निर्दिष्टानि। सम्प्रति भक्तिविज्ञानपरिपुष्टये प्रोच्यते यत् साधके भक्तेरेकं वा अन्यद्वा लक्षणं प्रकाशितं भवेत्, परन्तु यावत् साधकबुद्धौ भगवन्माहात्म्यज्ञानदार्ढ्यं न स्यात्, तावद् भक्तचित्तानुरागो भक्तिपदवाच्यो भवितुं नार्हति। अतो भगवन्माहात्म्यविज्ञानमत्यावश्यकमास्ते।

विग्रहाणां माहात्म्यज्ञानपूर्वक-समुत्पन्नेनानुरागेणैव साधकः साधनराज्ये समुन्नतिमनुतिष्ठति। लौकिके जगत्यप्येतद् दृश्यते यत् प्रियपात्रस्य गुणावलोकनेन यो ह्यनुरागः समुत्पद्यते, स च प्रायः क्षणभङ्गुरो न भवति। स हि गुणज्ञानस्वरूपपरिचयादिना दैनन्दिनं प्रवर्धमानो विलोक्यते। तथैव भगवतस्तल्लीलाविग्रहस्य वा लोकोत्तरं पवित्रं चरित्रचित्रं हृदयपटे प्रतिष्ठितं विधाय, तत्र च साधकसमुत्पन्ना प्रीतिर्भगवत्स्वरूपपरिज्ञानेन साकमेव क्रमशः प्रगाढतामापद्यमाना भगवद् राज्यसमुन्नतपदे भगवद्भक्तं प्रतिष्ठापयतीत्यत्र सन्देहलेशोऽपि नास्ति। श्रीमद्भागवतस्य रासपञ्चाध्याय्यां भगवन्तं श्रीकृष्णचन्द्रं प्रति भक्तगोपिकानां महात्म्यज्ञानस्यानेके परिचयाः समुपलभ्यन्ते, एतन्माहात्म्यपरिज्ञानादेव श्रीभगवन्तं प्रति तासां प्रेमवृद्धिरभूद्, येन ता भगवतः कृपामधिगत्य मुक्ता अभूवन्। तथाहि भागवते—

न खलु गोपिकानन्दनो भवान्
अखिल देहिनामन्तरात्मदृक्।
विखनसार्थितो विश्वगुप्तये
सख उदेयिवान् सात्वतां कुले॥
मैवं विभोऽर्हति भवान् गदितुं नृशंसं
सन्त्यज्य सर्वविषयांस्तव पादमूलम्।
भक्ता भजस्व दुरवग्रह मा त्यजास्मान्
देवो यथाऽदिपुरुषो भजते मुमुक्षून्॥
यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग
स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम्।
अस्त्वेवमेतदुपदेशपदे त्वयीशे
प्रेष्ठो भवान् तनुभृतां किल बन्धुरात्मा॥

गोपीनामभिमानमर्दनाय सहसाऽन्तर्हितस्य भगवतः श्रीकृष्णस्य विरहे उन्मादिन्यो गोप्यो दूर्वादलश्यामलायतयां वसुन्धरां संबोध्य यदुक्तं, तेनाप्येतत्परिज्ञायते यत् तासां श्रीकृष्णचन्द्रमाहात्म्यपरिज्ञानमासीदिति।

तथाहि—

किं ते कृतं क्षिति तपो बत केशवाऽङ्घ्रि-
स्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि।
अप्यङ्घ्रिसम्भवउरुक्रमविक्रमाद्वा
आहो वराहवपुषः परिरम्भणेन॥

एवं किल भगवतः श्रीकृष्णस्य महत्त्वपरिज्ञानं गोपिकानामासीद् येन ता भगवदनुकम्पामासाद्य भक्ति-प्रेमबलेन तदानन्दमयं दिव्यलोकमध्यगच्छन्। स्त्री-पुरुषयोः पारस्परिकं प्रेम स्वाभाविकम्, अतएव दाम्पत्ये प्रेम्णि यदन्योन्यमाकर्षणं परिदृश्यते न तथाऽन्यत्र। भगवतः पूर्णावतारे श्रीकृष्णचन्द्रे प्रेमविह्वलानां व्रज-नारीणां जगत्प्रसिद्धं प्रेम दाम्पत्यप्रेममाधुरीप्रभाव-विलसितमवधेयम्। एतदपि सुनिश्चितमेव यद् व्रज-गोपिकानां प्रेम भगवन्माहात्म्यज्ञानपरिपूर्णमासीत्, अन्यथा तासां प्रेम भक्तिशब्दवाच्यतां नागमिष्यत्। जीवस्य निम्नगामिनी इन्द्रियविषयसम्बद्धा गतिरेव पतनहेतुभूता, आत्माभिमुखिनी तु तदीयाभ्युदयमुक्ति-हेतुरेवास्ते इति सर्वदर्शनसिद्धान्तः। भगवन्माहात्म्य-ज्ञानशून्यं प्रेम पतनकारणम्। यतस्तस्य प्रणयिनोऽन्तः-करणगतिर्वैषयिकसम्बन्धदूषिता जायते। परन्तु यदि प्रणयिनश्चित्ते भगवन्माहात्म्य विमलविकासो भवेत् तर्हि तदन्तःकरणं विषयरागरञ्जितमपि नाद्यः पतितं भवितुमर्हति। वैष्णवः, शाक्तः, गाणपत्यः, शैवः, सौरो वा भक्तः स्वीय तटस्थज्ञानेन निजेष्टदेवमाहात्म्यपरिज्ञानं न विदध्यात्, तदानीं नासौ भक्तिराज्ये समुन्नति-मधिगन्तुमर्हेत्। अतो हि भगवदनुरागमूले भगवन्-माहात्म्यज्ञानं नितरामपेक्षितमवधेयम्॥ ५२॥

माहात्म्यपरिज्ञानाभावादोषमुदीरयति—

**तदभावे जारवत्॥ ५३॥**

तदभावे श्रीभगवन्माहात्म्यज्ञानशून्यत्वे जारवत् जारप्रेमवत् उपपतिप्रेमवत् विज्ञेयम्। यथा लौकिके जगति उपपतिसम्बन्धः स्त्रीणामधोगतिकारणं, तथैवेश्वर-भक्तिरपि भगवन्माहात्म्यपरिज्ञानाभावे साधकस्या-धोगतिहेतुर्जायते। सम्पूर्णोऽप्ययं संसारो भावमयः। भावतारतम्यमनुसृत्य अन्तःकरणसमुन्नतितारतम्यमव-धेयम्। उन्नतसात्त्विकभावेन भावितमन्तःकरणं द्रुत-मेव सावगुणादुन्नतिसोपानमधिरोहति। तामसिकेना-धमभावेन भावितमन्तःकरणं भावाधमतया शीघ्रमेवा-वनतेरधस्तनकूपे पततीत्यत्र नास्ति सन्देहः। भावा-सक्तिविज्ञानवर्णनप्रसङ्गे सुनिर्णीतमिदं यत् आसक्त्या पतनमवश्यम्भावि। केवलं सद्भावभावितेन कृतमसत् कर्मापि अभ्युदयनिःश्रेयसकरं बोभवीति। अतो यदा कस्यचन प्रणयिनोन्तःकरणे भगवन्माहात्म्यपरिज्ञान-भावाभावः स्यात्, केवलं कामासक्तिर्भवेत्, तर्हि यथा जारबुद्धिसम्पन्नस्य प्रेमिकस्योन्नतिर्न जायते तथैव भग-वन्माहात्म्यज्ञानशून्यस्यापि प्रणयिनो दशा भविष्यती-त्यत्र नास्ति सन्देहावसरः। यतो दशायामत्र केवल-मासक्तिर्विद्यते न भावः। सुतरां भगवन्महिमावबोधे-विहीने केवल स्थूलावलम्बनादिना समुत्पन्नं भगवत्प्रेम-समुन्नतभावाभावात् हृदयं नोन्नमयितुमर्हति। प्रत्युत जारप्रेमवच्चित्तमवनमयत्येवेत्येतत्सूत्रतात्पर्यम्। शास्त्रेषु कुत्र कुत्रचिज्जारबुद्धिजनितप्रेम्णाऽपि समुन्नतेर्दृष्टान्तो लभ्यते। तादृशी घटनावली साध्यसाधकासाधारणा-धिकारसंस्कारसम्बद्धेत्यवगन्तव्यम्। श्रीमद्भागवतरास-पञ्चाध्यायी वर्णनप्रसङ्गेनैतदुक्तं यत् रासलीलारात्रौ या याः किल गोविन्दवेणुनिनादमुग्धा गोप्यो नैजैः पति-भिर्निरुद्धा न श्रीकृष्णमुपडुढौकिरे, ताः सर्वा अपि भगवत्प्रेमाकृष्टा भगवन्महिमाज्ञानाभावेऽपि मुक्ता बभूवुरिति। यथा च श्रीमद्भागवते—

अन्तर्गृहगताः काश्चिद् गोप्योऽलब्धविनिर्गमाः।
कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः॥

दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ।
ध्यानप्राप्ताऽच्युताऽऽश्लेषनिर्वृत्या क्षीणमङ्गलाः ॥
तमेव परमात्मानं जारबुद्ध्याऽपि संगताः ।
जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥

"जारबुद्ध्याऽपि संगता" इति ब्रह्मर्षि शुकमुखोच्चरितां वाचमाकर्ण्य राज्ञा परीक्षितेन जिज्ञासितं यथा—

कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने !
गुणप्रवाहो परमस्तासां गुणधियां कथम् ॥

एतत्प्रश्नोत्तरे तत्रैव श्रीशुकाचार्येणोक्तम्—

उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथागतः ।
द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥
कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च ।
नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥
नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप !
अव्ययस्याप्रेमयस्य निर्गुणस्य गुणात्मनः ॥
न चैवं विस्मयः कार्यो भवता भगवत्यजे ।
योगेश्वरेश्वरे कृष्ण यत एतद् विमुच्यते ॥

भावार्थोऽयं यद् यथाऽज्ञात्वाप्यमृतं सेवमानोऽमरीभावतां प्रपद्यते, तथैव ज्ञानाज्ञानभावेनापि अव्यये अप्रमेये सर्वशक्तिमति परमेश्वरे काम-क्रोध-भय-स्नेहैक्य-सौहृदादि भावेषु केनाप्येकेन भावेन समाकृष्टः साधको भगवदसाधारणशक्तिबलेन योग्यसंस्कार-संयुक्तो भगवत्तन्मयतां प्राप्तो मनोविलयेन मनःप्रसूत-कामक्रोधमोहादिवृत्तिविरहितो मुक्तो जायते। प्रकारमिममनुसृत्यैव जारबुद्धिसंगतगोपीनामपि मुक्तिरभवत् । यद्यपि श्रीकृष्णं प्रति तासां कामासक्तिरासीत्, तास्तु श्रीकृष्णं परमात्मानं न मन्यन्तेस्म; तथापि प्राक्तनासाधारणसंस्कारकारणेन श्रीकृष्णं प्रत्यसाधारणी प्रीतिस्तासामुदपद्यत, यया श्रीकृष्णः परमात्मा स्वीयसर्वशक्तिमत्तावलेन ताः सर्वाः स्वस्मिन् तन्मया विधाय पूर्वं तन्मानसिककामादिवृत्तीर्नाशयित्वा तदनन्तरं चाशुभाशुभोभयविधकर्मणां क्षयमनुष्ठाय ता मुक्तिपदं प्रापयामास । अत्र भगवतः श्रीकृष्णस्यासाधारणी शक्तिर्गोपीनाञ्चासाधारणप्राक्तनसंस्कार एव निदानमवधेयम् । जारसम्बन्धिनी प्रीतिर्नात्र कारणम् । साधारणसंस्कारयुक्तानां नारीणां तादृशोऽधिकारो न भवितुमर्हति। कुत्रचन साधारणे पुरुषे परमात्मभावासक्तया तत्र परमात्मनो वास्तविक सत्ताऽभावात् भगवच्छक्तेरस्तिताया अभावेन आसक्तप्रेमिकायास्तादृशतन्मयत्वं शुभाशुभकर्मणां नाशश्च न भवितुमर्हतः। जारबुद्धिसम्पन्नानां गोपीनामूर्द्ध्वगतित्वे तदीय चित्तजनित-जारप्रेमकारणं नास्ति, प्रत्युत भगवतः पूर्णावतारस्य आनन्दकन्दस्य श्रीकृष्णचन्द्रस्य भागवतं तेज एवात्र प्रधानं कारणम्। सूर्यतेजो यथा स्वभावत एव पृथ्वीतलमुक्तस्थानस्थितं रसमात्माभिमुखमाकर्षति, तथैव जारबुद्ध्याऽपि संगताः कृष्णप्रेमाकृष्टचित्ताः भगवत्समर्पितान्तःकरणा गोप्योऽपि भगवत्तेजस्समाकृष्टा मुक्तिपदं प्रापुः। "जारबुद्ध्याऽपि संगताः" इत्यत्रापि शब्देनैतत्सिध्यति यज्जारबुद्धिप्रेम पतनस्यैव कारणमिति। जारबुद्धिर्गोपीनां मुक्तेः कारणं नास्तीत्यपि सिद्धम्। जारबुद्धिजनितप्रेमविषयेऽत्र प्रियसर्वशक्तिमत्ताप्रणयिनीनाम साधारण प्राक्तन कर्मसंस्कार एव च समुन्नतेः कारणम्। अन्यथा साधारणदशायां जारबुद्धिप्रेम पतननिदानमेव। एष एव भगवद्व्यासवचनैः सहैतत्सूत्रविरोधपरिहाऽवसेयः।

पूर्वोक्त मीमांसातात्पर्यमेतद् यद् भगवन्महिमसद्भावे साधकस्यान्तःकरणेऽङ्किते सति क्रमाभ्युदयः सम्भावी। स्वेष्टदेवे, भगवद् विग्रहे, गुरौ विभूतौ वा सर्वत्रैव माहात्म्यपरिज्ञानपूर्णं प्रेमैवाभ्युदयनिःश्रेयसकारणम्। भगवन्माहात्म्यपरिज्ञानरहितायां

प्रीतौ भगवच्छक्तिसंयुक्तोऽसाधारणशक्तिशाली पुरुष एव साधकं भगवत्पदं प्रापयितुमर्हति। रासलीलायां काश्चन गोप्य एवात्र प्रमाणम्। परन्तु विषयोऽयमसाधारणः। साधारण्येन तु सर्ववादिसम्मत दार्शनिक सिद्धान्तोऽयं यत् माहात्म्यज्ञानरहिता प्रीतिर्न भवितुमर्हति भक्ति शब्दवाच्या, न वा तया भवितुं शक्नोति साधकस्याभ्युदयः॥ ५३॥

माहात्म्यपरिज्ञानात्को लाभ इत्युच्यते—

**तत्सत्त्वेऽनवपतनमनवपतनम् ॥ ५४ ॥**

तत्सत्वे माहात्म्यज्ञानपूर्वकप्रीतौ सत्यामवपतनं साधकस्यावपातो न जायते। साधनराज्ये भावस्योन्नतिमनुसृत्य यदि साधकस्योदयस्तर्हि भक्तहृदये भगवन्महत्त्वज्ञानजनितस्योच्चभावस्य विद्यमानतया तद्भावबलेनैव भक्तो भगवत्प्रेमराज्ये समुन्नतिमधिगमिष्यति, तत्पतनस्य कदापि न सम्भावनेत्यत्र न सन्देहावसरः। भक्ता गोप्यो हि पूर्वसूत्रनिरूपित भगवन्महिमज्ञानोत्पन्नभावोन्नतिबलेन दुश्छेद्यं संसारपाशं विभिद्य साधनमार्गसमुत्थितविविधविघ्नान् निराकुर्वन्त्यः सर्वत्रैव विराजमानमानन्दकन्दं सच्चिदानन्दं भगवन्तमधिगन्तुं समर्था अभूवन्। ताश्च मुनिजनदुर्लभेषु भगवच्चरणसरसीरुहेषु नैजं शरीरं मनः प्राणानात्मानं च समर्पयन्ती कृतकृत्यतामगुः। समुन्नतमपि प्रेममाहात्म्यपरिज्ञानरहितं भयशून्यं नास्ति। लौकिकावलम्बने प्रथमतो दुर्निवारा विषयबुद्धिः, द्वितीयतस्तु साधकवृत्तीनामुत्कर्षापकर्षतो बहुविधा विपरिणामा भवितुमर्हन्ति। अतो महिमज्ञानरहिते प्रेम्णि भयानामनेकत्वं जायते। पूर्णावतारे श्रीकृष्णचन्द्रे माहात्म्यपरिज्ञानहीनमपि प्रेम कुर्वतीनां गोपाङ्गनानां कल्याणं सम्भवति। किन्तु तादृशी पूर्णता सर्वत्र नास्ति अतो माहात्म्यज्ञानशून्या भक्तिर्भयरहिता भवितुं न शक्नोति। सुतरां तटस्थज्ञानसाहाय्येन भगवन्माहात्म्यज्ञानमासाद्य भक्तो यदि भक्तिसाधने तत्परो भवेत्, तर्हि तदीया साधनरीतिः सर्वथैव भयविरहितो स्यात्। अतो महिमज्ञानसंवलिता भक्तिरेव भयरहिता। एतद्धि सूत्रेऽत्र निरूपितं महिमज्ञानजनितायाः पतनभयविरहितायाः भक्तेर्लक्षणमवगन्तव्यम्। भावविज्ञानरहस्यं सुविवेचितपूर्वम्। यदि सद्भावेनैव समुन्नतिर्निश्चिता चेत् तर्हि भगवन्माहात्म्यज्ञानरूपसद्भावाश्रयेणाभ्युदयोनिःश्रेयसश्च स्वतः सिद्धः। सिद्धान्तस्यैव तस्य विज्ञानसिद्धत्वान्निश्चितत्वाच्च सूत्रकृता महर्षिणा पतनासम्भावना वारद्वयमुद्घुष्टा। उक्तं च भागवते—

त्वय्याम्बुजाक्षाखिलसत्वधाम्नि—
समाधिनावेशितचेतसैके ।
त्वत्पादयोस्तेन महत्कृतेन
कुर्वन्ति गोवत्सपदं भवाब्धिम्॥

अन्यत्रापि—

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन!॥
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्॥
सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते॥
एतद् विजानतां सर्वं जगत्स्थावरजङ्गमम्।
द्रष्टव्यमात्मवद् विष्णुर्यतोऽयं विश्वरूपधृक्॥
एवं ज्ञाते सभगवाननादिः परमेश्वरः।
प्रसीदत्यच्युतो यस्मिन् प्रसन्ने क्लेशसंक्षयः॥

अतो निर्णीतमेतद् यद् भक्त्या सह माहात्म्यपरिज्ञानमप्यत्यावश्यकम्। माहात्म्यज्ञानसहिता समनुष्ठिता भक्तिर्भक्तं निर्बाध भगवच्चरणारविन्दं प्रापयत्येव॥ ५४॥

इति उत्पत्तिपादः समाप्तः।

# अथ स्थितिपादः

चतुर्विधेष्वपि पुरुषार्थेषु "वासुदेवः सर्वमिति" भगवच्चरणानुरागमूलकः परमपुरुषार्थ एव मोक्षसाधकः। कर्मक्षयेण मोक्षोऽधिगम्यते। स्थितेः परिज्ञानमन्तरा लयस्यानुभवोऽसम्भवः। अतोऽधिदैवरहस्यपरिपूर्णः स्थितिपादः प्रारभ्यते, यस्येदमादिमं सूत्रम्—

## गुणभाववानपि नासौ तेषु ॥ १ ॥

असौ परमात्मा गुणभाववान् अपि गुणाभावयुक्तोऽपि अर्थात् त्रयोगुणास्त्रयो भावाश्च परमात्मनि विद्यन्ते, किन्तु परमात्मा तेषु त्रिगुणत्रिभावेषु नास्ति। भगवतश्चैतन्यसत्तया चेतनवती प्रकृतिः परिणमते। परिणामस्तु त्रिगुणसम्बद्धः। साम्यावस्थायां प्रकृतिर्ब्रह्मणि लीयते। वैषम्यावस्थायां ब्रह्मणः पृथग् भवन्ति त्रिगुणवैभवं प्रकटीकृत्य सृष्टिस्थितिलयक्रियां विदधाति साम्यदशायां प्रकृतेर्लयस्थानं ब्रह्मैव। वैषम्यदशायां तु ब्रह्मणश्चैतन्यसत्तया सत्तावती भूत्वा नैजमस्तित्वं रक्षन्ती त्रिगुणविस्तारे प्रवर्त्तते। अतो हि सिद्धमिदं यत् ब्रह्मसत्तयैव प्रकृतिसत्तागुणसत्ता च। श्रुतिस्मृतिषु प्रतिपादितं यथा—

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथ्वी विश्वस्य धारिणी"
"सर्वमेतद् विश्वमधितिष्ठन्नत्येको
गुणांश्च सर्वान् विनयोपेद्यः"
"मयाध्याध्यक्षेण प्रकृतिः सूयते सचराचरम्"
"अव्यक्तात्पुरुषः परः" इत्यादि।

अध्यात्माधिदैवाधिभूत भावास्त्रयोऽपि प्रकृतिवैषम्यावस्थायां सृष्टिदशायामेव पृथक् पृथक् विज्ञायन्ते। साम्यावस्थां प्राप्तायां प्रकृतौ ब्रह्मणः स्वरूपदशायां त्रयस्ते न पृथक् पृथगनुभूयन्ते। यद्यपि परमात्मनः स्वरूपं सच्चिदानन्दमयमुपवर्णितम्, परन्तु स च सच्चिदानन्दस्वरूपानुभवोऽद्वितीयो भावमयः। स्वरूपे त्रयोऽप्येते भावान् पृथगनुभूयन्त इत्यर्थः। सुतरां सृष्टेः प्राक् प्रकृते वैषम्यावस्था तिष्ठति। अद्वैतावस्थायामत्र प्रकृतिर्ब्रह्मणः स्वतन्त्रा न भवति। अतो दशायामत्र सच्चिदानन्दरूपाध्यात्माधिदैवाधिभूताख्य त्रिभावस्य पृथक् सत्ता न तिष्ठति न वाप्यनुभूयते। अत इदमभ्युपगन्तव्यमेव यत् परमात्मनि त्रयाणां भावानां सत्ता विद्यते, परन्तु तेषां सत्तायाः पार्थक्यं नास्ति। वस्तुतस्तु शिलास्तम्भेषु विविधा मूर्त्तयोऽङ्किता भवन्ति, न ताः शिलातो व्यतिरिक्ताः केवलमङ्कनस्वरूपोपाधिना तत्पार्थक्यानुभूतिः। तथैव ब्रह्मणः पृथग् भूतायां वैषम्यदशां प्राप्तायां प्रकृतौ त्रयो गुणो भावाश्च पृथक् पृथक् परिदृश्यन्ते। परन्तु परमात्मस्वरूपे लीनायां प्रकृतौ न तेषां पृथगनुभवो जायते। अतः पूज्यपादेन सूत्रकृता महर्षिणा सिद्धान्तितमिदं यत् त्रिगुणास्त्रिभावाश्च परमात्मनि सन्ति, नासौ तेषु ॥ १ ॥

गुणभावात् किमित्युच्यते—

## गुणैःसृष्टिस्थित्यन्ताभावैस्तदनु भवः ॥ २ ॥

गुणैस्त्रिगुणैः सर्ग-स्थिति-प्रलया जायन्ते, भावैस्त्रिभिर्भावैस्तु तस्य भगवतोऽनुभवो भवति। पूर्वसूत्रे प्रदर्शितमिदं यत् त्रिगुणास्त्रिभावाश्च प्रकृतिराज्यसम्बन्धनिबन्धनाः। तैः साकं परमात्मनः सम्बन्धोऽपि निदर्शितः, सम्प्रति सूत्रेणैतेन तु त्रिगुणत्रिभावानां सविस्तरकार्याणि निर्दिश्यन्ते, येन तेषां यथार्थस्वरूप-

मवगन्तुं शक्येत। सत्त्वं रजस्तम इति प्रकृतेर्गुणाः। एषु रजसा सृष्टिः, सत्त्वेन स्थितिः, तमसा च लयः सम्पद्यते। श्रुत्याप्युक्तम्—

"अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजा सृजमानां स्वरूपाः"

अर्थात् प्रकृतिरेकैव, रक्त-श्वेतकृष्णास्तदीया गुणाः, रजोगुणो रक्तः, सत्त्वगुणाः श्वेतः, तमोगुणश्च कृष्णोऽवगन्तव्यः। स्मृतावप्युक्तम्—

"सत्त्व रजस्तम इती तवात्मबन्धोः
मायामयाः स्थितिलयोदयहेतवोऽस्य।"

तेभ्यः प्रधानदेवानां त्रयमासीच्छिवात्मकम्।
एकस्मात् त्रिष्वभूद्विश्वमेकेन परिरक्षितम्॥
एकेनैव हृतं विश्वं व्याप्तं त्वेवं शिवेन तु।
अलिङ्गं चैव लिङ्गं च लिङ्गालिङ्गानि मूर्त्तयः॥
यथावत् कथिताश्चैव तस्माद् ब्रह्म स्वयं जगत्॥

अग्निना दाहिका शक्तिरिव भगवता साकं भगवच्छक्तिरूपिण्या मायायाः सम्बन्धः। गुणे गुणिनि चाभेदः। यथा दाहिकायाः शक्तेरभावादग्नेरस्तित्वं न सिध्यति तथैव गुणत्रयाभावेन प्रकृतेरस्तिता न सिध्यति। परमात्मना सह त्रिभावानामेकोविशिष्टोऽलौकिकः सम्बन्धो विद्यते। परमात्मनः स्वरूपे सच्चिदानन्दरूपस्त्रिभावा अध्यात्माधिदैवाधिभूताख्या अद्वैताभावे तिष्ठन्ति। अतोऽसौ सच्चिदानन्दमयो गीयते। इयानेव भेदो यत् साम्यावस्थां प्राप्तायां प्रकृतौ परमात्मनः स्वरूपदशायां त्रयोऽमी नैव पृथगनुभूयन्ते। वैषम्यावस्थां प्राप्तायामेव प्रकृतौ पृथक्त्वेन तेषामनुभूतिः। त्रयाणां साहाय्येन प्राकृतिकगुणत्रयस्वरूपं सुस्पष्टमवधारयितुं शक्यते। परमात्मनश्चिन्मयत्वात् भावत्रयस्य तदीयस्वरूपज्ञानेन साकं साक्षात् सम्बन्धः। चिन्मयं भावत्रयं जडमयत्रिगुणानुभूतौ प्रधानं सहायकमाम्नातम्। ब्रह्मणा सह भावस्य सम्बन्धे स्मृतिकारैरुच्यते। तथाहि—

यत् तद् ब्रह्ममनो वाचामगोचरमितीरितम्।
तत्सर्वं कारणं विद्धि सर्वाध्यात्मिकमित्यपि॥
अनाद्यन्तमजं दिव्यमजरं ध्रुवमव्ययम्।
अप्रतर्क्यमविज्ञेयं ब्रह्माग्रे सम्प्रवर्त्तते॥
स्वेच्छामायाख्यया यत्तज्जगज्जन्मादिकारणम्।
ईश्वराख्यं तु यत्तत्त्वमधिदैवमिति स्मृतम्॥
सर्वज्ञः सद्गुरुर्नित्यो ह्यन्तर्यामी कृपानिधिः।
सर्वसद्गुणसारात्मा दोषशून्यः परः पुमान्॥
यत्कार्यंब्रह्मविश्वस्य निधानं प्राकृतात्मकम्।
विराडाख्यं स्थूलतरमधिभूतं तदुच्यते॥
यस्येहावयवैर्लोकात् कल्पयन्ति मनीषिणः।
कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः॥

सच्चिदानन्दमयात् कारणब्रह्मणः पञ्चभूतात्मकं ब्रह्माण्डस्वरूपं कार्यब्रह्माविर्भूतम्। अतः परमात्मनः स्वस्वरूपसच्चिदानन्दभावावलम्बनेन सृष्टिप्रपञ्चस्य अध्यात्माधिदैवाधिभूतभावाः प्रकटीभूय कथमिव त्रिगुणात्मक विश्वज्ञानविस्ताराय सहाय्यमाचरन्तीति स्मृतिशास्त्रे निम्नाङ्कितमुपलभ्यते। तथाहि—

पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः।
गन्तव्यमधिभूतं च विष्णुस्तत्राधिदैवतम्॥
पायुरध्यात्ममित्याहुर्यथा तत्त्वार्थदर्शिनः।
विसर्गमधिभूतं च मित्रस्तत्राधिदैवतम्॥
उपस्थोऽध्यात्ममित्याहुर्यथा योगप्रदर्शिनः।
अधिभूतं तथाऽऽनन्दो दैवतं च प्रजापतिः॥
हस्तावध्यात्ममित्याहुर्यथा संख्यानदर्शिनः।
कर्तव्यमधिभूतं तु इन्द्रस्तत्राधिदैवतम्॥
वागध्यात्ममिति प्राहुर्यथा श्रुतिनिदर्शिनः।
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम्॥
चक्षुरध्यात्ममित्याहुर्यथा श्रुतिनिदर्शिनः।
रूपमत्राधिभूतं तु सूर्यश्चाप्याधिदैवतम्॥

जिह्वामध्यात्ममित्याहुर्यथा श्रुतिनिदर्शिनः ।
रस एवाधिभूतं तु आपस्तत्राधिदैवतम् ॥
घ्राणमध्यात्ममित्याहुर्यथा श्रुतिनिदर्शिनः ।
गन्ध एवाधिभूतं तु पृथिवी चाधिदैवतम् ॥
त्वगध्यात्ममितिप्राहुस्तत्त्वबुद्धिविशारदाः ।
स्पर्शमेवाधिभूतं तु पवनश्चाधिदैवतम् ॥
मनोऽध्यात्ममिति प्राहुर्यथाशास्त्रविशारदाः ।
मन्तव्यमधिभूतं तु चन्द्रमाश्चाधिदैवतम् ॥
अहंकारिकमध्यात्ममाहुस्तत्त्वनिदर्शिनः ।
अभिमानोऽधिभूतं तु बुद्धिश्चात्राधिदैवतम् ॥
बुद्धिरध्यात्ममित्याहुर्यथावदधिदर्शिनः ।
बोद्धव्यमधिभूतं तु क्षेत्रज्ञश्चाधिदैवतम् ॥
श्रोत्रमध्यात्ममित्याहुर्यथा श्रुतिनिदर्शिनः ।
शब्दस्तत्राधिभूतं तु दिशश्चात्राधिदैवतम् ॥

अन्यच्चापि स्मृतिशास्त्रे—

उत्पद्यन्ते त्रिभावाश्च त्रिगुणामत्त एवहि ।
सृष्टिस्थितिलयांश्चैव त्रिगुणैरहमेव वा ॥
करोमि सततं देवा जगतां नात्र संशयः ।
मय्येवानुभवस्तेषां त्रिभावैर्भवति ध्रुवम् ॥

पूर्वविचारैर्वेदशास्त्रप्रमाणैश्चेदं सिध्यति यत् ब्रह्मशक्त्याः प्रकृतेस्त्रिगुणान् रजःसत्त्वतमांस्यनुसृत्य स्वभावत एव सृष्टिस्थितिप्रलयाः सम्पद्यन्ते । स्थावरे जङ्गमे जडे चेतने च ब्रह्माण्डे पिण्डेचापि सर्वत्रैव सृष्टिस्थितिलया वोभूयन्ते, अन्यच्च परमात्मनः स्वभावेनैव ज्ञानराज्यप्राप्तत्रिभावसाहाय्येन दृश्यप्रपञ्चस्य सर्वविधानि कार्याणि तत्स्वरूपाणि च याथार्थतो विज्ञायन्ते ।

यथा परमात्मनः स्वस्वरूपे स्थितानां त्रिभावानामेवावलम्बनेन भगवत्स्वरूपदर्शनं जायते, तथैव तटस्थज्ञानेऽपि व्यष्टिरूपेण प्राकट्यमापन्नास्त्रयो भावाः दृश्यप्रपञ्चविशिष्टानुभवमपि ज्ञानिनं कारयन्ति ।

विज्ञानमिदमेवमप्यवधारयितुं पार्यते यत् गुणत्रयपरिज्ञानेनैव प्रकृतिः परिज्ञायते, अपि च त्रिभावानामनुभवेनैवान्ते परमात्मस्वरूपज्ञानमपि भगवद्भक्तैः क्रियते । वस्तुतः सृष्टिस्थितिलयकार्यं सर्वमपि प्रकृतेस्त्रिगुणद्वारैव सम्पद्यते, तत्सम्बन्धीय सर्वविधं ज्ञानमपि पुरुषस्वरूपसम्बद्धभावत्रयं द्वारीकृत्यैवानुभूयते ॥ २ ॥

प्रसङ्गाद्वेदस्वरूपमाह—

**पूर्णगुणभावमयत्वाद् भगवद्वाक्यं वेदः ॥३॥**

गुणभावपरिपूर्णत्वाद् वेदस्तु भगवतो वाक्यम् । परमात्मना सह गुणभावयो सम्बन्धं, तयोर्माहात्म्यं, ततश्च तयोर्यथार्थस्वरूपं वर्णयित्वा सूत्रेणैतेन गुणभावसम्बन्धतो वेदस्य पूर्णता महत्ता च प्रतिपाद्यते, समस्तगुणभावाधारतया वेदो भगवद्वचनमित्यभ्युपगन्तव्यम्, "त्रैगुण्यविषया वेदा" इति गीतोपनिषद्वाक्यमपि वेदस्य त्रिगुणात्मकत्वमभ्युपगच्छति । भगवद्गीता प्रतिपादिताप्तवचनेन वेदे त्रिगुणानां परिपूर्णसत्ता सिध्यति । सुतरां वेदो ह्यखण्डशक्तिमयः, त्रिगुणानुसारमेव समस्तस्यापि जगतः सृष्टिस्थितिप्रलयाः सम्पद्यन्ते । जागतिकं किमपि वस्तु त्रिगुणातीतं नास्ति, वेदे त्रिगुणसम्पूर्णसत्ताया विद्यमानतयाऽसावखण्डः परिपूर्णशक्तिसम्पन्न इत्यभ्युपगन्तव्यमेव। गुणावस्थाभेदलक्षणानि गुणानुसृतलघुगुर्वधिकारभेदा अपि वेदे प्राप्यन्ते, अतोऽसौ सर्वथा परिपूर्णः । सात्त्विकराजसिकतामसिकाधिकारानुरूपं तत्तद्यज्ञादिवर्णनं, तामसिकयज्ञतो राजसिकयज्ञकर्मादीनां, तदपेक्षया च सात्त्विककर्मकलापस्य प्रशंसनं लघुगुरुविज्ञानानुसारं वेदे प्राप्यते । मौलिकं सिद्धान्तमनुसृत्य सर्वेऽप्यधिकाराः स्तुत्या एव मन्तव्याः । वस्तुतस्त्रिगुणपरिपूर्णो वेदस्त्रिविधाधिकारिकल्याणकृदित्यत्र न विद्यते सन्देहलेशः । एतद्धि त्रिगुणमनुसृत्य त्रिगुणपरिपूर्णवेदस्य महत्त्वमवधेयम् ।

"त्रयोऽर्थाः सर्ववेदेषु" इति पूज्यपादमहर्षिप्रोक्त स्मार्त्तवचनमनुसृत्य प्रत्येकस्यापि श्रौतमन्त्रस्याध्यात्मिकाधिदैविकाधिभौतिका अर्था भवन्ति । अतो वेदार्थपरिज्ञानं न सर्वसाधारणमानवबुद्धिगम्यं, तच्च षडङ्गपूर्णपण्डितोऽन्तर्दृष्टिसम्पन्नो योगयुक्तः पुमानेवावगन्तुमर्हति । उक्तं च स्मृतिशास्त्रे—

यथा दुग्धं च भक्तं च शर्कराभिः समिश्रितम् ।
निर्मितं देवभोगाय परमान्नं सुधोपमम् ॥
तथा त्रैविध्यमापन्नः श्रुतिभेदः सुखात्मकः ।
नयते ब्राह्मणं नित्यं ब्रह्मानन्दपरात्परम् ॥

संसारेऽत्र सर्वविधमपि प्रपञ्चविज्ञानं त्रिभावेऽन्तर्भवति, वेदस्य त्रिगुणत्रिभावपरिपूर्णत्वाद् भगवतः साक्षात् सम्बन्धतो यत्र न सन्देहलवोऽपि । यदा किलापौरुषे वेदे प्रकृतिपुरुषविभूतिभूत ब्रह्मतच्छक्तिवैभवात्मकाः शब्दाः सर्वतोऽनुस्यूतास्तदानीमसौ भगवतो वाक्यमित्यत्र नास्ति सन्देहावसरः । उक्तं च—

"यो वै वेदान् प्रहिणोति तस्मै"
"दिशः श्रोत्रे विवृताश्च वेदाः" इति ॥ ३ ॥

वेदस्य प्रकारान्तरेण महत्त्वं प्रतिपादयति—

**तस्मात् पञ्चसु तत्प्राधान्यम् ॥ ४ ॥**

तस्मात् कारणात् पञ्चसु पञ्चविधेषु पुस्तकेषु तस्य वेदस्य प्राधान्यमवगन्तव्यम् । ब्रह्माण्ड-पिण्ड-नाद-विन्दु-अक्षर नाम्ना पुस्तकं पूज्यपादमहर्षिभिः पञ्चधा विभक्तम् । वेदेषु स्मृतिषु चापि पञ्चविधपुस्तकानां वर्णनमुपलभ्यते । तथाहि स्मृतौ—

पितरो ज्ञानराज्यस्य विस्तीर्णस्य रहस्यकम् ।
अपूर्वं भवतो वच्मि श्रूयतां सुसमाहितैः ॥
ममैवाध्यात्मिकज्ञानमूलकाः शास्त्रराशयः ।
स्थूलान्नमयकोषेण सम्बन्धस्थापनक्षणे ॥
स्थूलाक्षरमयै रूपैर्वर्त्तेरन् पुस्तकात्मकैः ।
अत्र नानाविधैर्नूनं विश्वस्मिन् संप्रकाशिताः ॥
स्थूलपुस्तकपुञ्जोऽयं यद्यप्यास्ते विनश्वरः ।
स्थूलाक्षरमयानां च पुस्तकानां यथायथम् ॥
भवतामीदृशां देश-कालपात्रप्रभेदतः ।
आविर्भावतिरोभावौ यथाकालं न संशयः ॥
सूक्ष्मराज्ये तु शास्त्राणां नित्यसंस्थितिहेतवे ।
चतुर्विधानि वर्त्तन्ते पुस्तकान्यपराण्यपि ॥
ब्रह्माण्डपिण्डौ नादश्च विन्दुरक्षरमेव च ।
पञ्चप्रकारका प्याहुः पुस्तकानि पुराविदः ॥
श्रुतिर्नादे स्मृतिर्विन्दौ ब्रह्माण्डे तन्त्रमेव च ।
पिण्डे च वैद्यकं शास्त्रमक्षरेऽन्यदुदाहृतम् ॥
नूनं ज्ञानस्य नित्यत्वान्नित्याः शास्त्रसमुच्चयाः ।
एते पञ्चविधेष्वेषु क्वापि तिष्ठन्ति पुस्तके ॥
पञ्चप्रकारकं सर्वं पुस्तकं प्रलयक्षणे ।
वेदेषु प्रविलीयैव भजते मां न संशयः ॥

विश्वप्रपञ्चेऽत्र ज्ञानाधारस्वरूपाणि पञ्चविधान्येव पुस्तकान्युपर्युक्तस्वरूपाणि वेद्यानि, वक्ष्यमाण यजुर्वेदमन्त्रप्रतिपादितानि सरस्वतीदेव्याः पञ्च स्रोतांसि जगतीतलं परिपावयन्ति । सरस्वतीयं ज्ञानप्रवाहस्वरूपिणी ।

प्रत्येक ब्रह्माण्डाधीश्वरा ब्रह्म-विष्णु-महेश्वर-नामानस्त्रिमूर्त्तयः पूर्वमेव समुपवर्णिताः । प्रत्येकब्रह्माण्डाधारभूतज्ञानराशयः त्रिमूर्त्त्यन्तःकरणेषु विराजन्ते । अतस्त्रिमूर्त्त्यन्तःकरणमेव ब्रह्माण्डपुस्तकाधारस्थानमवगन्तव्यम् । ब्रह्मविष्णुशिवाख्यानां त्रिदेवानां कृपा यत्र भक्तचूडामणौ भवति, तेनैव ब्रह्माण्डस्वरूपपुस्तकसाहाय्यमधिगम्यते । त्रिदेवभक्ताः स्वकीयोपास्यदेव त्रिदेवतन्मयत्वमधिगम्य भगवच्चेतोभिरेकीभावं प्रपद्यन्ते, तदा ते ब्रह्मविष्णुशिवस्वरूपतो नैजमात्मानं परिचाययन्तो ज्ञानं विस्तारयन्ति, विभिन्नगीतादिशास्त्रेषु विष्णु-

शिवादीनामुक्त्यो ब्रह्माण्डपुस्तकाख्यया विज्ञातव्याः।

भगवदवताराणां उच्चश्रेणिकानां ऋषीणां भक्तानां च हृदयेभ्यो ब्रह्माण्डपुस्तकान्याविर्भवन्ति। सगुणानामीश्वराणां त्रिमूर्त्तिस्वरूपाणां लोकत एव ब्रह्माण्डपुस्तकसम्बन्धो वेद्यः। चतुर्दशभुवनेषु केभ्यश्चिदन्येभ्यो लोकेभ्यो ब्रह्माण्डपुस्तकसम्बन्धो नास्ति। पिण्डपुस्तकं चतुर्दशभुवनसम्बन्धनिबन्धनं भवति। ऋषयो हि ज्ञानराज्यचालका देवविशेषा इति प्रागेव निर्णीतम्। ऋषीणामधिकारेषु लघुत्वं गुरुत्वमपि दृश्यते। अतस्तेषां चतुर्दशभुवनेषु निवासः समवधेयः। एतेषाम् ऋषीणां प्रेरणया मृत्युलोकस्य ज्ञानिजनान्तःकरणतो यानि पुस्तकान्याविर्भवन्ति, पिण्डपुस्तकान्यवधेयानि। ऋषेर्ज्ञानिजनस्य चोभयपिण्डसम्बन्धादेव तत् पिण्डपुस्तकनाम्नाऽभिहितम्। चतुर्दशभुवनेषु कस्यचिदेकस्य भुवनस्य निवासिन ऋषेर्दैवपिण्डात् मृत्युलोकनिवासिनो जनस्य जैवपिण्डाच्चोभयाभ्यामेव पिण्डाभ्यां सम्बन्धयुक्तत्वात् पुस्तकमेतत् पिण्डनाम्ना प्रोक्तम्, चतुर्दशभुवनेषु सप्त देवलोकाः, सप्त चासुरलोकाः सन्ति। तेष्वधिकारतारतम्यमप्यवेक्ष्यते। अतः पिण्डपुस्तकं देवविद्यया चासुरविद्यया च परिपूर्णं भवितुमर्हति, देवासुरलक्षणानि प्रागुपवर्णितानि।

तृतीयं पुस्तकं नादनाम्ना व्याख्यातम्, तस्यैव नाम वेद इति। वेदेषु स्वयमेव वर्णितमुपलभ्यते। तथाहि—

पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः।
सरस्वती तु पञ्चधासो देशेऽभवत् सरित्॥

सृष्टेः प्रथमदशायामिहलोके प्रादुर्भूते महर्षीणां समाधिस्थेष्वन्तःकरणेषु यो हि ज्ञानराशिः श्रूयते, तस्यैव नाम श्रुतिरिति। स च मन्त्रात्मकः। एष हि पुस्तकान्तरवद् भावमूलको नास्ति। यतोऽसौ श्रूयते ह्यानुपूर्व्येण। अतो वैदिकाः शब्दाः सर्वे मन्त्रमयाः सन्ति, वेदानां महत्त्वं सर्वोपरि वेदितव्यम्। विन्दुमयं पुस्तकं चतुर्थश्रेणिगम्। महर्षीणामवतारभूता वैदिकमन्त्रार्थसिद्धान्तान् स्मारं स्मारं स्वीयैः शब्दराशिभिर्यो हि ज्ञानराशिः प्रकाश्यते, तस्यैव नाम स्मृतिरिति। स्मृतिसमूहो विन्दुमयपुस्तकसम्बद्धः। योगशास्त्ररहस्यमनुसृत्य यथा नादेन विन्दुमयज्योतिषो विकासः, तथैव नादमयवेदसाहाय्येन विन्दुमयः स्मृतिसमूहः प्राकट्यमभ्युपैति। अतः स्मृतीनामपि विशिष्टं महत्त्वमास्ते। पञ्चमं पुस्तकमक्षरमयम्। पूर्वोक्तानि चतुर्विधपुस्तकानि, ज्ञानवर्धकविषये सम्वलितानि अन्यानि वा लिपिबद्धानि भूत्वा स्थूलस्वरूपमाकलयन्ति, तदा तान्यक्षरमयपुस्तकान्याचक्ष्यन्ते। उपर्युक्तपञ्चविधपुस्तकेषु नादमयत्वाद् भगवद् वाक्यत्वादपौरुषेयत्वात् महर्षीणां समाधिस्थेष्वन्तःकरणेषु याथातथ्यतः श्रूयमाणत्वात त्रिगुण-त्रिभावपरिपूर्णत्वाच्च भगवतो वेदस्य सर्वप्राधान्ये सर्वमान्यत्वं च सर्ववादिसम्मतम्॥ ४॥

प्रसङ्गाद् वेदस्वरूपवैशिष्ट्यं निर्दिशति—

**स्वतः पूर्णोऽभ्रान्तो नित्यश्च॥ ५॥**

वेदो हि स्वतः स्वभावत एव परिपूर्णो भ्रान्तिरहितो नित्य उत्पत्तिविनाशरहितश्चेति। त्रिगुण त्रिभावमयत्वाद् वेदः स्वतः पूर्णः, महर्षीणां समाधिस्थान्तःकरणेषु प्रादुर्भूतत्वादभ्रान्तः। प्रत्येक कल्पोपयोगि ज्ञानसमूहजुष्टः शब्दब्रह्मस्वरूपो वेदोऽभ्रान्त एव। ज्ञानाधारजगदीश्वरादाविर्भूतो वेदोऽभ्रान्त इत्यत्र नास्ति सन्देहलेशः। सृष्टिदशायां महर्षीणामन्तःकरणेषु वेदानामाविर्भावः, प्रलयदशायां तेषामोंकारे विलयनम्, ओंकारस्य च मूलप्रकृतौ, तस्या अपि ब्रह्मणि लयो जायते। अतो वेदानां नित्यता निःसन्दिग्धा। सृष्टिदशायां शब्दब्रह्मस्वरूपेण प्रकाशितत्वात् प्रलया-

वस्थायां च ज्ञानस्वरूपे परमात्मनि स्थितत्वाच्च वेदानां नित्यत्वे नास्ति संशीतिलवोऽपि विभिन्नकल्पसृष्टिभेदसत्त्वेऽपि वेदानां विराट्स्वरूपस्य नित्यतायां न भवत्यणीयानपि भेदः।

उक्तं चापि—

"अनादि निधना नित्या वागुत्सृष्टा स्वयम्भुना।
युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः॥
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा॥"

समुपवर्णितेषु पञ्चविधपुस्तकेषु वेदव्यतिरिक्तचतुर्विधेषु पुस्तकेषु शब्दानां परम्परासम्बन्धः, वेदे तु साक्षात् सम्बन्धो विज्ञेयः। एकब्रह्माण्डसृष्टिस्थितिपालकसगुणब्रह्मस्वरूप ब्रह्मविष्णुमहेश्वराख्यास्त्रयो ब्रह्माण्डाधीश्वरा देवा भक्तान्तःकरणेषु भावरूपेण यत् ज्ञानं प्रकटयन्ति, भक्ताश्च स्वकीयलौकिकैः शब्दैः जगत्समक्षं यच्च समुपस्थापयन्ति, तादृशज्ञानयुक्तं पुस्तकं ब्रह्माण्डाख्यमभिधीयते। ऋषीणामवतारभूतैर्वेदार्थान् स्मारं स्मारं नानाविधलौकिकशब्दैर्यज्ज्ञानमाविर्भावयन्ति तद्धि स्मृतिस्वरूपं पुस्तकं विन्दुनाम्ना विख्यातम्। पिण्डपुस्तकं हि दैवज्ञानसम्पन्नमासुरज्ञानसंयुक्तं भवितुमर्हति। धार्मिकं पुस्तकं दैवज्ञानपरिपूर्णं देवप्रेरणया प्राकट्यमुपैति, अधार्मिकं च तत् आसुरज्ञानपूर्णमसुरप्रेरणया प्रकाशमुपढौकते। द्विविधमप्येतत्पुस्तकं पिण्डनाम्ना प्रोच्यते। द्विविधस्याप्येतस्य शब्दविन्यासो लौकिक एव भवति। अक्षरमयस्य पुस्तकस्यापीयमेव दशा। शङ्कते—ननु लौकिकाक्षरैर्विलख्यमानश्रौतमन्त्राणामपि स्वरूपमक्षरमयपुस्तकान्तर्गतं भवितुमर्हति न वेति? समाधत्ते—वर्णनात्मकाः शब्दा ध्वन्यात्मकशब्दानां प्रतिशब्दस्वरूपा भवन्ति। यथा हि 'अ, उ, म' संयोगात् "ओम्" शब्दोत्पत्तिः। स च ओम् शब्दः "तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत्" इत्यादि श्रुतिवाक्यप्रतिपादितध्वन्यात्मकप्रणवस्य प्रतिशब्दमात्रस्वरूपः। यच्च प्रणवः समाधिस्थयोगिभिः स्वान्तःकरणेषु श्रूयते, स हि यथार्थस्वरूपः। "अ, उ, म्" इत्यक्षरत्रययोगतो विलिख्यमान "ओम्" शब्दो योगिसमाधिस्थान्तःकरणश्रूयमाणप्रणवस्य प्रतिशब्दस्वरूपोऽवगन्तव्यः। वस्तुतोऽक्षरमयपुस्तकाकारपरिदृश्यमानस्वरूपो वेदः अन्यान्याक्षरमयपुस्तकापेक्षया समधिकं गौरवान्वित इत्यत्र नास्ति सन्देहलेशोऽपि। यतो वेदेन सह भगवच्छब्दानां साक्षात् सम्बन्धः, न तथाऽन्यपुस्तकानाम्। लिखितश्रुतिमन्त्रेषु योग्यव्यक्तियथार्थोच्चरितश्रुतिमन्त्रेषु च महत् पार्थक्यं विद्यते। अत एव वैदिकमन्त्रयथार्थोच्चारणेन साकं कर्मकाण्डस्य महिष्ठः सम्बन्धः। वस्तुतः संहिता-पद-क्रम-यति-स्वरादीनां यथार्थसाहाय्येन योग्यव्यक्तिमुखोच्चरित श्रुतिमन्त्रेषु अक्षराकारपरिणतश्रुतिमन्त्रेषु च पारस्परिको भेदः स्वभावसिद्धः अतो नादमयपुस्तकव्यतिरिक्त चतुर्विधपुस्तकेषु कार्यकारणशब्देषु भेदस्तिष्ठत्येव। त्रिमूर्तिद्वारा प्रेरितो भावसमूह एव भक्तहृदयेषु प्रकाशितो ब्रह्माण्डपुस्तकस्य ब्राह्मस्वरूपं धत्ते। ऋषिप्रेरितभावराज्यसाहाय्येन स्मृतिस्वरूपं विन्दुपुस्तकं प्राकट्यमेति। पिण्डाख्यं पुस्तकं चतुर्दशभुवनस्थ लघुगुरु-देवर्षि-दानवरितः मानवान्तःकरणविलासविजृम्भितमवगन्तव्यम्। पिण्डपुस्तकेन साकं देवानामसुराणामपि सम्बन्धो बोभूयते। वस्तुतः पिण्डाख्यपुस्तकेन लौकिकराज्यस्यैव विशिष्टः सम्बन्धो बोभवीति, धृताक्षराकाराणि सर्वाण्येव पुस्तकान्यक्षरमयानि कथ्यन्ते। तानि च नश्वराण्यत एव क्षणभङ्गुराणि स्वतः सिध्यन्ति। वस्तुतो नादाख्यपुस्तकेन वेदेन सहैव सूक्ष्मराज्यस्य प्रत्यक्षसम्बन्धः, शब्दब्रह्मस्वरूपो वेदो महर्षीणां योगयुक्तान्तःकरणेषु सृष्टिकाले एव श्रूयते अतोऽसावभ्रान्तः सर्वथा परिपूर्णश्च।

वेदो हि कारणे ब्रह्मणि परमात्मनि नित्यमेव तिष्ठत्यतोऽसौ नित्यो विज्ञानसिद्धः ॥ ५ ॥

प्रसङ्गात् स्मृतीनां प्रामाण्यं निर्णयति—

**स्मृत्यादीनां प्रामाण्यं तदर्थद्योतकत्वात् ॥६॥**

तदर्थस्य वेदार्थस्य द्योतकत्वात् स्मृत्यादीनामपि प्रामाण्यमभ्युपगन्तव्यम्। सृष्टेरारम्भदशायां सर्वापि शक्तिः सर्वतः परिपूर्णेति स्वभावसिद्धमेतत्। अत्र प्रबलप्रमाणमिदं यत् सर्वप्रथमं किल सनकादयः परमहंसाः समुदपद्यन्ततेति। न तेषु सृष्टिसमीहा। द्वितीयस्यां सृष्टौ प्रजापतयः समुत्पन्नाः, तैरपि मानसिकी सृष्टिरेव विहिता। ततश्च बैजी सृष्टिरभवत्। सुतरां सृष्टेरारम्भकाले आध्यात्मिकपरिपूर्णता हेतोर्महर्षीणामन्तःकरणेषु वेदानामाविर्भावोऽपूर्वमहत्त्वशाली दार्शनिक रहस्यपरिपूर्णश्चावधेयः। प्रतिकल्पं वेदेषु तत्कल्पसर्वविधज्ञानबीजसत्ता दार्शनिकयुक्त्या स्वतः सिद्धा। एतादृश स्वतःपूर्णाभ्रान्तशब्दः ब्रह्मस्वरूपवेदानां तत्त्वप्रकाशकानि वेदसम्मतानि शास्त्राणि च वेदवत् प्रामाण्यमधिगच्छति। स्मृत्यादीनि वेदसंम्मतशास्त्राणि वेदार्थद्योतकानि प्रत्येककल्पीयज्ञानानां वेदेषु बीजरूपेण विद्यमानत्वात् तत्सम्मतंशास्त्राणि स्वीयज्ञानबीजभूतवेदभावार्थद्योतकानीत्यत्र नास्त्यणीयानपि सन्देहावसरः।

वेदानां त्रिगुणमयत्वं त्रिभावात्मकत्वं च प्रागेव निर्णीतम्। वेदानां सर्वाधिकारिसमानरूपहिताधायकत्वात् तदनुकूलशास्त्राण्यपि त्रिगुणात्मकानि त्रिभावात्मकानीत्यतः सर्वजीवहिताधायकानि सर्वमान्यान्येव भवितुमर्हन्ति। स्मृतिषु वेदेषु च नास्ति विशेषभेदो यतो हि वेदार्थस्मरणपूर्वकमेव महर्षिभिर्वेदानुगतानि स्मृतिशास्त्राणि विरचितानि वेदेषु स्मृतिषु चापि शब्दानामेव केवलं भेदः, भावे तु नाणीयानपि भेदः। सुतरां स्मृतयोऽपिवेदवत् प्रमाणभूताः सन्ति। वेदार्थस्मरणं स्मृतिरित्याप्तमतम्। वेदानां तात्पर्यमवधारयितुं समाधिस्थाया बुद्धेर्यथा विद्यते ह्यावश्यकत्वम्, ततोऽप्यधिकं वेदाङ्गोपाङ्गानां तात्पर्यावधारणस्य प्रयोजनीयत्वमवधेयम्।

साङ्गोपाङ्गो वेदोऽध्येतव्य इति सिद्धान्त आप्तः। शिक्षा, व्याकरणं, निरुक्तं, छन्दो, ज्यौतिपमिति वेदानां षडङ्गानि वेदैः साकं स्वरसम्बन्धः सुमहानिति पूर्वमेव प्रतिपादितम्। स्वरसाहाय्यमन्तरेण वैदिकशक्तिपूर्णरूपेण कार्यकारिणी न भवति, अतः स्वरज्ञानकारकं शिक्षाशास्त्रमुच्यते, तदपि स्मृतिशास्त्रमेवास्ते, कल्पशास्त्रं हि वैदिककर्मकाण्डनिर्णायकम्। कर्मणैव धर्मार्थकाममोक्षाख्यचतुर्वर्गसम्बन्धः। वैदिककाण्डत्रयमपि कर्ममूलकमेव, कर्मकलापनिर्णायकं कल्पशास्त्रमपि ११८० शाखाभिर्विभक्तम्। सर्वमप्येतत् धर्मशास्त्रपरनामकं स्मृतिशास्त्रमेवास्ते। शब्दज्ञानजनकं वैदिकं व्याकरणशास्त्रमपि स्मृतितुल्यमेवेत्यत्र न सन्देहः।

वैदिकस्य प्रत्येकं मन्त्रस्य त्रिविधोऽर्थ इति प्रागेवाभिहितम्। वेदस्य त्रिभावप्रकाशकं शास्त्रं निरुक्तमित्युच्यते। निरुक्तशास्त्रस्य सम्यक् ज्ञानोपार्जनमन्तरेण वेदाना गभीराशयपरिज्ञाने न कोऽपि समर्थो भवितुमर्हति। ऋषिप्रणीतत्वान्निरुक्तमपि स्मृतिशास्त्रमेवावगन्तव्यम्। वेदशक्तिप्रकाशकं शास्त्रं छन्द इत्युच्यते। छन्दसा वेदमन्त्रशक्तिर्विकसति। शिक्षाशास्त्रवत् छन्दसोऽप्युपयोगित्वम्। सुतरां शिक्षाशास्त्रमिव छन्दःशास्त्रस्यापि स्मृतित्वमेव। कालज्ञानमन्तरा कर्मसिद्धिरसम्भवा। वैदिकं ज्योतिःशास्त्रं कालज्ञापकम्, कालसेवा वैदिकयोः कर्मोपासनाकाण्डयोर्भित्तिः। वस्तुत एतादृशं परमोपकारकं वैदिकं ज्योतिःशास्त्रमपि स्मृतिरेवेत्यत्र न सन्देहलेशोऽपि। वैदिकानां षण्णामङ्गानां समधिकं महत्त्वं वैदिकानां सप्तोपाङ्गानां च शास्त्रसम्मतम्। वैदिकान्युपाङ्गानि दर्शनशास्त्राणि विज्ञातव्यानि।

वस्तुतो वैदिकज्ञानाधिगमाय दर्शनशास्त्रं दर्शनस्वरूपमेव, एतादृशत्रिलोकपवित्रदर्शनशास्त्रस्य सर्वाण्यपि सूत्राणि स्मृतिस्वरूपाण्येवेत्यत्र नास्ति सन्देहलेशः। वैदिकानि सप्तैव दर्शनानि। न्यायो वैशेषिकश्चेति द्वयं पदार्थवाददर्शनम्। योगः सांख्यश्चेति द्वयं सांख्यप्रवचननाम्नाभिधीयते। वैदिकानि काण्डत्रयाण्यनुसृत्य मीमांसादर्शनमपि त्रिविधम्। एवं सर्वं मिलित्वा सप्तवैदिकानि दर्शनानि। सप्तज्ञानभूमीरनुसृत्य सप्तदर्शनविज्ञानक्रमः पूज्यपादमहर्षिनिर्णीतो निम्नाङ्कितोऽवधेयः।

तथाहि—

विश्वबन्धनकर्त्रीषु सप्तस्वज्ञानभूमिषु।
अज्ञानान्धाः सदा जीवा आसज्जन्ते विमोहिताः॥
श्रौतानां कर्मकाण्डानां साहाय्यात् साधकाः खलु।
पूर्वं शरीरसंशुद्धिं मनः शुद्धिं ततः परम्॥
कृत्वा पश्चान्ममोपास्त्या चित्तवृत्तीः प्रशम्य च।
अधिकारं लभन्तेऽन्ते तत्त्वज्ञानस्य दुर्लभम्॥
ततश्च क्रमशो विप्राः सोपानारोहणं यथा।
ज्ञानभूमीश्च सप्तैवमतिक्रम्य शनैः शनैः॥
ज्ञानपूर्णान्तरात्मानो मामन्ते प्राप्नुवन्ति ते।
ज्ञानक्रमप्रकाशैर्हि पूर्णाः स्वाभाविकैरतः॥
सप्तैता ज्ञानभूम्यो मे परासिद्धेः कृपावशात्।
स्वरूपज्ञानसंलब्धेर्वहन्ते हेतुतामलम्॥
सप्तानां ज्ञानभूमीनां प्रथमा ज्ञानदा भवेत्।
संन्यासदा द्वितीया स्यात् तृतीया योगदा भवेत्॥
लीलोन्मुक्तिश्चतुर्थी स्यात् पञ्चमी सत्पदा स्मृता।
षष्ठ्यानन्दपदा ज्ञेया सप्तमी च परात्परा॥
यावज्जीवैरतिक्रान्ता न सप्ताज्ञानभूमयः।
तावन्न प्रथमा भूमिर्ज्ञानस्य ज्ञानदाप्यते॥
उद्भिज्जानां चिदाकाशे प्रथमा ज्ञानभूमिका।
स्वेदजानां चिदाकाशे सा द्वितीया प्रकीर्त्तिता॥
तृतीयाऽण्डजजातेश्चाज्ञानभूमिश्चिदाश्रिता।
जरायुजपशूनां च चिदाकाशे चतुर्थ्यसौ॥
पञ्चकोषप्रपूर्णत्वाधिकारिष्वेव वै नृषु।
सन्ति शेषा अधिकृता स्तिस्रस्त्वज्ञानभूमयः॥
तिस्रस्ता एव कथ्यन्ते उत्तमाधममध्यमाः।
विशदं ताः प्रचक्षेऽहं श्रूयन्तां विप्रपुङ्गवाः॥
एता अज्ञानभूम्यो हि तिस्र एव समूलतः।
मूर्त्तिमन्तः स्वयं वेदा निराकर्त्तुं समुद्यताः॥
अधमाज्ञानभूमौ हि यावन्मर्त्यः प्रसज्जते।
कृतेऽपराधे दण्ड्यः स्यात्तिर्यग्योनौ तदुद्भवः॥
मध्यमा ज्ञानभूमेश्च मानवैरधिकारिभिः।
पितृलोकास्तथा विप्रा नरकाश्च पुनः पुनः॥
प्राप्यन्ते मृत्युलोकश्च सुखदुःखादि पूरितः।
ददात्यूर्ध्वं च स्वर्लोकमुत्तमाऽज्ञानभूमिका॥
अधमाज्ञानभूमिं च प्राप्ता मर्त्या भवन्त्यहो।
देहात्मवादिनोऽनार्या नास्तिकाः शौचवर्जिताः॥
मध्यमा ज्ञानभूमेश्च मानवा अधिकारिणः।
आस्तिकत्वेन भो विप्राः सद्विचारपरायणाः॥
देहात्मनो हि पार्थक्य विश्वसन्तोऽपि सर्वथा।
इन्द्रियाणां सुखे मग्ना नितरामैहलौकिके॥
विस्मरन्ति महामूढाः सुखं ते पारलौकिकम्।
उत्तमाऽज्ञानभूमेर्वै पुण्यवन्तोऽधिकारिणः॥
आत्मातिरिक्तं मे शक्तिर्मत्वाऽस्तित्वं द्विजर्षभाः।
स्वर्गीयस्य सुखस्यैव जायन्ते तेऽधिकारिणः॥
अधमाऽज्ञानभूमिर्हि तमो मुख्या विजृम्भते।
तमो रजः प्रधानासौ मध्यमा च प्रकीर्त्तिता॥
उत्तमाऽज्ञानभूमिश्च रजः सत्त्वप्रधानिका।
शुद्धसत्त्वविकासस्य स्थले नूनं यथाक्रमम्॥
पुण्यभाजां मनुष्याणां चित्ताकाशे ततो द्विजाः।
सप्तानां ज्ञानभूमीनामधिकारः क्रमेण हि॥

समुद्यन्ति ध्रुवं देव दुर्लभानां स्वभावतः।
ज्ञानभूम्यश्च सप्तैताः साधकान्तर्हृदि क्रमात्॥
शुद्धं सत्त्वगुणं सम्यक् वर्धयन्ते निरन्तरम्।
निःश्रेयसपदं नित्यं गुणातीतं नयत्यलम्॥
यत् किञ्चिदासीत् ज्ञातव्यं ज्ञातं सर्वं मयेति धीः।
आद्याया भूमिकायाश्चानुभवः परिकीर्त्तितः॥
त्याज्यं त्यक्तं मयेत्येवं द्वितीयोऽनुभवो मतः।
प्राप्या शक्तिर्मया लब्धाऽनुभवो हि तृतीयकः॥
माया विलसितं चैतद् दृश्यते सर्वमेव हि।
न तत्र मेऽभिलाषोऽस्ति चतुर्थोऽनुभवो मतः॥
जगद् ब्रह्मेत्यनुभवः पञ्चमः परिकीर्त्तितः।
ब्रह्मैवेदं जगत् षष्ठोऽनुभवः किल कथ्यते॥
अद्वितीयं निर्विकारं सच्चिदानन्दरूपकम्।
ब्रह्माऽहमस्मीति मतिः सप्तमोऽनुभवो मतः॥
इमां भूमिं प्रपद्यैव ब्रह्मसारूप्यमाप्यते।
नाऽत्र कश्चन सन्देहो विद्यते मुनिपुङ्गवाः॥
श्रवणं मननं चैव निदिध्यासनमेव च।
पुरुषार्थास्त्रिधा प्रोक्ता एत एव महर्षयः॥
मुमुक्षूणां त्रिभिः सम्यक् मम सामीप्य लब्धये।
पुरुषार्थैरुपेतानामेताः साधनशैलयः॥
सप्तानां ज्ञानभूमीनां सप्त सोपानसन्निभाः।
प्रासादपृष्ठमारोढुं यथा सोपानपङ्क्तयः॥
तथा तटस्थ ज्ञानस्य सप्तैता ज्ञानभूमयः।
सप्तसोपानतुल्यासु स्वरूपज्ञानलब्धये॥
आद्यायां ज्ञानदा नाम्न्यां ज्ञानभूम्यां मुमुक्षवः।
अन्तर्दृष्टिं लभेरस्ते तत्त्वजिज्ञासवो द्विजाः॥
तदा जिज्ञासवो नूनं परमाणुस्वरूपतः।
स्थूलान्येव ममाङ्गानि ज्ञात्वा नित्यानि सर्वथा॥
षोडशधा विभक्तानि दृष्ट्वा तान्येव मे पुनः।
वादसाहाय्यतो वापि पर्यालोचनलोचनैः॥

सृष्टिं निरीक्ष्य तस्याश्च कर्त्तारं केवलं हि माम्।
शक्नुवन्ति बुधा विप्रा अनुमातुं कुलालवत्॥
अस्यां च ज्ञानभूमौ हि क्षेत्रे तत्त्वज्ञमानसे।
आत्मज्ञानीय बीजस्य प्ररोहो जायते ध्रुवम्॥
एनां वदन्त्यतो भूमिं ज्ञानदां ज्ञानिनो जनाः।
ददात्येषा यतो भूमिर्ज्ञानं नित्यं मुमुक्षवे॥
आरूढानां ज्ञानभूमावेतस्यां नियमेन च।
ममोपास्तौ प्रवृत्तानां येन केन प्रकारतः॥
मुमुक्षूणां ध्रुवं चित्ते ज्ञानवायुप्रकम्पितम्।
मूलमज्ञानवृक्षस्य सर्वथा शिथिलायते॥
संन्यासादभिधायां हि ज्ञानभूम्यां प्रतिष्ठिताः।
मुमुक्षवः शरीरे मे स्थूलमल्पसमीपतः॥
सम्पश्यन्तो ममाङ्गेषु स्थूलेष्वेव महर्षयः।
कुर्वन्तः सूक्ष्मशक्तीनामनुभूतिं निरन्तरम्॥
धर्माधर्मौ च निर्णीय ह्यधर्मं त्यक्तुमीशते।
ज्ञानभूमिर्द्वितीयात एषा संन्यासदोच्यते॥
योगदायां तृतीयायां ज्ञानभूम्यां मुमुक्षवः।
चित्तवृत्तिनिरोधस्य कुर्वन्तोऽभ्यासमुत्तमम्॥
मच्छक्तिं संयमेनैतां मां पुनर्ब्राह्मणोत्तमाः।
अभ्यासेनैकतत्वस्य पृथक्त्वेन निरीक्षितुम्॥
यस्मिन् काले प्रवर्त्तन्ते सूक्ष्मदृष्टिस्वरूपकम्।
साधकेषु तदोदेति प्रत्यक्षं नन्वलौकिकम्॥
ज्ञानभूमिमिमां विज्ञा योगदां च वदन्त्यतः।
चित्तवृत्तिनिरोधं च योगमेव ददात्यलम्॥
लीलोन्मुक्तिं चतुर्थीं वै ज्ञानभूमिं प्रपद्य च।
अद्यस्य घटनायाञ्च पटीयस्या मुमुक्षवः॥
त्रैगुण्यलीलामय्या मे तत्त्वं वै प्रकृतेर्विदुः।
तदा लीलामयी स्वस्यां लीलायां प्रकृतिः पुनः॥
ना सज्जयितुमिष्टे तान्साधकान् विज्ञसत्तमाः।
लीलोन्मुक्तिं बुधाः प्रोचुर्ज्ञानभूमिमिमामतः॥

पञ्चमी ज्ञानभूमिं ते यदा सम्प्राप्य सत्पदाम्।
अभेदज्ञानमाप्तुं वै चित्ते स्वस्मिन् मुमुक्षवः॥
आरभन्ते तदा तेषामनुभूतेर्हि शक्तयः।
विशेषेण विवर्धन्ते नात्र कार्या विचारणा॥

× × ×

अस्त्येकत्वादभेदो यो मन्मत्प्रकृतिगोचरः।
यो वाऽभेदोऽस्ति मे विप्राः कार्यकारणरूपयोः॥
ते वैज्ञानिकनेत्रेण विस्पष्टं ज्ञातुमीशते।
ज्ञात्वा सम्यग् रहस्यं च विश्वोत्पादकर्मणः॥
जगदेवास्म्यहमिति मां निरीक्ष्य विचारतः।
कार्यब्रह्मण एतस्य विबुध्यन्ते स्म सत्यताम्॥
एनां वदन्ति विद्वान्सो भूमिं वै सत्पदायतः।
सद्भावस्य यतोऽमुष्या ज्ञानं लोकैरवाप्यते॥
नन्वानन्दपदां षष्ठीं ज्ञानभूमिं प्रपद्य वै।
एकाधारे तु मय्येव मम भक्ता मुमुक्षवः॥
कर्मराज्यं जडं विप्रा दैवराज्यं च चेतनम्।
शक्नुवन्ति यदा द्रष्टुं तदा मे रससागरे॥
उन्मज्जन्तो निमज्जन्तो जगदित्यहमेव वा।
समीक्षमाणा अद्वैतमानन्दमुपभुञ्जते॥
बुधाः सम्प्रोचुरानन्दपदां भूमिमिमामतः।
आनन्दः साधकैर्यस्मात् अस्यां भूमाववाप्यते॥
अन्तिमां ज्ञानभूमिं मे सप्तमीं च परात्पराम्।
सम्प्राप्य ज्ञानिनो भक्ताः कार्यकारणयोर्द्विजाः॥
भेददृष्टिं लयं कृत्वा स्वरूपे यान्ति मे लयम्।
भेदज्ञानलयेनैव तेषां शुद्धान्तरात्मनि॥
सर्वेषु प्राणिवृन्देषु किलैकत्वं प्रदर्शकम्।
अद्वैत भावजनकाऽविभक्तज्ञानमुत्तमम्॥
उदेति नात्र सन्देहोऽज्ञानध्वान्तापनोदकम्।
तदा मे ज्ञानिभक्तेषु मयि भेदं च नश्यति॥
लीयन्ते मत्स्वरूपे ते स्वरूपज्ञानसंश्रयात्।
अतो वदन्ति विद्वांस इमां भूमिं परात्पराम्॥

एतादृग्वर्णनैः सप्तवैदिकदर्शनानां स्मृतित्वं स्वतः सिध्यति, दर्शनशास्त्राणि केवलं स्मृतय एव न सन्ति, प्रत्युत वैदिकविज्ञानस्य दर्शनापरपर्यायनेत्रस्वरूपाणि सन्ति, विशेषतो दर्शनशास्त्रमन्तरेण वेदार्थतात्पर्यपरिज्ञानं नितरामसम्भवम्। अतस्तत्प्रामाण्यमसन्दिग्धम्। यतो वेदस्य स्वतः प्रामाण्यम्। त्रिमूर्त्तिसम्बन्धयुक्तानि तन्त्र-गीताप्रभृतिशास्त्राणि ब्रह्माण्डपुस्तकान्तर्गतत्वादवश्यमेव प्रामाण्यमर्हन्ति, तन्त्रादिशास्त्राणि कलिकल्मपदूषितमानवानां परममंगलकराणि। अतो वै प्रोक्तं "तन्त्रं वै वेदसम्मतम्" इति। कलियुगीयजीवकल्याणकरत्वात् तन्त्रशास्त्रस्य सुमहान् विस्तारो दृश्यते। अत एव शास्त्रे समुपलभ्यते यत्—

"चत्वारिंशन्नवसहस्राणि संख्यातानि वरानने" इति। तन्त्राणि चापि त्रिगुणात्मकानि त्रिभावात्मकानि च। अत्र नास्ति मतभेदः। विशेषतः कलिमलसमावृत तामसिकाधिकारिकृते तंत्रेषु सुमहान्तः समुद्योगा दृश्यन्ते।

एतादृश वैचित्र्यव्यतिरिक्तमपि वेदगभीररहस्यम् बहुविधदार्शनिकतत्त्वविवेचनम्, कर्मोपासनाज्ञानकाण्डीयगम्भीरविषयमीमांसा, आयुर्वेदाद्युपवेदानामनेकानि रहस्यानि, ज्योतिषादिवेदाङ्गानां विविधानि तत्त्वानि पुराणापेक्षया समधिकानि तन्त्रेषु समुपवर्णितान्युपलभ्यन्ते। सुतरां सर्वमेतत् तन्त्रशास्त्रस्य महत्त्वद्योतकमवगन्तव्यम्। तन्त्राणां त्रिगुणमहत्त्वविषयेऽपि शास्त्रे समुपलभ्यते यत्—

यदुक्तं ते मया तन्त्रं त्रिविधं त्रिगुणात्मकम्।
तामसं कुत्र संप्रोक्तं राजसं वापि कुत्रचित्॥
सात्त्विकं तत्र कुत्रापि धीमान् तस्मात्तदुद्धरेत्॥

वेदकाण्डत्रयवर्णनात्मकत्वात् तन्त्राणां त्रिभावात्मकत्वं स्वतः सिध्यति। एवंविधा तन्त्रशास्त्रस्य विषयचमत्कृतिम्, त्रिगुणवैचित्र्यमादि दृष्ट्वा ब्रह्माण्ड-

पुस्तकसम्बन्धनिबन्धनत्वाच्च तन्त्रस्यास्मृतिवत् प्रामाण्यमित्यत्र कः सन्देहः। पुराणशास्त्रमत्युपकारकं, तत्त्वतस्तद् वेदभावप्रकाशकं भाष्यरूपम्। अतस्तदवश्यं प्रामाण्यमर्हति। वस्तुतस्तद् ऋषिप्रणीतत्वाद् वेदभावप्रकाशकत्वाच्च स्मृतिस्वरूपमेव। तत्त्ववेत्तृभिस्तु तत् परमहंससंहितेति नाम्ना प्रोच्यते। मध्यमाधिकारिणां कृते आत्मतत्त्वप्रदर्शको गुरुः, अधमाधिकारिणां पुराणं परममङ्गलकरम्, साधनचतुष्टयसम्पन्नजिज्ञासूनां ज्ञानामृतविस्तारकारकम्। राजसिकाधिकारिणः शुभकर्मनियुक्तान् विधाय पापान्निवारयति, तदुक्तं स्मृतिशास्त्रे—

अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः।
प्रत्यग्धामा स्वयं ज्योतिर्विश्वं येन समन्वितम्॥
प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम्।
ददाति यो भागवतं स याति परमां गतिम्॥
यास्तामिस्रान्धतामिस्रौ रौरवाद्याश्च यातनाः।
भुङ्क्ते नरो वा नारी वा मिथः सङ्गेन निर्मिताः॥

अतो बहुभेदसमन्वितं पुराणशास्त्रं सर्वजीवहिताधायकमवधेयम्। यतस्तेन सर्वविधाधिकारिणां हितं सिध्यति। अतः "पुराणसर्वकारण"मिति श्रुतिरभिधत्ते।

तत्त्वज्ञानाधिक्येन, सदुपदेशबाहुल्येन, धर्माधर्मरहस्यनिर्णयेन, इतिहासादिगाथाद्वारा धर्ममार्गपुष्टिकारकत्वेन सर्वजनप्रियरमणीययोग्यभाषया, त्रिविधाधिकारिपरिपूर्णत्वेन पुराणशास्त्रं वैदिकविज्ञानपरमसहायकम्, पुराणेषु गीतादिविभागानां ज्ञानप्राधान्यम्, गाथादीनामितिवृत्तप्रधानता वैदिककाण्डत्रयमनुसृत्य सर्वविधरहस्यमपि तेषु समुपलभ्यते। अतो वेदोक्तयोरभ्युदयनिःश्रेयसयो यथेष्टाधिकाराः पुराणेषु प्राप्यन्ते। वेदप्रतिपादिता अध्यात्माधिदैवाधिभूतभावाः, वेदोक्तानि रोचकभयानकयथार्थाज्ञानवाचकवर्णनानि, त्रिगुणाधिकाराः, लौकिकसमाधिपरकीयभाषाविन्यासादयश्च पुराणेषु समुपलभ्यन्ते।

अध्यात्माधिदैवाधिभूतभावत्रयोदाहृतिर्विष्णुभागवते, ब्रह्मवैवर्त्तपुराणे देवीभागवते च वर्णिता रासलीलाप्रणाली विवेचनीया वर्त्तते। त्रिविधभावप्रणाली तु विधिरहस्यचमत्कारपरिपूर्णा विद्यते, यस्यास्तात्पर्यं स्मृतिग्रन्थेषु निम्नाङ्कितमवधेयम्। तथाहि—

वेदेष्वथपुराणेषु तन्त्रेऽपि श्रुतिसम्मते।
भयानकं रोचकं हि यथार्थमितिभेदतः॥
वाक्यानि त्रिविधान्याहुस्तद्विदो मद्विभावकः।
श्रूयतां दत्तचित्तैर्हि तत्रास्त्येवं व्यवस्थितिः॥
पापाच्चाज्ञानसम्भूताद्विषयाद् भीतिकृद्वचः।
भयानकमिति प्राहुर्ज्ञानिनस्तत्त्वदर्शिनः॥
सुकृतेऽध्यात्मलक्ष्ये च रुचिकृद्वचनं सुराः।
रोचकं तद्धि विज्ञेयं श्रुतौ तन्त्रपुराणयोः॥
अध्यात्मतत्त्वं संश्लिष्टं तत्त्वज्ञानोपदेशकम्।
वचो यथार्थं सम्प्रोक्तं यूयं जानीतनिर्जराः॥
भयानकं वचो नित्यं तामसायाधिकारिणे।
रोचकं राजसायैव यथार्थं सात्त्विकाय च॥
विशेषतो हितकरं विज्ञेयं विबुधोत्तमाः।
अतोऽधिकारभेदेन व्याहृतं वचनं सुराः॥
श्रुतौ पुराणे तन्त्रे च त्रिधा वर्णनरीतयः।
दृश्यन्ते क्रमशः सर्वास्ता वच्मि भवतां पुरः॥
समाधिभाषा प्रथमा लौकिकीति ततः पराः।
तृतीया परकीयेति शास्त्रभाषा त्रिधा स्मृता॥
इतिहासमयी शश्वत् कर्णयोर्मधुरामला।
मनोमुग्धकरी तद्वचित्ताह्लादविवर्धिनी॥
धर्मसिद्धान्तसंयुक्ता समासबहुला नहि।
ज्ञेया सा परकीयेति शास्त्रवर्णनपद्धतिः॥

इमामज्ञानिने तद्वत्तामसायाधिकारिणे।
विशेषतो हितकरीं प्राहुस्तत्त्वनिदर्शिनः॥
अतीन्द्रियाध्यात्मराज्यस्थितं विषयगह्वरम्।
लौकिकीं रीतिमाश्रित्य वर्णयेद् याति संस्फुटम्॥
तथा समाधिगम्यानां भावानां प्रतिपादिका।
सा पूर्णालौकिकै स्तद्वद्रसैर्भाषातिलौकिकी॥
इयं राजसिकायैव साधकायाधिकारिणे।
सूतेऽधिकं सदा भव्यं सत्यं सत्यं दिवौकसः॥
प्रकाशयति या ज्ञानं कार्यकारणब्रह्मणोः।
समाधिसिद्धिभावैर्या सम्पूर्णा सर्वतस्तथा॥
तत्त्वज्ञानमयी तद्वद् याहि वर्णनपद्धतिः।
ज्ञेया समाधिभाषा सा सात्त्विकायोपकारिका॥

लिङ्गपुराणे समाधिभाषोदाहरणं निम्ननिर्दिष्टं निभालनीयम्। तथाहि—

अलिङ्गे लिङ्गमूलं तु अव्यक्तं लिङ्गमुच्यते।
अलिङ्गः शिव इत्युक्तो लिङ्गं शैवमिति स्मृतम्॥
प्रधानं प्रकृतिश्चेति यदाहुर्लिङ्गमुत्तमम्।
गन्धवर्णरसैर्हीनं शब्दस्पर्शादि वर्जितम्॥
अगुणं ध्रुवमक्षय्यमलिङ्गं शिवलक्षणम्।
गन्धवर्णरसैर्युक्तं शब्दस्पर्शादि लक्षणम्॥
जगद्योनिं महाभूतं स्थूलं सूक्ष्मं द्विजोत्तमाः।
विग्रहो जगतां लिङ्गमलिङ्गादभवत् स्मृतम्॥
सप्तधा चाष्टधा चैव तथैकादशधा पुनः।
लिङ्गान्यलिङ्गस्य तथा मायया विततानि तु॥

अत्रैव पुराणे लौकिकभाषाया उदाहरणं यथा—

अथोवाच महादेवः प्रीतोऽहं सुरसत्तमौ।
पश्यन्तं मां महादेवं भयं सर्वं विमुच्यताम्॥
युवां प्रसूतौ गात्राभ्यां मम पूर्वं महाबलौ।
अयं मे दक्षिणे पार्श्वे ब्रह्मा लोकपितामहः॥
वामपार्श्वे च मे विष्णुर्विश्वात्मा हृदयोद्भवः।
प्रीतोऽहं युवयोः सम्यग् वरं दद्मि यथेप्सितम्॥
एवमुक्त्वा तु ते विष्णुं कराभ्यां परमेश्वरः।
पस्पर्श सुभगाभ्यां तु कृपया तु कृपानिधिः॥
ततः प्रहृष्टमनसा प्रणिपत्य महेश्वरम्।
प्राह नारायणो नाथं लिङ्गस्थं लिङ्गवर्जितम्॥
यदि प्रीतिः समुत्पन्ना यदि देवोवरश्च नौ।
भक्तिर्भवतु नौ नित्यं त्वयि चाव्यभिचारिणी॥
देवः प्रदत्तवान् देवाः स्वात्मन्यव्यभिचारिणीम्।
ब्रह्मणे विष्णवे चैव श्रद्धां शीतांशु भूषणः।
जानुभ्यामवनीं गत्वा पुनर्नारायणः स्वयम्॥
प्रणिपत्य च विश्वेशं प्राह मन्दतरं वशी॥
आवयोर्देवदेवेश विवादस्वस्तिशोभनम्।
इहागतो भवान् यस्मात् विवादशमनाय नौ॥
तस्य तद्वचनं श्रुत्वा पुनः प्राह हरो हरिम्।
प्रणिपत्य स्थितं मूर्ध्ना कृताञ्जलिपुटं स्वयम्॥
प्रत्ययस्थितिसर्गाणां कर्त्ता च धरणीपते।
वत्स वत्सहरे विष्णो पालयैतच्चराचरम्॥
त्रिधा भिन्नो ह्यहं विष्णो ब्रह्मविष्णुभवाख्यया॥
सर्गरक्षालयगुणैर्निष्कलः परमेश्वरः।
संमोहं त्यज भो विष्णो पालयैन पितामहम्॥
पद्मे भविष्यति सुतः कल्पे तव पितामहः।
तदा द्रक्ष्यसि मां चैव सोऽपि द्रक्ष्यसि मद् भज॥
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत।
तदाप्रभृतिलोकेषु लिङ्गार्चा सुप्रतिष्ठतम्॥
लिङ्गवेदीमहादेवी लिङ्गं साक्षात् महेश्वरः।
लयनालिङ्गमित्युक्तं तत्रैव निखिलं सुराः॥
यस्तु लिङ्गं पठेन्नित्यमाख्यानं लिङ्गसन्निधौ।
स याति शिवतां विप्रो नात्र कार्या विचारणा॥

तत्रैव पुराणे परकीयभाषाया उदाहरणं निम्ननिर्दिष्टमवलोकनीयम्। तथाहि—

शैलादि रुवाच—

एवमुक्तास्तदा तेन ब्रह्मणा ब्राह्मणर्षभाः।
श्वेतस्य च कथं पुण्यामपृच्छन् परमर्षयः॥

पितामह उवाच—

श्वेतो नाम मुनिः श्रीमान् गतायुर्गिरिगह्वरे।
सक्तोऽभ्यर्च्य यद् भक्त्या तुष्टाव च महेश्वरम्॥
रुद्राध्यायेन पुण्येन नमस्तेत्यादिना द्विजाः।
ततः कालो महातेजाः कालप्राप्तं द्विजोत्तमम्॥
नेतुं सञ्चित्य विप्रेन्द्राः सान्निध्यमकरोन्मुनेः।
श्वेतोऽपि दृष्ट्वा तं कालं कालप्राप्तोपि शङ्करम्॥
पूजयामास पुण्यात्मा त्र्यम्बकं चेत्यनुस्मरन्।
त्र्यम्बकं च यजेदेवं सुगन्धिं पुष्टिवर्द्धनम्॥
किं करिष्यति मे मृत्युर्मृत्योर्मृत्युरहं यतः।
तं दृष्ट्वा सस्मितं प्राह श्वेतं लोकभयङ्करम्॥
एह्येहि श्वेत चानेन विधिना किं फलं तव।
रुद्रो वा भगवान् विष्णुर्ब्रह्मा वा जगदीश्वरः॥
कः समर्थः परित्रातुं मया ग्रस्तं द्विजोत्तम।
अनेन मम किं विप्र रौद्रेण विधिना प्रभो॥
नेतुं यस्योत्थितश्चाहं यमलोकं क्षणेन वै।
यस्माद् गतायुस्त्वं तस्मान्मुने नेतुमिहोद्यतः॥
तस्य तद् वचनं श्रुत्वा भैरवं धर्ममिश्रितम्।
हा रुद्र ! रुद्र ! रुद्रेति ललाम मुनिपङ्गवः॥
तं प्राह च महादेवं कालं सम्प्रेक्ष्य वैदृशा।
नेत्रेण वाष्पमिश्रेण सम्भ्रान्तेन समाकुलः॥

श्वेत उवाच—

त्वया किं कालतो नाथश्चास्ति चेद्धि वृषध्वजः।
लिङ्गेऽस्मिन् शङ्करो रुद्रः सर्वदेवभवोद्भवः॥
अतीव भवभक्तानां मद्विधानां महात्मनाम्।
विधिना किं महाबाहो गच्छ गच्छ यथागतम्॥

ततो निशम्य कुपितस्तीक्ष्णदंष्ट्रो भयङ्करः।
श्रुत्वा श्वेतस्य तद्वाक्यं पाशहस्तो भयावहः॥
सिंहनादं महत्कृत्वा चास्फाल्य च मुहुर्मुहुः।
बबन्ध च मुनिं कालः कालप्राप्तं तमाह च॥
मया बद्धोऽसि विप्रर्षे! श्वेतं नेतुं यमालयम्।
अद्य वै देवदेवेन तव रुद्रेण किं कृतम्॥
क्व शर्वं स्तव भक्तिश्च क्व पूजा पूजया फलम्।
क्व चाहं क्व च मे भीतिः श्वेत बद्धोऽसि वै मया॥
लिङ्गेऽस्मिन् संस्थितः श्वेत तव रुद्रो महेश्वरः।
निश्चेष्टोऽसौ महादेवः कथं पूज्यो महेश्वरः॥
ततः सदाशिवः स्वयं द्विजं निहन्तुमागमम्।
निहन्तुमस्तकं स्मयन् स्मरारियज्ञहा हरः॥
त्वरन् विनिर्गतः परः शिवः स्वयं त्रिलोचनः।
त्र्यम्बकोऽम्बया समं सनन्दिना गणेश्वरैः॥
ससर्ज जीवितं क्षणाद् भवं निरीक्ष्य वै भयात्।
पपात चाशु वै बली मुनेस्तु संनिधौ द्विजाः॥
ननाद चोर्ध्वमुच्चधीर्निरीक्ष्य चान्तकान्तकम्।
निरीक्षणेन वैमृतं भवस्य विप्रपुङ्गवाः॥
विनेदुरुच्चमीश्वराः सुरेश्वरा महेश्वरम्।
प्रणेमुरम्बिकामुमां मुनीश्वरास्तु हर्षिताः॥
ससर्ज्जुरस्य मूर्ध्नि वै मुनेर्भवस्य खेचराः।
सुशोभनं सुशीतलं सुपुण्यवर्षमम्बरात्॥
अहो ! निरीक्ष्य चान्तकं मृतं तदाशु विस्मितः।
शिलाशवात्मजाऽव्ययं शिवं प्रणम्य शङ्करम्॥
उवाच बालधी मृतः प्रसीद चेति नै मुनेः।
महेश्वरं महेश्वरस्य चानुगो गणेश्वरः॥
ततो विप्रेण भगवाननुगृह्य द्विजोत्तमम्।
क्षणाद्गूढशरीरं हि ध्वस्तं दृष्ट्वान्तकः क्षणात्॥
तस्मान्मृत्युञ्जयं चैव सर्वेषामपि शङ्करम्।
बहुना किं प्रलापेन संन्यस्याभ्यर्च्य वै भवम्॥
भक्त्या चापरया तस्मिन् विशोका वै भविष्यथ।

एवं तन्त्रेष्वपि भाषात्रैविध्यं सम्यक्तया प्रतीयते यथा वेदकाण्डत्रयं त्रिधा विभक्तं पुराणजातम्, तत्र कर्मपरं महाभारतादिकं उपासनापरं शिवपुराणं, विष्णुपुराणं, देवीभागवतादिकं, ज्ञानपरं योगवाशिष्ठादिकम् इति। अत्रायं निष्कर्षो यत् स्मृतयः पुराणानि तन्त्रादिकमपि शास्त्राणि वेदतात्पर्यप्रकाशकत्वेन वेदसम्मतानि वेदवत् सर्वथोपादेयानि च। वेदसम्मतेषु शास्त्रेषु एतेषु गुणत्रयभेदतो निर्णीतः साधनाधिकारो व्यवस्थितानि चात्र त्रिविधबुद्धितास्त्रिविधानुशासनानि।

अध्यात्माधिदैवाधिभूतभावत्रयद्योतनार्थैवैषु विद्यते यथा नियमं प्रयत्नः। शास्त्राणीमानि त्रिविधाभिः समाधिलौकिकपरकीयभाषाभिस्तोषयितुं शक्नुवन्ति सर्वविधानधिकारिणः। वेदार्थद्योतकान्यपि शास्त्राणि भवन्ति वेदसम्मतानि वेदवदुपादेयानि चेति। पूर्वोक्तविचारनिष्कर्षोऽयं यत् वेदाङ्गानि, स्मृतयः, वैदिकदर्शनानि, तन्त्राणि, पुराणानि चेति सर्वाण्यपि शास्त्राणि, वेदविज्ञानप्रकाशकत्वात्, वेदाङ्गविस्तारकत्वात् वैदिकरहस्यनियामकत्वाच्च नूनमेव वेदसम्मतानि प्रामाण्यमर्हन्ति।

सात्त्विक-राजसिक-तामसिकभेदेन मानवबुद्धयस्त्रिविधा विज्ञेयाः। अत एव योगानुशासनं, शब्दानुशासनं, राजानुशासनं चेति त्रिविधानुशासनानि शास्त्रेषु विहितान्युपलभ्यन्ते। भावत्रयद्योतकत्वाच्च सर्वविधाधिकारिणां समानरूपेण हिताधायकानि सर्वमान्यानि च। एतत्सूत्रप्रयुक्तस्य अपि शब्दस्य तात्पर्यमिदं यत् अन्यानि वेदसम्मतानि शास्त्राण्यपि वेदवत् प्रामाण्यमर्हन्ति ॥ ६ ॥

पूर्वविज्ञानं द्रढयति—

**ऋषिदेवसम्बन्धित्वाच्च ॥ ७ ॥**

सर्वाणि शास्त्राणि ऋषिदेवसम्बन्धित्वाच्च प्रामाण्यमर्हन्ति। नित्य देवर्षिसाहाय्यप्राप्तत्वाच्च प्रामाण्यमभ्युपगच्छन्ति। पूर्वस्मिन् सूत्रे स्मृतयो, वेदाङ्गानि, दर्शनानि, तन्त्राणि, पुराणानि चेति पञ्चशास्त्राणि, किञ्चैतदन्तर्गतानि तत्सदृशानि अन्यान्यपि वेदसम्मतानि शास्त्राणि प्रामाण्यमर्हन्तीति सिद्धान्तितम्। सम्प्रत्येतेषां शास्त्राणां प्रामाण्यविषये द्वितीययुक्तिर्दीयते—

मृत्युलोकस्य क्षणभङ्गुरत्वात् नानाविधान्यक्षरमयपुस्तकानि, यान्युपर्युक्तशास्त्रतो भिन्नार्थप्रतिपादकानि, आसुरभावपरिपूर्णानि नानापिण्डपुस्तकानि न प्रामाण्यमर्हन्ति, यतस्तानि लौकिकासुरभावप्रकाशकानि विद्यन्ते किन्तु नादमयं वेदपुस्तकं ब्रह्म-विष्णु-शङ्कर प्रेरणयोपलब्धं ब्रह्माण्डपुस्तकं ऋषिप्रेरणया प्राप्तं विन्दुपुस्तकं, दैवप्रेरणयोपलब्धं पिण्डपुस्तकमपि सर्वाण्येतानि नादमयपुस्तकवेदतुल्यानि माननीयानि च। स्मृतयो, वेदाङ्गानि, दर्शनानि, तन्त्राणि, पुराणानि चेति एतानि देवर्षिप्रेरितत्वाद् वेदवत् प्रामाण्यमर्हन्ति, नात्र सन्देहलेशोऽपि।

प्रागेवेदं सिद्धान्तितं यत् ऋषिभिस्तदवतारैर्वा प्रणीतानि स्मृतिशास्त्राणि, वैदिकसप्त दर्शनान्यपि तथैव। बहुधा तन्त्रशास्त्रं गीतादिशास्त्रं च साक्षात् त्रिदेवप्रेरितम्। तन्त्राणां कतिचिदंशा ऋषिप्रेरिता अपि सन्ति। गीतादिशास्त्राणामपि केचिदंशा देवप्रेरिताः विद्यन्ते। अतः सर्वाण्येतानि वेदवत् प्रामाण्यमभ्युपगच्छन्ति। भ्रमविरहितज्ञानस्यैवाप्तत्वात्प्रामाण्यमभ्युपगन्तव्यम्। सुतरां त्रिकालदर्शिभिराप्तज्ञानाधारस्वरूपैर्नित्यै दैवर्षिभिः सगुणब्रह्मरूपैस्त्रिमूर्त्तिभिश्च सम्बद्धानि सर्वाणि नूनमेव प्रामाण्यमर्हन्ति ॥ ७ ॥

स्थितिप्रसङ्गत आधिभौतिकस्य जगतोऽधिदैवर्निर्णयः क्रियते—

**पितृदैवतमाधिभौतिकम् ॥ ८ ॥**

आधिभौतिकस्य जगतोऽधिदैवभूताः पितरो वेद्याः। स्थितिपादेऽत्र पूज्यपादेन महर्षिणा सूत्रकारेण जागतिक-

स्थितिसम्बन्धतः परममङ्गलमयवेदशास्त्रसम्बद्धमीमांसायाः समनंतरं त्रिविधसृष्टिरक्षाहेतुभूतः प्रत्येकस्य यथाक्रममधिदैवनिर्णयः क्रियते। तत्र सर्वतः प्रथमं स्थूलाया आधिभौतिक्याः सृष्टेः सुरक्षाया विचारतस्तदधिदैवस्य पितृगणस्यास्तित्वं मीमांस्यते। सृष्टिः किल जडमयी। जडस्य वस्तुनश्चेतनसाहाय्यमन्तरेण कार्यकारिता न भवती। अतः सृष्टिप्रपञ्चस्याधिभौतिकोंऽशो यैश्चाल्यते संरक्ष्यते च त एव पितरः कथ्यन्ते। देवास्त्रिप्रकारकाः। तेष्वाधिभौतिकस्य जगतोऽधिदैवभूताः पितरोऽपि दैवा एव समाम्नाताः। आदिसर्गकाल देवा इव नित्य पितरोऽपि समुत्पद्यन्ते। रुद्रादित्यानां नित्यदैवानां यथा पदं भवति तथैव अर्यमादि नित्यपितृणामपि पदमवगन्तव्यम्। पितृणामुत्पत्तिविषये निम्नलिखित प्रकारवर्णनं समुपलभ्यते। तथाहि—

सप्तधा सप्तलोकेषु आदिमन्वन्तरक्रिया।
अन्येषां वसवः साध्याः रुद्रादित्याश्विनाविति॥
अग्रतः सर्ववर्णानां साधारण्येन संस्थिताः।
ब्रह्मर्षयस्तदुत्पन्ना इति सप्तविधा गणाः॥
मुक्तचेतनका ब्रह्मन्! न दृश्यन्ते पितृष्वपि।
विशेषशास्त्रदृष्ट्या तु पुराणानां च दर्शनात्॥

पितॄणां श्रेणिसम्बन्धे ऊद्ध्र्वगतिविषये च स्मृतौ वर्णनमीदृशमुपलभ्यते—

अमूर्त्तयः पितृगणास्ते वै पुत्राः प्रजापतेः।
विराजस्य प्रजाः श्रेष्ठास्ते वै राजा इति स्मृताः॥
देवानां पितरस्ते हि तान् यजन्तीह देवताः।
एते वै लोकविभ्रष्टा लोकान् प्राप्य सनातनात्॥
पुनर्युगशतान्तेषु जायन्ते ब्रह्मवादिनः।
ते प्राप्य तां स्मृतिं भूयः सिद्धियोगमनुत्तमम्॥
चिन्त्ययोगगतिं शुद्धां पुनरावृत्तिदुर्लभाः।
एतेऽस्मिन् पितरः श्राद्धे योगिनां योगवर्धनाः॥
आप्यायितास्तु ते पूर्वं येऽपि योगबले रतां।
तस्मात् श्राद्धानि देयानि योगिनां योगसत्तमैः॥
एष वै प्रथमः सर्गः सोमपा नाम उत्तमः।
एते त एकतनवो वर्त्तन्ते द्विजसत्तमाः॥
भूर्लोकवासिनो याज्या भुवर्लोकनिवासिनः।
स्वर्गलोका मरीच्याद्यास्तेषां याज्या महर्गताः॥
कल्पवासिकसंज्ञानां तेषामपि जने स्थिताः।
तेषां सत्यगताः प्रोक्ता इत्येषा पितृसंततिः॥

श्रुतिभिरपि प्रोक्तं, यथा—

"नमो वः पितरो रसाय, नमो वः पितरः शोषाय, नमो वः पितरो जीवाय, नमो वः स्वधायै" इत्यादि।

देवर्षिवत् पितृणामपि संख्या निर्दिष्टा। तथाहि स्मृतिशास्त्रे—

ततो निगृह्येन्द्रियकं विकारं चतुराननः।
जिघृक्षुरपि तत्याज तां सन्ध्यां कामरूपिणीम्॥
तत् शरीरात्तु धर्माम्भो यत् पपात द्विजोत्तमाः।
अग्निष्वात्ता बर्हिषदो जाताः पितृगणास्ततः॥
भिन्नाञ्जननिभाः सर्वे फुल्लराजीवलोचनाः।
नितान्तसंयताः पुण्याः संसारविमुखाः परे॥
सहस्राणां चतुःषष्टिरग्निष्वात्ताः प्रकीर्त्तिताः।
षडशीतिसहस्राणि तथा बर्हिषदो द्विजाः॥

सर्वेष्वेव लोकेषुआधिभौतिकः सम्बन्धो वेदितव्यः। ऊद्ध्र्वसप्तलोकेषु नित्यपितृणामावासः। किन्तु मृत्युलोकस्याधिभौतिकरक्षकाः पितरः पितृलोके वसन्ति, यः किल भूर्लोकस्य चतुर्थांशः। अत्रैव पितृलोके मृत्युलोकस्य मृतात्मानोऽपि सुखभोगार्थं प्रायशो नैमित्तिक पितरो भूत्वा क्रियते कालाय यान्ति।

मृत्युलोकतः साक्षात् सम्बन्धनिबन्धनाः पितरो ये सन्ति, तेषां विषये भगवता स्वयमेव निजमुखादित्थमाह—

नूनमभ्युदये तेषां भवेद् बाधाऽप्यनेकधा ।
नैवात्र विस्मयः कार्यो भवद्भिर्विश्वभूतिदाः ॥
नृदेहं जीववृन्देभ्यो दद्ध्वे यूयं यदा तदा ।
पित्रोर्नूनं शरीरेण वीर्यांशं पितरोऽधिकम् ॥
नारीदेहं यदा दत्थ तदांशं रजसोऽधिकम् ।
क्लीवदेहप्रदित्सायामुभयोः समतां किल ॥
दापयध्वे न सन्देहः सत्यमेतद् ब्रवीमि वः ।
पितरो वोऽनुकम्पातो लोके पुत्रादिसम्भवः ॥
विकाशमपि देहेषु सत्त्वादेः कुरुथ स्वयम् ।
तात्कालिकमनोवृत्तेः पित्रोः साहाय्यतो ध्रुवम् ॥
परिणामाच्च तापाच्च संस्काराच्च समुद्भवैः ।
दुःखै सुदुःसहैः क्लेशमाप्नुवन्ति निरन्तरम् ॥
मृत्युलोके ततो जन्म गृह्णते च यदा तदा ।
यूयं यद्यपि तेभ्यो वै स्वस्वकर्मानुसारतः ॥
उपयुक्तं प्रयच्छेत भोगायतनरूपकम् ।
पित्रोः स्थूलं रजो वीर्यसाहाय्याद्वपुरद्भुतम् ॥
परिश्रमेण महता पाञ्चभौतिकमण्डलात् ।
तत्त्वानि किल सञ्चित्य तद्योग्यान् पितरोऽनिशम् ॥
मातृगर्भेषु निर्माय स्थूलदेहान् न संशयः ।
लभन्ते मातृगर्भेषु दुःखान्येव तथापि ते ॥
आतिवाहिकदेहस्य संत्यागादेव तत्क्षणम् ।
दुर्बलाः क्लेशितास्ते च मूर्च्छामादौ व्रजन्त्यलम् ॥
आवागमनचक्रस्य परिधावत्र भूतिदाः ।
भवन्तो जीववर्गार्थं स्थूलं देहं नयन्त्यलम् ॥
साहाय्यात्पञ्चतत्त्वानां नात्र कश्चन संशयः ।
सूक्ष्मदेहान्विताञ्जीवांस्तत्र देवा नयन्ति च ॥
पिण्डानां मानवीयानां मुख्यत्वे पितरो ध्रुवम् ।
भवन्तो हेतवः सन्ति प्रधाना नात्र संशयः ॥
महत्त्वद्योतकं नूनमेतदेवास्ति वो यतः ।
अतोऽदः स्मरणादेव मनुष्याणां क्रमोन्नतौ ॥
सहैतुं रक्षितुं सृष्टेः सामञ्जस्यं तथा क्षमाः ।
यूयमेवात्र कर्त्तव्ये धन्या भवितुमर्हथ ॥
प्रकृत्याऽलौकिकी दैवी शक्तिस्तत्र विराजते ।
नैवात्र विस्मयः कश्चित्संशयो वा विधीयताम् ॥
भवद्विशिष्टसाहाय्याल्लब्धानां किन्तु भूतिदाः ।
पिण्डानां मानवीयानां वैलक्षण्यं किमप्य हो ॥८॥

आधिदैविकस्य जगतोऽधिदैवनिर्णयः क्रियते—

## देवदैवतमाधिदैविकम् ॥ ९ ॥

आधिदैविकं जगत् देवदैवतमवगन्तव्यम् । यथा किल स्थूलप्रपञ्चमयं जगदाधिभौतिकं प्रोच्यते, तथैव सूक्ष्मं कर्ममयं जगदाधिदैविकमुच्यते । कर्मराज्यस्य नियन्तारः, आधिदैविकस्य जगतो रक्षकाश्चालकाश्चाधिदैवसञ्ज्ञां लभन्ते ते च देवा इत्यभिधीयन्ते । दैव जगच्चतुर्दशभागैर्विभक्तम् । ऊद्‌र्ध्वेषु भूर्भुवःस्वरादिषु देवानाम्, अधःस्थितेषु अतलवितलादिषु असुराणामावासः । उभयेऽपि सूक्ष्मा देवलोकाः सन्ति । असुरा अपि प्रकारान्तरेण देवा एव सन्ति । उभयेषु भेदः केवलमेतावानेव यत् सत्त्वप्रधानकर्मचालका देवाः, तमःप्रधानकर्मचालका असुराः कथ्यन्ते । असुरादेवाश्च स्वस्वाधिकारमनुसृत्य यदा यथोचितं कर्त्तव्यकर्मसु प्रवर्त्तन्ते, तदा सृष्टिसामञ्जस्य रक्षा भवति । यदाऽसुरा बलदर्पात् उद्‌र्ध्वसप्तलोकेषु निजाधिकारस्थापनं चेष्टन्ते तदा देवासुरसंग्रामः प्रचलन् सृष्टिप्रपञ्चे विप्लवमुपस्थापयन्ति, देवानां तदीयसूक्ष्मलोकानां च सम्बन्धे स्मृतिशास्त्रे भगवता शम्भुना स्वयमेव निजमुखादित्थमाह—

वसन्ति देवाः पितरः ऊद्‌र्ध्वलोकेषु सप्तसु ।
सन्तिष्ठन्तेऽसुराः सर्वे ह्यधोलोकेषु सप्तसु ॥
तमो मुख्यतया सृष्टेरसुराणां हि सप्तम ।
लोकेऽस्त्यसुरराजस्य राजधानीत्वधस्तने ॥

दैव्याः सत्त्वप्रधानत्वात् सृष्टेः राजानुशासनम् ।
उच्चैर्देवेषु लोकेषु नैवावश्यकमस्त्यहो ॥
अस्त्यतो देवराजस्य राजधानी तृतीयके ।
ऊद्‌र्ध्वलोके स्थिता नित्यं नात्र कार्या विचारणा ॥
विशेषतोऽसुराः सर्वे सदा प्राबल्यसंजुषः ।
कुर्वाणा विप्लवं दैवे राज्ये सृष्टेः प्रवाधितुम् ॥
सामञ्जस्यं विचेष्टन्ते नितान्तं सततं वहु ।
अतोऽपि देवराजस्य राजधानी तृतीयके ॥
ऊद्‌र्ध्वलोके स्थिता नित्यं विद्यन्ते पितरो ध्रुवम् ।
उन्नतेपूद्‌ध्वलोकेषु प्रवेशोऽप्यस्त्यसम्भवः ॥
असुराणामतोऽप्येषु देवराजानुशासनम् ।
नावश्यकत्वमाप्नोति विशेषेण कदाचन ॥
विभिन्नोपासकेभ्यो हि स्वरूपं सगुणं धरन् ।
सालोक्यं चैव सामीप्यं सारूप्यं पितरस्तथा ॥
दातुं मोक्षं च सायुज्यं नानारूपैर्हि सप्तमे ।
ऊद्‌र्ध्वलोके तथा षष्ठे विराजेऽहमनुक्षणम् ॥
उन्नतेपूद्‌र्ध्वलोकेषु सात्त्विकेषु स्वधाभुजः ।
राजानुशासनस्यातः का वार्त्ता वर्त्तते खलु ।
शब्दानुशासनस्यापि नास्ति तेषु प्रयोजनम् ॥

पितरो यथा स्थूलशरीर-स्थूलप्रपञ्चानां व्यवस्थापकाश्चालकास्तथैव देवा असुराश्चापि सूक्ष्मप्रपञ्चस्वरूपवृत्तिकर्मणां व्यवस्थापकाश्चालकाश्च विद्यन्ते । शङ्कते—ननु देवासुरपित्रर्षीणां सृष्टिः किं मनुष्यसृष्टितो विलक्षणा स्वतन्त्रा वा, उद्भिज्जादियोनितोऽग्रेसरन्तो जीवा मनुष्यशरीरमासादयन्ति, तर्हि किमुपर्युक्तदैवसृष्टिक्रमः किमपि तद्वैलक्षण्यमावहति ? समाधत्ते—मानवयोनिरेव सर्वस्या अपि उच्चगतेः केन्द्रस्वरूपा । मानवयोनित एव देशकर्मवशीभूतो जीवो देवासुरपित्रर्षिपदमधिगच्छति । अत एव कारणात् मनुष्ययोनितो ह्येव बलिरसुरराजो बभूव, ततश्च देवराजत्वं प्रतिपेदे ।

यथाचोक्तम्—

एष मे प्रापितं स्थानं दुष्प्रापममरैरपि ।
सावर्णेरण्डरस्यास्य भवितेन्द्रो मदाश्रयः ॥
हित्वा सुखं मनसश्च प्रियाणि
देवः शक्रः कर्मणा श्रैष्ठ्यमाप ।
सत्यं धर्मं पालयन्नप्रमत्तो
दमं तितिक्षां समतां प्रियञ्च ॥
एतानि सर्वाण्युपसेवमानः
स देवराज्यं मघवा प्राप पुण्यम् ॥
क्रतुभिस्तपसा चैव स्वाध्यायेन दमेन च ।
त्रैलोक्यं स्वयमव्यग्रं प्राप्तोऽहं विक्रमेण च ॥

नारायणोपनिषद्यपि—

यज्ञेन हि देवा दिवं गताः ॥

सामवेदेऽपि—

यस्ते नूनं शतक्रतविन्द्र द्युम्नितमोमदः ॥

नहुषस्येन्द्रत्वविषये महाभारतेऽप्युक्तम्—

नहुषो हि महाराज राजर्षिः सुमहातपाः ।
देवराज्यमहं प्राप्तः सुकृतेनेह कर्मणा ॥
अथेन्द्रोऽहमिति ज्ञात्वा अहङ्कारं समाविशत् ।
सर्पान् संवाहयामास वरदानमदान्वितः ॥
अगस्त्यस्य तदा क्रुद्धो वामेनाभ्यहनच्छिरः ।
तस्मिन् शिरस्यभिहिते सजटान्तर्गतो भृगुः ॥
शशाप बलवत् क्रुद्धो नहुषं पापचेतसम् ।
यस्मान्मदाहतः क्रोधाच्छिरसीमं महामुनिम् ॥
तस्मादाशु महीं गच्छ सर्पो भूत्वा सुदुर्मते ।
इत्युक्तः स तदा तेन सर्पो भूत्वा पपातह ॥

अतो मानवशरीरत एव पापपुण्यादिकर्मणा देवदानवत्वाद्यधिगतिः शास्त्रसिद्धा ।

कर्मराज्यसामञ्जस्य सुरक्षाहेतुना देवानां प्राधान्यमवगन्तव्यम् । देवेषु बहवो भेदाः सन्ति । सप्तोद्‌र्ध्व-

लोकाधिकारतारतम्येन देवाधिकारेषु विभिन्नता भवति। शक्तिविचारतो हि देवानामधिकारः सुमहान् समुन्नतः। ते च क्रमशः सगुणब्रह्माधिकारमासाद्य ब्राह्मीं भवति। अतस्त्रिमूर्तयः किल सगुणब्रह्मपदेनाभिधीयन्ते ॥ ९॥

पितॄणां देवानां च श्रेणीभेदं वर्णयति—

**साक्षात् परोक्षशक्तिभ्यां नित्यनैमित्तिके ॥१०॥**

ते ह्युभयेऽपि पितरो देवा नित्यानैमित्तिकाश्च भवन्ति साक्षात् परोक्षशक्तिसम्बन्धात्। पूज्यपादः सूत्रकारो महर्षि सूत्रेणैतेन पितॄणां देवानां च नित्यनैमित्तिकभेदेन श्रेणीद्वयं विभनक्ति। कर्म-सम्बन्धेन देवानामिव ब्रह्माण्डपिण्डसम्बन्धेन पितरोऽपि नित्या भवन्ति। यथाऽर्य्यमाऽग्निष्वात्तादयः। ये किल मानवलोकतो नैजं स्थूलशरीरं परित्यज्य तीव्रवासनावन्धनवशात् पितृलोकमुपढौकमानाः पितृकर्मसु रता जायन्ते, ते किल नैमित्तिकपितृनाम्ना प्रोच्यन्ते। तद्वदेव वसुरुद्रेन्द्रादयो नित्यदेवाः, ग्राम्य-वन-कुल-देवादयो नैमित्तिका विज्ञातव्याः। स्मृतिशास्त्रे नित्यनैमित्तिकदेवपितृसम्बन्धे बहुविधं वर्णनमुपलभ्यते। तथाहि—

गृहनगरग्रामेषु च सर्वत्रैव प्रतिष्ठिता देवाः।
तेषु च यथानुरूपं वर्णा विप्रादयो वास्याः॥
समासाद्याधिदैवी मे कलाः षोडशसंख्यकाः।
वसवो हि यमेन्द्रौ च रुद्रा एकादशामराः॥
द्वादशादित्यसम्मिश्रा देवास्त्रिंशत् त्रयस्तथा।
प्रादुर्भवन्त्यमी सर्वे नित्या नैमित्तिकास्ततः॥
व्यवस्थां कर्मराज्यस्य प्रादुर्भूय प्रकुर्वते।
अनेके पितरश्चैव ये प्रजापतयो दश॥
षोडशालम्ब्य कुर्वन्ति तेऽधिभूतकला मम।
नानावैचित्र्य पूर्णायाः सृष्टेरस्या व्यवस्थितम्॥

नित्यानां देवानां पितॄणां च पदं स्थायि वैदितव्यम्। अर्यमादि पितॄणामिन्द्रादि देवानामिव नित्यदेवपितृपदानि नित्यानि भवन्ति, तानि सदैव तिष्ठन्ति। केवलं नियमितकालातिपाते तत्तत्पदधारिणस्तेऽन्यामवस्थामासादयन्ति। तत्तत्पदानि चान्येऽधिकारवन्तस्तद्योग्या अधिकुर्वन्ति, अतस्तत्पदानि नित्यानि विज्ञातव्यानि। एका वनदेवता, नदीदेवता वा वननदीविनाशेऽवस्थामन्यामधिगच्छन्ति। तत्पदानि च प्रणश्यन्ति। ये च मृत्युलोकस्य मृतात्मानः स्वीयपुण्ययोगेन पितृलोकमुपढौकन्ते, ते स्वकीयजातिवंश्यकल्याणवासनां समीहमानाः पितृलोके पितृकार्यमनुतिष्ठन्ति। क्षीणे पुण्ये ते मृत्युलोकं विशन्ति। ततस्तत्पदमपि विनश्यति। नित्यदेवपितृपदेषु साक्षात्कार्यकारिणी शक्तिस्तिष्ठति, परन्तु नैमित्तिकदेवपितृषु यथाक्रमं वननदीवंशजातिप्रभृतीनामस्तित्वस्य परोक्षशक्तिमन्तरेण तत् तन्नैमित्तिकपदानां कार्यकारिताऽभावः। सुतरां साक्षात् परोक्षशक्तिविचारेण देवाः पितरश्च नित्यनैमित्तिकश्रेणिद्वयविभक्ता विज्ञातव्याः सन्तिः॥ १०॥

इदानीमाध्यात्मिकस्य जगतः अधिदैवनिर्णयः क्रियते—

**ऋषिर्दैवतमाध्यात्मिकं नित्यं च ॥११॥**

आध्यात्मिकस्य जगतोऽधिदैवस्वरूपा ऋषयस्तेऽपि नित्याः सन्ति। सम्पूर्णोऽपि सृष्टिप्रपञ्चो भागत्रयविभक्तः—आध्यात्मिक, आधिदैविक, आधिभौतिकश्चेति। तत्र आधिभौतिकाधिदैविकसर्गयोरधिदैववर्णनं पूर्वसूत्रेषु संविधाय सूत्रकृता—महर्षिणा आध्यात्मिकसृष्टेरधिदैवनिर्णयः क्रियते। आध्यात्मिकसृष्टिप्रपञ्चस्याधिदैवस्वरूपा ऋषयः सन्ति ते हि नित्या एव। ऋषीणामप्यवतारा भवन्ति, किन्तु तेषां पदानि नित्यानि। ते नैमित्तिका न भवन्ति। पितॄणां कर्माणि स्थूलप्रपञ्चसम्बद्धानि, देवानां च कर्मजनितभोगसम्बद्धानि उभयेषामपि सम्बन्धः कर्मराज्यनिबन्धनः, कर्मराज्यं परिणाम-

शीलम्। तत्रोच्चावचसम्बन्धः। यतः प्राकृतिकं स्पन्दनमेवकर्म, प्रकृतेस्त्रिगुणत्वात् कर्मणोऽपि त्रैगुण्यमवधेयम्। त्रिगुणसम्बन्धसत्वात् सत्त्वतमसोः प्रभावकारणेन जीवगतेरुच्चावचताऽवश्यम्भाविनी। अत एव नित्यनैमित्तिको भेदो देवेषु पितृष्वेवसम्भवः। ऋषयस्तु केवलं ज्ञानराज्यस्याधिदैवस्वरूपाः। यद्यपि ज्ञानस्यापि त्रिगुणात्मकता, किन्तु सात्त्विके ज्ञाने एव ज्ञानशक्तिपरिपूर्णता। अतः सात्त्विकेन ज्ञानेनैव साकम् ऋषीणां सम्बन्धः। सात्त्विकं ज्ञानं कस्याप्यधिकारस्यापि भवेत् तत्रापि विगुणितं नापि च वैगुण्यकारकं भवति, सदैव तदुन्नतिशीलमेव। एतस्मादेव हेतोः कर्मप्रभावात् कश्चिद्धनिको जन्मान्तरे दरिद्रो भवितुं शक्नोति। एकः स्वर्गीयो जीवो जन्मान्तरे नारकीयो भवितुमर्हति, किम्वा कश्चिदेको भूसुरो जन्मान्तरे शूद्रोऽनार्य्यो वा भवितुं शक्नोति। परन्तु कोऽपि मानवो ज्ञानस्य यामपि भूमिकामेकवारमासादयति, तदीयान्तःकरणस्य मलिनत्वेऽपि नासौ तया भूमिकया वियुज्यते। एतदेवाध्यात्मिकस्य जगतो वैलक्षण्यमवधेयम्। तस्मादेव कारणादृषीणां पदं नित्यम्, नित्यानामृषीणामाध्यात्मिककारणस्य सम्बन्धे स्मृतिः प्रोवाच; तथाहि—

ममाध्यात्मिककलानां च षोडशानां पुराऽमराः।
भूत्वा सप्तर्षिवर्गेषु विकाशो याति हेतुताम्॥
अनेकेषां महर्षीणां ज्ञानविस्तारकारिणाम्।
कलाविशेषमेतासां सन्दधाना वितन्वते॥

नित्यानाम् ऋषीणां भेदसम्बन्धे, सप्तर्षीणां सामयिकपरिवर्त्तनविषये च शास्त्रे निम्ननिर्दिष्टं प्रमाणमुपलभ्यते। तथाहि त्रिकाण्डशेषे—

सदा ब्रह्मर्षि-देवर्षि-महर्षि-परमर्षयः।
काण्डर्षिश्च श्रुतर्षिश्च राजर्षिश्च क्रमावराः॥

मन्वन्तरभेदे सप्तर्षिनामानि हरिवंशपुराणे स्वायम्भुवमन्वन्तरे—

मरीचिरत्रि भगवान् अङ्गिरा पुलहः क्रतुः।
पुलस्त्यश्च वशिष्ठश्च सप्तैते ब्रह्मणः सुताः॥

स्वारोचिषे ऊर्जस्तम्भादयः, यथा मार्कण्डेये—

ऊर्जस्तम्भस्तथा प्राणो दत्तोलिर्ऋषभस्तथा।
निश्चरश्चार्ववीराश्च तत्र सप्तर्षयोऽभवन्॥

उत्तमे यथा मार्कण्डेये—

स्वतेजसा हि तपसो वशिष्ठस्य महात्मनः।
तनयाश्चान्तरे तस्मिन् सप्त सप्तर्षयोऽभवन्॥

तामसे ज्योतिर्धामादयः यथा मार्कण्डेये—

ज्योतिर्धामा पृथुः काव्यश्चैत्रोग्निर्वलकस्तथा।
वावरश्च तथा ब्रह्मन् सप्त सप्तर्षयाऽभवन्॥

रैवते हिरण्यरोमा वेदशिरा ऊद्ध्र्ववाहुरित्यादयस्तथा। तत्रैव—

हिरण्यरोमा वेदश्रीरूद्ध्र्ववाहुस्तथापरः।
वेदवाहुः सुधामा च पर्जन्यश्च महामुनिः॥
वशिष्ठश्च महाभागो वेदवेदान्तपारगः।
एते सप्तर्षयश्चासन् रैवतस्यान्तरे मनोः॥

चाक्षुषे हर्यस्मद्वीरकादयः—

सुमेधा विरजाश्चैवं हविष्मान्नुत्तमो मधुः।
अतिनामा सहिष्णुश्च सप्ता सन्नितिचर्षयः॥

वैवस्वताख्यमन्वत्तरे—

अत्रिश्चैव वशिष्ठश्च काश्यपश्च महानृषिः।
गौतमश्च भरद्वाजो विश्वामित्रोऽथ कौशिकः॥
तथैव पुत्रो भगवानृचिकस्य महात्मनः।
जमदग्निस्तु सप्तैते मुनयोऽत्र तथान्तरे॥

सावर्णिके यथा मार्कण्डेये—

रामो व्यासो गालवश्च दीप्तिमान् कृप एव च।
ऋष्यश्रृङ्गस्तथा द्रौणिस्तत्र सप्तर्षयोऽभवन्॥

दक्षसावर्णिके—

मेधाऽतिथिर्वसुः सत्यो ज्योतिष्मान् द्युतिमांस्तथा।
सप्तर्षयोऽन्यः सवलस्तथाऽन्यो हव्यवाहनः ॥

ब्रह्मसावर्णिके—

आपो भूतिर्हविष्मांश्च सुकृती सत्य एव च।
नाभागो प्रतिभश्चैव वशिष्ठश्चैव सप्तमः ॥

धर्मसावर्णिके—

हविष्मांश्च वरिष्ठश्च ऋषिरन्यस्तथारुणिः।
निश्चरश्चानघश्चैव विष्टिश्चान्यो महामुनिः ॥
सप्तर्षयोऽन्तरे तस्मिन् अग्निदेवश्च सप्तमः।

रुद्रसावर्णिके—

द्युतिस्तपस्वी सुतपास्तयोमूर्तिस्तपोनिधिः।
तपोरतिस्तथैवान्यः सप्तमस्तु तपो धृतिः ॥

देवसावर्णिके—

धृतिमानव्ययश्चैव तत्त्वदर्शी निरुत्सुकः।
निर्मोहः सुतपाश्चान्यो निष्प्रकम्पश्च सप्तमः ॥

इन्द्रसावर्णिके यथा—

अग्निबाहुशुचिशुद्धमागधाद्याः सप्तर्षयः।

उपर्युक्तप्रमाणैरिदं सिध्यति यत् ऋषीणामनेके भेदा भवन्ति, प्रत्येकमन्वन्तरे च विभिन्नाः सप्तर्षयो जायन्ते। सप्तर्षिपदानां नित्यत्वात्प्रतिमन्वन्तरं तदधिकारिणः परिवर्त्तन्ते। वस्तुतः ऋषीणां सप्तश्रेणीत्वप्रधान्येऽपि वहवः श्रेणयः सन्ति। यतस्तेषां ज्ञानविस्तारप्रकाशपद्धतयो बहुविधा दृश्यन्ते। सप्तर्षीणामिव अन्येषां ऋषीणामपि नित्यानि पदानि। यथाहि पितरश्चतुर्दशसु भुवनेषु संवसन्ति, किन्तु भूर्लोकस्य पितृलोकेन सह तेषां घनिष्ठः सम्बन्धः, यथा चोदूर्ध्वस्थितसप्तलोकेषु प्राधान्येन देवानां निवासः अधःस्थितसप्तलोकेष्वसुराणां निवासस्तथैव ऋषीणां चतुर्दशसु भुवनेषु निवासो विज्ञातव्यः। यतो दैवी आसुरी चेति विद्या द्विविधा। द्विविधमपि ज्ञानं ब्रह्माण्डे प्राकट्यमेति। इयानेव भेदो यदुच्चकोट्य ऋषयः षष्ठे सप्तमे च लोके तिष्ठन्ति। ऊदूर्ध्वलोकक्रममनुसृत्य ऋषीणामधिकारभेदः समाम्नातः आसुरज्ञानप्रकाशका ऋषयोऽसुरलोके संवसन्ति। स्वस्वलोकतस्ते स्वस्वाधिकारानुरूपं ज्ञानं तत्तल्लोकेषु विशेषतो मृत्युलोके विदधते। तस्मादेव कारणान्मृत्युलोके दैवासुरशास्त्रयोरुभयोरेव प्राकट्यं दृश्यते। मानवस्यान्तःकरणं तत्तल्लोकप्राप्तज्ञानकेन्द्रमाम्नातम्।

उक्तं चापि—

ऋषयो मन्त्रद्रष्टारो मुनिः संलीनमानसः।

लक्षणमिदं ऋष्यवतारविषयकम्। देवलोकीय नित्यर्षिपदशक्तियुक्ता मृत्युलोकेऽवतरन्ति, निजान्तःकरणे वेदमन्त्राश्चाकर्णयन्ति तेऽपि ऋषय एव प्रोच्यन्ते। देवर्षीणामवतारो वक्ष्यते। नित्यर्षिलोकविषये जैवगतिसम्बन्धे च स्मार्त्तप्रमाणं यथा—

ऋषिकुल्यां समासाद्य नरः स्नात्वा विकल्मषाः।
देवान् पितृंश्चार्चयित्वा ऋषिलोकं प्रपद्यते ॥

वस्तुतश्चतुर्दशभुवनेषु क्षणभङ्गुरमृत्युलोकं वा यत्र कुत्रापि ज्ञानस्याविर्भावस्तिरोभावो वा जायते, सच ऋषीणामेव कृपामकृपां वा निर्बिभर्त्ति। अन्यच्च ऋषीणां गतयो निवासाश्च भुवनेषु सप्तसूदूर्ध्वेषु अधःस्थेषु सन्ति, किन्तु भेदस्त्वियानेव यत् दैवशास्त्रप्रकाश ऊदूर्ध्वलोकनिवासिनाम् ऋषीणां द्वारैव सम्भवः। असुरा अपि देवा एव, किन्तु न ते सेव्या अनुकरणीया वा। एवमेवासुरलोकवास्तव्यानाम् ऋषीणां सम्बन्धेऽप्यवगन्तव्यम्। अपि च यथा किल देवा हि कर्मराज्यस्याधिदैवभूता मन्यन्ते, तथैवाध्यात्मराज्यस्याधिदैवसम्बन्ध ऊदूर्ध्वलोकवासिभिर्महर्षिभिरेवावगन्तव्यः। विरुद्धपक्षत्वात् असुराणां तल्लोकवासिनाम् ऋषीणां

वर्णनं प्रायः शास्त्रेषु नोपलभ्यते। ऊर्ध्वलोकवासिनामेव ऋषीणां सम्बन्धे शास्त्रैर्व्याहृतमास्ते। तथाहि—

ऋषयो नित्यरूपा ये नित्यज्ञानप्रदायिनः।
यस्मादेष स्वयंभूतस्तस्माच्च ऋषिता मता॥

मृत्युलोकेऽत्राधिभौतिकाधिदैविकाध्यात्मिकराज्याधिदैववार्ता साधारण्येन शास्त्रेषु न प्रकाशिता, न वा तदीय त्रिविधनित्यस्थिताधीश्वरस्वरूपपरिज्ञानमास्ते, किन्तु तदस्तिता दार्शनिकविज्ञानसिद्धा तदीयकार्यकलापैः परिज्ञाता चेति॥११॥

वैलक्षण्यात् देवनैमित्तिकत्वहेतुरुच्यते—

## द्विविधशक्तितो नैमित्तिकत्वं देवानाम्॥ १२॥

द्विप्रकारकशक्तिविकाशेन नैमित्तिकदेवानामाविर्भावो ज्ञेयः। कर्मराजस्य सर्वाधिकविस्तारहेतोर्दैवराज्यकार्यप्रणाली विलक्षणा विस्तृता च। अतः सूत्रकृन्महर्षिः अधिभूताधिदैवाध्यात्मेतिराज्यत्रयाधिष्ठातृवर्णनानन्तरं दैवानां नैमित्तिकत्वं वर्णयति। एकत्र केन्द्रे शक्तिद्वयविकाशत्वाद् देवानां नैमित्तिकत्वमवगन्तव्यम्। ऋषीणां नित्यत्वमेव नास्ति तन्नैमिकत्वम्। पितरस्तु नित्या नैमित्तिकाश्च, किन्तु तैः सह शक्तिविशेषसम्बन्धो न भवति। केवलं मोहसम्बन्धवशेन परलोकगामिन आत्मानो नैमित्तिक पितृतामुपयान्ति।

देवानां नैमित्तिकत्वं किमपि वैलक्षण्यमावहति। कर्मराज्यस्यविस्ताराधिक्यात् तेषां श्रेणयोऽधिकाराश्चासंख्याताः। दैवराज्यनित्यपदाधिष्ठातारो देवा नित्याः प्रोच्यन्ते। अस्मादेव कारणात् वस्तूनामाविर्भावतिरोभावाभ्यां साकं नैमित्तिकदेवपदानामप्याविर्भावतिरोभावौ भवतः। अतस्तत्पदानां नैमित्तिकत्वम्। केषांचन वनौषधिलतागुल्मवृक्षादिश्रेणीनां गर्भेऽत्र विद्यमानत्वे तद्रक्षकनैमित्तिकपादान्यपि तिष्ठन्ति तद्वद्‌भिज्जजीवश्रेणिजीवविनाशे तन्नैमित्तिकपदमपि प्रणश्यति, तद्वदेव स्वेदजाण्डजजरायुजाद्यसंख्यजीवश्रेणीनां नैमित्तिकदेवपदमुभयशक्तिसंयुक्तं नैमित्तिकमाम्नायते। एवमेव नदनदीजलाशयवनगृहग्रामदेवानां सम्बन्धो वेदितव्यः। नैमित्तिकदेवपदानां वर्णनं वेदे शास्त्रे चापि समुपलभ्यते—यैर्यैर्नैमित्तिकदेवैः सह मानवजातेरतिघनिष्ठः सम्बन्धस्तत्पूजाप्रकारोऽपि शास्त्रविहितो वर्त्तते, कुलदेवगृहदेवविषये स्मृतिः प्रोवाच—

छन्दोदेव इति ख्यातः स्त्रीणां पूज्यो भविष्यति।
कीर्त्तिश्च तेऽतुलावत्सस्त्रिषु लोकेषु यास्यति॥
एवं तस्मै वरं दत्वा वास्तवोऽन्तरधीयत।
प्राणांस्त्यक्त्वा मतङ्गोऽपि संप्राप्तः स्थानमुत्तमम्॥
सर्ववास्तुविभागेषु विज्ञेया नवका नव।
एकाशीति पदं कृत्वा वास्तुवित् सर्ववास्तुषु॥
पदस्थान् पूजयेद्देवांस्त्रिंशत् पञ्चदशैव तु।
द्वात्रिंशद् बाह्यतः पूज्याः पूज्याश्चान्तस्त्रयोदश॥
नामतस्तान् प्रवक्ष्यामि स्थानानि च निबोधत।
ईशानकोणादिषु तान् पूजयेद्धविषा नरः॥
शिखी चैवाथ पर्जन्यो जयन्तः कुलिशायुधः।
सूर्यसत्यौ भृशश्चैव आकाशो वायुरेव च॥
पूषा च विद्युतश्चैव गृहक्षतमग्गावुभौ।
गन्धर्वो भृङ्गराजश्च मृगः पितृगणस्तथा॥
आदित्यं गणनाथं च देवी रुद्रं यथाक्रमम्।
नारायणं विशुद्धाख्यमन्ते च कुलदेवता॥
देवान् ऋषीन् मनुष्यांश्च पितॄन् गृह्यांश्च देवताः।
पूजयित्वा ततः सर्वान् पश्चाद्वैशेषभुग् भवेत्॥

श्रीभगवतोऽलौकिकीं शासनपद्धतिमनुसृत्य समुत्पन्ननित्यदेवतासुप्रबन्धेन दैवनियमानुसारतो नित्यदेवा यदा नैमित्तिककार्यभारसमन्विताः क्रियन्ते, तदानीं ते विविधशक्तिसंयुक्तत्वात् नैमित्तिकं देवतापदं प्राप्नुवन्ति,

पूर्वा शक्तिस्तेषु नित्यरूपेण विराजमाना तिष्ठति। ततश्च नैमित्तिककार्यभारवहनहेतोर्नैमित्तिककार्यशक्तिसंवलितत्वात् तेषु द्विधाशक्तिः प्रकाशते। तदा ते नैमित्तिकदेवपदमासादयन्ति। एतदेव नैमित्तिकदेवपदरहस्यमवगन्तव्यम्॥ १२॥

नैमित्तिकदेवानामाविर्भावतिरोभावौ निर्णयति—

**नैमित्तिकानामाविर्भावस्तिरोभावावतारवत्॥१३॥**

यथा श्रीमतो भगवतो देवानामवतारावितिर्भाव-तिरोभावौ नियमाधीनौ, तथैव नैमित्तिकदेवानामप्याविर्भावतिरोभावौ भवतः। नैमित्तिकपितृरहस्यं प्रागेव निरूपितम्। मृत्युलोकतः परलोकं प्रतिष्ठमाना आत्मान एव नैमित्तिकाः पितरः प्रोच्यन्ते। ते पुनर्मृत्युलोके जन्म गृह्णन्ति। किन्तु नैमित्तिकदेवदशा किमप्यलौकिकत्वमावहति, नैमित्तिका देवा अवतारवत् कार्यकाले प्रादुर्भवन्ति, कार्यसमाप्तौ तिरोभवन्ति च, पितॄणां देवानापपि नैमित्तिकत्वाद् बुद्धिभेदपरिहाराय नैमित्तिकदेवरहस्यं सुस्पष्टयितुं पूज्यपादो महर्षिः सूत्रकारः सूत्रमेतदाविश्चकार। नैमित्तिके देवपदे शक्तिद्वयं तिष्ठति। एका शक्तिस्तु तत्र देवे स्वीया तिष्ठत्येव। द्वितीया तु तस्य नैमित्तिककार्यस्य शक्तिर्यत् कार्यं तस्मै समर्प्यते। द्विविधेयं शक्तिर्यावत् तिष्ठति, तावदेव नैमित्तिकत्वाविर्भावोजागर्ति, कालान्तरे यदा नैमित्तिकं कार्यं पृथक् क्रियते, समाप्यते वा तदानीं नैमित्तिकस्वरूपं तिरोभवति।

उदाहरणरूपतो ह्येतदवगन्तव्यं यत् भगवत्कलावतारस्य श्रीपरशुरामस्य शरीराद् यदा श्रीरामचन्द्रेण भगवत्कला स्वस्मिन् आकृष्टा तदा परशुरामतो भगवदवतारतिरोभावो बभूव, ततश्चासौ केवलम् ऋषिरभूत्। एवं किलावताराविर्भावतिरोभावत् नैमित्तिकं देवभावाविर्भावतिरोभावौ वेदितव्यौ॥ १३॥

प्रसङ्गतः शङ्कां समाधत्ते—

**शक्तिर्नित्या केन्द्रे त्वभिव्यज्यते॥१४॥**

शक्तिर्नित्या भवति, किन्तु केन्द्रेऽभिव्यज्यते। जिज्ञासुः शङ्कते—दैवी शक्तिर्नित्याऽनित्या वा, तदनित्यत्वे दैवराज्यस्यास्तित्वे स्थायित्वे च सुमहान् सन्देह इति चेत्, समाधत्ते—दैवीशक्तिस्तु नित्यैव, केवलं केन्द्राविर्भावतिरोभावसम्बन्धात् शक्तेरप्यप्रकाशः प्रकाशश्च जायते। सहजं जैवमैशमिति भेदेन प्राकृतिकस्पन्दनस्वरूपकर्मणस्त्रैविध्यमास्ते। उद्भिज्जतो जरायुजपशुपर्यन्तं जीवः सहजकर्माधीनः, मानवो जैवस्याधीनः, मृत्युलोकसम्बन्धनिबन्धनाः प्रेतनरकादयो लोका अपि जैवकर्माधीनाः। दैवी सृष्टिरैशकर्माधीनतां भजति, अन्यच्च सहजैव कर्मसम्बन्धीया सर्वाऽपि सुव्यवस्था देवाधीना, यतः स्थूलराज्यचालकं सूक्ष्मं दैवं राज्यमेव सुतरां सर्वसञ्चालकं दैवराज्यं यावत् सुव्यवस्थितं न स्यात् न तावत् ब्रह्माण्डस्थितिक्रियाया सुव्यवस्था भवितुमर्हति। यतो दैवी क्रिया सर्वाधारभूतास्ते दैवराज्यकार्यकारिण्यः शक्तयो नित्या एव। तत्प्रकाशश्च केन्द्रद्वारैव सम्भवः॥ १४॥

इदानीं दैवजगतः प्राधान्यं प्रतिपाद्यते—

**स्थूलाधिनायकत्वं देवाधिष्ठातॄणाम्॥ १५॥**

पूर्वं विस्तृतस्वरूपेण वर्णितस्य दैवराज्याधिष्ठातृगणस्य स्थूलप्रपञ्चाधिनायकत्वमास्ते। सर्वोऽपि स्थूलप्रपञ्चः सूक्ष्मस्य दैवराज्यस्य साहाय्ये नैव सञ्चाल्यते। तदेतस्य विस्तृतं वर्णनं स्मृतौ भगवता स्वयमाह—

कल्याः! स्थूलजगन्नूनं सूक्ष्मदैवजगद्धृतम्।
सृष्टेरस्त्यधिभूतायाश्चालकं धारकं तथा॥
आधिदैविकराज्यं हि नास्तिकोऽप्यत्र संशयः।
सत्यमेतत्र सन्देहः कर्त्तव्योऽत्र कदाचन॥

विनाधिदैवसाहाय्यं जगतो भवितुं क्षमाः।
न स्थूलदृश्यमानस्य सृष्टिस्थितिलयक्रियाः॥
त्रिधा विभक्तं पितरः! दैवं राज्यं हि वर्त्तते।
आध्यात्मिकाधिदैवाधिभूतरूपं न संशयः॥
आधिभौतिककार्यस्य यूयं विश्वस्य चालकाः।
आध्यात्मिकाक्रियायाश्च चालका ऋषयो ध्रुवम्॥
अधिदैवक्रियायाश्च चालकाः सन्ति भूतिदाः।
देवा नैके न सन्देहो नित्या नैमित्तिकास्तथा॥
देवश्रेण्यो हि मे तिस्रः एताः सन्ति विभूतयः।
नातः स्याद् रक्षिता सृष्टिरासां साहाय्यमन्तरा॥

ब्रह्मणः शक्तेर्जडायाः प्रकृतितः स्थूलप्रपञ्चस्योत्पद्यमानत्वे स्थूलप्रपञ्चचालकस्य चेतनमयाधिदैवस्य सद्भावो निश्चप्रचोऽस्य कार्यकारित्वाभावात् सुतरां जडमयपञ्चभूतात्मिकस्थूलप्रपञ्चस्य महतोऽपि महीयसोलघोरपि लघीयसो वैभवस्य किं वा स्थावरजंगमात्मकस्य विभागस्य सुव्यवस्था दैवराज्यसहाय्यमन्तरेण भवितुं नार्हति। अत एतदभ्युपगन्तव्यमेव यत् स्थूलप्रपञ्चोऽयं दैवाधिनायकत्वेनैव सृष्टिस्थितिलयक्रियमधिगच्छति। तदस्तित्वमूले पूर्वोक्ताधिदैवप्राधान्यम्॥ १५॥

दैवशक्त्याविर्भावस्थानमुच्यते—

**पीठस्याविर्भावः प्राणमये॥ १६॥**

प्राणमये कोषे पीठस्याविर्भावो जायते। स्थूलेन मृत्युलोकेन सह सूक्ष्मदैवराज्यस्य घनिष्ठः। विशेषतश्च दैवराज्यं स्थूलजगच्चालकम्। अतोऽत्र लोके दैवीनां शक्तीनां कथमिव प्राकट्यमिति शंकासमाहितये सूत्रमिदमाविर्भूतम्। पञ्चभिः कोषैरयमात्मा समावृतः, पञ्चकोषावरणत एव जीवशिवभेदप्रतिष्ठा। अन्न-प्राण-मनो-विज्ञानानन्दमयाः पञ्चकोषाः। सर्वोऽपि स्थूलप्रपञ्चः अन्नमयकोषप्राधान्यमावहति। निष्कर्षोऽयं यत् स्थूलराज्यसम्बन्धोऽन्नमयः कोषः। अन्ये चत्वारः कोषा दैवराज्येन साक्षात् सम्बन्धनिवन्धनाः। मृत्युलोकेऽत्र मानवमृतौ सत्यां अन्नमयकोषापरनामकः स्थूलदेहोऽयं मृतास्तिष्ठति। मनोविज्ञानानन्दमयान् त्रीनपि कोषानादाः प्राणमयः कोषो लोकान्तरं प्रतिष्ठते। अतो लोकैरुच्यते यदमुकस्य मनुष्यस्य प्राणो निर्गत इति। अतः प्राणमयकोष एव स्थूलेन शरीरेण साकं सूक्ष्मशरीरं सम्बध्नाति। प्राणमयः कोष एव जीवं मृत्युलोकं ततश्च लोकान्तरं नयति। एष एव सूक्ष्मदैवलोकेन सह स्थूलस्य मृत्युलोकस्य सम्बन्धं सुरक्षितं विधत्ते। सुतरां समष्टिब्रह्माण्डे व्यष्टिपिण्डे चोभयत्र व्याप्यमाणे प्राणे ह्येव पीठस्याविर्भावः। उक्तं च—

दैव्याः शक्तेर्विकासस्य देवानामासनस्य च।
उपयोगी जायतेऽसावावर्त्तः पीठ उच्यते॥

भगवान् श्रीसूर्योऽपि ऋषीनुद्दिश्य प्रोवाच—

सूक्ष्मेण दिव्यलोकेन स्थूललोकस्य देहिनः।
सम्बन्धकारको ज्ञेयः कोषः प्राणमयश्वरः॥
यदि प्राणमये कोषे पीठं स्थापियतुं क्षमः।
कथञ्चित् स हि मे शक्तिं दैवीमनुभवत्यसौ॥

पीठरहस्यवर्णनमुक्तपूर्वम्। एतद् विस्तृतविज्ञानं वक्ष्यते चापि। दैवीनां शक्तीनामासनस्वरूपं पीठम् वस्तुतः प्राणमयकोषसाहाय्येनैवं निर्मीयते। अत्रैव देवादीनामाविर्भावः॥ १६॥

पीठस्य साक्षात् फलमभिधत्ते—

**तदधिष्ठानं देवयोनेः॥१७॥**

तत् प्राणमयं पीठं देवयोनेरधिष्ठानम् आश्रयस्थानमुच्यते। कोषोऽयं प्राणमयो व्यापकः। प्राणमय एव कोपे यदा कारणविशेषेण समुत्पद्यमानं पीठं देवयोनीनामाश्रयस्थानं जायते। तदा मानवा आसनमिव सर्वा अपि देवयोनयः पीठमुपविशन्ति। देवानां स्थायिरूपस्थापनाय पीठप्रबन्धः समुचितः। पीठे देवानां स्थितिः

सुलभा। वसुरुद्रेन्द्रादीनां देवानामनेकाः श्रेणयः। नित्यानैमित्तिकाश्च देवा देवश्रेणय एव। ऋषयः पितरश्च देवयोनय एव। मृत्योरनन्तरं पितृनरकप्रेतादिलोकान् प्रतिष्ठमानाः पितरो देवयोनय एव। वस्तुतः स्थूलमृत्युलोकं विहायान्येषु चतुर्दशसु भुवनेषु निवसन्तो जीवा देवयोनावन्तर्भवन्ति। अस्मादेवकारणात् पीठसाहाय्येनैव प्रेतपितृश्राद्धानि समनुष्ठीयन्ते, उपासनया सह पीठस्यातिमहिष्ठः सम्बन्ध इति सविस्तरं प्रागेव निरूपितम्॥ १७॥

तदाविर्भावः कथमिति प्रोच्यते—

**तदाविर्भावः शक्त्योः साम्यात्॥१८॥**

तस्य पीठस्याविर्भावो विकासः शक्त्योः आकर्षणविकर्षणाख्ययोः साम्यात् समानतया भवतीति शेषः। अलौकिक पीठाविर्भावसम्बन्धीयदिव्यहेतुनिर्णयार्थं सूत्रमेतदाविर्भूतम्। संसारेऽत्राकर्षणविकर्षणस्वरूपशक्तिद्वयस्य प्राधान्यं दृश्यते। अन्तर्जगति च रागो द्वेषश्चेति शक्तिद्वयम्। आकर्षणं रागो वा रजोमूलकौ, विकर्षणं द्वेषश्च तमोगुणात्मकौ। रागद्वेषसमन्वये यथा साधके सत्त्वगुणमूलकं तत्त्वज्ञानं समुदेति, तथैव प्राणमये जगति आकर्षणविकर्षणाख्य शक्तिद्वयसमन्वयेन सत्त्वगुणमूलकदेवाधिष्ठानस्वरूप पीठाविर्भावो जायते। एतस्य विस्तृतं वर्णनं स्मृतिशास्त्रेषु बहुत्र समुपलभ्यते—

स्वाभाविक्यस्वभावा वा पीठस्योत्पादनाय या।
विधीयते क्रिया सम्यक् सत् सुकौशलपूरिता॥
चक्रं तदेव सम्प्राहुर्योगितत्त्वविशारदाः।
नात्र कश्चन सन्देहो विद्यते विश्वमूर्तिदाः॥
पीठोत्पादकसामर्थ्यं मर्त्यपिण्डो बिभर्त्यसौ।
आवागमनचक्रस्याश्रयः स्वाभाविकस्य हि॥
अनेकभेदसत्त्वेऽपि पीठस्यास्ति प्रधानतः।
भेदश्चतुर्विधो योऽसौ प्रोच्यते वः पुरोऽधुना॥
प्रथमं स्थावरं पीठं यथा तीर्थादि गोचरम्।
द्वितीयं सहजं पीठं दम्पतीसङ्गमे यथा॥
पीठं तृतीयकं दैवमिन्द्रलोकादिकं यथा।
चतुर्थं यौगिकं पीठं भगवद् विग्रहोद्भवम्॥
अथवा यन्त्रसम्भूतं पितरो वर्त्तते यथा।
अनेकभेदसत्त्वेऽपि चक्रं चास्ते चतुर्विधम्॥
आवागमनचक्रादि तत्राद्यं सहजं जगुः।
द्वितीयं कीर्त्तितं चक्रं तद्वद् ब्रह्माण्डनामकम्॥
ग्रहोपग्रहमादीनामधिकारस्थितिर्यथा।
ज्ञेयं स्वाभाविकं चक्रमेतद्द्वयमसंशयम्॥
सगर्भं स्यात् तृतीयं तद् ब्रह्मचक्रादिकं यथा।
अगर्भनामकं चक्रं चतुर्थं समुदाहृतम्॥
मन्त्रशुद्ध्या क्रियाशुद्ध्या रहितं चैव यद् भवेत्।
इति वः कीर्त्तितं चक्ररहस्यं परमाद्भुतम्॥
याथार्थ्यानुष्ठितं चक्रं सगर्भं मुक्तिदं भवेत्।
अगर्भं पितरः तद्वन्नूनमभ्युदयप्रदम्॥
परन्त्वेवंविधायाः हि दशायां चक्रसाधकैः।
भवितव्यं ध्रुवं सम्यगवश्यं मत्परायणैः॥
एतच्चक्रद्वयं जीवैः सत्सुकौशलपूर्णया।
क्रिययाऽनुष्ठितं यस्मादतोऽस्वाभाविकं जगुः॥
उत्तरोत्तरमुक्तासु सप्तसु ज्ञानभूमिषु।
क्रमारोहणकृत्त्वेव जायते पितरो ध्रुवम्॥
आवागमनचक्रस्याध्यात्मशुद्धिर्न संशयः।
वर्णाश्रमाख्यधर्माणां स्वाधिकारानुसारतः॥
जायते पालनेनास्य शुद्धिः खल्वाधिदैविकी।
पितरो वो दयालभ्या शुद्ध्या शोणितशुक्रयोः॥
सहजस्यापि पीठस्य क्रमोन्नत्या निरन्तरम्।
आधिभौतिकशुद्धिर्हि नूनमस्य प्रजायते॥

चक्रमेतद् भवन्तो हि कर्त्तुमुन्नामि सत्त्वरम् ।
सन्ति चक्रेश्वरा नूनं स्मरणीयं सदेति वः ॥
एवं सर्वेषु चक्रेषु शुद्धिस्त्रैविध्यमुत्तमम् ।
आवश्यकं भवत्येव नात्र कार्या विचारणा ॥
आवागमनचक्रस्य सहाय्येनैव वोऽधुना ।
निमित्तस्यास्य संशुद्धिं वर्णयित्वा पितृव्रजाः ॥
पीठशुद्धे रहस्यं वो ब्रवीमि श्रूयतामिति ।
नानाविधेषु पीठेषु विधायोपासनां मम ॥
निजपिण्डे स्थिते पीठे भक्ता नानाविधा यदा ।
विभूतिर्मे लभन्तेऽन्ते तेजो मे सर्वथा तथा ॥
रक्षितुं पारयन्तेऽलं तदा पीठस्य जायते ।
आधिभौतिकसंशुद्धिर्नात्र कश्चन संशयः ॥
यदा तु क्रमशो दैवीं शक्तिं लब्धुं ममेशते ।
साधकाः पीठसंशुद्धिस्तदा स्यादाधिदैविकी ॥
तत्वज्ञानस्य पुण्यस्य विकासेन यथाक्रमम् ।
पीठस्याध्यात्मसंशुद्धिर्जायते च स्वधाभुजः ॥
देशकालमनो द्रव्यक्रियाशुद्धिर्हि पञ्चधा ।
शुद्धिर्मुख्या समाख्याता पीठशुद्धिष्वसंशयम् ॥
तत्रापि द्रव्यसंशुद्धिः प्राधान्यं वहते खलु ।
असौ योगोपयोगित्वाद्देहस्य जायते ध्रुवम् ॥
एवं मे ज्ञानिनो भक्ताः संशुद्धिं चक्रपीठयोः ।
समासाद्य लभन्तेऽन्ते सत्सायुज्यं न संशयः ॥

भगवतः श्रीसदाशिवपितृसमूहसंवादात्मकं स्मृतिवचनमुपर्युक्तं पीठतदुत्पादकचक्रालौकिकरहस्यपरिपूर्णमास्ते । वस्तुतश्चक्ररहस्यवत् पीठरहस्यमप्यलौकिकम् । ब्रह्माण्डपिण्डप्राणमयविभागे यत्र कुत्रापि आकर्षणविकर्षणस्वरूपपारस्परिकद्वन्द्वशक्तिसमन्वयः स्वयमुत्पद्यते, किं वा सुकौशलपूर्णक्रियया समुत्पाद्यते । तत्रैव पीठस्योत्पत्तिः । पृथ्वीसूर्यादिग्रहपीठेषु, तीर्थादिपीठेषु, स्त्रीपुरुषसम्बन्धपीठेषु मूर्त्तियन्त्रचित्राद्युपासनापीठेषु वा सर्वत्रैवाकर्षणविकर्षणशक्तिसाम्येन दिव्यपीठाविर्भावः । आकर्षणविकर्षणरूपद्वन्द्वशक्तिसमन्वयेन प्राणमये कोषे पीठमुत्पद्यते । पीठश्रेणीषु बहुविधं तारतम्यमवधेयम् । यत्र पीठे प्रेतादितामसिकासुरादिशक्तेराविर्भावस्तत्र देवाविर्भावोऽसम्भवः, प्रेतानां पितॄणां बहुविधानां देवानां चोपयोगि पीठप्रकारभेदा अनेके सन्ति । तदन्तर्विभागाश्च बहवो विद्यन्ते, भेदाश्चैते स्थूलसूक्ष्मविस्तारविभेदेनावगन्तव्याः ॥ १८ ॥

प्रसङ्गतस्तन्मौकिकं कारणं व्याचष्टे—

**ते तु रजस्तमोमूले ॥ १६ ॥**

ते आकर्षणविकर्षणे रजस्तमोमूलेऽवगन्तव्ये । सांसारिकाः सर्वेऽपि पदार्थास्त्रिगुणात्मिकाः । त्रिगुणसम्बन्धः सर्वत्रैव विद्यते । आकर्षणं रजोमूलकं विकर्षणं च तमोमूलकम् । उभयोः समन्वयात्मकं पीठं किल सत्त्वगुणमूलकमवधेयम् । रजोगुणात्मकमाकर्षणं निजाभिमुखमाकर्षति । तमोगुणात्मकं विकर्षणं च स्वस्मात् पराभिमुखं विकर्षति । शक्तिद्वयेनैतेन सर्गप्रलयौ सम्भवतः । यदा परमाणवः परस्परमाकृष्टाः सम्मिलन्ति, तदानीं सृष्टिरुत्पद्यते । यदा च परमाणवो विकर्षणदशामधिगच्छन्ति तदानीं प्रलयो जायते । एतदेव रजस्तमोगुणात्मकाकर्षणविकर्षणशक्तिरहस्यमवगन्तव्यम् ॥ १९ ॥

गुणसम्बन्धात्पीठरहस्यमभिधीयते—

**पीठमानन्दप्रदं सत्त्वप्राधान्यात् ॥ २० ॥**

सत्त्वप्राधान्यात् पीठं किल आनन्दप्रदमवगन्तव्यम् । प्राणराज्ये आकर्षणविकर्षणशक्तिसमन्वयेन पीठमुत्पद्यते । आकर्षणविकर्षणे रजस्तमोमूलक इति प्रागेव निश्चितम् । यत्र रजस्तमसोः साम्यं तत्रैव सत्त्वगुणोदयः । अतः पीठे सत्त्वगुणमूलकमित्यत्र नास्ति

सन्देहलवोऽपि। यत्र सत्त्वगुणस्तत्रानन्दविकासो नूनमेव। सम्बन्धेऽत्र गीतोपनिषदि यथा—

तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनासयम्।
सुखसङ्गेन बध्नाति ज्ञानसंगेन चानघ॥

वस्तुतः सत्त्वगुणे ज्ञानानन्दविकाशः स्वतः सिध्यति, यतोऽयं सत्त्वगुणस्य धर्मः। पीठे रजस्तमसोः साम-ञ्जस्ये स्वत एव सत्त्वगुणधर्मस्वरूपानन्दविकासो जायते। तत्रोपढौकमानमन्तःकरणमवश्यमेव सत्त्वगुण-धर्माणामानन्दमधिगमिष्यति। सत्त्वगुणमूलपीठे ध्रुवमेव साक्षात् परोक्षरूपतो वा आनन्दाविर्भावो निश्च-प्रचः॥ २०॥

इदानीं पीठभेदा वर्ण्यन्ते—

**तत् पञ्चविधं सृष्टेः पञ्चविधत्वात्॥२१॥**

तत् पीठं पञ्चविधं भवति, सृष्टेः सर्गस्य पञ्चविध-त्वात् पञ्चप्रकारत्वात्। स्थूलसूक्ष्मसर्गेऽत्र यावन्ति पीठानि सम्भवन्ति तानि सर्वाणि महर्षिणा सूत्रकृता पञ्चधा विभक्तानि। सृष्टेः पाञ्चभौतिकत्वात् पीठस्यापि पञ्चविभागाः स्वाभाविकाः। यद्यपि शास्त्रान्तरेषु न्यूना-धिक्यभेदेन पीठानि समुपवर्णितानि, किन्तु निखिला-न्यपि तानि स्वभावसिद्धपञ्चश्रेणीत एव सम्बद्धानि, अतो मतभेदसम्भावना नास्ति।

महर्षिसूत्रकारप्रोक्तपञ्चविधपीठेषु उपासनापीठम् प्रथमम्, द्वितीयं पार्थिवपीठम्, तृतीयं जीवयान्त्रिक-पीठम्, चतुर्थं स्थूलयान्त्रिकपीठम्, पञ्चमं सहजपीठ-ञ्चेति। उपासनापीठस्य षोडशभेदाः प्रागेव प्रपञ्चिताः। अग्नि-चित्र-मूर्त्ति-यन्त्रादयः षोडशभेदा उपासनायाः सहायकाः सन्ति, तेषामवलम्बनेन निर्गुणब्रह्मणः सगुण-रूपेणोपासना क्रियते। उपासनायाः षोडशभेदा योग-शास्त्रेणापि समाम्नाताः। नित्यनैमित्तिकभेदेन पार्थिव-पीठान्यप्यनेकविधानि। निखिलधर्मसम्प्रदायदेवमन्दि-राणि, उपासनास्थानानि, तीर्थस्थानानि, उपास्यनद-नदीपर्वतादयश्च पार्थिवपीठेऽन्तर्भवन्ति। जागतिक-विविधधर्मावलम्बिनामुपासनालया दिव्या नदा नद्यश्च गङ्गाद्याः, काशीप्रभृतीनि तीर्थस्थानानि च पार्थिवपीठा-न्तर्गतानि वेदितव्यानि। पुराणतन्त्रोक्तानि बहुविधानि पीठस्थानानि पार्थिवपीठान्यवगन्तव्यानि।

कुमारीपूजा, वटुकसमर्चा, शवसाधनेत्यादि जीव-यान्त्रिकपीठान्तर्गतानि। स्थूलयान्त्रिकपीठानामनेक-विधत्वमास्ते। उपासनया सह स्थूलयान्त्रिकपीठानां प्रायः सम्बन्धाभाव एव। स्थूलयन्त्रसाहाय्येन प्रेतादि-दैवविभूतीङ्गितं द्वारीकृत्य मानसिकवृत्तिविनिमयादि कार्याणि स्थूलयान्त्रिकपीठद्वारा सम्पद्यन्ते। शास्त्रविधि-मनुसृत्य यान्त्रिकपीठोपयोगेन दैवीक्रिया निष्पद्यते। यथा घटतो जलप्रवाहसमुत्पत्तिः, अग्निकुण्डस्योपरि गमनमित्यादि। अन्यथा स्थूलयान्त्रिकपीठतः प्रेताना-मेवाधिक्येन सम्बन्धो जायते। सहजस्यापि पीठस्यानेके भेदाः। यथा स्त्री-पुरुषसमागमकाले पीठस्योत्पत्तिः, सृष्टिक्रियासम्पादनम, सूर्यचन्द्रादिग्रहाणां पीठानि चेति। एवं हि नानाश्रेणीविभक्तानामपि पीठानां मुख्य-तया पञ्चैव भेदाः। अयमेव किलालौकिकः सुमहान् पीठविस्तारः। उक्तं च स्मृतिशास्त्रे—

साधकानामथ स्थूले लोके पीठप्रतिष्ठया।
मां द्रष्टुं मद्विभूतिर्वा कुमारीबटुविग्रहाः॥
मुद्राशवाग्निपत्राणि वपुः स्वीयं तथैव च।
मुख्यावलम्बनान्याहुरष्टावेतानि सर्वथा॥
तत्रापि देवरूपाणि तत्त्वानामग्नितत्त्वकम्।
मुख्यावलम्बनं प्राहुस्तत्त्वमध्यगतं हि तत्॥
तथा मुद्रा मता लोके स्त्रीपुंस्तदुभयथा त्रिधा।
इयं मुद्रा तु बहुभिश्चक्रशब्देन चोच्यते॥

तस्यापि भेदाः सप्तेति विदुः केचन योगिनः।
यन्त्राण्याश्रमितान्याहुर्योगिनो यन्त्रवेदिनः॥
पीठोत्पन्नकरेष्वेषु साधनेष्वष्टकेष्वपि।
योगिभिस्तुतिजं देहं साधनोत्तममीरितम्॥
अष्टासु कारणेष्वेषु द्रष्टव्यमन्त्रशुद्धितः।
मनसः समयेनापि कोशे प्राणमये ध्रुवम्॥
पीठमुत्पद्यते तस्मीन् कोशे तत्र प्रतिष्ठितम्।
आविर्भवन्ति ये सर्वाः शक्त्यस्तत्र निश्चितम्॥
किन्तु द्रव्यमनःशुद्धिमन्त्रशुद्ध्याद्यभावतः।
तथोपासनया चापि दिग्बन्धाद्यपि यत्नतः॥
पीठस्थानस्य रक्षा चेत् समीचीना भवेन्न हि।
तथोक्तस्य च यागस्य पवित्रत्वाद्यभावतः॥
बह्वस्तत्र जायन्तेऽन्तरायाऽसुरोत्कृताः।
इति ॥२१॥

पीठस्य विशिष्टमहत्त्वं निर्वक्ति—

## तदुपास्तावपेक्ष्यमधिष्ठानभूमित्वात् ॥२२॥

अधिष्ठानस्य आश्रयस्य भूमित्त्वात् तत् पीठम् उपास्तौ उपासनायामपेक्ष्यमपेक्षणीयम्। पीठं हि देवानामधिष्ठानमिति पूर्वमेव निर्णीतम्। अतस्तदुपास्ताववतिसहायकमित्यसन्दिग्धम्। यथा किल कर्मोपासनाज्ञानकाण्डेषु उपासनाकाण्डं मध्यवर्त्ति उभयसहायकं, तथैव प्राणमयकोषसम्बन्धनिबन्धनं पीठमपि स्थूलस्य मृत्युलोकस्य सूक्ष्मस्य च देवलोकस्य मध्यवर्त्तित्वादुपास्तौ परमसहायकमवधेयम्। इष्टदेवस्य निकटे स्थितिरेवोपास्तिः। सर्वा अपि उपासनापद्धतयो यथाधिकारं दैवेन सूक्ष्मराज्येन सम्बद्धाः। उपासनायाः प्रधानपञ्चभेदेषु सर्वनिकृष्टा प्रेतोपासनाचापि दैवराज्यसम्बन्धनिबन्धनरूपा वोध्या। शास्त्रेषु पञ्चभेदा उपासनाया वर्णिता उपलभ्यन्ते, तथाहि—

उपासना ब्रह्मणः प्राक् द्वितीया सगुणस्य च।
तृतीया स्मर्यते लीलाविग्रहोपासना बुधैः॥
चतुर्थी पितृदेवर्षिगणनामस्त्युपासना।
अन्तिमा क्षुद्रदेवानां प्रेतादीनां विधीयते॥

प्रेतानां निवासयोग्याः प्रेतलोका असुरलोकाश्चापि सूक्ष्मा देवलोका एव। देवर्षिपितृलोकास्तु सन्त्येव देवलोकाः। अवतारोपासना सगुणपञ्चोपासना च सगुणब्रह्मोपासनान्तर्गता वेद्या। सगुणोपासनायाः सम्बन्ध उद्ध्वस्थित षष्ठसप्तमलोकाभ्यां तिष्ठति। निर्गुणब्रह्मोपासनासम्बन्धोऽपि यावद्ध्यानभूमिसम्बन्धस्तावत् पर्यन्तं चतुर्दशभिर्भुवनैः साकं तिष्ठति, यतो विराण्मूर्त्तिध्यानं चतुर्दशभुवनसम्बन्धमन्तरेण भवितुं नार्हति। अत उपास्योपासकसम्बन्धस्थापनार्थं पीठसाहाय्यमति हिताधायकम्। सर्वा अपि देवशक्तयो यथायोग्य पीठसाहाय्येन पीठे केन्द्रीभवन्ति। ऋषयो देवाः पितरः असुरप्रेतादयो देवयोनयः, क्षुद्रा महान्तोऽपि च देवाः पीठे आविर्भावयितुं शक्यन्ते। अतो दैवराज्यसर्वविधदेवयोनीनां सान्निध्यस्थापनकरं पीठमेवावधेयम्। पूर्वसूत्रवर्णिता उपासनामयाः षोडशदिव्यदेशा अपि प्रकारान्तरेण पीठस्वरूपा एव। अत एवोपास्ति परमसहायकं पीठमत्यत्रनाणीयानपि संशीति लेशः ॥२२॥

अन्यद् वैशिष्ट्यमुच्यते—

## दैवजगतः प्रमापकं स्थूलसूक्ष्मसंयोजकत्वात् ॥२३॥

पीठं हि स्थूलसूक्ष्मयोः संयोजकत्वात् संयोगकारित्वात् दैवस्य जगतः प्रमापकं ज्ञापकमवगन्तव्यम्। पीठसम्बद्धा अनेके लाभास्तेषु अयमप्येको लाभो तत् सूक्ष्मस्य दैव जगतः प्रमापकं विद्यते। अज्ञानदशायां मानवो न विश्वसिति दैवे जगति। अतो

जागतिक विभिन्नमानवजातिषु दैवजगतः परिज्ञानं नास्ति। परिज्ञाते वा दैवजगति बहवः सन्देहाः समुद्भवन्ति। वस्तुतः स्थूलमृत्युलोकेऽस्मिन् दैवे जगति विश्वासो न सर्वत्र सम्भवः। अन्यच्च दैवं जगदतिविस्तृते, यत उपरिस्थितेषु सप्तलोकेषु निम्नस्थितसप्तलोकेषु अर्थात् चतुर्दशभुवनेषु मृत्युलोकोऽयं भूर्लोकस्य चतुर्थो भागः। मृत्युलोकं प्रेतलोक-नरकलोकपितृलोकनाम्ना भूर्लोकश्चतुर्धा विभक्तः। तेषु मृत्युलोकं एवैकः स्थूलः, अन्ये सर्वे सूक्ष्मा देवलोकाः सन्ति। एकस्य ब्रह्माण्डस्य षट्पञ्चाशत्तमभागस्यैको भागः स्थूलोऽयं मृत्युलोकः, शिष्टाः सर्वे सूक्ष्मदेवलोका वेद्याः। एतावद् विस्तृतदैवलोकैः साकं सम्बन्धस्थापनहेतुभूतं केवलं पीठमेव। यद्यपि योगेनापि दैवजगद्भिः सम्बन्धस्थापनं क्रियते, किन्तु न तत् साधारण प्रयत्नसाध्यम्। एकमात्र पीठमेव दैवेन जगता सह सम्बन्धस्थापनस्य सरलोपायः। तत् कथं सम्भवतीति पूर्वसूत्रेषु सविस्तरं प्रपञ्चितम्। सुतरामतिसरलतया दैवेन जगता सह सम्बन्धस्थापनोपयोगित्वात् पीठं हि दैवजगतः प्रमापकमित्यत्र नास्ति सन्देहलेशः। स्थापिते पीठे दैव्याः शक्तेराविर्भावो निश्चप्रचः। स्थापिते ह्युपास्तिपीठे उपास्यदेवस्य वा तदीयस्वल्पशक्तेर्वा प्रकाशे नूनं सम्भवः। स्थूलयान्त्रिकपीठेऽपि अशुद्धरीतिमाश्रित्य अगर्भरूपापरनामकमन्त्रादिसम्बन्धशून्ये पीठमाविर्भवति। तत्र देवादीनां न स्यात्, किन्तु क्षुद्राणां प्रेतादीनां प्रकाशोऽवश्यम्भावी। प्रक्रियेयं प्रत्यक्षसिद्धा। यतः स्वाभाविके पीठे क्रियासञ्चारः शीघ्रमेव प्रत्यक्षीक्रियते।

उपासनापीठशक्तिविकासो भक्तिमद्भिः साधकैरनुभूयत एव। सहजपीठशक्तेरनुभवस्तु दार्शनिकदृष्ट्या प्रत्यक्षीकर्तुं योग्यः। कारणकलापेनैतेनावश्यमिदमभ्युपगन्तव्यं यत् पीठं दैवस्य जगतः प्रमापकमिति ॥२३॥

महत्त्वान्तरमाचष्टे—

**तीर्थप्रतिष्ठापकं सात्त्विकत्वात् ॥२४॥**

पीठं हि सात्त्विकत्वात् सत्वगुणप्रधानत्वात् तीर्थप्रतिष्ठापकं भवति। प्रागेवेदं निर्णीतं यत् पीठे सत्त्वगुणस्य प्राधान्यमिति। पीठे रजस्तमसोः समन्वयत्वात् तत् सत्वगुणमयमुच्यते। यत्र सत्वगुणस्तत्र पवित्रताऽवश्यम्भाविनी। यत्र सत्वम् तत्र धृति-शान्ति ज्ञानोदयः स्वतः सिद्धः। अतः पीठं तीर्थस्थापकमित्यत्र न सन्देहः। अत्र भगवद्वाक्यमपि स्मर्यते—

इह यावन्ति तीर्थानि तानि पीठानि संजगुः।
पीठशक्तियुतान्यत्र सन्ति तीर्थान्यनेकशः॥
केषुचित्तीर्थदेशेषु शक्तिर्मे सततं स्थिता।
केषुचित्तु यथाकालं भक्तिश्रद्धायुता नराः॥
आराधयन्ति तावद्धि मम शक्तिर्विनिश्चिता।
कतिचिद् भक्तवश्यानि तीर्थानि तस्य भक्तितः॥
आविर्भवन्ति तत्रैव तिष्ठन्ति च तदिच्छया।
यथा सर्वेषु कायेषु गवां तिष्ठति गोरसः॥
तथापि गोस्तनादेव स्रवतीति विनिश्चितम्।
तथैव मामिका शक्तिर्विद्यमानापि सर्वतः॥
नित्यनैमित्तिकैः पीठैराविर्भवति भूतले।

सात्त्विकराजसिकतामसिक भेदेन तीर्थान्यपि त्रिविधानि। यतः सर्वत्रैव गुणानां विलासः। अध्यात्माधिदैवाधिभूतशुद्धिविचारेणापि पीठानि विविधप्रकाराणि ज्ञातव्यानि। किन्तु सात्त्विकभावप्राधान्यात् पीठं यथा स्थिरं तिष्ठति तथैव तीर्थमपि विज्ञेयम् अतोऽभ्युपगन्तव्यमेवेदं यत् पीठशक्त्यैवं तीर्थानि निर्मीयन्ते स्थिरतामप्यावहन्ति।

सत्त्वगुणप्राधान्यात् पीठं तीर्थप्रतिष्ठापकम्। नित्य-

नैमित्तिकभेदेन तीर्थं द्विविधम्। नित्यशक्तियुक्तं तीर्थं नित्यमित्युच्यते। यत्र तु क्रियते कालाय शक्तिर्विराजते तन्नैमित्तिकमुच्यते। स्वाभाविकेन दैवहेतुना, योगिजनतपस्याफलेन वा मानवसमूहमानसिकशक्तिबलेन वा, किंवा उक्तानामेतेषां मध्ये द्वाभ्यामेकेन वा कारणेन, अथवा सम्मिलितैस्त्रिभिः कारणैः संसारे तीर्थमुदेति। संसारेऽपि सर्वास्वपि मानवजातिषु सर्वधर्मावलम्बिषु यथा विश्वासं तीर्थस्वरूपं धर्मस्थानं प्राकट्यमापद्यते। इयानेवात्र भेदो यद् या मानवजातिर्या वा धर्ममार्गं आध्यात्मिकराज्ये यथौनत्यं भजते, तथैव तत्तीर्थमपि समुन्नतं भवति। शास्त्रे स्थावरजङ्गममानसभेदेन पुनस्तीर्थं त्रिधा विभक्तम्। यस्यान्तःकरणे क्लिष्टवृत्तयोऽस्तमियन्ति, अक्लिष्टवृत्तयश्च सुप्रतिष्ठिता जायन्ते, तस्य साधोर्मानसं तीर्थीभवति। तत्साधुदर्शनेन तीर्थदर्शनलाभः। साधुदर्शनमाहात्म्यमेतद्दर्शनस्य स्थानान्तरे सविस्तरमुपवर्णितम्। येषां साधुब्राह्मणानामन्तःकरणं सदैव तीर्थमयं तिष्ठति, त एव जङ्गमतीर्थरूपा मताः। मानसं तीर्थं तु तेषु सर्वदैव विराजत एव। अन्यजनेष्वपि नैमित्तिकरूपतस्तत् स्थातुमर्हति। किन्तु साधारण्येन स्थावरं तीर्थमेव तीर्थशब्दवाच्यतामर्हति ॥ २४ ॥

प्रसङ्गतो दैवं जगद् वर्ण्यते—

## तिस्रो मुख्या देवताः ॥ २५ ॥

स्पष्टोऽर्थः। देवाधिष्ठानं दैवजगत् प्रमापकं तीर्थमुपवर्ण्य उपासनया ज्ञेयस्य दैवस्य जगतः सविस्तरवर्णनं सम्प्रति पूज्यपादेन महर्षिणा सूत्रकारेण प्रारभ्यते। रजोगुणस्याधिष्ठाता ब्रह्मा, सत्त्वगुणस्य विष्णुः, तमोगुणस्य च रुद्र इति दैवे जगति त्रय एव मुख्या देवाः सन्ति, स्मर्यते चात्र—

गुणेभ्यः क्षोभमानेभ्यस्त्रयो देवा विजज्ञिरे।
एका मूर्तिस्त्रयो भागा ब्रह्मविष्णुमहेश्वराः॥

वस्तुतो ब्रह्मविष्णुमहेश्वरा नैव साधारण देवाः ते सगुणब्रह्मस्वरूपा एव। केवलं रजोगुणमनुसृत्य सृष्टिं, सत्त्वमनुसृत्य स्थितिं, तमोगुणमनुसृत्य च लयं विधातुं प्रतिब्रह्माण्डं मुख्यानि त्रीणि देवपदानि प्राकट्यमायान्ति। त्रयो देवभूता अप्येते स्वस्वाधिकारानुसारेण सगुणब्रह्मपदेनाभिधीयन्ते। एतेषां त्रयाणामाज्ञयैव प्रत्येकब्रह्माण्डस्य सृष्टिस्थितिलया बोभूयन्ते ॥ २५ ॥

दैवजगत् कार्यसम्पादका देवाः कथ्यते—

## त्रयस्त्रिंशत् ततः प्रभूता अपि कार्यवैलक्षण्यात् ॥२६॥

प्रत्येकब्रह्माण्डे मुख्यानां त्रयाणां ब्रह्मविष्णुमहेश्वराख्यानां देवानामधीनभूतास्त्रयस्त्रिंशत संख्याकपदधारिणो देवाः सन्ति। कार्याणां वैलक्षण्यात् तदधीनाश्चापि अनेके देवा विद्यन्ते। विषयेऽत्र वेदे बहूनि प्रमाणान्युपलभ्यन्ते। तथाहि—

"त्रयो देवा एकादशत्रयस्त्रिंशाः सुराधसः बृहस्पतिपुरोहिता देवस्य सवितुः सर्वे देवा देवैरवन्तु मा"
"समिद्धः इन्द्रउषसामनीके पुरोरुचा पूर्वकृद्वावधानः। त्रिभिर्देवैस्त्रिंशतावज्रबाहुर्जघान वृत्रं विदुरोववार"।
"त्रयश्च त्रीच शतात्रयश्च त्रीच सहस्रैतिमहिमानएवैषामेते त्रयस्त्रिंशदेव देवाः" इति।

स्मर्यते चापि—

तिस्रः कोट्यस्तु रुद्राणामादित्यानां दश स्मृताः।
अग्नीनां पुत्रपौत्रं तु संख्यातुं नैव शक्यते॥

उपर्युक्तप्रमाणैरिदं सिध्यति यत् त्रिदेवाधीनत्रयस्त्रिंशदेवाधीनाः संख्यातीता देवताः सन्तीति। प्रधानभूतानां त्रयस्त्रिंशद्देवानां विषये श्रुतिस्मृतिषु प्रमाणान्युपलभ्यन्ते। तथाहि—

धरो ध्रुवश्च सोमश्च विष्णुश्चैवानिलोनलः।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ क्रमात् स्मृताः॥

इमेऽष्टौ वसवः। एकादशरुद्राणां नामानि यथा—

अजैकपादहिर्बुध्नो विरूपाक्षः सुरेश्वरः।
जयन्तो वहुरूपश्च त्र्यम्वकोह्यपराजितः॥
वैवस्वतश्च सावित्री हरो रुद्रा इमे स्मृताः।

द्वादशादित्यानां नामानि यथा —

भर्गोंऽशश्चार्यमा चैव मित्रश्च वरुणतथा।
सविता चैव धाता च विवस्वांश्च महाबलः॥
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते।
इत्येते द्वादशादित्याः कश्यपस्यात्मसम्भवाः॥

केषाञ्चिन्मते प्रजापतिस्थाने यमो गृहीतः। एवं हि त्रिमूर्त्यधीना त्रयस्त्रिंशत्संख्याका प्रधानपदधारिणो देवाः सन्ति॥ २६॥

साम्प्रतं संख्यातीतदेवदेवीभेदमुपवर्णितुमनुक्रामति—

**चित्सत् प्रधान्याद्देवदेव्यौ ॥२७॥**

चित्प्राधान्याद्देवाः सत्प्राधान्याद्देव्यश्चाविर्भवन्ति। सच्चिदानन्दस्य भगवतो विश्वमपि सच्चिदानन्दमयमेव। यथा हि चित्प्रधाना चेतनसृष्टिः सत्यप्रधाना जडसृष्टिः, आनन्दस्तूभयत्र व्याप्नोति, तथैव देवेषु चित्प्राधान्यम्, देवीषु च सत्प्राधान्यमवगन्तव्यम्। यथा च ब्रह्मतच्छक्तिसम्बन्धो विज्ञानानुमोदितस्तथैव देवदेवीसम्वन्धोऽपि विज्ञानसिद्ध एव। मुख्यानां देवदेवीनां सम्बन्धे रहस्यमलौकिकं स्मृतिशास्त्रे निम्नाङ्कितमुपलभ्यते—

नित्यैव सा जगन्मूर्त्तिस्तया सर्वमिदं ततम्।
तथापि तत्समुत्पत्तिर्वहुधा श्रूयतां मम॥
देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा।
उत्पन्नेति तदा लोके सा नित्याऽप्यभिधीयते॥

अन्यदपि—

इत्थं निशम्य देवानां वचांसि मधुसूदनः।
चकार कोपं शम्भुश्च भ्रूकुटीकुटिलाननौ॥
ततोऽतिकोपपूर्णस्य चक्रिणो वदनात्ततः।
निश्चक्राम महत्तेजो ब्रह्मणः शङ्करस्य च॥
अन्येषां चैव देवानां शक्रादीनां शरीरतः।
निर्गतं सुमहत्तेजस्तच्चैक्यं समगच्छत॥
अतीव तेजसः कूटं ज्वलन्तमिव पर्वतम्।
ददृशुस्ते सुरास्तत्र ज्वालाव्याप्तदिगन्तरम्॥
अतुलं तत्र तत्तेजः सर्वदेवशरीरजम्।
एकस्थं तदभून्नारी व्याप्तलोकत्रयं त्विषा॥
यदभूच्छाम्भवं तेजस्तेनाजायत तन्मुखम्।
याम्येन चाभवन् केशा वाहवो विष्णुतेजसा॥
सौम्येन स्तनयोर्युग्मं मध्यं चैन्द्रेण चाभवत्।
वारुणेन च जङ्घोरू नितम्वस्तेजसा भुवः॥
ब्रह्मणस्तेजसा पादौ तदङ्गुल्योऽर्कतेजसा।
वसूनां च कराङ्गुल्यः कौवेरेण च नासिका॥
तस्यास्तु दन्ताः सम्भूताः प्राजापत्येन तेजसा।
नयनत्रितयं यज्ञे तथा पावकतेजसा॥
भ्रुवौ च सन्ध्ययोस्तेजः श्रवणावनिलस्य च।
अन्येषां चैव देवानां सम्भवस्तेजसां शिवा॥

प्रधानदेव्या देवजनन्याः समुत्पत्तिरहस्यावधारणेन सूत्रोक्तं विज्ञानं स्वतः प्रमाणकोटीमाटीकते। नित्यनैमित्तिकदेवपदेषु देवीनामपि सम्बन्ध एवमेवावधेयः। देवपदानीव देवीपदान्यपि नित्यानि नैमित्तिकानि च भवन्ति॥ २७॥

प्रसङ्गादुच्यते—

**शक्तिवैचित्र्याद्वैचित्र्यं देवानाम् २८॥**

स्पष्टोऽर्थः। देवस्वरूपनिर्णयानन्तरं महर्षिः सूत्रकृदभिधत्ते यत् शक्तीनां वैचित्र्येण देवेष्वपि वैचित्र्यं

निभाल्यते। आप्रेतपितृलोकतः सप्तममूद्र्ध्वलोकं यावत् निम्नस्थिताः सप्तलोकाश्चापि सर्व एवैते देवलोकनाम्नाऽभिधीयन्ते। सुतरां मृत्युलोकव्यतिरिक्त सर्वे देवलोका एव। प्रेतलोकचालका वेतालादयः, नरकलोकचालका यमदूतादयश्च निम्नश्रेणयो देवा एव सन्ति। असुरलोकाधिवासिनोऽसुरा अपि देवा एव। असुरलोका अप्यनेके सन्ति। तेष्वपि तारतम्यमवधेयम्। प्रेतलोके राजवेतालानामनेके श्रेणीभेदाः। अन्यच्च भूर्भुवःस्वरादिलोकभेदेन देवानां शक्तिष्वधिकारेषु च बहवो भेदाः सन्ति। भूर्भुवःस्वरादिलोकान्तर्गता अपि भूयांसो लोका विद्यन्ते। एतेन देवानामनेके श्रेणीभेदाः स्वतः सिद्धाः। चतुर्विधभूतसंघचतुरशीतिलक्षसंख्याकयोनीनां रक्षकाश्चालकाश्च बहवो देवाः सन्ति। तेषामपि शक्तिवैचित्र्येण बहुविधं श्रेणीवैचित्र्यमास्ते। उपर्युक्तानां परमशक्तिशालिनाम् इन्द्रवरुणकुबेरवसुरुद्रादित्यप्रभृतीनां देवनायकानामपि शक्तिवैचित्र्यमास्ते। यथात्र मृत्युलोके मानवेषु ब्राह्मणक्षत्रियवैश्यशूद्रादयः आर्यानार्याः प्रजाः, राजानस्तत्कर्मकारिणः साधवोऽसाधवः किराताद्याः सन्ति, तेषु च बहुविधं शक्तिवैचित्र्यमधिकारवैचित्र्यं च दृष्टिगोचरतामापद्यते तथैव सूक्ष्मदेवलोकवासिदेवदेवीनां शक्तिवैचित्र्यभेदेन बहुविधं वैचित्र्यं स्वभावसिद्धमेवास्ते ॥ २८ ॥

तेषां श्रेणीभेदा वर्ण्यन्ते—

**ते वर्णधर्माश्रिताः सप्तधा विभक्ताश्च ॥ २९ ॥**

ते देवा वर्णधर्माश्रिताः सप्तधा विभक्ताश्च विद्यन्ते। पूर्वमेवेदं निर्णीतं यत् त्रिमूर्तयो ब्रह्मविष्णुमहेश्वराः सगुणब्रह्मस्वरूपा नैव ते साधारणदेवतापदवाच्याः, तद्भिन्ना मुख्यास्त्रयस्त्रिंशत्संख्याकास्तदन्तर्गताः। कोटिशो नित्यनैमित्तिकाश्च देवा वर्णधर्मयुक्ताः सन्ति। सर्वेषामपि तेषां श्रेण्यनेकत्वेऽपि सप्तविधत्वमेव। यथा नित्याया आर्यजातेर्मानवेषु ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णास्तथैव देवेष्वपि चतुर्वर्णविभागो वर्तते। प्राकृतिकसप्तस्तराणां स्वाभाविकत्वात् देवानामपि साधारण्येन सप्तश्रेणीत्वमेव। सप्तानाम् ऊद्र्ध्वलोकानां सप्तश्रेणीत्वं प्रसिद्धम्। तेष्वपि प्रत्येकलोके श्रेणीविभागा विद्यन्ते। ऊद्र्ध्वलोकेष्वपि बहवोऽन्तर्विभागाः सन्ति, देवानां वर्णधर्मविषये स्मृतिशास्त्रेषु बहूनि प्रमाणानि लभ्यन्ते। तथाहि—

आदित्याः क्षत्रियास्तेषां विशश्च मरुतस्तथा।
अश्विनौ तु स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ॥
स्मृतास्त्वङ्गिरसो देवा ब्राह्मणा इति निश्चयः।
इत्येतत् सर्वदेवानां चातुर्वर्ण्यं प्रकीर्त्तितम्॥

अत्र विषये श्रुतिरप्याह—

"प्रजापतिरकामयत प्रजायेय इति स मुखतस्त्रिवृत्तं निरमिमीत तमग्निर्देवता अन्वसृजत, ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्याः। बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवता अन्वसृजत राजन्यो मनुष्याणामविः पशूनां तस्मात्ते वीर्यवन्तो मध्यतः सप्तदशं निरमिमीत तं विश्वेदेवा देवता अन्वसृज्यन्त वैश्यो मनुष्याणां गावः पशूनाम् सोऽन्येभ्यो भूमिष्ठा हि देवता अन्वसृज्यन्त शूद्रो मनुष्याणामश्वः पशूनाम् इति ॥ २९ ॥

प्रसङ्गादुच्यते—

**उन्नत्यवनतिपरिवर्त्तननियमायत्ताश्च ॥ ३० ॥**

ते देवा उन्नत्यवनतिपरिवर्त्तनानां ये नियमास्तेषाम् आयत्ता अधीनाः सन्ति। वस्तुतो देवा एव ब्रह्माण्डस्यैकस्य पालका विद्यन्ते। आसुरबलपराक्रमनिरोधपूर्वकं तदीयाधिकारतस्तदग्रगतिं निरुध्य सृष्टिक्रियायाः संरक्षणम्, कर्मशृङ्खलानुसारेण ब्रह्माण्डपरिपालनम्,

चतुर्दशभुवनानां तदन्तर्गतानां बहुविधलोकानां व्यवस्थापनम् त्रिमूर्त्तिपदवाच्यानां ब्रह्माण्डाधीश्वराणां ब्रह्मविष्णुरुद्राणामाज्ञाधीनतामाश्रित्यैकस्य ब्रह्माण्डस्य सृष्टिस्थितिलयक्रियापरिचालनम्, ब्रह्माण्डाधीश्वरनिदेशमनुसृत्य ब्रह्माण्डीयाया नियमबद्धव्यवस्थायाः संरक्षणं चेत्यादीनि गुरुतरकार्याणि देवानेव निर्विभ्रति। सुतरां ब्रह्माण्डदायित्वस्य तत्सम्बन्धनिबन्धनत्वात् तैरेव साकं नियमितः कर्मफलसम्बन्धो विद्यते। कारणेनैतेनैव देवा नित्यनैमित्तिकाधिकारानुसारेण स्वीयपदसम्बन्धीनि विविधानि विधेयानि विदधतोऽवनतिं क्रमोन्नतिपरिवर्त्तनं चाधिकुर्वते। स्वीय पदाधिकारानुसारेण कार्यनिर्वाहकतया ते स्वपदादुन्नतदेवपदं प्रतिष्ठन्ते। एकपदकार्यकालसमाप्त्यनन्तरं ते लोकान्तरान्यपदान्यासादयन्ति। तत्स्थानेषु च केचिदन्येऽधिकारिणः परिवर्त्तिताः समायान्ति। यदि कश्चन देवपदाधिकारी स्वीयपदकर्त्तव्यं न यथावत् पालयेत् तर्हि निम्नलोके निम्नपदे तत्पतनमपि सम्भवेत्। यथैकस्य साम्राज्यस्याधिपतेरधीनास्तत्साम्राज्यनानापदधारिणः कोषाध्यक्ष-न्यायाधीश-सेनापति-सचिवादयः स्वस्वकार्यसुव्यवस्थां सम्पादयन्तः सम्राज एवाज्ञां परिपालयन्ति, सम्राट् च तेषां सुचारुरूपकार्यकलापानुष्ठानेन प्रसन्नस्तानुन्नमयति अन्यथाऽवनमयति, तथैव तत्तत्पदधारिणो देवा अपि स्वकर्त्तव्यपालनेन समुन्नतिम्, समयसमाप्तौ परिवर्त्तनम्, स्वकीयकर्त्तव्यपालनाभावे पतनमासादयन्ति। अत्र विषये शास्त्रीय प्रमाणानि यथा—

ययातिरपि पूर्वेषां राज्ञां वृत्तमनुष्ठितः।
बहुवर्षसहस्रायुर्युयुजे कालधर्मणा॥
पुरुर्यदुश्च द्वौ वंशौ वर्द्धमानौ नरोत्तमौ।
ताभ्यां प्रतिष्ठितो लोके परलोके च नाहुषः॥
महीपते नरपतिर्ययातिः स्वर्गमास्थितः।
महर्षिकल्पो नृपतिः स्वर्गाग्र्यफलभुग्विभुः॥
बहुवर्षसहस्रेषु काले बहुमुखे गते।
राजर्षिषु निषण्णेषु महीपः सुमहर्द्धिषु॥
अवमेने नरान् सर्वान् देवान् ऋषिगणांस्तथा।
ययातिर्मूढविज्ञानो विस्मयाविष्टचेतनः॥
समुहूर्त्तादत्र नृपो हतोजाश्चाभवत्तदा।
अथ प्रचलितः स्थानादासनाच्च परिच्युतः॥
कम्पितेनैव मनसा धर्षितः शोकवह्निना।

भगवद्गीतायामपि—

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेंद्रलोक-
मश्नन्ति दिव्यान् दिवि देवभोगान्॥
ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति॥

इति ॥ ३० ॥

प्रसङ्गादसुराणां देवत्वं साधयति—

**असुराणामपि देवविशेषत्वं विशिष्टशक्तिमत्वात् ॥ ३१ ॥**

विशिष्टशक्तिमत्तया असुराणां दानवानामपि देवविशेषत्वमेवावगन्तव्यम्। ऊर्द्ध्वस्थितेषु सप्तलोकेषु देवानामिव, अधःस्थितेषु सप्तसु लोकेषु दानवानामपि शक्तिर्जागर्ति। शक्तिदृष्ट्या देवेष्वसुरेषु च समानतैव। गुणाधिकारविचारदृष्ट्या देवेषु दानवेषु च भेद इत्यपि शब्दोपात्तो बोध्यः। भूर्लोकस्य प्रेतपितृप्रभृतिलोकानारभ्य भुवः स्वरादिलोकेषु क्रमशः उच्चाधिकारवन्तो देवा निवसन्ति। त एव देवलोकब्रह्माण्डसम्बन्धीयं कार्यं सम्पादयन्ति। देवराजस्य राजधानी ऊर्द्ध्वस्थिते तृतीये स्वर्लोके विराजते। अतलवितलसुतलादिषु अधःस्थितसप्तलोकेषु तु बहुश्रेणयोऽसुरा निवसन्ति। असुर-

राजराजधानी तु निम्नस्थिते सप्तमे पाताललोके वर्त्तते। मृत्युलोकेऽत्र देवासुरसंग्रामः सदा प्रवर्त्तते। सर्वेऽपि मानवपिण्डा देवासुरसंग्रामकेन्द्रभूता विद्यन्ते। तांश्च कदाचिद्देवाः कदाचिच्चासुरा अधिकुर्वन्ति। सुरैरधिकृतमानवान्तःकरणेषु अभय-सत्त्वसंशुद्धिशान्त्यहिंसादयो वृत्तयः समुद्यन्ति, असुरैराक्रान्तेषु च दम्भदर्पाभिमानादयश्चाविर्भवन्ति । एतादृशो देवासुरसंग्रामो मृत्युलोकेऽत्र सदैव प्रत्यक्षीक्रियते। मृत्युलोकेऽत्र नैमित्तिकरूपेणापि देवासुरयुद्धं प्रायः प्रचरति। तदानीमवतीर्णा देवा असुराश्च प्रत्यक्षयुद्धं वितन्वते। रामरावणयोः कौरवपाण्डवानां चायोधनमत्रप्रमाणम्। सूक्ष्मेऽन्तर्जगति तु भवत्येव नैमित्तिकरूपेण देवासुरयुद्धमिति स्मृतिशास्त्रे प्रमाणमुपलभ्यते। तथाहि—

तथा देवासुरं युद्धं मध्ये मध्येऽत्र जायते।
असुराः कर्मव्यत्यासाद् देवाञ्जित्वा स्वशक्तितः॥
कियन्तमधिकारञ्च तेषां ते कुर्वते स्वयम् ।
देवा अपि प्रसादान्मे पुनर्जित्वाऽसुरांस्तथा॥
स्वाधिकारं समाश्रित्य पुनर्नन्दन्ति निर्भयाः ।
देवानाञ्चासुराणां चाधिकारे समतां गते॥
ब्रह्माण्डेषु च धर्मस्य स्थितिर्याथार्थ्यतो मता॥३१॥

एवं हि—

## प्रेता अप्येवम् ॥३२॥

प्रेता अपि देवयोनय एवेत्यर्थः । मृत्युलोकतो व्यतिरिक्तानि चतुर्दशभुवनानि सूक्ष्मलोकाः सन्ति। एतेषु निवसन्तो जीवा देवयोनय एव। प्रेतयोनिः सर्वतो निकृष्टाः। प्रेतलोकोऽतीवदुःखप्रदः, किन्तु स च देवलोकान्तर्गत इत्यत्र नास्ति सन्देहः। भूर्लोकस्य चत्वारो भागा मृत्युप्रेत-पितृ-नरकलोकनाम्ना आख्यायन्ते । एतेषु केवलं मृत्युलोकः स्थूलः, अन्ये सूक्ष्माः सन्ति। त्रिष्वप्येतेषु द्वौ प्रेतनरकलोकौ दुःखप्रदौ। पितृलोकस्तु सुखपूर्णो विद्यते। मृत्युलोकस्यास्य समन्ततः प्रेतलोकस्तिष्ठति। मनुष्यलोकस्याभ्यर्णे एव प्रेतानि वसन्ति। प्रेतानामनेकाः श्रेणयस्तत्र सप्तानां प्राधान्यम्। प्रेतानां रक्षकाश्चालकाश्च वेताला राजवेतालाश्चोच्यन्ते। यथा मानवसमाजसंरक्षणाया अनेकप्रकारा राजपदाधिकारिणो नियुज्यन्ते, तथैव प्रेतलोकसुरक्षार्थं वेतालराजवेतालादयो यमदूताः स्वस्वपदान्यधितिष्ठन्तः प्रेतलोकं सुव्यवस्थापयन्ति। प्रेतेषु कर्मानुसारमनुशासनम्, कुत्सितकर्मतः प्रेतानां निरोधः तदधिकारानुरूपं परिचालनं च वेतालादयः पदधारिणः समनुतिष्ठन्ति। मानवो मृत्योरनन्तरं प्रायः प्रेतशरीरमुपढौकते। अतो वर्षं यावत् प्रेतश्राद्धानुष्ठानस्य शास्त्रीयो निर्देशः। पुण्यात्मानो ज्ञानिनो मृत्युकाले सावधानाश्च मानवा नाप्नुवन्ति प्रेतयोनिम्। कष्टान्धकारपरिपूर्णं प्रेतलोकं भुक्त्वा पापाधिक्येन नरकं पुण्याधिक्यतश्च पितृलोकं प्रपद्यन्ते । समधिकपुण्यशालिनः पुरुषा नूनमेव स्वर्गादिसमुन्नतादित्यलोकानासादयन्ति। यथा असुरा देवाश्च मनुष्यान् आविशन्ति, तथैव प्रेता अपि पापग्रस्तोन्मत्तापवित्रावसावधानभीरुपुरुषेषु निजाधिपत्यं स्थापयन्ति। अत एवायुर्वेदशास्त्रे बहुविधोन्मादप्रेतोन्मादप्रकाराः समुपवर्णिता उपलभ्यन्ते।

तथाहि—

देवविप्रगुरुद्वेषौ वेदवेदाङ्गविच्छुचिः।
आत्मपीडाकरोऽहिंस्रो ब्रह्मराक्षससेवितः॥
उद्ध्वस्तः कृशपरुषो विरुद्धभाषी
दुर्गन्धो भृशमशुचिस्तथातिलोलः।
बह्वाशी विजनवनान्तरोपसेवी
व्याचेष्टन् भ्रमति रुदन् पिशाचजुष्टः॥

देववत् प्रेता अपि सूक्ष्मशरीरधारिणः। प्रबलशक्त्या

स्वेच्छया ते स्थूलदेहमपि बिभ्रति। देवास्तु सर्वत्रापि स्थाने गन्तुं पारयन्ति, न तथा प्रेताः। ते तु वायुसेवितदेश एव गन्तुं शक्नुवन्ति। सर्वतः पिहितच्छिद्रेषु चापि प्रदेशेषु वातयातायातगतिरहितेषु प्रेतो प्रवेष्टुं नार्हति। यत्र वायुसंचारस्तत्र नूनं गच्छति। किन्तु निवारितवायावपि देशे देवा यान्ति। विशेष बलशालिनः प्रेता देवा इव बहुविधानि शरीराण्यासादयितुमर्हन्ति। अतः प्रेता अपि देवयोनेरन्तर्गताः॥ ३२॥

त्रिमूर्त्तिवैशिष्ट्यं वर्णयति—

## त्रिमूर्त्तिर्नैवमीश्वरत्वात् ॥३३॥

त्रिमूर्तिर्ब्रह्मविष्णुमहेशपदवाच्या नैवं देववत् ईश्वरत्वात्, ईश्वरस्य भाव ईश्वरत्वम् तस्मात्, ब्रह्मविष्णुमहेश्वरा देवा इव न सन्ति, ते तु एकब्रह्माण्डस्य ईश्वरा नायकाः सन्ति। अनन्तकोटिब्रह्माण्डनायकः परमेश्वरो ह्येतद्द्वारैव सृष्टिस्थितिलयक्रियामनुतिष्ठत्यतस्ते देवेषु नान्तर्भवन्ति। त्रयस्त्रिंशत्संख्याकान् प्रधानदेवान्, विशिष्टपदधारिणो नित्यान् नैमित्तिकांश्च देवान्, वर्णयित्वा, असुराणां प्रेतानां च देवयोनिविशेषत्वं च निश्चीय पूज्यपादः सूत्रकृन्महर्षिः त्रिमूर्तेर्वैशिष्ट्यं वर्णयति। अन्यान्यदेवयोनय इव भगवन्तो ब्रह्मविष्णुरुद्रा अपि साधारणदेवान्तर्गताः सन्ति नवेति शङ्कायाः समाहितये सूत्रकृता सूत्रमिदमाविश्चक्रे। वस्तुतः प्रत्येकब्रह्मांडे तद्ब्रह्माण्डनायकरूपेण त्रिमूर्तिपदवाच्याः सगुणब्रह्मस्वरूपा एव। दर्शनशास्त्रेणैतेन श्रीभगवतः स्वरूपम् एतद्दर्शनस्थानान्तरे अतिविस्तरेण प्रतिपादितं त्रिप्रकारकम् अध्यात्माधिदैवाधिभूतमिति। सर्वव्यापकं गुणातीतमद्वैतभावापन्नं ब्रह्मैवाध्यात्मस्वरूपम् स्वेक्षणशक्त्या प्रकृतिं कार्यकारिणीं विदधत्। अनन्तकोटिब्रह्माण्डनायकः सगुणब्रह्मस्वरूपो मायाधीश्वर ईश्वर एव अधिदैवनाम्नाऽभिहितः। प्रवाहरूपतोऽनाद्यनन्तब्रह्माण्डानां समूह एव विराडित्यभिधीयते। एतेषां त्रयाणां भावानां स्वरूपसामञ्जस्यं प्रकुर्वन्तः सगुणत्वप्रतिपादकाः प्रत्येकब्रह्माण्डेऽधिनायकत्वमनुतिष्ठन्ति, त एव त्रिमूर्त्तयः। प्रत्येक ब्रह्माण्डे त्रिमूर्तिं व्यतिरिच्य कश्चिदन्यः सगुणब्रह्मस्वरूपो नास्ति। एकस्य ब्रह्माण्डस्य अध्यात्माधिदैवाधिभूतनामकस्वतन्त्रविभागत्रयनायकाः ऋषयो देवाः पितरश्च त्रिमूर्तिवशंवदा एव त्रिमूर्तिनिदेशाधीनाः सन्तः स्वं स्वं कार्यकलापमनुतिष्ठन्ति। किमन्यत् ऋषयो देवाः पितरश्च त्रिमूर्त्त्यङ्गभूता एवेत्यत्र न सन्देहलेशः। सगुणपञ्चोपासनामनुसृत्य विष्णुशिवदेवीगणपतिसूर्याख्या लोकाश्चापि त्रिमूर्त्तिलोकेष्वन्तर्भवन्ति। त एव त्रिमूर्त्तयः पञ्चोपासनानुसारेण यस्य भक्तस्य यादृशी उपासना भवति तस्मै तद्रूपेणैव दर्शनं दत्वा तं भक्तं कृतार्थयन्ति। वेदेषु पुराणादिशास्त्रेषु च अनन्तकोटिब्रह्माण्डप्रसविन्याब्रह्मशक्तेर्महामायायाः परब्रह्मस्वरूपस्य परमेश्वरस्य वर्णनं समुपलभ्यते। तयोरपि प्रत्येकब्रह्माण्डकार्यकालापस्त्रिमूर्त्तिद्वारैव सम्पाद्यते। श्रीभगवान् स्वयमेव निजमुखेनेत्थमाह—

आददे सगुणं रूपं तिस्रस्ता एव मूर्त्तयः।
प्राधान्यं सर्वदेवेषु धरन्त्योऽलं भवन्ति ते॥
ब्रह्माण्डे किल प्रत्येकं मुख्या देवा न संशयः।
आवहन्तस्त्रिदेवाख्यौ प्राशस्त्यं यान्ति सर्वथा॥
अस्य मूर्तित्रयस्यास्ते प्रतिब्रह्माण्डवर्त्तिनः।
नैव भेदो मया सार्द्धं वस्तुतः कश्चिदप्यणुः॥
एतदेवाधिदैवं हि मुख्यं मूर्त्तित्रयं मम।
प्रोच्यते पितरो विज्ञैः प्रतिब्रह्माण्डमीश्वरः॥३३॥

प्रसङ्गाद्देवयोनिवैशिष्ट्यमुच्यते—

## एतेषामबाह्यप्रत्यक्षगोचरत्वम् ॥ ३४ ॥

एतेषां देवानाम् बाह्यप्रत्यक्षगोचरत्वं नास्ति, देवा बाह्यप्रत्यक्षगोचरा न भवन्तीत्यर्थः। सहजो मानवो दैव-

श्चेति पिण्डस्त्रिविधः। यद्यपि सहजमानवपिण्डयोः परस्परं सुमहान् भेदः, किन्तु सहजपिण्डधारिणाम् उद्भिज्जस्वेदजादिजीवानां मानवदेहधारिणां जीवानाञ्च शरीराणि पार्थिवतत्त्वप्रधानत्वात् बाह्य ( लौकिक ) प्रत्यक्षगोचराणि। परन्तु दैवपिण्डेषु तत्त्वान्तरप्राधान्यात् लौकिकप्रत्यक्षगोचरत्वं न भवति। अस्मादेवहेतोर्दैवपिण्डानां बाह्यप्रत्यक्षत्वं न भवति। त्रयाणामप्येतेषां पिण्डानां नामलक्षणविषये स्मृतिशास्त्रे इत्थं समुपवर्णितमुपलभ्यते—

सहजो मानवो दैवो जीवपिण्डस्त्रिधा मतः।
मर्त्येभ्यश्चेतरे निम्ना भूतसंघाश्चतुर्विधाः॥
यैस्तु कर्मफलं पिण्डैर्भुञ्जते सहजा हि ते।
मर्त्त्योपयुक्तपिण्डा हि कथ्यन्ते मानवाभिधाः॥

दैवपिण्डाश्च ये व्याप्ता भुवनानि चतुर्दश।
वर्त्तन्ते पितरो दैवभोगायतनरूपिणः॥
त्रिविधा एव नन्वेते वर्त्तन्ते पाञ्चभौतिकाः।
उपादानेषु किन्त्वेषां प्रभेदो वर्तते महान्॥

रीतिभिः सहजाभिर्वै पिण्डास्ते सहजाभिधाः।
निर्मीयन्त उपादानैः पार्थिवैरेव केवलैः॥
सूक्ष्मैर्दैवैरुपादानैर्यथा योग्याधिकारतः।
निर्मीयन्ते न सन्देहो दैवाः पिण्डाः पृथग्विधाः॥
प्रकृत्याऽलौकिकी दैवी शक्तिस्तत्र विराजते।
नैवात्र विस्मयः कश्चित्संशयो वा विधीयताम्॥
भवद्विशिष्टसाहाय्याल्लब्धानां किन्तु भूतिदाः।
पिण्डानां मानवीयानां वैलक्षण्यं किमप्यहो॥
एते शक्तिविशेषाणां वर्तन्ते पितरो ध्रुवम्।
आकर्षणोपयोगित्वाच्चतुर्वर्गफलप्रदाः॥
निःश्रेयसफलोत्पन्नकारिणो विटपस्य हि।
मानवीयो हि पिण्डोऽयं बीजमास्ते न संशयः॥३४॥

**अन्यथात्वमपि नैमित्तिकरूपाणाम् ॥३५॥**

नैमित्तिकरूपाणां देवसम्बन्धिनाम् अन्यथात्वमपि अर्थात् प्रत्यक्षगोचरत्वमपि भवतीत्यर्थः। पूर्वसूत्रे पूज्यपादेन महर्षिणा सूत्रकारेण देवनित्यस्वरूपाणामबाह्यप्रत्यक्षगोचरत्वं संसाधितम्। अत्र जिज्ञासुः शंकते—ननु शास्त्रेषु बहुत्र देवानां प्रत्यक्षगोचरत्वमपि निभाल्यते। वस्तुतो देवदर्शनसाधारणमानवैरपि क्रियते तर्हि किं तेऽपि योगदृष्टिसम्पन्नाः? एतादृश शंकासमाधानार्थमेव महर्षिः सूत्रकारः समाधत्ते—यत् कस्मिंश्चिन्निमित्ते समुपस्थिते स्थूलदृष्टिगोचरयोग्यमपि रूपं देवा गृह्णन्ति।

तथाहि—

एवं समाराधयतोस्त्रिभिर्वर्षैर्यतात्मनोः।
परितुष्टा जगद्धात्री प्रत्यक्षं प्राह चण्डिका॥
यत्प्रार्थ्यते त्वया भूप त्वया च कुलनन्दन।
मत्तस्तत्प्राप्यतां सर्वं परितुष्टा ददामि तत्॥

श्रुतिरपि प्राह—

"उपह्वरे गिरीणां संगमे च नदीनां धिया विप्रो अजायत।

रूपं रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परिस्वाम्। त्रिर्यद्दिवः परिमुहूर्त्तमगात्स्वैर्मन्त्रैरनृतुपा ऋतावा इति॥ ३५॥

किमत्राप्येक्ष्यमित्युच्यते—

**तत्र श्रद्धा कृपा चापेक्ष्ये ॥ ३६ ॥**

तत्र देवानां प्रत्यक्षगोचरत्वे साधकस्य श्रद्धादेवकृपा चेत्युभेऽपि अपेक्ष्ये, श्रद्धाकृपयोरुभयोरेवापेक्षेत्यर्थः। देवानामलौकिकप्रत्यक्षगोचरस्वरूपदर्शने किमपेक्ष्यमिति प्रश्नस्योत्तरे सूत्रकृता पूज्यपादेन महर्षिणा प्रोच्यते यदत्र साधकान्तःकरणस्याविर्भूता श्रद्धा देवानां कृपा चाऽपेक्ष्ये भवतः। योग्यमाधारमन्तरेण कदाप्या-

धेयस्य स्थिरता नास्ति, अन्तःकरणस्योन्मुखतया विना तादृशपदार्थस्य दर्शनमसम्भवम्। दैवीं सम्पत्तिं नाधिगतवतः पुरुषस्य देवध्यानं न सम्भवति। श्रद्धामन्तरेण न भवत्युपासनायां प्रवृत्तिः। साधकस्य मनसि श्रद्धाया उदयेनोपासनया देवसान्निध्यमवाप्यते। सर्वत्रापि साधने शास्त्रकारैर्विशिष्य श्रद्धाया एव स्थानं दत्तम्। श्रद्धया विना कुत्रापि साधनमार्गे समुन्नतिरसम्भवा। अत्र विषये शास्त्रकारैराज्ञप्तम्।

तथाहि—

आदौ श्रद्धा ततः साधु संगोऽथ भजनक्रिया।
ततोऽनर्थनिवृत्तिः स्यात्ततो निष्ठा रुचिस्ततः॥
अथासक्तिस्तथा भावस्ततः प्रेमामृतोदयः।
रतिर्भवति देवेषु क्रम एष सनातनः॥

साधकेषु देवेषु च, समष्टौ व्यष्टौ च सर्वत्रैव पञ्चकोषा व्याप्नुवन्ति। सुतरां श्रद्धया साधको मनोमयकोषसाहाय्येनाचिरेणैव देवसान्निध्यमधिगच्छति। श्रद्धयैवाधारस्वरूपं साधकस्यान्तःकरणं देवदर्शनोपयोगित्वमासादयति। सैव साकं देवदर्शने प्रवर्त्तयति। एतयैव साधकस्यान्तःकरणं परिपूतं भवत् क्लिष्टवृत्तीरपास्याक्लिष्टवृत्तीनामुदयेन दैवीसम्पत्तिरुदयति। अत एतदभ्युपगन्तव्यमेव यत् श्रद्धयैव साधके देवदर्शनयोग्यता समुत्पद्यत इति। अन्यच्च देवानां लौकिकप्रत्यक्षगम्यशरीरग्रहणावसरे विशिष्टाया दैवशक्तेः प्रयोग अत्यावश्यको भवति। अत्रोपास्यदेवदयैव हेतुः। कदाचित् एतदपि परिदृश्यते यत् केवलमुपासक एव देवदर्शनमधिगच्छति, न्यान्यः। एतदन्तराय कारणं किमिति शङ्कां समाधत्ते—यत्र दैवकृपायाः प्राधान्यं तत्र श्रद्धाया गौणत्वम्, यत्र च श्रद्धायाः प्राधान्यं तत्र दैव्याः कृपाया गौणत्वमवधेयम्। अतः कारणात् उपासको हठात् देवान् प्रकटीकर्त्तुमर्हति। सुतरां सिद्धमेतद् यत् श्रद्धाकृपयोः सद्भावात् देवानां बाह्यप्रत्यक्षं लौकिकेन्द्रियग्रहणयोग्यं नैमित्तिकं स्वरूपं प्राकट्यमवाप्नोति॥ ३६॥

देवापेक्षया पितॄणां वैशिष्ट्यं व्यनक्ति—

**पितरो भूसम्बन्धा आधिभौतिकसम्बन्धात्॥३७॥**

अधिभूतस्य भावमाधिभौतिकं तत्सम्बन्धात् पितरो भूर्लोकसम्बन्धाः, भोर्लोकेन सम्बन्धो येषां तथाभूताः संज्ञातव्याः। ऋषिभिरध्यात्मजगतः, देवैरधिदैवजगतः, पितृभिश्चाधिभूतराज्यस्य सम्बन्धो वर्त्तत इति निवेदितपूर्वम्। अत आधिभौतिकजगत्पालकानां पितॄणां सम्बन्धो भूर्लोकेन साकं स्वतः सिद्धः। अधः सप्तसु लोकेषु ऊद्ध्वस्थितेषु चापि सप्तसु पितॄणां निवास इति सप्रमाणं पूर्वमेव निवेदितम्। ऊद्र्ध्वस्थितेषु देवानां, अधःस्थितेषु असुराणां पितरो निवसन्ति। यदा किल देवानां असुराणां चावतारा मृत्युलोकेऽत्राविर्भवन्ति, तदैव ते मृत्युलोके उभयेषां साहाय्यमाचरन्ति। अन्यथा एतेषां सम्बन्धो मृत्युलोकेन सह नास्ति। मृत्युलोकसम्बन्धनिबन्धना भूर्लोकपितर एव विद्यन्ते। भूर्लोकीयाधिभौतिकक्रियासंरक्षण-सम्पादनादिकार्यं तद्द्वारैव सम्पद्यन्ते। निष्कर्षोऽयं यत् मृत्युलोकसम्बन्धयुक्ताः पितरो भूर्लोक एव निवसन्ति॥ ३७॥

पितृनिवासस्थानं निर्दिश्यते—

**तेषामावासः पितृलोके॥३८॥**

तेषां मृत्युलोकसम्बन्धयुक्तानां पितॄणामावासो मृत्युलोके वर्त्तते। वस्तुतः पितृलोको नाम भूर्लोकस्य सुखप्रदो लोकः स च स्वतन्त्रः। भूर्भुवःस्वरादयो ये ऊद्र्ध्वस्थिताः सप्तलोकाः सन्ति, तेषु भूर्लोकस्यैको विभागो मृत्युलोको द्वितीयस्तु पितृलोकः। भूर्भुवःस्वरादय उद्र्ध्वस्था उत्तरोत्तरं यथा सुखप्रदास्तथैव भूर्लोकस्य

सुखप्रदः पितृलोकः। सोऽयं प्रकारान्तरेण स्वर्ग एव। मृत्योः समनन्तरं पुण्यवन्तो नरा नैमित्तिकपितृस्वरूपाः सन्तः सुखभोगाय पितृलोकमुपढौकन्ते। मृत्युलोकसम्बन्धशालिनां नित्यपितॄणां तु शाश्वतिक आवासः पितृलोके वर्त्तत एवेति॥ ३८॥

भूर्लोकः कतिधा विभक्त इत्युच्यते—

**भूर्विभज्यते चतुर्धा तत्र सुखप्रदः पितृलोकः ॥३६॥**

यथा स्थूलस्यास्य मृत्युलोकस्य भूगोलशास्त्रमनुसृत्यानेके विभागाः सन्ति तथैव भूर्भुवःस्वरादीनां सप्तोर्ध्वलोकानाम् अतलवितलसुतलादीनामधोलोकानां बह्वो विभागाः सन्ति। यद्यपि तत्तल्लोकान्तर्विभागास्त्रिकालदर्शिनां महर्षिणां योगशक्त्या प्रत्यक्षगोचरास्तथापि तैस्तद् वर्णनमनावश्यकमाम्नातम्। दैवसम्पत्प्रवणा मानवा उग्रकर्माणः सप्तसूर्ध्वलोकेषु आसुरसम्पत्सम्पन्नाश्च सप्तस्वधोलोकेषु व्रजन्ति। परन्तु साधारणमानवास्तु मृत्योः समनन्तरं भूर्लोकस्य कमप्येकं विभागमेवाश्रयन्ति। अस्मादेव कारणात् पूज्यपादो महर्षिः सूत्रकारो भूर्लोकस्यैव प्रधानानामन्तर्विभागानां वर्णनं कर्त्तुं प्रवृत्तः। यथा चात्र भगवान् पितॄनुद्दिश्य वक्ति—

मृत्युलोकस्य भूलोकान्तर्गतस्यास्ति विस्मृतिः।
महती नात्र सन्देहस्तद्विभागश्चतुर्विधः॥
एको वः पितृलोकोऽस्ति मृत्युलोको द्वितीयकः।
प्रेतलोकस्तृतीयोऽस्ति चतुर्थो नरकाभिधः॥
भूलोके भवतामेव लोकः स्वर्गः सुखप्रदः।
वस्तुतो नात्र सन्देहो विधातव्यः स्वधाभुजः॥
कर्मभूर्मृत्युलोकोऽस्ति कर्मक्षेत्रं च यं जगुः।
प्रेतलोकस्तथैवास्ति लोकोऽपि नरकाभिधः॥
दुःखदावानलज्वालापूरितौ भीषणावलम्।
प्रेतलोकोऽस्ति संश्लिष्टो मृत्युलोकेन सर्वथा॥
भुवर्लोकादयोऽन्ये वो लोकादूर्ध्वमवस्थिताः।
अस्त्यतश्चोर्ध्वलोकानामधोलोकव्रजस्य च॥
वैलक्षण्येन सार्द्धं वः सम्यक् परिचयो न हि।
यद्यप्यस्यां चतुर्लोक्यां धर्मराजानुशासनम्॥
वरीवर्त्त्यैव विस्तीर्णं नास्तिकोऽप्यत्र संशयः।
दृढं कुर्यात् चेद् यत्नं पितरो यूयमन्वहम्॥
यमदण्डस्य साहाय्यमन्तरेणैव तर्ह्यलम्।
कृतार्थो भवितुं सृष्टेः सामञ्जस्य च रक्षणे॥

उपर्युक्तप्रमाणैरे तत् सिध्यति यत् भूलोकचतुर्विधभागेषु पितृलोकः सुखप्रदः। स च मृत्युलोकवास्तव्यानां कृते स्वर्गसुखभोगोपयोगी दिव्यलोकः पितृलोकवासिनां पितॄणां मृत्युलोकाधिभौतिकसमुन्नतेः साक्षात् सम्बन्धः॥ ३९॥

प्रसङ्गादिदमुच्यते—

**शास्ता नरकप्रेतलोकयोर्यमो दण्डधारणात् ॥४०॥**

दण्डधारणेन हेतुना यमो नरकप्रेतलोकयोः शासकः। भूलोकेन सह यमराजस्य घनिष्ठसम्बन्धसत्वात् मानवलोकस्य नरकप्रेतलोकयोरपि शासक ईश्वरः। दण्डमहत्त्वविषये यथाचोक्तं शान्तिपर्वणि—

दण्डाः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति।
दण्डः सुप्तेषु जागर्त्ति दण्डं धर्मं विदुर्बुधाः॥
दण्डः संरक्षते धर्मं तथैवार्थं जनाधिपः।
कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते॥
दण्डेन रक्ष्यते धान्यं धनं दण्डेन रक्ष्यते।
एवं विद्वन्नुपादत्स्व भावं पश्यत्वलौकिकम्॥
राजदण्डभयादेके पापाः पापं न कुर्वते।
यमदण्डभयादेके परलोकभयादपि॥

परस्परभयादेके पापाः पापं न कुर्वते।
एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम्॥
दण्डस्यैव भयादेके न खादन्ति परस्परम्।
अन्धे तमसि मज्जेयुर्यदि दण्डो न पाल्यते।
यस्माद्दण्डाद्दमयत्यशिष्टान् दण्डयत्यपि।
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः॥

वस्तुतो यमराजस्य राजधानी भूलोकान्तर्गतैव। मानवानां दण्डदाता यम एवास्ति। अपराधिनैव दण्डोऽनुभूयते। पुण्यं पापं चेति कर्म द्विप्रकारकम्। पुण्येन कर्मणा पितृलोक-स्वर्गलोकादिप्राप्तिः, पापेन तु प्रेतनरकलोकाद्यधिगतिः। मृत्युलोकेऽत्र नैजं देहं परित्यज्य जीव आतिवाहिकं देहमासादयति। पुण्यात्मा जीवो देवदूतैः साधारणैः पुण्यमये पितृलोके नीयते। अधिकपुण्यशाली जीवस्तु भुवःस्वरादिपूच्चलोकेषु विशिष्टैर्देवदूतैरानीयते। पापात्मा दण्डाधिकारी जीवस्तु यमदूतैर्यमाज्ञया प्रेतलोके वा नरकलोकं नेनीयते। पापफलभोगप्रधानयोर्नरकप्रेतलोकयोर्विस्तृतवर्णनं स्मृतिशास्त्रेषु समुपलभ्यते। अतएव तादृशजीवानां दण्डविधाता यमराजः प्रेतनरकलोकयोर्व्यवस्थापक ईश्वरश्च। पापात्मानो जीवा यमस्यैवाज्ञया दुःखभोगाय प्रेतलोकं नरकलोकं वा प्रहीयन्ते॥ ४०॥

प्रसङ्गादिदमुच्यते—

**कालहेतुर्नरेशो यमेन्द्रकलावत्त्वात्॥ ४१॥**

यमश्च इन्द्रश्च तयोः कलावत्त्वादंशत्वात् नरेशो राजा कालहेतुः कालकारणमाम्नायते। अशुभानां दण्डभोगोपयोगिनामधीश्वरो यमधर्मराजः, शुभानां पुण्यफलभोगोपयोगिनां देवलोकानामधीश्वरो देवेन्द्रो विद्यते। मृत्युलोकीयमानवसमाजसुव्यवस्थां सुरक्षितवतो राज्ञः शरीरे देवराजस्येन्द्रस्य यमधर्मराजस्य च कला विराजते। समष्टिव्यष्टिसम्बन्धेन ब्रह्माण्डपिण्डौ समानशक्तिसंयुक्तौ। यथा किल ब्रह्माण्डसूक्ष्मलोकानां सुरक्षायां स्वान् स्वान् अधिकाराननुसृत्य धर्मराजो यमो देवराज इन्द्रश्च स्वस्वपदे प्रतिष्ठितौ तथैव स्थूलस्य मृत्युलोकस्यास्य शुभाशुभकर्मफलविधाननिरतो राजा वेदितव्यः। तस्य शरीरे उभयोर्धर्मराजदेवेन्द्रयोः कलानां विद्यमानता स्वतःसिद्धा। योग्यस्य धर्मपरायणस्य ससम्मानपुरस्कृतिः, अयोग्यस्य पापनिरतस्य च सापमानतिरस्कारदण्डविधानादिकं नरपतेः प्रधानकर्त्तव्यं भवति। तदनुसारत एव मानवेषु सामाजिकानुशासनव्यवस्था द्रढीभवति।

कर्मभूमिपरपर्यायो मृत्युलोकोऽयं ब्रह्माण्डस्यैतस्य केन्द्रभूतः। अस्मादेव मृत्युलोकतः प्रतिष्ठमाना जीवा देवलोकानसुरलोकान् वा प्रयान्ति। मनुष्या एव स्वस्वकर्मफलस्वरूपेण लोकान्तरमासाद्यासुरयोनिं वा सुरयोनिं वा प्रेतलोकं नरकलोकं वा प्रपद्यन्ते। सुतरां परमावश्यकीयस्य ब्रह्माण्डकेन्द्रभूतस्य मृत्युलोकस्यास्य शासनकर्त्तरि देवद्वयकलासद्भावोऽवश्यम्भावी। केवलमियानेवात्र भेदोऽवधेयो यद् दैवसम्पत्तियुक्ते राजनि देवराजस्येन्द्रस्य, आसुरसम्पत्संवलिते चासुरराजस्य कला विकसति। स्वधर्मविच्युते राजनि देवकलाया अभाव एव। स्मर्यतेऽत्र—

जङ्गमस्थावराणां च ह्यीशः स्वतपसा भवेत्।
यागभागग्रहणे दक्षो यथेन्द्रो नृपतिस्तथा॥
वायुर्गन्धस्य सदसत्कर्मणः प्रेरको नृपः।
धर्मप्रवर्त्तकोऽधर्मनाशकस्तमसो रविः॥
दुष्कर्मदण्डको राजा यमः स्याद् दण्डकृद् यमः।
शुचिरग्निरिव राजा रक्षकः सर्वभागभुक्॥
पुष्यत्यपां रसैः सर्वं वरुणः स्वधनैर्नृपः।
करैश्चन्द्रोऽऽह्लादयति राजा स्वगुणकर्मभिः॥
कोषाणां रक्षणे दक्षः स्यान्निधीनां धनाधिपः॥

अन्यच्च—

अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात्।
रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः॥
इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः॥
यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः।
तस्मादभिभवत्येष सर्वभूतानि तेजसा।

प्रमाणैरेतैरिदं सिध्यति यन्मृत्युलोकेऽत्र प्रजाव्यवस्थापके राजनि देवानामनेकेषां कला विराजन्ते। सूक्ष्मं दैवं जगदेव स्थूलजगच्चालकमिति प्रागेव निर्णीतम्। अतः कारणाद्देवा एव राजशरीरे कलारूपेणाविष्टाः प्रजासंरक्षणे प्रवर्त्तन्ते। सूत्रेऽत्र देवद्वयवर्णनमनुशासनप्राधान्यादवगन्तव्यम्। यतः पूर्वोक्तदेवेषु धर्मराजदेवराजावेवानुशासनप्रधानौ स्तः। अतोऽनुशासनमुख्यतया पूज्यपादो महर्षिः सूत्रकारो देवद्वयसम्बन्धमेव निर्दिष्टवान्। अतः कारणाद् राजशरीरे दैवीनां कलानामाविर्भावो विज्ञानसिद्धः। देवकलातिरोभावः कथमिति स्मृतावुच्यते—

यो हि धर्मपरो राजा देवांशोऽन्यश्च रक्षसां।
अंशभूतो धर्मलोपी प्रजापीडाकरो भवेत्।

सुतरां राजा यदा कामार्थौ गौणीकृत्य स्वार्थदृष्टिमवमत्य पुत्रवत्प्रजापालनतत्परस्तिष्ठति, तावद्देवराजपिण्डे देवकलाविकासः। स्वधर्मपरिपालनाभावात् कामार्थकृते प्रजाः पालयति नृपशरीरे देवकलातिरोभावपूर्वकमासुर्य्यः कला विकसन्ति। राजा सह कालस्य कीदृशो मद्दिष्टः सम्बन्ध इत्यत्र निम्ननिर्दिष्ट स्मार्त्तवचनानि प्रमाणानि—

कृतं त्रेतायुगं चैव द्वापरं कलिरेव च।
राज्ञो वृत्तानि सर्वाणि राजा हि युगमुच्यते॥
कलिः प्रसुप्तो भवति संजाग्रद्द्वापरं युगम्।
कर्मस्वभ्युदयस्त्रेता विचरंस्तु कृतं युगम्॥

महाभारते शान्तिपर्वणि मृत्युलोकेन सार्धं राज्ञोऽपूर्वः सम्बन्धो निरूपितस्तथाहि—

कालो वा कारणं राज्ञो राजा वा कालकारणम्।
इति ते संशयो माभूद् राजा कालस्य कारणम्॥
दण्डनीत्या यदा राजा सम्यक् कार्त्स्न्येन वर्त्तते।
तदा कृतयुगं नाम कालसृष्टं प्रवर्त्तते॥
ततः कृतयुगे धर्मो न धर्मो विद्यते क्वचित्।
सर्वेषामेव वर्णानां नाधर्मे रमते मनः॥
योगक्षेमाः प्रवर्त्तन्ते प्रजानां नात्र संशयः।
वैदिक्यानि च सर्वाणि भवन्त्यपि गुणान्विताः॥
ऋतवश्च सुखाः सर्वे भवन्त्युत निरामयाः।
प्रसीदन्ति नराणां च स्वरवर्णं मनांसि च॥
व्याधयो न भवन्त्यत्र नाऽल्पायुर्दृश्यते क्वचित्।
विधवा न भवन्त्यत्र कृपणो न तु जायते॥
अकृष्टपच्या पृथिवी भवन्त्योषधयस्तथा।
त्वक्पत्रफलमूलानि वीर्यवन्ति भवन्ति च॥
नाधर्मो विद्यते तत्र धर्मस्य तु हि केवलम्।
इति कार्त्तयुगान् धर्मानेतान् विद्धि युधिष्ठिर॥
दण्डनीया यदा राजा त्रीनंशाननुवर्त्तते।
चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्त्तते॥
अशुभस्य चतुर्थांशं त्रीनंशाननुवर्त्तते।
अकृष्टपच्या पृथिवी भवन्त्योषधयस्तथा॥
अर्धं त्यक्त्वा यदा राजा वृत्यर्थमनुवर्त्तते।
ततस्तु द्वापरं नाम सकालः संप्रवर्त्तते॥
अशुभस्य यदा त्वर्धं द्वावंशावनुवर्त्तते।
कृष्टपच्यैव पृथिवी भवत्यर्द्धफला तथा॥
दण्डनीतिं परित्यज्य यदा कार्त्स्न्येन भूमिपः।
प्रजाः क्लिश्नात्ययोगेन प्रवर्त्तेत तदा कलिः॥

कलावधर्मो भूयिष्ठं धर्मो भवति न क्वचित् ।
सर्वेषामेव वर्णानां स्वधर्माच्च्यवते मनः ॥
शूद्राः भैक्ष्येण जीवन्ति ब्राह्मणाः परिचर्यया ।
योगक्षेमस्य नाशश्च वर्त्तते वर्णसंकरः ॥
वैदिकानि च कर्माणि भवन्ति विगुणान्युत ।
ऋतवो न सुखाः सर्वे भवन्त्यमायिनस्तथा ॥
हसन्ति च मनुष्याणां स्वरवर्णमनांस्युत ।
व्याधयश्च भवन्त्यत्र म्रियन्ते च गतायुषः ॥
विधवाश्च भवन्त्यत्र नृशंसा जायते प्रजा ।
क्वचिद् वर्षति पर्जन्यः क्वचित्शस्यं प्ररोहति ॥
रसाः सर्वे क्षयं यान्ति यदा नेच्छति भूमिपः ।
प्रजाः संरक्षितुं सम्यग् दण्डनीतिसमाहितः ॥
राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् ॥
कृतस्य कारणाद् राजा स्वर्गमत्यन्तमश्नुते ।
त्रेतायाः कारणाद् राजा स्वर्गमत्यन्तमश्नुते ॥
प्रवर्त्तनाद् द्वापरस्य यथाभागमुपाश्नुते ।
कलेः प्रवर्त्तनाद् राजा पापमत्यन्तमश्नुते ॥
ततो वसति दुष्कर्मा नरके शाश्वतीः समाः ।
प्रजानां कल्मषे मग्नोऽकीर्त्तिं पापं च वन्दति ॥

उपर्युक्तप्रमाणप्रमेयनिष्कर्षोऽयं यत् सूक्ष्मदैवराज्य-केन्द्रशक्तिमनुशासनेन नियन्त्रितां विधातुं द्वावेव समर्थो एको देवराजो द्वितीयश्च यमः । एताभ्यामेव दैवराज्य-सुव्यवस्था देवेन्द्रेण तु देवासुररूपद्वन्द्वशक्तिसमतया साकं देवानां प्राधान्यम्, यमेन च दुःखभोगस्वरूप-कारागारसदृशप्रेतादिलोकसुव्यवस्थया जीवानां परम-कल्याणं सिध्यति । मृत्युलोकेऽत्र राज्ञोऽधिकारस्तादृश एव यतोऽसौ दण्डधरः । दण्डप्रभावतो राजा धर्मस्या-धर्मस्य वा मार्गे प्रजाः सञ्चालयितुमर्हति । सुतरां धर्म-मार्गे प्रजाः परिचालयतो नृपस्य शरीरेऽनेकेषां देवानां कलाः सम्भवन्ति । सर्वेष्वपि देवेषु पूर्वोक्त देवद्वयकला-प्राधान्यम् । यदि राजा केवलं धनलोभेन कामपरवशः स्वप्रजाः शास्ति, धर्ममुपेक्षते, तदा राजशरीरतो देव-कला नश्यन्ति, राक्षस्य आसुर्यश्च विकसन्ति । तदा सावर्थकामपरायणो नृपति प्रजाः विपथगामिनीः कुर्वन् ताश्च क्लेशभाजो विदधत् स्वयं चापि नरकं प्रपद्यते । अतएव शास्त्राणि राज्ञः कालकारणत्वमूचुः । धर्मात्मा नरपतिः प्रजा धर्ममार्गे परिचालयन् राज्ये शुभसमयो-दयस्य हेतुतां प्रपद्यते । अर्थकामपरायणोऽधार्मिको ऽसौ प्रजा अधर्ममार्गे परिचालयन् अशुभस्य काल-स्योदये हेतुः सन् प्रजाः दुःखाम्बुधौ निपातयति । अतो देवांशसम्भूतत्वाद् राजा कालस्य कारण-मिति ॥ ४१ ॥

## अतः कर्त्तव्यमस्य सर्वातिशायि ॥ ४२ ॥

अतः कारणात् अस्य राज्ञः सर्वातिशायि सर्वाभ्य-र्हितं कर्त्तव्यमास्ते । प्रत्येकब्रह्माण्डे स्थूलो मृत्युलोकोऽयं कर्मभूमित्वात् तत्केन्द्रं समाम्नातम् । भगवता निजमुखेन स्वयमुक्तम्—

विचित्रो मध्यवर्त्त्यस्ति मृत्युलोको विभूतिदाः ।
यथा गार्हस्थ्यमाश्रित्य पुष्टाः स्युः सर्वआश्रमाः ॥
मृत्युलोकं समाश्रित्य भुवनानि चतुर्दश ।
स्वातन्त्र्यं पूर्णमत्रास्ति कर्मसम्पादने यतः ॥
मृत्युलोकं प्रतिष्ठातो विद्यते निखिलोपरि ।
यद्यप्युत्पद्यते मोक्षफलमुद्यान उत्तमे ॥
मृत्युलोके न सन्देहस्तद्वीजं किन्तु लभ्यते ।

मृत्युलोकत एव जीवाः स्वकर्मानुसृत्य उद्ध्वर्स्थित-सप्तदेवलोकेषु, अधःस्थितसप्तासुरलोकेषु च प्रयान्ति तांश्च परिपोषयति, मानवा एव कालान्तरे देवा असु-राश्च जायन्ते । प्रेतलोके, नरकलोके, पितृलोके वा मृत्यो-

रनन्तरमुपढौकन्ते। सुतरां ब्रह्माण्डे मृत्युलोकस्य सर्वोपरि दायित्वमास्ते। अन्यच्च मृत्युलोकस्य शासको नरपतिरतएवास्य कालकारणत्वम्। तिरस्कारपुरस्कारशक्तिशालित्वाद् राजा समाजनिर्माणस्योत्तरदायित्वं भजते, पूर्णरूपेण राजनि दण्डाधिकारसद्भावादसौ धार्मिकीरधार्मिकीर्वा प्रजाः कर्त्तुं समर्थः। स एव तिरस्कारपुरस्कारदण्डादिसाहाय्येन प्रजा निवृत्तिपरायणा विषयविरागिनीः, प्रवृत्तिमार्गसम्पन्ना विषयलोलुपा वा विधातुमर्हति। राजनि तादृशी नित्या शक्तिस्तिष्ठति, यथाऽसौ स्वप्रजासु कामार्थपरायणां दृष्टिमुत्पाद्य प्रजा नरकगामिनीर्विदध्यात्, किं वा धर्ममोक्षाधिकारमुद्भाव्य स्वीयं राज्यं स्वर्गतोऽपि समुन्नतं कुर्यात्। फलतो राजनि सर्वविधशक्तिविद्यमानतया तस्य दायित्वं सर्वोपरि विद्यत इत्यत्र न सन्देहः॥ ४२॥

दैवक्रियाप्रसङ्गेन ब्रह्माण्डकल्याणमुच्यते—

**देवासुरशक्त्योर्विश्वशिवदं सामञ्जस्यम्॥४३॥**

देवासुरशक्तिसामञ्जस्यमेव विश्वकल्याणकरम्। इयं सृष्टिर्द्वन्द्वमूलिका। प्रकाशान्धकारौ, शीतोष्णे, उत्पत्तिनाशौ, जडचेतनौ इत्यादिषु अन्यत्रापि सृष्टिप्रपञ्चे द्वन्द्वमेव परिदृश्यते। ब्रह्माण्डस्य द्वन्द्वमूलकत्वात् तदीयानि चतुर्दशभुवनान्यपि द्वन्दमूलकान्येव। अतः कारणादेव ऊर्ध्वस्थितेषु सप्तभुवनेषु देवानाधःस्थितेषु सप्तभुवनेषु असुराणां निवासो भवति। सत्वप्रधाना देवाः तमःप्रधाना असुराश्च। ब्रह्माण्डस्येव पिण्डस्येव प्रबन्धसम्बन्धः। ब्रह्माण्डे यथा देवासुरविभागस्तथैव, मनुष्यान्तःकरणेऽपि अक्लिष्टाक्लिष्टवृत्योः, सत्वतमः प्रधानयोः पुण्यपापयोः धर्माधर्मवृत्योरपि व्यापकत्वमास्ते। सूक्ष्मेषु दैवलोकेषु यथा देवासुरसंग्रामो यथासमयं प्रचरति, असुराश्च यथा सदैव दैवराज्यमधिकर्त्तुं चेष्टन्ते, तथैव मानवीय मनोराज्यमधिकृत्य तत्र स्थिता दैवीर्वृत्तीरपास्या सुरा असुरीर्वृत्तीरभिवर्धयितुमीहन्ते। एवं हि ब्रह्माण्डे पिण्डे च देवासुरसंग्रामसद्भावः स्वतः सिद्धः अस्मादेवकारणान्मानवान्तःकरणे पुण्यपापवृत्तीनाम्, सत्वगुणतमोगुणयोः, आत्मोन्मुखविषयोन्मुखप्रवृत्योश्च सदैव सत्ता निभाल्यते। एतदेव देवासुरसंग्रामस्वरूपम्।

वस्तुतो मृत्युलोकेऽत्र मानवपिण्डो देवासुरसंग्रामदुर्गरूपो वेदितव्यः। दुर्गमिमं कदापि देवाः कदाचिदसुरा अधिकुर्वते। यदा असुराः समधिकदुर्गानधिकुर्वन्ति तदा मृत्युलोकेऽत्र आसुरः काल आसुरं राज्यं च विस्तृतिमापद्यते। तदानीं राजानः प्रजाश्चासुरभावसम्पन्ना भवन्ति। कारणेनैतेन दैव्यः सम्पत्तयो विनाशमायान्ति, पुनश्च देवा ऋषिदेवतावतारे सहाय्येन पृथिव्यामत्र दैवभावं विस्तारयन्तो भावमासुरं दूरयितुं सामर्थ्यभाजो भवन्ति। कदाचिच्चासुरावताराधिक्येनासुरशक्तिः संवर्धते, तदानीं देवानामसामर्थ्यात् भगवान् स्वयमेवाविर्भूय दैवीं वासनां परिपूरयन् सृष्टिसमन्वयं विधत्ते। तथैव यदा च देवा भोगपरायणाः स्वीयं तपो नाशयन्ति, असुराश्च तपःशालिनो जायन्ते तदानीं देवलोके तीव्रवेगेन देवासुरसंग्रामः प्रचरति। प्रथमं भूलोकं, ततश्च भुवर्लोकं, ततो नु स्वर्गलोकमसुरा अधिकुर्वते, तदा च देवराज्यस्यासुराक्रान्तत्वात् ब्रह्माण्डे समन्वयभावराहित्यात् भगवन्स्वयमवतीर्यासुरपराभवं विधत्ते। एतादृशदेवासुरसंग्रामवर्णनं वेदेषु पुराणेषु च बहुत्र समुपलभ्यते। तथाहि—

ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षान्तामस्माकमेवायं विजयोऽस्माकमेवायं महिमेति ”

"द्वयाह प्राजापत्या देवाश्चासुराश्च ततः कनीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्द्धन्त।" इतिवेदे।

स्मर्यते चापि—

युद्धे देवासुरे जाते क्वाचित्केऽपि कदाचन।
तयोर्निवासभूम्योः स्यात् कदाचित्को विपर्ययः॥

इदमत्र रहस्यमवधेयं यत् सत्त्वप्राधान्यात् देवा नासुरराज्यमाक्रामन्ति। अन्यच्च देवराजं निर्जित्यापि असुरराजस्तदनुयायिनश्च तृतीयोद्ध्वेलोकान्नोपरि गन्तुमर्हन्ति। एतादृशसम्भावनायां सत्यां देवैर्भगवतः साहाय्यमासाद्यते। सृष्टिसामञ्जस्य सुरक्षाया गूढविज्ञानमेवैतद्रहस्यमवधेयम्। यदा च देवाः स्वलोकमधिकृत्य दैवकार्यमनुतिष्ठन्ति, यदा वा असुराः स्वलोकमधितिष्ठन्तः स्वकीयं कार्यसम्पादयन्ति, तदैव सृष्टिसामञ्जस्य रक्षा सम्पद्यते। अन्यथा यथा ऋतुविपर्ययेन सृष्टिसामञ्जस्याभावात् दुर्भिक्षमहामारीप्रभृतिद्वारा सृष्टिसुव्यवस्थाया अभावः सम्पद्यते, तथैव देवासुरसंग्रामे देवपराजयेन असुराणां विजयेन समस्तसृष्टिव्यवस्था विगुणायते। सुतरां सुसिद्धमेतद् यत् देवासुरस्वरूपद्वन्द्वशक्तिसमन्वयेनैव समस्तस्यापि विश्वस्य मंगलं सम्पद्यते॥ ४३॥

प्रसङ्गादुच्यते—

## राजभवनमन्तिमे तमः प्राबल्या-
## दसुराणाम् ॥४४॥

तमोगुणस्य प्राधान्यात् असुराणां राजधानी अन्तिमे सप्तमे ह्यधोलोके तिष्ठति। सृष्टिसामञ्जस्य रक्षणमेवात्र कारणम्। यद्यप्यतल-वितल-सुतल-तलातल-महातल-रसातल-पातालेषु सप्ताधोलोकेष्वेवासुराणां वासः, किन्तु आसुरप्रजानां तमोगुणप्राधान्यात् सप्तमेऽधोलोके ह्येवासुरराजधानी विराजते। त्रिगुणहेतुत्वेन बुद्धेस्त्रैविध्यादनुशासनमपि त्रिविधमगवन्तव्यम्—योगानुशासनम्, शब्दानुशासनम्, राजानुशासनं चेति। त्रिविधबुद्धिविषये भगवता निजमुखेनैव गीतोपनिषदि स्वयमुक्तम्। तथाहि—

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी॥
यया धर्ममधर्मं च कार्यं चाकार्यमेव च।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी॥
अधर्मं धर्ममिति या मन्यते तमसावृता।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी॥

त्रिविधां बुद्धिमनुसृत्य अनुशासनमपि त्रिविधं स्मर्यते—

त्रिविधा बुद्धयो भान्ति यतो भिन्नागुणैस्त्रिभिः।
ततोऽनुशासनान्यासां त्रिविधानि श्रुतावपि॥
तामसीं बुद्धिमाप्तानां पुंसां राजानुशासनात्।
समाजराजदण्डाभ्यां व्यवस्थां विहिता श्रुता॥
धर्मराजस्य शक्तिः स्यात् दण्डः साक्षादिति स्मृता।
रजो गुणाभिभूतानामपि शब्दानुशासनम्॥
आचार्यं वेदयो राज्ञा भेदात्तद् द्विविधं मतम्।
योगानुशासनं ज्ञेयं सात्त्विकेष्वधिकारिषु॥
परोक्षापरोक्षयोर्भेदात् द्विविधं तच्च कीर्त्तितम्।
तथानुशासनत्यागो निषिद्धं शास्त्रसम्मतः॥

सुतराम् आसुरप्रजासु तमोगुणप्राधान्यात् तामसिकबुद्धीनामाधिक्यम्। असुरलोकेषु राजानुशासनस्यावश्यकत्वात् अन्तिमेऽधःस्थिते पाताललोके आसुरराजधानी सद्भावो विज्ञानसिद्धः सप्तमेऽधोलोकेऽसुरराजस्य निवासः, अतोऽसौ सप्तानामपि लोकानामनुशासनकार्यसञ्चालनमुचितमनुतिष्ठन् असुरान् स्ववशे स्थापयति। एतदेवासुरराजधान्याः सप्तमे लोके स्थितेर्दार्शनिकं रहस्यमवधेयम्॥ ४४॥

प्रसङ्गत उच्यते—

**स्वर्देवराजस्य सत्वप्राधान्यात् ॥ ४५ ॥**

सत्वस्य सत्वगुणस्य प्राधान्यादाधिक्यात् देवराजस्य इन्द्रस्य राजधानीतिशेषः स्वर्लोके विद्यते। अतः तत्रत्येषु शब्दानुशासनस्य योगानुशासनस्य वा सद्भावः। ऋषिषु योगानुशासनस्यैव प्राधान्यम्। उपासनाप्रधाने षष्ठे, ज्ञानप्रधाने सप्तमे लोके च योगानुशासनस्य प्राधान्यमास्ते। अत एव कारणाद् ब्रह्मणो रात्रौ निम्नस्थितानि सप्तभुवनानि उपरि स्थितास्त्रयो लोकाश्चेति मिलित्वा दश भुवनानि विलयमुपगच्छन्ति। भगवतो विष्णो रात्रावेकादशलोकाः श्रीरुद्रस्य च रात्रौ द्वादशलोकालयमायान्ति। तदानीं कालेऽपि षष्ठः सप्तमो लोकश्च स्वस्वरूपे तिष्ठतः। अत एतादृशसमुन्नतज्ञानपूर्णलोके राजानुशासनस्य तु कथैव का? शब्दानुशासनस्यापि आवश्यकता नास्ति। अन्येषु समुन्नतेषु देवेषु पितृषु चापि नास्त्यावश्यकत्वं राजानुशासनस्य। तेषु प्रायशः शब्दानुशासनस्याश्रयेणैव सर्वे गन्त्यन्यपथमनुसरन्ति। केचिदतिशयसमुन्नताश्च योगानुशासनमाश्रयन्ति। एतस्मादेवकारणात् देवेषु सर्वेष्वपि लोकेषु राजानुशासनं नास्ति। केवलं भूर्भुवःस्वर्नामकेषु त्रिष्वेव लोकेषु राजानुशासनस्यास्त्यावश्यकत्वम्। अत एव देवराजस्य तृतीये स्वर्लोके राजधानी विद्यते। असुरा अपि स्वतपःप्रभावात् स्वर्लोकं यावदधिकुर्वन्ति। ते नाग्रे गन्तुमर्हाः ॥ ४५ ॥

स्वर्लोकादुपरि चतुर्षु लोकेषु दण्डाभावात् कथं सुव्यवस्था संस्थापनमिति समाधत्ते—

**तदूर्ध्वानामनपेक्ष्यो राजदण्डः ॥४६॥**

तदूर्ध्वानां स्वर्लोकादुपरिस्थितानां चतुर्णां लोकानां राजदण्डो नापेक्षितः। दण्डमन्तरेण प्रजा धर्ममार्गमनुसर्त्तुं नार्हतीति पूर्वमेव निर्णीतम्। इदमपि सिद्धम् यत् देवराजस्य सम्बन्ध उपरिस्थितेषु चतुर्ष्वपि लोकेषु न विद्यते। कथं तर्हि महर्जनप्रभृतिषु लोकेषु सुव्यवस्थेति शङ्कां समाधातुमेव पूज्यपादो महर्षिः सूत्रकारः सूत्रमेतदाविश्चकार। सात्त्विकीं राजसिकीं तामसिकीं बुद्धिं चानुसृत्य त्रिविधाधिकारिणां कृते यथाक्रमं योगानुशासन—शब्दानुशासन-राजानुशासनानामास्ते [प्रयोजनीयता। परोक्षापरोक्षानुभूतिभेदेन योगानुशासनस्य भेदद्वयम्। गुरुशास्त्रनिर्देशेति भेदेन शब्दानुशासनस्यापि भेदद्वयम्। राज-समाजदण्डभेदेन राजानुशासनस्यापि भेदद्वयमास्ते। तामसिकबुद्धिसम्पन्नप्रजां धर्ममार्गे परिचालयितुं राजसमाजदण्डयोरावश्यकत्वं भवति, येनासौ भयभीता धर्ममार्गमाश्रयते। आसुरलोकेषु प्रायः सर्वत्रैव न्यूनाधिकरूपेण राजदण्डस्यास्त्यपेक्षा। भूलोके प्रेत-नरक-मृत्युलोकेषु राजानुशासनस्यास्ते प्रयोजनीयत्वम्। भूर्लोकस्य चतुर्थे पितृलोके भुवःस्वर्लोकयोश्च न्यूनाधिक्येन राजानुशासनस्यावश्यकता विद्यते। योगानुशासनशब्दानुशासनयोरधिकारवन्तोऽपि एषु लोकेषु दृश्यन्ते। यतो लोकेष्वेषु ऋषयो देवाश्च निवसन्ति। परन्तु महर्जनतपःसत्येषु क्रमशः समुन्नतात्मानो निवसन्ति, ते च शब्दानुशासनं योगानुशासनं चानुसरन्ति। नैवेषु राजसमाजानुशासनयोरावश्यकतेति ॥ ४६ ॥

प्रसङ्गतो ब्रह्माण्डस्योन्नततमलोकानां महिमानमाचष्टे—

**त्रिमूर्त्तिरात्र्याऽपि न विलीयते लोकद्वयमत्युच्चैर्ज्ञानोपास्त्याकरत्वात् ॥ ४७ ॥**

त्रिमूर्त्तीनां ब्रह्मविष्णुरुद्राणां रात्र्या निशाऽपि अत्युच्चैर्ज्ञानोपास्त्योराकरत्वात् खनित्वात् लोकद्वयं तपः सत्यं

चेति लोकद्वितयं न विलीयते न विलयमुपगच्छतीत्यर्थः। चतुर्दशभुवनेषु ऊर्ध्वसप्तलोकाः श्रेष्ठास्तेष्वपि लोकद्वयमन्तिमं श्रेष्ठतम् विज्ञेयम्। भगवतो रुद्रस्यापि रात्रावेतल्लोकद्वयं न प्रणश्यति अत्युन्नतत्वात्।

अस्य ब्रह्माण्डस्य सगुणब्रह्मस्वरूपत्रिमूर्त्त्यायुर्विषये ज्योतिःशास्त्रमतं प्रागेवोक्तम्। सम्प्रति शास्त्रसम्मतमतमुच्यते, तथा च मेरुतन्त्रे—

एवं तस्या घटिकया वर्षमेकं परं स्मृतम्।
घटीशतमितं तस्या ब्रह्मा जीवति कीटवत्॥
ऋतुमात्रं हरिर्जीवेत् वर्षमेकं सदाशिवः॥

अन्यच्च—

'ब्रह्मा विष्णुदिने चैकः पतत्येवं वदन्ति ते॥'

वेदशास्त्रपुराणादिषु त्रिमूर्त्तिविषये एतत् प्रोक्तं यत् त्रिमूर्त्तिपदानि नित्यानि। त्रयाणामायुषि नूनमेव भेदः। ज्योतिष्-पुराण-स्मृति-तन्त्रपर्यालोचनेनैतद् विज्ञायते। त्रयाणां चैतेषामायुर्विषये मतभेदोऽपि लभ्यते। अगम्यसिद्धान्ते मतभेदः सृष्टिभेदेन ब्रह्माण्डभेदेन समाधेयः। तदायुषो न्यूनाधिक्ये सर्वत्रैकमत्यमेव।

सिद्धमिदं यद् ब्रह्मविष्णुरुद्राणामायुषि भेदो वर्त्तते। यद्यपि गौरवदृष्ट्या त्रयोऽपीमे सगुणब्रह्मस्वरूपा एव सन्ति। परमायुषो विचारेणेदं सिद्धान्तितं यदेकस्य विष्णोरायुषि अनेके ब्रह्माणः, रुद्रस्यायुषि च संख्यातीता विष्णवो ब्रह्मीभवन्ति। एवं यदि त्रयाणामायुषीयान् भेदस्तर्हि तद्रात्रावपि आकाशपातालवन्महदन्तरमित्यत्र कः सन्देहः? त्रयोपीमे ब्रह्मविष्णुरुद्राः स्वस्ववर्षमनुसृत्य शतायुषो भवन्ति। ब्रह्मण आयुर्विषये विष्णुसंहितायामुक्तम्, यथा—

"चतुर्युगसहस्रं कल्पः, स च पितामहस्याहः, तावती चास्य रात्रिः। एवं विधेनाहोरात्रेण मासवर्षगणनया सर्वस्यैव ब्रह्मणो वर्षशतमायुरिति।"

यदि पूर्वोक्तप्रमाणान्यनुसृत्य त्रयाणामायुषि महन्तरम्, तर्हि तेषां दिनमाने रात्रिमाने च सुमहदन्तरं स्वतः सिध्यति। त्रिमूर्त्तिषु प्रत्येकस्य रात्रौ प्रलयोऽवश्यम्भावी, ब्रह्मणे रात्रौ सम्पद्यमानस्य प्रलयस्य वर्णनं स्मृतिशास्त्रे निम्ननिर्दिष्टमुपलभ्यते—

चतुर्युगसहस्रान्ते सम्प्राते प्रतिवत्सरम्।
आत्मसंस्थाः प्रजाः कर्त्तुं प्रतिपेदे प्रजापतिः॥
कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम्।
दिव्यमेकं युगं ज्ञेयं तस्य एकादशश्च यः॥
मन्वन्तरं तु तज्ज्ञेयं ते तु यत्र चतुर्दश।
सकल्पो नाम वैकल्पस्तदन्ते प्रलयस्तु यः॥
सा ब्रह्मरात्री राजेन्द्र तस्यां शेतेऽम्बुजासनः॥
लीयन्ते हि त्रयोलोका स्तदा वै राजसत्तम।
नैमित्तिकस्तयोर्नाम दैनन्दिनमितीर्यते॥

ब्रह्मणो रात्र्या सह शतायुष्ट्वेन च साकं प्रलयवर्णनं किमित्युपलभ्यते। तत्र च भगवतो विष्णो रुद्रस्य रात्रेः शतायुष्ट्वस्य च वर्णनं कथं नोपलभ्यते? एतादृशशंकायाः समाधानमिदं यत् मृत्युलोकेन साकं मानवस्य सम्बन्धसत्वात् आवश्यकदेवलोकवर्णनं तत्प्रलयवर्णनं च नितरामावश्यकम्। अन्यच्च ब्रह्मण आयुषा रात्र्या च मृत्युलोके निकटसम्बन्धः। अतोऽपि ब्रह्मण आयुषो रात्र्याश्च वर्णनमुपलभ्यते, नान्ययोः। रजसोऽधिदैवो ब्रह्मा, सत्त्वस्य विष्णुः, तमसश्च रुद्र इति। एतेषामायुस्सु परस्परं भेदः। त्रयाणामायुषि भेदः सम्भवः। त्रयाणां पदानि तु नित्यानि। यदा एषामायुषि लघुत्वं गुरुत्वं च विद्यते, तर्हि एषां रात्रिषु चापि लघुत्वगुरुत्वसम्भावना भवितुमर्हत्येव, त्रयाणां रात्रिभेदस्तर्हि तस्य सृष्टिस्थितिप्रलयोपरि प्रभावोऽपि यथोचितरूपेण भविष्यत्येव। यदा ब्रह्मणो रात्रौ प्रलयस्तर्हि विष्णुरुद्ररात्रावपि प्रलयोऽवश्यम्भावी। इयानेव भेदो

यत् पद्मयोने रात्रौ अतलवितलादयः सप्ताधोलोकाः, उपरिस्थितेषु सप्तलोकेषु दिव्याख्यो लोकाश्चेति दशभुवनानि विलयमुपगच्छन्ति। एवं स्थिते सूत्रोक्तनिदानमनुसृत्य विष्णुरात्रौ एकादशलोकानाम्, रुद्ररात्रौ च द्वादशलोकानां लयः, सर्वोपरि स्थितयोः लोकयोर्द्वयोः स्वस्वरूपे सद्भावश्च विज्ञानसिद्ध एव। निष्कर्षोऽयं यत् विष्णुरात्रौ दशलोकाः पूर्वोक्ताः, महर्लोकश्चेति मिलित्वा एकादशलोकानां विलयः, रुद्ररात्रौ चैकमपरं जनलोकं च मिलित्वा द्वादशलोकानां लयो जायते। यदा चैतत् सिध्यति यत् सगुणब्रह्मस्वरूपाणां त्रिमूर्त्तीनां निशायामपि अन्तिमावूद्ध्वंस्थौ द्वौ लोकौ तपःसत्याख्यौ स्वरूपो तिष्ठतः, नानयोः कदापि रात्रि-प्रवेशस्तर्हि स्वीकर्त्तव्यमेवैतद् यत् ऊद्ध्वंतमयोर्द्वयोर्लोकयोः सत्वगुणस्य पूर्णो विकासस्तिष्ठति। अत एवोपासनाप्रधाने तपोलोके सामीप्य-सालोक्य-सारूप्याख्या मुक्तयः सम्भाव्यन्ते। सत्यलोकस्तु ज्ञानमयस्तत्र सूर्यमण्डलं भित्त्वा उग्रकर्माणो महात्मानः स्वस्वरूपमधिगत्य विमुच्यन्ते। अपि शब्दस्यैतत् तात्पर्यं यत् प्रत्येकब्रह्माण्डऽत्रिगुणभेदेन त्रिमूर्त्तिरूपाख्योऽपि देवा ईश्वरनिर्विशेषाः सगुणब्रह्मस्वरूपाः। यदि तेषां लोकेषु चापि रात्रिरभविष्यत्, तर्हि चतुर्दशभुवनेषु तमोगुणाच्छन्नता समभविष्यत्। परन्तु लोकयोर्द्वयोरनयो रात्रिरूपतमोगुणस्योदयेऽपि तावेतौ सर्वश्रेष्ठत्वात् तमोगुणविरहितावेव तिष्ठतः। एतदेव दिव्यलोकयोरेतयोर्विशिष्टं महत्त्वमवधेयम्॥ ४७॥

दैवराज्यप्रसङ्गेन ऋषिसम्वर्द्धनोपायो वर्ण्यते—

**ब्रह्मयज्ञादिभिः प्रोर्जिता ऋषयः॥४८॥**

ब्रह्मयज्ञादिभिः ऋषयः प्रोर्जिताः सम्वर्द्धिता भवन्ति। दैवराज्यस्य साधारणं ज्ञानमुदीर्य दैवराज्यसम्बन्धीयेषु त्रिषु विभागेषु अध्यात्मविभागाधिदैवस्वरूपाणाम् ऋषीणां संवर्धनस्योपायः प्रणिगद्यते। प्रत्येकविभागाधिदैवसंवर्धनविज्ञानप्रकाशनेन दैवस्य राज्यस्य मंगलं सम्पाद्यते। अतः पूज्यपादो महर्षिः सूत्रकारः ऋषियज्ञापरनामकं ब्रह्मयज्ञं व्याकरोति। ब्रह्मयज्ञसदृशेनान्यान्यधर्मसाधनेन ऋषयः संवर्ध्यन्ते। ऋषिप्रसादनोपयोगि दानधर्मादीनि बहून्यनेकानि धर्मकार्याणि सन्ति, यानि ब्रह्मयज्ञसहायकानि समाम्नायन्ते। आध्यात्मिकोन्नतिकराणि भूयांसि तादृशानि सत्कार्याणि सन्ति, येषां द्वारेण समष्टिरूपतो जगति ज्ञानज्योतिर्विकासमेति। यथा च स्मृतौ—

कायेन मनसाऽर्थेन विद्यावृद्धिमिहेच्छता।
यद्दानं दीयते सम्यक् ब्रह्मदानं तदीर्यते॥
स्थापनं पाठशालानां महाविद्यालयस्य च।
दुर्लभप्राक्तनानर्घ्यपुस्तकानां प्रकाशनम्॥
तथा विरचनं नव्यग्रन्थानामुपयोगिनाम्।
दानं च पुस्तकादीनां विद्यार्थिभ्योऽर्थपाठनम्॥
एवं लेखनशैलीनां हितबुद्ध्या प्रवर्त्तनम्।
ज्ञेयान्येतान्यपि ब्रह्मदानान्तर्भावितानि वै॥

सृष्टिमारभ्य लयपर्यन्तं स्थितिशालिन्या आर्यजातेर्यावन्तः सदाचारास्ते सर्वेऽपि वैदिकविज्ञानसम्मता अतिदूरदर्शिता परिपूर्णाश्च। आर्यसदाचाराणामेवेदं महत्त्वं यत् अध्यात्मिकोन्नतिकरप्रवाहस्य स्थैर्यं सम्पाद्य आर्याख्यां सदाचारशीलां मानवजातिं चिरजीविनीं विदधाति। सुतरां ब्रह्माण्डस्यैतस्य दैवजगत्संवर्धनकारी समीचीना रीतिरार्यजातेः सदाचारेषु भविष्यत्कालेऽपि प्रचरिष्यत्येवेत्यत्र न सन्देहलवोऽपि। यैः कर्मभिर्दैवजगतः सर्वविधाधिदैवसंवर्धनं सम्पद्यते, यैश्च धर्मसाधनैः दैवं जगत् परिपोष्यते, तानि समस्तान्यपि धर्मकार्याणि समस्तस्यापि ब्रह्माण्डस्य कृते परममङ्गलाधायकानीत्यत्र नास्ति सदेहलेशः। विशेषतश्च तैस्तैर्धर्मसाधनैर्दैवस्य

जगतो रक्षका सम्वर्ध्यन्ते। तेषां संवर्धनेन सम्पूर्णमपि ब्रह्माण्डं संवर्धितं जायते। एतादृशधर्मसाधनं महायज्ञशब्देनाख्यायते। उक्तं चापि शास्त्रेषु—

ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा।
नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत्॥
एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः।
अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भूतो नृयज्ञोऽतिथिपूजनम्॥
पञ्चैतांश्च महायज्ञान् न हापयति शक्तितः।

ब्रह्मयज्ञेन ऋषयः, देवयज्ञेन देवाः, पितृयज्ञेन पितरः, भूतयज्ञेन सर्वे जीवाः नृयज्ञेन मनुष्याः संवर्धितास्तृप्ताश्च जायन्ते। एते महायज्ञा भूतिकामैः परिपाल्या न कदापि परित्यक्तव्याः, अतएवैते सर्वतोऽभ्यर्हिताः समाम्नाताः। अतो वेदशास्त्रेषु अत्यावश्यकनित्यकर्मसु परिगणिताः। नित्यकर्मणामनुष्ठानेन न पुण्यलाभः। अननुष्ठानेन महतोऽपराधरूपपापस्याधिगमः, पञ्चस्वप्यत्र ब्रह्मयज्ञस्यैव सूत्रेणानेन सम्बन्धः। कर्त्तव्यबुद्धया निष्कामभावेन प्रतिदिने नियमतो वेदशास्त्राध्ययनानुशीलनेनैव ब्रह्मयज्ञः सम्पद्यते। "स्वाध्यायेनार्चयेद् ऋषीन्" इति वचनप्रामाण्यात्, ज्ञानप्रकाशकाधारभूतवेदशास्त्रानुशीलनेन ऋषयः संवर्ध्यन्ते। यतः किल ज्ञानविस्तृतिः अध्यात्माराज्ये चाधिपत्यम् ऋषिकार्यम्। अन्नेन मानवानामिव ज्ञानविस्तारेण ऋषीणां परिपुष्टिः। वेदशास्त्रोक्तव्यतिरिक्तं तपोदानयज्ञादिधर्माङ्गभूतज्ञानविस्तारविधा सेवासम्बद्धं सर्वमपि ब्रह्मयज्ञान्तर्भवति। एतद्द्वारेण ध्रुवमेव ऋषयः संवर्धिताः प्रसन्नाश्च भवन्ति इति "आदि" शब्दतात्पर्यम्। यत्र देशे मानवजातौ वा वेदशास्त्रोक्त पञ्चमहायज्ञानां प्रचारो नास्ति, तत्रापि ऋषिप्रसादलक्षणं परिदृश्यते। तत्रापि ज्ञानविभिन्नस्वरूपस्य विस्तृतिरवाप्यते। अतो ब्रह्मयज्ञसम्बन्धयुक्तेन विधेयान्तरेणापि ऋषयः प्रसीदन्ति। इत्यपि "अपि" शब्दतात्पर्यम्। ऋषिसमूहसम्वर्धनकर्मणि ब्रह्मयज्ञः प्रधानरूपः, अन्ये च ब्रह्मयज्ञसम्बन्धयुक्ता धर्मा गौणस्वरूपा इत्यवधेयमेव। विज्ञानमिदमन्यप्रकारेणापि बोधयति। ब्रह्माण्डीयचतुर्दशभुवनेषु ऋषीणां निवासः, सप्तोर्द्ध्वलोकेषु दैवेषु सप्ताधोलोकेष्वासुरेषु चापि यथोचितविविधश्रेणीनाम् ऋषीणां वासः, अतो देवानामिव ऋषीणामपि विभिन्नश्रेणयो भवन्ति। सुतराम् उक्तश्रेणीतारतम्यमनुसृत्य ब्रह्मयज्ञशब्दः "आदि" शब्दश्च विज्ञातव्यः। वस्तुतोऽध्यात्मलक्ष्योपेतानि शास्त्राणि ब्रह्मयज्ञेन साक्षात् सम्बन्धानि बन्धनानि। आध्यात्मिकलक्ष्यविहीनान्यान्यज्ञानप्रकाशकशास्त्रैः साकमपि "आदि" शब्दसम्बन्धो वेद्यः॥ ४८॥

ऋषिसंवर्धनफलमुच्यते—

**तथाविधा ज्ञानस्य वर्धकाः॥ ४९॥**

तथाविधाः संवर्धिता ऋषयो ज्ञानस्य वर्धका भवन्ति, यथा संसारेऽत्र प्रजाकरेण संवर्धिता राजानः सर्वप्रकारेण प्रजा रक्षन्ति, तथैव ब्रह्माण्डीयस्य अध्यात्मविभागस्य रक्षकाश्चालकाश्च ऋषयः केनापि मनुष्येण मानवजात्या वा ब्रह्मयज्ञद्वारा संवर्धिता भवन्ति, तदा नूनमेव ते प्रसीदन्तस्तस्य मनुष्यस्य मानवजातेर्वा तस्या आध्यात्मिकस्य कल्याणस्य कृते यथोचितरूपेण तन्मनुष्यान्तःकरणं तद्वंशे तस्यां मानवजातौ वा ज्ञानं प्रकाशयन्ति। स्मृतिरपि प्रोवाच—

स्वभावतः प्रसीदन्ति तेषु देवर्षयो ध्रुवम्।
अतोऽन्तःकरणेऽध्यात्मरहस्यस्य यथाक्रमम्॥
विकाशो जायते तेषां नाऽत्र कार्या विचारणा॥

ज्ञानराज्यसुव्यवस्थापनं ऋषिकार्यमिति पूर्वमेवोद्घुष्टम्। सुतराम् ऋषयः परिपुष्टास्तुष्टाः संवर्धिताश्च ध्रुवमेव स्वकर्त्तव्यं साधयन्तः तद्व्यक्तेर्मनुष्यसमाजस्य वाऽऽध्यात्मिककल्याणं साधयिष्यन्ति। इयानेवा भेदो यत् स्वश्रेणीमनुसृत्य ऋषयो ज्ञानं प्रकाशयन्ति। ऋषीणां श्रेणीविभागाः प्रागेव निर्दिष्टाः ॥ ४९ ॥

ऋषीणां श्रेणयोऽधिकाराश्च निरूप्यन्ते—

## सर्वत्राधिकारो ज्ञानवैचित्र्याद् ऋषीणाम् ॥५०॥

ज्ञानवैचित्र्यकारणात् ऋषीणां सर्वत्रैवाधिकारो वर्त्तते। ज्ञानस्य विस्तृतिर्विचित्रता चातिमहती। अतो हि ऋषीणां निवासः सर्वत्रविज्ञानसिद्धः। सूत्रेऽत्र सर्वत्रेति प्रतिपादित शब्दस्य चतुर्दशभुवनैः सह सम्बन्धः। भूर्भुवःस्वरादिपूद्ध्वर्वसप्तलोकेषु तलवितलादिषु सप्ताधोलोकेषु चापि विभिन्ना ऋषयः निवसन्ति। स्मर्यते चात्र—

वर्तन्ते पितरो यानि भुवनानि चतुर्दश।
ऋषीणामधिकारोऽस्ति सर्वथाऽक्षुण्ण एष्वलम्॥
ज्ञानराज्याधिदैवानामधिकारस्तथैव हि।
अस्ति व्याप्तः किलर्षीणां भुवनानि चतुर्दश॥

अन्यच्चापि—

हे सूताध्यात्मराज्यस्य चालका ऋषयो यतः।
तच्चतुर्दशलोकेषु गतिस्तेषामबाधिता॥

भूलोकान्तर्गतपितृलोके ऋषयो निवसन्ति। मृत्युलोकेऽत्र ऋषयोऽवतरन्ति। अतो भूलोकेऽपि ऋषीणां निवासः सिद्धः। पराविद्यासम्बद्धम् अपराविद्यासम्बद्धं चेति ज्ञानजनकशास्त्रस्य भेदद्वयमवधेयम्। आत्मानात्मविचारप्रधानः शास्त्रसमूहः, पराविद्या सम्बद्धः अन्यान्यलौकिकज्ञानसम्बन्धयुक्तं शास्त्रमपरया विद्यया सम्बद्धमवगन्तव्यम्। श्रुतावप्युक्तम्—

"द्वे विद्ये वेदितव्य इतिस्म।
यद् ब्रह्मविदो वदन्ति परा चैवापरा च॥

तत्रापरा ऋग्वेदो यजुर्वेदः, सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति, अथ परा यया तदक्षरमधिगम्यते॥ इति॥

भगवता निजमुखेनापि प्रोक्तम्। तथाहि—

मम सेवारता याश्च स्वरूपं प्रकृतेर्द्विधा।
विभक्तं विद्यते विज्ञा नात्र कार्या विचारणा॥
एका पराभिधा ज्ञेया द्वितीयाऽपरनामिका।
अपरानामिका जीवान् प्रकृतिर्मेऽखिलानलम्॥
गुणत्रयात्मके जाले स्वस्मिन्नाश्लिष्य मायया।
द्वन्द्वस्यानुभवं तैश्च कारयन्ती निरन्तरम्॥
स्वविलासात्मकं लीलामयं जनयते जगत्।
परा मे प्रकृतिर्धन्या साधकानां हृदम्बुजे॥
भृङ्गावली पराभक्तिं संनिवेश्य महर्षयः।
वीक्षयन्ती भयानां च गुणानां वैभवं मुहुः॥
द्वन्द्वातीतं पदं नीत्वा मामेनान् दर्शयत्यहो॥

उपर्युक्तप्रमाणैरिदमवगम्यते यत् परापरविद्ययोर्विस्तारः सुमहान्। प्रकान्तरेणापि विज्ञानमेतदवधेयं यत् पूर्वोक्तासु सप्तज्ञानभूमिषु यत् ज्ञानसम्बद्धं तत्सवन्धिशास्त्रं परया विद्यया सम्बद्धम्, सप्तस्वज्ञानभूमिषु यत् ज्ञानशास्त्रम् अन्यान्यानि लौकिकानि शिल्पपदार्थविद्यासम्बन्धीनि शास्त्राणि अपरया विद्यया सम्बन्धितानि बोद्धव्यानि। एतासां ज्ञानाज्ञानभूमीनां विवरणं प्रागेव प्रपञ्चितम्। यदि ज्ञानाज्ञानभूमीनां चतुर्दशभेदास्तदन्तर्गताश्चानेकाः श्रेणयस्तर्हि ऋषीणामप्यनेकाः श्रेणयो विविधा अधिकाराश्च स्वतःसिद्धाः। यतो हि यादृशश्रेणीसंवद्धा ज्ञानपद्धतिः प्रकाश्यते, सा तादृशाधिकारश्रेणीगानाम् ऋषीणां द्वारैव जायते। आसुरविद्याया ऋषीणामसुरलोकेषु दैवविद्यासम्बन्ध-

शालिनां च देवलोकेषु निवासो विज्ञानसिद्धः। अतो हि ऋषीणां चतुर्दशसु लोकेषु निवासो ज्ञानवैचित्र्यहेतुना स्वतः सिध्यति ॥ ५० ॥

देवसम्वर्धनोपाया उच्यन्ते—

## देवयज्ञादिभिर्देवाः ॥ ५१ ॥

देवयज्ञादिभिर्देवाः संवर्धिता जायन्ते। प्रत्येकब्रह्माण्डसंरक्षकाः देवास्त्रिविधा इति पूर्वमेवोक्तम्। ते च देवर्षिपितृनाम्ना विख्याताः। अतः पूर्वम् ऋषिसम्वर्धनोपाया वर्णिताः। इदानीं च द्वितीयश्रेणीनामधिदैवभूतानां देवानां संवर्धनस्योपायो वर्ण्यते। एतत्सूत्रतात्पर्यमिदं यत् यथा ब्रह्मयज्ञतत्सम्बद्धधर्मसाधनद्वारा ऋषयः सम्वर्धिता भवन्ति, तथैव देवयज्ञतत्सम्बद्धधर्मसाधनादिना देवाः संवर्ध्यन्ते। ब्रह्मयज्ञ इव देवयज्ञोऽपि द्वितीयो महायज्ञः। वेदादिशास्त्रसम्मतो देवयज्ञोऽग्नावाहुतिप्रदानेन सम्पाद्यते। अग्निहोत्रादीनि वैदिकानि स्मार्त्तानि, तान्त्रिकाणि च कर्माणि देवयज्ञान्तर्गतानि भवन्ति। अतः सनातने धर्मेऽग्निहोत्रादिकर्मणां महिमा सुमहान् परिदृश्यते। देवयज्ञेन देवानां संवर्धनमित्यत्र स्मृतिशास्त्रे प्रमाणं यथा—

इष्टदेवप्रसादः स्यात् नित्यं होमानुशीलनम्।
देवा देव्यश्च तृप्यन्ति होमेनानेन निश्चितम् ॥
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥
देवा भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते यज्ञकिल्विषैः।
भुञ्जते ते त्वघं पापं ये पचन्त्यात्मकारणात् ॥

ननु यत्र वेदसम्मतशास्त्रविहितयज्ञप्रचारो नास्ति, तत्र देशजातिषु कः खलु देवताप्रसादनोपायः? देवताप्रसन्नताप्राप्तिविषये किमेको देवयज्ञ एवोपायभूतः? किं वर्णाश्रमसदाचारयुक्ता आर्यजातिरेव देवतासम्वर्धनहेतुर्भूता समाम्नाता? एतादृशशंकासमाधानार्थमेव पूज्यपादेन महर्षिणा सूत्रकारेण "आदि" शब्दः प्रयुक्तः। आदि शब्दतात्पर्यमिदं यत् साधारणासाधारणविशेषापद्धर्मेषु तदुपाङ्गेषु प्रायस्तादृशा अनेके धर्मास्तदुपाङ्गानि च सन्ति येषां द्वारेण संवर्धनं देवानां जायते। तत्तद्धर्मतदङ्गसाधने आर्यानार्याणां शिक्षिताशिक्षितानां सर्वेषामेव मानवानामधिकारः समाम्नातः। अतस्तद्द्वारा सर्वा अपि मनुष्यजातयो देवतासम्वर्द्धनमनुष्ठातुमर्हन्ति। यथा ऋषयो ज्ञानराज्यस्य चालका रक्षकाश्च तथैव देवाः कर्मराज्यस्य चालका रक्षकाश्च सन्ति, सुतरां सत्वगुणवर्द्धकेन लोककल्याणकरेण कर्मकलापेन धर्मोन्नतिकरेण देवतासम्वर्द्धनं वोभूयते ॥५१॥

देवतासम्वर्द्धनपरिणाम उच्यते—

## शक्तिसुखादीनाम् ॥ ५२ ॥

ते सम्वर्धिता देवाः शक्तिसुखादीनां दातारो भवन्ति। देवानां कर्मराज्यचालकत्वे स्मृतिशास्त्रेषु भूयांसि प्रमाणानि समुपलभ्यन्ते—

तत्रैकं यथा—

सृष्टेरस्त्यधिभूतायाश्चालकं धारकं तथा।
आधिदैविकराज्यस्य चालकाः परिरक्षकाः ॥

अन्यच्च—

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्ता न प्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥
अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥

कर्मराज्यसंचालकसंरक्षका देवा एव यदि कर्मद्वारा सुखदुःखस्वर्गनरकोन्नत्यवनतिशक्तिशालिता-शक्ति-

हीनतोद्‌र्ध्वनिम्नगतिप्रभृतीनां दातारः सन्ति, तर्हि सिद्धमिदं यत् कर्मराज्याधिदैवस्वरूपास्त एव संवर्द्धिताः प्रसन्नाश्च सुखशान्त्यैश्वर्यादीनि प्रयच्छन्ति। सुखशक्तिस्वर्गलौकिकालौकिकैश्वर्यादिप्रदातृत्वं देवप्रसादं निर्बिभर्त्ति। अपिशब्देन कर्मणः शुभाशुभफलप्रदातृत्वं देवाधीनं सूच्यते ॥ ५२ ॥

पितृसंवर्धनोपायं व्याचष्टे—

पितृयज्ञादिभिः पितरः ॥ ५३ ॥

पितृयज्ञप्रभृतिभिः कर्मभिः पितरः प्रसन्नाः सुखादिकं प्रयच्छन्ति। पूर्वं हि ज्ञानराज्यकर्मराज्याधिदैवस्वरूपाणाम् ऋषिदेवानां यथाक्रमं संवर्धनोपायं वर्णयित्वा महर्षिः सूत्रकारोऽधिभूतस्थूलराज्याधिदैवरूपपितृसंवर्धनोपायं वर्णयति। पितृयज्ञनाम्ना महायज्ञेन तादृशेनान्यान्यधर्मसाधनादिना पितरः संवर्द्धिता भवन्ति। यथा च भगवता श्रीशम्भुना पितॄनुद्दिश्य प्रोक्तम्—

यस्यां मनुष्यजातौ स्यात् पित्रोः पूजा यथार्थतः।
ऋषीणां देवतानाञ्चावताराणां यथायथम् ॥
मद्विभूत्यवताराणां स्यादाराधनमप्यलम्।
यत्र सप्तविधानां च वृद्धानाममलात्मनाम् ॥
पूजा स्यात् संततं सम्यक् सत्कारेण समन्विता।
स्वयं संवर्धिता जातिरसौ संवर्धयेद्धि वः ॥

श्रुतावपि प्रोक्तम्—

"आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैरस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान्" "येऽग्निष्वात्ता अनग्निष्वात्ता मध्ये-दिवः स्वधया मादयन्ते, तेभ्यः स्वराऽसुनीतिमेतां यथावशं तन्वं कल्पयति" इति प्रागेवोपवर्णितमिदं यत् कतिविधाः पितरो भवन्तीति ते च स्थूलशरीररूपपिण्डस्य स्थूलशरीरसम्बन्धयुक्तानामन्यान्यविषयाणां च रक्षकाः सन्तीति। अत एतादृशोपकारिणां शक्तिशालिनाम् अधिदैवरूपपितॄणां संवर्द्धनं कथं भवितुमर्हतीत्येतस्य विज्ञानस्य प्रकाशनमप्युचितमेव। पञ्चमहायज्ञेषु पितृयज्ञोऽप्येकः प्रधानस्वरूपो यज्ञः। सर्वोऽपि क्रियाकलापः कर्मकाण्डीयो वैदिक-तान्त्रिक-मिश्रभेदेन त्रिविधः।

स्मर्यते च—

"वैदिकी तान्त्रिकी मिश्रा त्रिविधा कर्मचोदना।"

वचनमिदमनुसृत्य पितृयज्ञोऽपि वैदिक-तान्त्रिक-मिश्रभेदेन त्रिविधो विज्ञेयः। एतेषां साधनं गृहस्थाश्रमवासिनां प्रधानं कर्त्तव्यमास्ते। विशेषतश्च वर्णाश्रमसदाचारयुक्ताया आर्यजातेर्विशिष्ट आचार आम्नातः। अत एव वर्णाश्रमावलम्बिन्या आर्यजात्या सह पितृगणस्य विशिष्टसम्बन्धो निर्दिष्टः, स्मृतावुक्तमपि—

शाश्वतस्यास्य धर्मस्य यावत् प्रादुर्भविष्यति।
सार्वभौमस्वरूपं हि पितरो भाग्यशालिनः ॥
साधारणस्य धर्मस्य तत्त्वतो हृदयङ्गमम्।
सार्वभौमस्वरूपं हि कर्त्तुं मह्यं न संशयः ॥
पालनीयाः सदाचारा आर्यजातीय मानवैः।
वर्णाश्रमीय धर्मस्य विशेषस्य तथैव च ॥
यतो वर्णाश्रमैर्धर्मैर्विहीना सर्वथा ननु।
असौ सृष्टिर्मानवानां कालिकायाः प्रभावतः ॥
प्रकृतेर्मे लयं याति कुत्रचित् समये स्वतः।
धत्ते रूपान्तरं वासौ नात्र कार्या विचारणा ॥
वर्णाश्रमाणां धर्माणां बीजरक्षाप्रभावतः।
मर्त्यानां रक्षितः पन्थाः स्यात् क्रमाभ्युदयप्रदः ॥
शाश्वतस्य हि धर्मस्य ज्ञानं स्यात्तेन कर्हिचित्।
वर्णधर्मं यतो विज्ञाः प्रवृत्तेरधिकं जगुः ॥
निवृत्तेः पोषकं चैव धर्ममाश्रमगोचरम्।

अतो वर्णाश्रमाख्यस्य धर्मस्यैव सुरक्षणात् ॥
रक्षिताः पितरो वो हि शक्तिः सम्पत्स्यते शुभा।

पूर्वमेवोक्तमेतद् यत् यत्र देशे मानवजातौ वा वर्णाश्रमधर्मव्यवस्थाभावात् पितृपूजा पितृयज्ञो वा यथाविधि सम्पादितो न प्रचरति तत्र पितरः संवर्धिता न भवन्ति किमिति शंकासमाहितये पूज्यपादेन महर्षिणा सूत्रकृता सूत्रेऽत्रादिशब्दः प्रयुक्तः। पितृयज्ञसमाननित्यनैमित्तिकपितृपूजनसम्बन्धे यावन्ति धर्माङ्गोपाङ्गानि सर्वाण्यपि तानि "आदि" शब्देऽन्तर्भवन्ति ॥ ५३ ॥

पितृसंवर्धनेन परिणतिः प्रोच्यते—

## स्वास्थ्यवीर्यादीनाम् ॥ ५४ ॥

ते पितरः संवर्धिताः स्वास्थ्यवीर्यादीनां दातारो भवन्ति। यथा च स्मृतिशास्त्रे—

प्रसीदन्ति भवन्तो वै मर्त्यजातौ तु यत्र हि।
सैव स्वास्थ्यं तथा वीर्यं सदाचारं प्रपद्यते ॥
अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।
चत्वारि तस्य वर्धन्ते आयुर्विद्यायशोबलम् ॥

श्रुतौ चापि—

"आत्ता हवींषि बर्हिं यथाऽपि ९ सर्ववीरं दधातन" "पुत्रेभ्यः पितरस्तस्य वाचः प्रयच्छत त इहोर्जं दधात" आधत्त पितरो गर्भं कुमारं पुष्कर स्रजं यथेह पुरुषोऽसत् इति ॥

पितर आधिभौतिकजगद्बालकसंरक्षकाश्च, नित्यपितरो देवा एव, नैमित्तिकाः पितरोऽपि पितृलोकं प्राप्ता नित्यपितृकार्ये साहाय्यमाचरन्ति। पितृभिः सह केवलं ब्रह्माण्डस्याधिभौतिकविभागसम्बन्धः। अतस्तेषां प्रसादेन शारीरिकस्वास्थ्यवीर्यादीनां तत्सम्बन्धिनामन्येषामपि पदार्थानामधिगतिर्जायते। स्त्रीपुरुषरजोवीर्यशुद्धिः सत्सन्तानसमुत्पत्तिः, स्वास्थ्यं, कर्मजदोषजस्वरूपत्रिविधव्याधिनाशः, शारीरिकपराक्रमः, धर्मोन्मुखः पुरुषार्थः, सत्कर्मसमुत्साहश्चेत्यादिविषयाः स्वास्थ्यवीर्यसम्बद्धाः। प्रसन्नाः पितरः सर्वानेतान् स्वयमेव समर्पयन्ति। "आदि" शब्देन स्वास्थ्यवीर्यसम्बन्धिनामन्येषामपि लाभेन सम्बन्धः सूचितः ॥ ५४ ॥

इदानीं दैवजगतो लाभप्रद प्रधानकारणं व्यनक्ति—

## सर्वं श्रद्धया ॥ ५५ ॥

श्रद्धया सर्वमधिगम्यते। दैवजगत्सम्बद्धत्रिविधदेवोपासनया लाभमधिगन्तुं श्रद्धैव प्रधानकरणम्। उपास्योपासकभावसाफल्याय देवजगत्सम्बन्धीय सर्वविधपुरुषार्थेषु श्रद्धाया एव मुख्यत्वम्। अत्रोक्तश्रद्धाशब्दस्य पूर्वोक्त स्नेहप्रेमश्रद्धाशब्दैः सम्बन्धो नास्ति। अत्र श्रद्धाशब्देन विश्वासोत्पन्ना स्थिरबुद्धियुक्ता पवित्रधारणैव बोध्या। मानवान्तःकरणेषु समुत्पन्नविश्वासदार्ढ्येन निश्चयात्मिका पवित्रदृढतोत्पादनकरी फलनिश्चयोत्पादिका वृत्तिरेव श्रद्धा। उक्तं चात्र स्मृतौ—

प्रत्ययो धर्मकार्येषु सैव श्रद्धेत्युदाहृता।
नास्ति ह्यश्रद्दधानस्य धर्मकृत्ये प्रयोजनम् ॥

श्रद्धाविहीनस्य सर्वाण्यपि धर्मकर्माणि व्यर्थतामुपयान्ति। क्रिया-संस्कारान्तःकरणशुद्धिषु श्रद्धैव हेतुभूता। एतां विना न कोऽपि मानवः कर्मसु साधु प्रवर्त्तते। श्रद्धयैवान्तःकरणं सत्वोन्मुखतां प्रपद्यते। क्रियासंस्कारान्तःकरणानि पवित्रयन्ती श्रद्धा उपासनायां साधकस्य दार्ढ्यं सम्पादयति। श्रद्धामहत्वविषये वेदेषु शास्त्रेषु चानेकानि प्रमाणानि समुपलभ्यन्ते। तथाहि—

"व्रतेन दीक्षामाप्नोति दीक्षयाऽऽप्नोति दक्षिणाम्।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥"

"यदा वै श्रद्धात्मना मनुते नाश्रद्दधन्मनुते श्रद्धैव मनुते" "श्रद्धयाऽग्निः समिध्यते श्रद्धया हूयते हविः"

श्रुतिः। "श्रद्धा वीर्यस्मृतिसमधिप्रज्ञापूर्वकइतरेषाम्" इति योगदर्शनम्।

श्रद्धापूर्वा इमे धर्माः श्रद्धा मध्यान्तसंस्थिताः।
श्रद्धा नित्या प्रतिष्ठाश्च धर्माः श्रद्धैव कीर्त्तिताः॥
श्रुतिमात्ररसामोक्षा प्रधानपुरुषेश्वराः।
श्रद्धामात्रेण गृह्यन्ते न करेण न चक्षुषा॥
कायक्लेशैर्न बहुभिर्नैवार्थस्य च राशिभिः।
धर्मः सम्प्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि॥
श्रद्धास्वर्गश्च मोक्षश्च श्रद्धा सर्वमिदं जगत्।
सर्वस्वं जीवितं वापि दद्यादश्रद्धया यदि॥
नाप्नुयात् तत्फलं किञ्चित् श्रद्धायुक्तंस्ततो भवेत्।
एवं श्रद्धान्वयाः सर्वे सर्वे धर्माः प्रकीर्त्तिताः॥
केशवः श्रद्धया गम्यो ध्येयः पूज्यश्च सर्वदा।
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह॥
श्रद्धाविधि समायुक्तं कर्म यत् क्रियते नृभिः।
सुविशुद्धेन भावेन तदानन्त्याय कल्पते॥

इत्यादि,

इदं किल पूर्ववर्णितभावशुद्धिमाहात्म्यं येनाधर्मोऽपि धर्मस्वरूपता प्रपद्यते, पापकर्मापि पुण्यस्वरूपतां धत्ते, श्रीभगवानपि भावगम्यः। स च भावः श्रद्धामूलक एव। सुतरां श्रद्धैवोपासनासम्बन्धीय सर्वकर्मणा मूलम्। योगशास्त्रानुकूले विचारे क्रियमाणे इत्युक्तं भवति यत् प्रत्याहारभूम्या सह श्रद्धायाः सम्बन्धः। धारणया सह भावस्य ध्यानेन च साकं समाधेः सम्बन्धः। वस्तुतोऽन्तर्जगतसम्बद्धयोगभूमौ त्रयाणामेतेषां प्राधान्यम्। तत्र च यदाऽन्तर्जगतः प्रथमभूमिकास्वरूपप्रत्याहारेण सह श्रद्धायाः सम्बन्धस्तर्हि तां विना साधको न योगभूमावग्रे सरति, न वा समाधिमधिगच्छति। अतः श्रद्धैव सर्वमूलं सिध्यति॥ ५५॥

श्रद्धाया भेदमाह—

## सा त्रिविधा॥ ५६॥

सा श्रद्धा त्रिविधा त्रिप्रकारा ज्ञेया। संसारोऽयं त्रिगुणात्मकः। अत आस्थूलराज्यादन्ताराज्यपर्यन्तं सर्वा अपि वृत्तयस्त्रिगुणभेदेन श्रद्धाया अपि त्रैविध्यं स्वतः सिद्धम्। स्वस्वाधिकारानुसारेण त्रिविधापि श्रद्धा यद्यपि शुभफलप्रदैव, तथापि सात्त्विक्याः श्रद्धाया महत्त्वं सर्वोपरि विद्यते। शास्त्रे त्रिविधश्रद्धाया लक्षणं यथा—

त्रिविधा भवति श्रद्धा देहप्रकृतिभेदतः।
सात्त्विकी राजसी चैव तामसी च बुभुत्सवः॥
तासां तु लक्षणं देवाः शृणुध्वं भक्तिभावतः।
श्रद्धा सा सात्त्विकी ज्ञेया विशुद्धज्ञानमूलिका॥
प्रवृत्तिमूलिका चैव जिज्ञासामूलिका परा।
विचारहीनसंस्कारमूलिका त्वन्तिमा मता॥५६॥

श्रद्धासम्बन्धेन देवशक्तिविकास-तारतम्यं व्याचष्टे—

## तारतम्याद्दिव्यदेशादौ देवशक्तिविकाशः॥५७॥

दिव्यदेशादौ तारतम्येन दैवशक्तीनां विकाशो जायते। पूर्वं हि षोडशप्रकारदिव्यदेशाः समुपवर्णिताः। कश्च दिव्यो देशः किं च तद्रहस्यमिति शास्त्रमित्यमाह—

यथा गवां सर्वशरीरजं पयः,
पयोधरान्निःसरतीह केवलम्।
तथा परात्माऽखिलगोऽपि शाश्वतः
प्रकाशमाप्नोति सदिव्यदेशकैः॥
यथाधिकारं लभते दिव्यदेशे ह्युपासनाम्।
योगसिद्ध्युपलब्धिर्हि सहकारितया मता॥
धारणा सहकारेण दिव्यदेशे प्रकाशते।
इष्टो देवो मन्त्रयोगो दिव्यदेशो हितप्रदाः॥

वेदेषु तन्त्रशास्त्रेषु दिव्यदेशस्य वर्णना।
भेदश्च वर्णितो विज्ञैर्विस्तरेण महात्मभिः॥
कुर्यादावाहनं मूर्त्तौ मृणमयादौ सदैव हि।
प्रतिमाया जले वह्नौ नावाहनविसर्जने॥

त्रिगुणेषु साधकस्यान्तःकरणे यस्य गुणस्य विकाशो जायते, तस्यानुसारेणैव श्रद्धाऽपि विकाशमेति। यादृशी श्रद्धा साधकान्तःकरणे समुदेति, तत्सम्बद्ध-दिव्यदेशादौ तादृशस्याधिदैवस्यापि आविर्भावो बोभवीति। उदाहृत्येवमवधेयम् यद् यदि तामसिक-श्रद्धासम्पन्नो राजसिकश्रद्धावान् सात्त्विकश्रद्धासंवलितो वा साधकः केषुचिद्दिव्यदेशेषु देवपीठमुत्पादयति तदा त्रिष्वपि देव्यदेशेषु समानतायामुपलभ्यमानायामपि त्रयाणां पीठानां शक्तिषु तारतम्यं तिष्ठत्येव। मूर्त्ति-चित्र-स्थण्डिलादि दिव्यदेशेषु समानतायां परिदृश्यमानाया-मपि त्रिविधश्रेणिसाधकद्वारा यानि दैवपीठानि समु-त्पादितानि तेषामान्तरिकसूक्ष्मशक्तिषु सुमहत् तार-तम्यमवगन्तव्यम्। विज्ञानस्यैतस्य सूक्ष्मेक्षिकयावधार-णार्थमिदमुच्यते यद् दिव्यदेशपीठशक्तिविकाशतारतम्य-मुख्यकारणेषु श्रद्धया सह कारणान्तरमप्यवधेयम्। तत्र साधकशक्तिप्रकृतिप्रवृत्तिजनिताधिकारोऽपि कारणम्। शक्तिविषयकयोग्यता अयोग्यताप्राप्त्यपायसम्बन्धि-विज्ञानमग्रिमसूत्रे वक्ष्यते। प्रकृतिप्रवृत्तिजनिताधिकार-सम्बन्धे गीतोपनिषदि श्रीभगवान् निजमुखेन स्वय-मेवेत्थमाह—

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः॥
यजन्ते सात्विका देवान् यक्षरक्षांसि राजसाः।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः॥

श्लोकेऽत्र साधकप्रकृतिप्रवृत्त्यनुसारेणैव त्रिविध-श्रद्धाभेदो वर्णितः। फलतो दिव्यदेशपीठसाहाय्येना-धिदैवाविर्भावे श्रद्धायास्तदीयसहायकान्यविषयतार-तम्येनैव दैवशक्तीनामाविर्भावे तारतम्यं जायते। वर्णितेषु पीठपञ्चकेषु उपासनापीठमेव दिव्यदेशनाम्ना समाम्नातम्। तदतिरिक्तपीठचतुष्टयकृते सूत्रेऽत्र "आदि" शब्दः प्रयुक्तः॥ ५७॥

विकाशस्य मुख्यं साधनं प्रणिगद्यते—

**श्रद्धाभ्यो देवानाम्॥ ५८॥**

श्रद्धाभ्यो हेतुभूताभ्य एव देवानाम् आविर्भावो भवति। दिव्यदेशादिपीठसाहाय्येनाधिदैवाविर्भाव-कारणावस्थावर्णनानन्तरं पूज्यपादः सूत्रकारो महर्षिः सूत्रेणैतेन तद्विकाशमुख्यसाधनं निदर्शयति। यद्यपि योगविज्ञानमनुसृत्य दिव्यदेशाधिदैवशक्तीनामाविर्भा-वेऽनेके ह्युपायाः सन्ति, किन्तु तेषु श्रद्धायाः सद्भावः, कौशलम्, समुत्तममनुष्ठानम्, क्रियामन्त्रसाधनञ्चेत्ये-तेषां प्रयोगेण दिव्यदेशे त्वरितमेवाधिदैवशक्तीनामावि-र्भावो जायते। श्रद्धयाऽध्यात्मशुद्धिः, मन्त्रेणाधिदैव-शुद्धिः, क्रियया चाधिभूतशुद्धिर्दिव्यदेशे तत्कालं सहैव यदा समुत्पद्यते, तदैव यथोचितदैवशक्तीनामाविर्भावो जायते।

अग्नि-जल-मूर्त्ति-नित्ययन्त्रादि दिव्यदेशात् लक्ष्यी-कृत्य साधको यदा स्वीयां श्रद्धामाश्रयन् बुद्धियुक्तः सुदृढं विश्वासमनुतिष्ठति, अधिदैवमन्त्रजपद्वारा स्वीयं मन एकाग्रं विदधत् यदा स्वेष्टदेवसान्निध्यं प्राप्नोति यदा च शास्त्रोक्तं प्रक्रियां द्वारीकृत्य दिव्यदेशविशुद्धं नियन्त्रितं च विदधाति, तदा तूर्णमेव यथोचित पीठ-स्याविर्भावो जायते। अन्यच्च अध्यात्मशुद्धिद्वारा श्रद्धा-साहाय्येन विज्ञानमयं कोषम्, अधिदैवशुद्धिद्वारा मन्त्र-सहायतया मनोमयं कोषम् अधिभूतशुद्धया प्राणमयं कोषं च साधको निजाधिदैवोपास्यदेव प्राणमयकोषेण

सह सम्मेलयति, येन पूर्वोक्तदिव्यदेशेषु पीठमुत्पद्यो-पास्यदेवशक्तेराविर्भावो जायते । क्रियया देवाः प्रसीदन्ति । यतः पूजायां क्रियैव प्रधानस्वरूपा । नाम-रूपयोरभेद इव सद्भावमूलके मन्त्रे देवे चाभेदः । अतो मन्त्रक्रियाशुद्धिद्वारेण देवाः साक्षात् क्रियन्ते । यतो मन एव सर्वेन्द्रियाणां राजा । एतद् विज्ञानसम्बन्धे शास्त्रेषु बहूनि प्रमाणानि समुपलभ्यन्ते । तथाहि—

आभिरूप्याच्च विम्बस्य पूजायाश्च विशेषतः ।
साधकस्य च विश्वासात् देवतासन्निधिर्भवेत् ॥

सर्वत्रैव दैवीशक्तिर्व्याप्नोतीत्येतद् ॥ ५८ ॥

विज्ञानं प्रतिपाद्यते—

## नित्यत्वव्यापकत्वाद् भगवच्छक्तेश्च गोदुग्धवत् ॥ ५९ ॥

नित्यत्वेन व्यापकत्वेन च हेतुना गवां दुग्धवत् भगवच्छक्तिः सर्वत्र व्याप्नोति । भगवतः ऋषीणां च शक्तिः सर्वत्र व्यापिका । सेयं व्यापिका शक्तिः केन्द्रे चैकत्र कथमाविर्भवतीति विज्ञानमवधारयितुं पूर्वोक्त-दिव्यदेशपीठतत्त्व-वक्ष्यमाणयोगावतारतत्त्वानां सम्य-गवधारणाय पूज्यपादेन महर्षिणा सूत्रकृता सूत्रमिद-माविश्चक्रे। दैवशक्तिविकासविज्ञानसम्बन्धो यथा पूर्वोक्त सूत्रैर्वर्त्तते, तथैव परसूत्रैरपि वेदितव्यः । यथा व्याप-कान्यप्युष्णरश्मेस्तेजांसि आग्नेयग्रावद्वारा केन्द्रे चैक-त्राग्निमुत्पादयन्ति तथैव सर्वव्यापिकाऽपि दैवीशक्तिः पीठानि द्वारीकृत्य देव्यदेशेषु केन्द्रीभूता प्राकट्यमा-पद्यते । एतद्विज्ञानावधारणायैव गोदुग्धस्योदाहरणं प्रदत्तमास्ते । यथा दुग्धं गवां शरीरेषु सर्वत्रैव व्याप्नोति किन्तु स्तनद्वारेणैव निःसरति, तथैव व्यापिकाऽपि भगवच्छक्तिर्दिव्यदेशरूपपीठद्वारैव अवतारविग्रहैश्च विकाशमेति ॥ ५९ ॥



अवतारतत्त्वमुदीरयति—

## ऋषिदेवानामवतरणं तद्वत् ॥ ६० ॥

यथा भगवान् मृत्युलोकेऽपि विशिष्टं कार्यं सम्पाद-यितुमवतरति, तथैव देवा ऋषयश्च समवतरन्ति । पितॄ-णामवतारस्य नास्ति प्रयोजनम्, यतो माता पितृभ्या-मेव स्थूलशरीरनिर्माणकार्यं सम्पद्यते । कर्मराजस्य ज्ञानराज्यस्य बहुधानि विधेयानि जीवशक्तिसम्पादना सम्भवत्वात् मानवकेन्द्रेषु ऋषयो देवाश्चावतीर्य यथा-समयं विदधते। भगवत्कलाविकासेनावतारतत्त्वप्रकाशः कथं जायत इत्येतद् रहस्यं स्मृतिशास्त्रोदाहृतं निम्नर्निदिष्ट-मुच्यते--

शक्तेर्मय्यवतिष्ठन्ते कलाः षोडश सर्वदा ।
अतोऽहं सर्वशक्तीनामस्म्याधारस्वरूपिणी ॥
कलारूपैः कलापूर्णा शक्तिः सा मेऽश्नुते जगत् ।
तस्यास्तासां कालानां तु वित्तभेदाननेकशः ॥
ममैवैका कलाशक्तेरुद्भिज्जेषु विकाशते ।
स्वेदजेषु कलाद्वैतमण्डजेषु कलात्रयम् ॥
चतस्रश्च कला भान्ति जरायुजगणेऽखिले ।
पञ्चकोषप्रपूर्णत्वान्मर्त्येषु प्रायशोऽमराः ॥
आकलापञ्चकादष्टकला नूनं चकासति ।
नवारभ्य कला यावत् षोडशं मे यथायथम् ॥
संविकाश्यावतारेषु नानाकेन्द्रोद्भवेषु च ।
कुत्रचिन्मे प्रपूर्यन्तेऽवतारे पूर्णसंज्ञके ॥

भगवदवतरणमिव देवानाम् ऋषीणामप्यवतरणं मृत्युलोकेऽत्र विशिष्टाधिकारकार्यसम्पादनाय बोभवीति, यथाचोक्तं स्मृतौ—

आध्यात्मिक्यः कलाः सर्वा मम षोडशसंख्यकाः ।
प्रपूर्यन्ते शिवेऽतो सौमहर्ष्यादिर्जगद्गुरुः ॥
मत्कला आधिदैविक्यः प्रपूर्यन्ते यतो हरौ ।
अतो देवाधिदेवोऽयं विश्वस्मिन् विष्णुरुच्यते ॥

ममावतारसंघोऽपि विष्णवंशैरेव जायते ।
विधौ षोडश पूर्यन्ते ह्यधिभूतकला मम ॥
अतः प्रजापतीनाञ्चासावस्त्यादिः पितामहः ।
ममाध्यात्मकलानां च षोडशानां पुराऽमराः ॥
भूत्वा सप्तर्षिवर्गेषु विकाशो याति हेतुताम् ।
अनेकेषां महर्षीणां ज्ञानविस्तारकारिणाम् ॥
दर्मं व्यासमुनिं तत्र द्वात्रिंशत् स स्मराम्यहम् ।
यथासम्भवविज्ञानदृशा संदृश्यमानया ॥
द्वादशाल्पधियस्तत्र कुलाकारे हितैः समाः ।
दश सर्वे समाकाराः शिष्टाः कुलविचक्षणाः ॥
अद्याप्यन्त भविष्यन्ति व्यासवाल्मीकयस्तथा ।
भृग्वङ्गिरः पुलस्त्याश्च तथैवाप्यन्यथैव च ॥

यथा—ऋग्वेदे १।१।२

"अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत । स देवां एह वक्ष्यति" इति । ज्योतिःशास्त्रमते वसिष्ठपत्न्यरुन्धती-सहित वर्तमानमन्वन्तरीय सप्तर्षीणां मघानक्षत्रे स्थितिः, तस्योदये तेषां चोदयो भवति ।" इति काशीखण्डमते शनिलोकादूर्ध्वं ध्रुवलोकादधस्तेपां स्थितिः" इति । मत्स्यपुराणस्य १२० तमेऽध्याये यथा—

कर्दमो वालखिल्याश्च विश्रवाः शक्तिवर्चसः ।
इत्येते ऋषयः प्रोक्तास्तपसा ऋषितां गताः ॥
ऋषिपुत्रा ऋषिकास्तु मैथुनाद् गर्भसम्भवात ।
परत्वेनर्षयस्ते वै भूतादि ऋषिकास्ततः ॥
ऋषिकाणां सुता ये वै विज्ञेया ऋषिपुत्रकाः ।
इत्येते ऋषयः प्रोक्तास्तपसा ऋषितां गताः ॥
तेषां पुत्रानृषिकांस्तु गर्भोत्पन्नान् निबोधत ।
वत्सरो नहुपश्चैव भारद्वाजश्च वीर्यवान् ॥
ऋषिर्दीर्घतपाश्चैव बृहदुदुःस्थः शरत्वतः ।
वाजिश्रवाः सुचित्तश्च श्यावोऽश्वश्च पराशरः ॥
शृङ्गी च कश्यपश्चैव राजा वैश्रवणस्तदा ।
इत्येते ऋषिकाः सर्वे ते सत्येन ऋतां गताः ॥

देवावतारविषये भागवतेऽप्याह—

देवासुरा हतवृता दैतेया ये सुदारुणाः ।
ते चोत्पन्ना मनुष्येषु प्रजाद्दप्ता बवाधिरे ॥
तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले ।
अवतीर्णाः कुलशतं तेषामेकाधिकं नृप ॥

किन्तु यदा विभूतिद्वारा कार्यं न सिध्यति, अधिकशक्तिविकाशस्य प्रयोजनमायाति तदा भगवान् स्वयमवतीर्य जगन्मङ्गलं विधत्ते । यथोक्तं गीतायाम्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

एवं किल ज्ञानज्योतिर्विकासाय ऋषीणां कर्म-व्यवस्थायै च देवानामवताराः सम्भवन्ति यथासमयं मृत्युलोकेऽत्र भगवदवतरणमकात्स्न्यविज्ञानपरिपूर्णमिति पूर्वोक्त शास्त्रीयविज्ञानेन स्वतः सिध्यति, अतोऽध्यात्म-राज्यस्य, अधिदैवराज्यस्य च सुव्यवस्थास्थापनार्थम् ऋषीणां देवानां चाप्यवतारो विज्ञानसिद्ध इत्यत्र न सन्देहलेशोऽपि ॥ ६० ॥

अवतारप्रमाणं निर्दिशति—

**कलाभेदेन पूर्णांशत्वम् ॥ ६१ ॥**

कलाभेदेन पूर्णावतारत्वमंशावतारत्वं च भवति । सगुणब्रह्मणः श्रीभगवतोऽवताराः कृष्णबुद्धादयः, ऋषीणां व्यासादयः, देवानां युधिष्ठिरादयश्च सर्वे किलैते पूर्णांशकलाभेदेन बहुविधाः सन्ति । भगवतो विष्णोर्ये च प्रधानरूपा दशावताराः चतुर्विंशत्यवतारा वा निर्दिष्टास्तेषु भगवान् श्रीकृष्णः पूर्णावतारेण समाम्नातः परशुरामबुद्धादयश्च कलावतारा विज्ञायन्ते । भगवति श्रीकृष्णे सगुणस्य ब्रह्मणः सर्वा अपि षोडश-कलाः परिपूर्णा आसन्, परशुरामबुद्धादिषु दश

द्वादश वा विकाशमापद्यन्त। द्वादशस्वपि व्यासेषु कलापूर्णत्वसम्बन्धोऽवधेयः। युधिष्ठिरविदुरादिषु चापि दैवकलातारतम्यमवगन्तव्यम्। प्रागुक्तस्मार्त्तप्रमाणद्वारा सिद्धान्तितमिदं यत् उद्भिज्जसृष्टितश्चैकां कलामारभ्य कथमिव पूर्णावतारे षोडशकलानां विकाशो जायत इति। श्रुतावुक्तं च—

"प्रजापतिश्चरति गर्भेऽन्तर्जायमानो बहुधा विजायते तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वाः। इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पा ँ सुरे" "तद्धैतद् घोर एव आंगिरसः कृष्णाय देवकीपुत्रायोक्त्वो वाचा पिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्य च्युतिमसि-प्रण ँ शितमसीति ँ इत्यादि। एवं किल ऋषीणामप्यवतारा बोध्याः। भेदस्त्वियानेव यद् भगवतः कला सम्पूर्णेऽपि सृष्टिसमूहे परिव्याप्नोति किन्तु ऋषीणामसुराणां वा कला मानवपिण्ड एव विकसति। सहजपिण्डेन न चैषां सम्बन्धः। असुराणां देवानाम् ऋषीणां च कला मानवपिण्डेषु नित्यमेव स्वीयं विधेयं विधत्ते। यत्र मनुष्ये ज्ञानविकाशो जायते, तत्र ऋषीणां कलाया विलासो वेदितव्यः। यत्र चासुर्यो दैव्यो वा कला विकसन्ति, तत्र असुराणां देवानां वा सम्बन्धो विज्ञातव्यः। परन्तु तेषां देवासुराणाम् अवतारास्तदैव मन्तव्याः, यदा अष्टावारभ्य षोडशं यावत् कलास्तेषां विकाशमाप्नुवन्ति। एतत् तु प्रागेव निर्णीतं यत् असुरा अपि प्रकारान्तरेण देवा एव सन्ति। देवास्तु मानवकार्याणि सुधारयन्ति, असुरास्तु विगुणयन्ति। निर्भयता, पवित्रता, अभिमानराहित्यमित्यादीनि कार्याणि दैवसम्पदि अन्तर्भवन्ति, किन्तु भीरुता, अपवित्रता, अज्ञानं, दम्भो दर्पश्चेत्यादीनि आसुरसम्पदा सम्बद्धानि। दैवी सम्पद् मानवान् उन्नमयति, आसुरी सम्पच्च मानवान् अधः पातयति। किन्तु शक्तिविचारेण तु दैवीशक्तिरासुरी वा समानैव, किन्तूर्ध्वाधोगतिविमर्शदृशा शक्तिद्वयेऽत्राकाशपातालवदन्तरमवधेयम्। एतद्विज्ञानमनुसृत्य सिध्यतीदं यन्मनुष्यशरीरेषु देवासुराणामाधिपत्यं तेषां कार्याणि च सदैव तिष्ठन्ति। ऋषीणां विषये वैशिष्ट्यमियदेव यत् मनुष्यशरीरे ज्ञानस्य किमपि विशिष्टं कार्यं दृश्यते, तत्र ऋषिणामाविर्भावो वेद्यो नान्यत्र। सुतरां मृत्युलोकेऽत्र सुरासुरर्षीणां कार्याणि सदैव प्राकट्यमापद्यन्ते। पञ्चारभ्य अष्टौ यावत् यत्र भगवतः कलाया विकाशः, स विभूतिपदवाच्यः। गुरव, आचार्याः, राजानः, सामाजिकनेतारश्च विभूतिष्वन्तर्भवन्तः संसारे सदैव तिष्ठन्ति। अन्यच्च यदा कुत्रापि मानवशरीरे भगवतः, असुराणां वा, देवानाम्, ऋषीणां वा अधिककलाविकासः, तदा तदवतारसंज्ञया व्यपदिश्यते। यथा परशुरामबुद्धादौ भगवतः शक्तेरवतरणम्, व्यासवशिष्ठादौ ऋषिशक्तेरवतरणम्, युधिष्ठिरभीष्मप्रभृतिषु दैवशक्तेरवतारः, रावणदुर्योधनादिषु आसुरशक्तेरवतारश्च विज्ञेयः। एतदाद्यवतरणमवतारशब्देन गीयते। वैज्ञानिकेनैतेनानुशीलनेन सगुणब्रह्मस्वरूपस्य जगद्रक्षकस्य भगवतो विष्णोः, ऋषीणां देवानामसुराणां चावतारस्य रहस्यं सातिशयसुगमतां प्रतिपद्यते। जिज्ञासुरत्र शंकते—किं मृत्युलोकेऽत्र भगवतो विष्णोरवतारकाले विष्णुपदं रिक्तं तिष्ठति? एवं हि सुरासुरर्षीणामवतारसमये किं तत्तत्पदानि रिक्तानि तिष्ठन्ति? समाधत्ते—निम्ननिर्दिष्टशास्त्रीयप्रमाणेनैव तादृशशंकानां समाहितिर्जायते। भगवता श्रीकृष्णेन गीतायां निजमुखेन स्वयमेवाह—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप॥

भगवान् श्रीकृष्णः सगुणब्रह्मणः, अर्जुनश्च देवराजस्येन्द्रस्यावतारभूतौ। परन्त्वनयोः पूर्वजन्मनि नारायणनामकस्य ऋषेः, नरनामकस्य ऋषेश्च जन्मकथा सर्वजनविश्रुता विद्यते। उभावेतौ गमनागमनचक्रे घूर्णायमानावास्ताम्। भगवता ब्रह्मणा श्रीकृष्णेन च निजमुखतः स्वमुक्तम्। तथाहि—

नरनारायणौ यौ तौ पूर्वदैवौ विभावसोः।
सम्प्राप्तो मानुषे लोके कार्यार्थं हि दिवौकसाम्॥
अर्जुनो वासुदेवश्च यौ तौ लोकोऽभिमन्यते।
तावेतौ सहितावेहि खाण्डवस्य समीपतः॥
नरस्तमसि दुर्धर्ष हरिर्नारायणः स्वयम्।
काले लोकमिमं प्राप्तौ नरनारायणावृषी॥
अनन्यः पार्थमत्तस्त्वं त्वचाहं च तथैव च।
नावयोरन्तरं शक्यं वेदितुं भरतर्षभ॥

नरनारायणरूपेण द्वाभ्यामप्येताभ्यां बदरीकाश्रमे तपस्तप्तम्। तेन तत्तीर्थस्य महत्त्वाधिक्यमास्ते। पुराणेषु बहुत्र कथेयं लभ्यते। एतेनैतत्सिध्यति यद् भगवतः पूर्णावतारो यत्र मानवपिण्डे समाविर्भवति, तन्मानवपिण्डस्य आत्मा गमनागमनचक्रे भ्राम्यति। सुतरां भगवतो वा, ऋषीणां देवानां वा अवतारा मानवपिण्ड एव सम्पद्यन्ते। एतावानेवात्र भेदो यत् भगवदवताराः सालोकसामीप्यसारूप्यमुक्तिभाजाम् आत्मनां शरीरेषु भवन्ति। देवासुरर्षीणां तु शक्तिशालिषु जीवपिण्डेषु जायन्ते। देवासुरर्षीणामवताराविर्भावकेन्द्रेषु योग्यता तारतम्यमवश्यमेव सन्तिष्ठन्ते। मृत्युलोकेऽत्र भगवतो यथोचितशक्तीनामाविर्भावो नूनमुपयोगिषु केन्द्रेष्वेव जायते। नासौ भगवान् साक्षाद्रूपेणावतरति। किन्तु तेनाविर्भूतशक्तिकेन्द्रेण सह तस्या भेद एव जायते। एवं हि सुरासुरर्षिलोकतस्तत्तच्छक्तिरेवेहागत्य यथोचितकेन्द्रेष्ववतरति। उदाहरणरूपेणैतदवगन्तव्यं यत् अर्जुनकेन्द्रे इन्द्रावतारे जायमानेऽपि अर्जुनो देवराजं यथायोग्यपदे प्रतिष्ठितमेवापश्यत्। एवं सर्वत्रावधेयम्॥ ६१॥

भेदमुदाहरति—

**निमित्ताद् विशेषाऽविशेषौ॥ ६२॥**

कुतोऽपि निमित्ताद्धेतोः श्रीभगवतो विशेषाऽविशेषौ अवतारौ भवतः। अवतारविज्ञानं विस्तृतरूपतोऽवधारयितुं पूज्यपादो महर्षिः सूत्रकारः सूत्रमिदमाविर्भावयत्। यथा कलानां, पूर्णत्वस्य च भेदेन भगवदवतारेषु भूयांसो भेदास्तथैव विशेषाविशेषरूपेणापि अनेके भेदा भवन्ति। विज्ञानमिदमन्यप्रकारेणापि बोध्यम्। युगधर्मस्य स्थितिशीलनियममनुसृत्य भगवतः कलावताराः पूर्णावताराश्च बोभूयन्ते। एतादृशावतारपदगौरवं वैलक्षण्यमावहति। अयं हि विशेषावतारो बोध्यः। परन्तु विशेषावतारश्रेणीतद्भिन्नैव। केवलं साधारणनिमित्तमाश्रित्य स्वल्पकालकृतो यत्र भगवदवतरणं तद् अविशेषावतारसंज्ञकमवगन्तव्यम्। यथार्थगुरुपदे प्रतिष्ठितो महापुरुषे यदा शिष्यहिताय युक्तः सन् शिष्याय दीक्षां दातुं प्रवर्त्तते, तस्मिन् समये गुरोर्दशाऽसौ भगवतोऽविशेषावतारावस्था बोध्या। महापुरुषेषु यदा कदा सामयिको भगवदावेशो निभाल्यते, सचावेशोऽपि भगवदवतारस्याविशेषावस्था। कदाचिच्चैकत्र शरीरे शक्तिद्वयमप्याविर्भवति। यथैकत्र देहे ऋषिशक्तेर्भगवत्कलानां वा, किंवा देवानाम्, ऋषीणां च शक्तेः, अथवा देवशक्तेर्नित्य स्थायिता यद् वा भगवत्कलाविर्भाव इत्यादि, यत्र स्थाने नैमित्तिकरूपेण तादृशीशक्तिर्विकसति तदप्यविशेषान्तर्गतमेव आस्तां तावत्। भगवद् विशेषाविशेषावतारवत् सुरासुरर्षीणामपि विशेषाविशेषावतारा विज्ञेयाः॥ ६२॥

प्रसङ्गादवतारकारणं व्याचष्टे—

## समष्टिकर्माधीनं तत् ॥६३॥

तत् भगवत्सुरासुरर्षीणामवतारा च समष्टिकर्मणोऽधीनं भवति। अवतारतत्त्वं वर्णयित्वा पूज्यपादेन महर्षिणा सूत्रकृता सम्प्रत्यत्र सूत्रेऽवताराविर्भावहेतुराख्यायते। भगवतः सुरासुरर्षीणां चावतारेषु जगतः समष्टिकर्मैव मूलहेतुः। जगतो व्यष्टिकर्म व्यष्टिजीवाधानम्। जागतिकसमष्टिकर्मकृत एव जगत्समष्टिकेन्द्रशक्तिप्रयोग आवश्यकः। यदा कस्यचन जीवविशेषस्य धार्मिक मानवस्य वा कृते साहाय्यप्रदानमावश्यकं बोभवीति तदानीं सर्गस्य साधारणनियमनुसृत्य भगवत्प्रेरणया ऋषयो देवाः पितरो वा स्वाधिकारानुसारेण अन्तर्जगति निवसन्त एव साहाय्यमाचरन्ति। एतद् व्यष्टिकर्म व्यक्तिगतजीवसम्बद्धम्। परन्तु यदा कस्यचन मानवसमाजस्य वा समष्टिकर्मप्रवाहे साहाय्यदानेन नियमानुकूलं समुन्नतमनुष्ठातुमावश्यकता समुपतिष्ठते, तदाध्यात्मिककार्यकृते ऋषीणाम्, आधिदैविककार्यार्थं देवानां चावतारा यथोचितशक्तिशालिनः प्राकट्यमापद्यन्ते, यैर्विगुणतामापन्नं समष्टिकर्म समीचीनतां भजति।

कदाचिदेवमपि सम्भवति यदेकत्रैव केन्द्रे ऋषिदेवयोरुभयोरेव शक्तिद्वयमाविर्भवति, यदा चासाधारणदशायां सृष्टौ घोरविप्लवः समुपतिष्ठते तदानीं देवशक्तिद्वारा कार्यसम्पादनाशक्यत्वहेतोर्भगवान् स्वयमवतरति। दशावतारा अत्रोदाहरणम्। एतादृशावताराविर्भावः सृष्टिसमष्टिकर्माधीनः। जैवं व्यष्टिकर्म स्वार्थपरतापरिपूर्णम्, भगवदवतारकर्मणि तु परार्थपरतासम्बन्धनिबन्धनानि सन्ति।

श्रुतौ स्मृतावप्युक्तम्—

"गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः।
रक्षामिच्छंस्तनुं धत्ते धर्मस्यार्थस्य चैव हि"॥

"बिभर्षि रूपाण्यवबोधआत्मा
क्षेमाय लोकस्य चराचरस्य"
"सुरेष्वृषिष्वीशं तथैव नृष्वपि
तिर्यक्षु यादस्स्वपि तेऽजनस्य"
"जन्मासतां दुर्मदनिग्रहाय
प्रभो विधातः सदनुग्रहाय च"

"विखनसाऽर्थितो विश्वगुप्तये, नखउदेयिवान् सात्वतां कुले। भुवोर्भारावतारार्थं देवक्या वसुदेवतः इत्यादि ॥६३॥

अवतारविज्ञानपरिपुष्टये तदीय नित्यत्वरहस्यमभिधीयते—

## अन्तराविर्भावस्य नित्यत्वम् ॥ ६४ ॥

अन्तः अन्तःकरणे तस्य परमात्मनः आविर्भावस्य अवतारस्य नित्वत्वं नित्यता विज्ञायते। जीवान्तःकरणे नित्यमेव परमात्मनो ह्याविर्भाव इत्यर्थः। अतः पूर्वं भगवतो देवर्षीणामवतारविज्ञानं प्रतिपाद्य भगवदवतारविज्ञानविशेषपरिज्ञानरहस्यपरिपुष्टये तस्य नित्यत्वप्रतिपादनाय च सूत्रकारेण महर्षिणा पूज्यपादेन सूत्रमिदमाविश्चक्रे। सर्वजीवान्तःकरणेषु सर्वजनसुहृदः श्रीभगवतो अवतारो नित्यरूपेण बोभवीति। यथा च श्रुतिराह—

"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इति।

अस्य श्रुतिमन्त्रस्य तात्पर्यमिदं यत् हृत्पुण्डरीकं तदेव दहरं भगवतो वेश्म। गीताऽप्याह—

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीति"

यदा हि अज्ञानान्धो जीवः स्वकीयेन्द्रियवेगाकृष्टो विषयान् सेवते तदाऽसौ स्वीययाऽधोगतिशीलस्वाभाविकचेष्टया पापकर्मणि निमज्जति, तदानीं तदीय मनो-

मन्दिरविहारी तदन्तरात्मा स्वकीयेनेङ्गितेन तत्पापकर्मविरतये जीवं सावधानीकरोति। अयमेव भगवतो नित्यावतारः। मनुष्यान्तःकरणे तादृशो नित्यावतारः सदैव बोभूयते। मानवो यदा पापाधिक्याभ्यासनिरतो जायते, तदा भगवदवतारनित्यत्वानुभवस्तस्य न भवति। पापमलाधिक्यमेवात्र कारणम्। परन्तु मानवीयान्तःकरणेऽसतो मार्गात् मानवं निवारयितुं भगवतो नित्यावतारः स्वतः सिद्ध इत्यत्र न सन्देहलेशोऽपि। मनुष्यो यदा कर्मोपासनाज्ञानसाहाय्येन स्वीयानि मलविक्षेपावरणानि समपसारयति, तेन च तदीयमन्तःकरणं यथा यथा परिपूततां भजते, तथातथाऽयं स्वकीयान्तःकरणे भगवन्नित्यावतारानुभवं कर्त्तुं सामर्थ्यं लभते। एवमेव सर्वजीवसुहृदो भगवतः परमानुकम्पाया उदाहृतिः सर्वजीवान्तःकरणेषु निभाल्यते।

विपद्ग्रस्तपशूनां तद्विपत्तिपरिरक्षणार्थं तदन्तःकरणे या किल सती प्रेरणा जायते, साऽपि विज्ञानमूलिकैव। निःसहाया निरुपद्रवा महिषादि पशवो यदा वनान्तरे हिंस्रकजन्तुव्याघ्रसिंहादिशंकया सावधानाः सन्तो यद् वनं परित्यजन्ति तदपि सर्वजीवहितकारिणो भगवतोऽवतारविज्ञानं परिपोषयति। श्रुतावप्युक्तम्—

"यो मनसि तिष्ठन् मनसोऽन्तरो यस्य मनः शरीरं यो मनोऽन्तरे यमयति यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" इति॥ ६४॥

प्रसङ्गात् तन्महत्त्वमुपवर्ण्यते—

## पूज्यत्वं सर्वेषाम्॥ ६५॥

भगवतो देवर्षीणां वाऽवतारः सर्वेषां पूजनीयो भवति। देवावतारे दैवीकला, ऋषीणामवतारे ह्यार्षीकला, भगवदवतारे च भागवती कला यथोचितं विकसति। यत्र पिण्डे पूर्वोक्तकलाविर्भावः, स हि पिण्डस्तदाविर्भूतकलानुसारेण पूजनीय इत्यत्र कः सन्देहः। उदाहृत्येदमवगन्तव्यं यद् यदा संसारेऽत्र कुत्रापि देशे कश्चिदपि राजकर्मचारी सम्राजः प्रतिनिधिः सन् शासनभारं जिघृक्षति, तदाऽसौ सम्राजः प्रतिनिधिः प्रजावर्गे ध्रुवमेव पूजनीयो भवति। इमामुदाहृतिमनुसृत्य सर्वविधोऽप्यवतारो यथायोग्यं पूजनीयः। यत्र शक्तेर्विकाशस्तत्र यथोचितशक्तिविकासानुसारेण पूजायाः सद्भावः स्वतः सिध्यति। एतादृशावतारपूजनं स्वाभाविकमेव। अन्यच्च भगवच्छक्तेस्तदंशस्वरूपाया ऋषीशक्तेः, देवशक्तेर्वा तत्तद् यथोचिताधिकारानुरूपेण पूजया पूजकस्य कल्याणाधिगम इत्यत्र न सन्देहलवोऽपि बोध्यः। अवतारपूज्यत्वसम्बन्धे श्रुतिरप्याह—

"यस्मिन् विश्वानि काव्याचक्रे नाभिरिव त्रिता त्रितं जूती संपर्यंत व्रजे गावो न संयुजे युजेऽश्वां अयुक्षत नमन्ता मन्यके समे" इति॥ ६५॥

अवतारपार्थक्यं निर्णयति—

## त्रिविधशुद्धाववतारो भगवतोऽन्यथा चेदन्यथा॥ ६६॥

अवतारविज्ञानरहस्यं सविस्तारं वर्णयित्वा पूज्यपादो महर्षिः सूत्रकारो भगवदवतारस्य पार्थक्यं विविनक्ति। शक्तिविकासस्तु भगवतो देवर्षीणां वा अवतारेषु सम्भवन् परिदृश्यते, परन्तु कीदृशे लक्षणे परिदृश्यमाने भगवतोऽवतारो विज्ञेय इति जिज्ञासासमाहितये सूत्रकृद् भगवान् व्याचष्टे। यत् अध्यात्माधिदैवाधिभूतसंज्ञकशुद्धित्रयविद्यमाने भगवतोऽवतारः सम्भवति। सच्चिदानन्दमयस्य श्रीमतो भगवतस्त्रिविधभावकलाविकासः सर्वत्रैव जगति परिव्याप्नोति, स्मृतावप्युक्तम्—

दृश्यप्रपञ्चजातेऽस्मिन् निखिले सचराचरे।
अभिव्यक्तास्मि भो देवाः कलारूपेण सर्वतः॥

परं दृश्यप्रपञ्चस्तु नैवास्ते मयि निर्जरा:।
मय्यास्ते पूर्णसद्भावः कलाषोडशकान्वितः॥
चिद्भावानन्दभावौ स्तः कलापूर्णौ च मय्यतः।
कलाषोडशकोपेत सच्चिदानन्दमय्यहम्॥
यतोऽहं सच्चिदानन्द भावैः पूर्णैश्च पूरिता।
अन्तःपूर्णा बहिःपूर्णा पूर्णातोऽस्मि च सर्वथा॥
सच्चिदानन्दभावानां नन्वेकैककलाश्रयः।
दृश्यप्रपञ्चपुञ्जोऽयं समुद्भूतोऽखिलो मम॥
एतास्तिस्रस्त्रिभावानां विश्वं व्याश्नुवते कलाः।
आधिदैविकमध्यात्मरूपं धृत्वाऽधिभौतिकम्॥

यावत् कुत्रचित् पिण्डे अध्यात्माधिदैवाधिभूत-संज्ञकशुद्धित्रयलक्षणं न प्राकट्यमेति न तावत् तत्र त्रिविधश्रेणीकलाविकाससम्भावना, यावच्च श्रेणीत्रय-शक्त्याविर्भावः कुत्रचित् पिण्डेन न स्यात् न तत्र भगवदवताराविभर्वाः सिध्येत्। भगवदवतारेऽध्यात्म-शुद्धिसम्भवात् ज्ञानपरिपूर्णलक्षणं नूनमेव लक्ष्येत, इयानेव भेदो यत् पूर्णावतारे ज्ञानस्य परिपूर्णता। यथा च भगवति श्रीकृष्णचन्द्रे निमाल्यते। अंशावतारे न तथा सम्भवः। यस्मै प्रयोजनाय अंशावतारः समजनि, तादृशज्ञानविकाशस्तत्र सम्भवी। बुद्धदेवादयोऽत्रोदाहरणम्। अधिदैवशुद्धया दैवविभूतीनां विकासोऽवतारविग्रहेऽवश्यसम्भावी। पूर्णावतारत्वाद् भगवति श्रीकृष्णचन्द्रे विभूतीनां विकाशस्य परिपूर्णता निमाल्यते। तद् भिन्नावतारेषु आवश्यकीय विभूतीनां पराकाष्ठायां सत्यामपि सर्वश्रेणीविभूतिविकासो नास्त्येव। तथैवाधिभौतिकशुद्धयाऽवतारविग्रहेषु शारीरिकवैभवस्यासाधारणो विकासोऽवश्यमेव तिष्ठेत्। पूर्णावतारे भगवति श्रीकृष्णचन्द्रे तु आधिभौतिकी परिपूर्णता परिदृश्यते। अंशावतारेषु न तथा, तत्र तु आंशिकी वा एकदेशीया वा परिपूर्णता प्राकट्यमेति।

पूर्णावतारे समानरूपेण यथा शारीरिकमाधुर्य-विकासो न तथांऽशावतारे। परशुरामे ऐश्वर्यस्य न माधुर्यस्य। मत्स्यकूर्मादौ चाप्येवमेवावधेयम्। अस्तु। भगवदवतारे शुद्धित्रयविकाशोऽवश्यम्भावी परिपूर्णता, अंशावतारे तु तिसृणामपि शुद्धीनां केवलं विकासो न परिपूर्णता। ऋषीणां देवानाञ्चावतारेषु समानरूपेण शुद्धित्रयविकासो न जायते। ऋषीणामवतारेषु अध्यात्मशुद्धेः, देवावतारेषु चाधिदैवशुद्धेः प्राधान्यम्। यतो हि ऋषयो ज्ञानराज्यस्य, देवाश्च कर्मराज्यस्य चालका अधीश्वराश्च समाम्नाताः। ऋषीणामवतारेषु अध्यात्मकलाविकासस्यावश्यम्भावित्वेऽपि, केषुचित् अधिदैवकलाया अधिभूतकलायाश्चापि विकासः सम्भवः। तथैव देवावतारेषु चापि अधिदैवकलाविकाससत्वेऽपि तेषु अध्यात्मकलाया अधिभूतकलायाश्चापि विकासः सम्भवति। भगवतो यथा पूर्णावताराः अंशावताराश्च सम्पद्यन्ते, तथैव कलाभेदेन ऋषीणां देवानाञ्चावताराः पूर्णरूपेणांशरूपेण च समुत्पद्यन्ते। यथा च भगवतः पूर्णावतारे त्रिविधशुद्धिपूर्णता, अंशावतारे च त्रिविधानां शुद्धीनाम् आंशिको विकाशस्तथैव ऋषीणां देवानां चावतारेषु आध्यात्मिकाधिदैविकशक्त्यो पूर्णत्वमांशिकत्वं च जायते, तस्मादेव कारणात् ऋषीणां देवानां च पूर्णावतारा अंशावताराश्च परिज्ञेयाः। महर्षेर्व्यासस्य द्वादशस्वप्यवतारेषु महर्षिकृष्णद्वैपायने पूर्णावतारस्य लक्षणम् यमधर्मराजस्यावतारेषु महाराजयुधिष्ठिर पूर्णातायां विदुरादौ च अंशावतारस्य लक्षणमुदाहरणरूपेणावधेयम्॥ ६६॥

त्रिविधशुद्धिविचारेण पुनस्तद्विज्ञानं द्रढयति—

**अतो ब्रह्मणक्षत्रिययोः पुण्ययोनित्वात्॥ ६७॥**

अतो हेतोः पुण्ययोनित्वात् पुण्योत्पत्तिशीलत्वात्

ब्राह्मणक्षत्रियविग्रह एव भगवदवतारा: सम्भवन्ति। वर्णाश्रमधर्मपरिशुद्धार्यक्षेत्रे पुण्ययोनौ भगवानवतरति नान्यत्र। तात्पर्यमिदं यत् भगवदवतारा यदा स्वयमेव पारलौकिकरूपतो विग्रहं गृह्णन्ति, यथा—मत्स्यकूर्मनृसिंहादिविग्रहधारणम्, तदानीं मन्य एव नियमः तद्विग्रहेषु मातृपितृसम्बन्धाभावात्। पूज्यपाद महर्षि सूत्रकाराभिप्रायोऽयं यत् मातृपितृसम्बन्धयुक्ते भगवदवतारविग्रहे वर्णाश्रमयुक्तपुण्ययोनेरपेक्षा वर्तते। ऋषिदेवानां चावताराणां जागतिक सर्वमानवजातौ सम्भवः। समुन्नतोर्ध्वलोकनिवासिनाम् ऋषीणां तु पुण्ययोनौ वर्णाश्रमधर्मयुक्तायाम् आर्यजातावेवावतारसम्भवः। विशेषतो मन्त्रद्रष्टुः ऋषिगणस्यावतारस्तु वर्णाश्रमधर्मयुक्तार्यजातौ समभूद्भविष्यति च। किन्तु यदा प्रत्येकब्रह्माण्डस्योर्ध्वसप्तलोकेषु अधःसप्तलोकेषु च ऋषीणामावासास्तर्हि तेषां दिव्यासुरभावयुक्ता उभयात्मका अवतारा भवितुमर्हन्ति। शास्त्रमपि दैवमासुरं चेति द्विप्रकारकम्। अतः ऋषीणामवतारः सर्वत्रैव मानवजातौ सम्भवति।

कर्मराज्यसम्बद्धा देवा अप्यनेकश्रेणयः। अतो हि तेषामवतारो जागतिक सर्वविधमानवजातिषु सम्भवति। भगवदवतारप्रकाशस्तु नैवमिति सूत्रस्यैतस्य तात्पर्यम्। उक्तमपि गीतोपनिषदि—

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा।

भगवद्वचनेनैतेनेदं सिध्यति यद् ब्राह्मणक्षत्रियव्यतिरिक्ताः सर्वा अपि जातयः पापयोनय एव, पुण्यपापयोर्धर्माधर्मसम्बन्धः। धर्मेण पुण्यमधर्मेण च पापमुत्पद्यते। धर्मविहीनेन अर्थेन कामेन च पापाधिगमः। अतो धर्मलक्ष्ययुक्ता राजर्षयो मोक्षलक्ष्ययुक्ता ब्राह्मणा एव पुण्ययोनयः समाम्नाताः। एतदसाधारणं विज्ञानं वर्णाश्रमधर्मस्यावधेयम्। वर्णाश्रमधर्ममहत्त्वविषये स्मृतयः प्रोचुः—

आर्यजाते वीर्यरक्षाऽध्यात्मिकी च क्रमोन्नतिः।
पितॄणां वर्द्धनाऽनल्पा तत्कृपाप्राप्तिरेव च॥
सहोच्चैर्देवलोकैश्च सम्बन्धस्थापनं भृशम्।
विबुधानां प्रसादश्च विश्वमङ्गलसाधकः॥
तथा स्वभावसंसिद्ध - संस्कारोदयसाधनम्।
बीजरक्षाऽऽत्मबोधस्य कैवल्याधिगमोऽपि च॥
वर्णाश्रमाणां धर्माणामष्टवेतानि मुख्यतः।
प्रयोजनानि सम्प्राहुः कर्मतत्त्वाब्धिपारगाः॥

यदा किल भगवदवतारप्राकट्यकृते त्रिविधशुद्धियुक्त विग्रहावश्यकत्वम्, तर्हि प्रागुक्तेन विज्ञानेनेदमनायाससिद्धम्, यद् वर्णाश्रयधर्मयुक्तायां मानवजातावेव त्रिविधशुद्धिसम्भावना। स्मर्यते चाप्यत्र—

वर्णाश्रमाणां धर्माणां भवेद् बीजं सुरक्षितम्।
पित्रोर्धार्मिकयोर्नूनं शुद्धया शोणितशुक्रयोः॥
धर्मे वर्णाश्रमे सम्यक् पीठशुद्धिः स्वतो भवेत्।
पीठशुद्ध्या स्वतश्चक्र शुद्धिकार्यं च सिध्यति॥
यावती चक्रशुद्धिः स्यात्तावती वः प्रसन्नता।
प्रसीदन्ति प्रसादेन देवा वोऽभ्युदयं गताः॥
देवप्रसादमासाद्य जनाः प्रारब्धशालिनः।
ऋषिप्रसन्नतां लब्ध्वा भवेयुर्ह्यात्मवेदिनः॥

सुतरां भगवदवतारविग्रहे त्रिविधशुद्धेरावश्यकत्वम् त्रिविधशुद्धिसंयुक्ताऽऽर्यजातिरेव पिण्डदानाधिकरिणी, चतुर्ष्वपि वर्णेषु ब्राह्मणक्षत्रिययोः पुण्ययोनित्वात् भगवदवतारविकासस्य विशिष्टमुपयोगित्वम्॥ ६७॥

पूर्णावतारविशिष्टतां व्यनक्ति—

**पूर्णे तस्मिन् पूर्णतोभयशक्तेः ॥६८॥**

तत्र पूर्णेऽवतारे उभयशक्तेर्ज्ञानकर्मशक्तेः परिपूर्णता

परिदृश्यते। ज्ञानराज्यस्य कर्मराज्यस्य च चालका ऋषयो देवाश्च भगवदवतारविग्रहे त्रिविधशुद्धियुक्ता अध्यात्माधिदैवाधिभूतशुद्धयः प्राकट्यमायान्ति। सुतरां यत्र विग्रहेऽध्यात्माधिदैवशुद्धिपरिपूर्णता तत्र ऋषिदेवशक्तिप्रकाशः स्वतः सिद्धः। फलतः पूर्णावतारविग्रहः पूर्णया ऋषिशक्त्या देवशक्त्या च संयुक्त इत्यत्र नाणीयानपि संशयः। भगवतः श्रीकृष्णस्य चरित्रमेवास्योदाहरणम्। पूर्णावतारविग्रहे आधिभौतिकशक्तेः परिपूर्णताऽपि भवति, परन्तु पित्रवताराभावेन सूत्रेऽत्र आधिभौतिकशक्तिविज्ञानं न निर्दिष्टम्॥ ६८॥

पूर्णावतारवैशिष्ट्यं पुनः प्रोच्यते—

**तत्र त्रिविधस्याधिकारस्य पूर्णता ॥६९॥**

तत्र भगवत्पूर्णावतारे त्रिविधाधिकारस्य परिपूर्णता विज्ञातव्या। पूर्णतायां सर्वमपि पूर्णमेव सम्भवति, अध्यात्माधिदैवाधिभूतपूर्णता, ज्ञानोपासनाकर्मसम्बन्धिनाम् ऐश्वर्याणां परिपूर्णता, ज्ञानक्रियास्थूलशक्तिपूर्णता प्रतिभैश्वर्यमाधुर्य्यादीनां च परिपूर्णता भगवतः पूर्णावतारे स्वतो विकासमापद्यन्ते। यथा किल भगवान् अन्तःपूर्णो बहिःपूर्णस्तथैव तस्य पूर्णावतारोऽपि सच्चिदानन्दभावपरिपूर्णो जायते॥ ६९॥

अन्यापेक्षया तद्वैशिष्ट्यमुच्यते—

**ऋषीणां देवानां वा तत्र नैवम् ॥७०॥**

ऋषीणां देवानां चावतारेषु नैवं भवति। ननु भगवतः पूर्णावतारेत्यादि त्रिविधाधिकारपूर्णता तर्हि ऋषिदेवावतारेऽपि तथैव किंवा पूर्णावतारसम्बन्धेन भगवतः ऋषिदेवानां चावतारे परस्परं कीदृशो भेदः? एतादृशजिज्ञासुशंकायाः समाहितय एव पूज्यपाद महर्षिसूत्रकृता सूत्रमिदमाविश्चक्रे। समाधानमिदं यत् भगवतोऽवतारे यथा त्रिविधाधिकारपूर्णता न तथा ऋषिदेवावतारेषु। यद्यपि भगवतः ऋषिदेवानां चांशावताराः पूर्णावताराश्च जायन्ते, किन्तु यथा भगवतः अंशावतारे त्रिविधाधिकारोदयस्य न्यूनाधिक्यम् पूर्णावतारे च त्रिविधाधिकाराणां परिपूर्णता न तथा ऋषिदेवावतारेषु। ऋषीणां पूर्णावतारे आध्यात्मिकाधिकारस्य पूर्णता, देवानां च पूर्णावतारे आधिदैविकाधिकारस्य पूर्णता नूनमेव जायते। ऋष्यवतारे आधिदैविकाधिभौतिकयोः, देवावतारे च अध्यात्मिकाधिभौतिकयोः परिपूर्णता न भवति। यतो भगवानेव त्रिभावपूर्णः। अतो भगवदवतारेष्वेव त्रिभावसम्बन्धीयशक्तिसद्भावः स्वतः सिद्धः। ऋषयो देवाश्च केवलमेकैकभावराज्याधीश्वराः। एतेषां कार्याधिकारा अपि नियमिता एव। ऋषयो देवाश्च अध्यात्मराज्येन अधिदैवराज्येन च सम्बन्धनिबन्धना॥ ७०॥

कुत्र देशे भगवदवतार इति प्रसङ्गादुच्यते—

**पूर्णा प्रकृतिरपेक्ष्या तस्य तस्मै ॥ ७१ ॥**

तस्य भगवतः तस्मै अवताराय पूर्णा प्रकृतिरपेक्ष्यते। परिपूर्णस्य भगवतः शक्तिर्मत्स्य-नृसिंहादावतारयोग्ये पिण्डे स्वत एव परिपूर्णरूपेण आविर्भवति। यद्यवतारविग्रहो मातृपितृसम्बन्धेन प्राकट्यमेति तर्हि तदर्थं पूर्णप्रकृतियुक्तस्य देशस्यावश्यकत्वमापतति। देशो भागद्वयविभक्तः। स्मर्यते चात्र—

अधुना देशविज्ञानं वर्णयामि सुसाधनम्।
प्रकृतेर्मण्डलं यत्तद्ब्रह्माण्डं तत्समष्टितः॥
तदेव पिण्डरूपेण प्रोच्यते व्यष्टिनामतः॥

अवतारविग्रहप्राकट्यसम्बन्धे मातापितृदेहो व्यष्टिदेशान्तर्गतो, भूमण्डलस्य यत्र विभागे भगवदवतारः प्राकट्यमेति स च समष्टिदेशान्तर्गतो बोध्यः।

द्वावप्येतौ व्यष्टिसमष्टिदेशौ पूर्णप्रकृतियुक्तावेवोचितौ। यत्र कुले भगवदवतारविग्रहोत्पत्तिस्तत् विशुद्धं ब्राह्मणस्य राजर्षेर्वा कुलं भवितुमर्हति। यथा पूर्वसूत्रे निर्णीतम्। वस्तुतः पितुर्वर्णाश्रमधर्मयुक्तब्राह्मणक्षत्रिययोरन्यतरत्वे मातुश्चादर्शसतीधर्मयुक्तत्वे व्यष्टिदेशः पूर्णप्रकृतियुक्तः सिध्यति। सुतरामार्यजातावेव भगवदवतारप्रकाशः सम्भवति। वर्णाश्रमधर्मयुक्ता, अध्यात्मलक्ष्यपरायणा, आदर्शसतीधर्मशालिनी मानवजातिरेव आर्यजातिनाम्ना प्रोक्तेनि प्रागेवोक्तम्। भगवदवताराविर्भावहेतुभूत पूर्णप्रकृतियुक्तः स एव देशो भवितुमर्हति यत्र वर्णाश्रमधर्मस्य प्रचारः सम्भवति। शास्त्रकृद्भिरप्येतदनुशिष्टम्। स्मृतिषु भारतमण्डलमहत्त्वं बहुशो गीयते। यथाहि—

आर्यावर्त्तप्रदेशे हि कर्मभूमिस्वरूपिणि।
विशुद्धे याज्ञिके रम्ये सर्वर्त्तुव्रातशोभते॥
का वार्ताऽतोऽस्ति देवानामवतारीयविग्रहम्।
आविर्भवितुमिच्छाम्यार्यावर्त्तेऽहमाश्रयन्॥

अन्यच्च—

विष्णुर्वरिष्ठोदेवानां ह्रदानामुदधिर्यथा।
नदीनां च यथा गंगा पर्वतानां हिमालयः॥
अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रो यथा वरः।
देवीनां च यथा दुर्गा वर्णानां ब्राह्मणो यथा॥
तथा श्रेष्ठा कर्मभूमिर्भूमौ भारतमण्डलम्॥
देहाङ्गेषु यथा श्रेष्ठं प्राणिनां मस्तकं तथा।
भूभागे पावनो देश आर्यावर्त्त इति स्मृतः॥

सुतरां पूर्णप्रकृतियुक्त आर्यावर्त्ते ब्राह्मणक्षत्रियवर्णयोरेव भगवदवताराविर्भावसम्भावना॥ ७१॥

अन्यावतारकथा निर्णीयते—

**इतरः सम्भाव्यः सर्वत्र॥ ७२॥**

इतरो भगवदवतारव्यतिरिक्त ऋषिदेवावतारः सर्वत्रैव भूमण्डले सम्भाव्यः। भगवदवतारहेतवे यथा पूर्णप्रकृतेरावश्यकता, तथैव देवर्षीणामवतारविषये पूर्णप्रकृतियुक्तताऽवश्यकत्वे जागतिकसर्वजातिदेशेषु कर्मज्ञानसुव्यवस्था कथं सम्भवेति जिज्ञासु शंकासमाधानार्थमेव सूत्रकारः पूज्यपादो महर्षिः सूत्रमिदमाविश्चकार। सूत्रोक्तविज्ञानेनैतेनावतारवादस्य सार्वभौमता सर्वोपकारिता च साधु प्रतिपद्यते। जगति भगवदवतारः कदा कदाचिदेव सम्भवति। यदा किल समस्तेऽपि जगति केनापि गुरुतरपरिवर्तनेनाधर्मनाशधर्मप्रतिष्ठयोरावश्यकता समुत्पद्यते, किं वा सृष्टिरक्षाहेतवे लोकातीतासाधारणकार्यानुष्ठानस्य प्रयोजनीयता समापतति, तदैव भगवदवताराविर्भावः। अवतारो द्विविधो लौकिकालौकिकविग्रहभेदात्मकः। मत्स्यकूर्मनृसिंहादयोऽलौकिकविग्रहवन्तो रामकृष्णादयश्च लौकिकविग्रहशालिनः। द्विविधोऽपि भगवदवतारप्रकाशो लोकातीता लीलाविषयः। सुतराम् तादृशलोकातीतलीलयाऽसाधारणकार्यकारणसम्बन्धसत्वात् पूर्वसूत्रेषु तद्रहस्य प्रतिपादितम्। किन्तु साधारणतः सृष्टिसामञ्जस्य रक्षार्थै देवानाम् ऋषीणां चावतारा जगति प्राकट्यमापद्यन्ते तदानीम् असाधारणानां देशकालजातीनामनावश्यकत्वमेव। देवर्षीणां अनेकाः श्रेणय इति प्रागेवोक्तम्। सुतरां देवर्षीणामवतारस्य सर्वविधदेशकालजातिषु प्राकट्यं नासम्भवम्। यदा किल भूमण्डलस्य कुत्रापि देशे मनुष्यजातौ वा कस्यचिदभिनवस्यापूर्वस्य दैवस्यासुरस्य वा ज्ञानस्य प्रकाश आवश्यको बोभवीति, तदानीम् ऊर्द्ध्वसप्तलोकस्था अधःसप्तलोकवासिनश्च ऋषयः तत्तदावश्यकत्वमनुसृत्य यथायोग्यपिण्डेषु स्वीयाः कला आविर्भाव्य सृष्टिसामञ्जस्यरक्षां वितन्वते। एवमेव देवा असुराश्च सृष्टिसामञ्जस्यरक्षाया हेतवे यथायोग्यदेशकालमनुष्यजातौ यथोचितपिण्डे स्वकीयाः कलाः प्रकटय्य विशेषतः

कर्मराज्यसञ्चालनायावतरन्ति । अध्यात्मब्रह्मदैवसंज्ञकानि शब्दवाच्यज्ञानानि यद्यपि सर्वविधदेशपात्रेषु नैव प्राकट्यमर्हन्ति । परन्तु साधारणस्य दैवस्यासुरस्य वा ज्ञानस्य सर्वत्रैव देशे जातौ च प्रकाशः सम्भवत्येव । अन्यच्च दैवासुरसम्पत्तिरहिता न कापि जातिर्न कोऽपि देशश्च । अतोऽसाधारणावसरे समुत्पद्यमाने सर्वत्रैव देशे जातौ च यथावद् ऋषिदेवावतारो विज्ञानसिद्धः ॥ ७२ ॥

इदानीं त्रिविधशक्तिश्रेष्ठत्वक्रम उच्यते—

**अधिभूताधिदैवाध्यात्मशक्तीनामुत्तरोत्तरा परा ॥ ७३ ॥**

एतासां सूत्रोक्तशक्तीनां मध्ये उत्तरोत्तरा परा श्रेष्ठाऽवगन्तव्या । अध्यात्माधिदैवाधिभूतशक्तिपूर्णतयैव भगवतः शक्तेः परिपूर्णता प्राकट्यमेति । भगवदवतारेण सह तिसृणामपि साक्षात् सम्बन्धः । अन्यच्च तिसृणामपि तासां सञ्चालकैर्देवर्षिपितृभिरपि साकं तस्य प्रत्यक्षसम्बन्धः । अतस्तिसृणामपि प्रधानतायाः क्रमो नूनमेव निर्णेतव्य इत्यर्थमेव सूत्रस्यैतस्याविर्भावः । यद्यपि तिस्रोऽप्येताः स्वस्वभावविचारमनुसृत्य वक्ष्यमाणसूत्रसिद्धान्तनिर्णयानुसारेण समानैव, तदीयाः स्वतन्त्रशक्तयश्च स्वस्वकार्यकारिताया अनुरोधात् स्वतन्त्राः समानाश्च सन्ति, किन्तु अभ्युदयं निःश्रेयसं च लक्ष्यीकृत्य आधिभौतिकशक्तितो ह्याधिदैविकी, ततश्च आध्यात्मिकी प्रबलेत्यभ्युपगन्तव्यमेव । आधिभौतिक्याः शक्तेः सम्बन्धः केवलेन स्थूलशरीरेण सह, आधिदैविक्याः स्थूलसूक्ष्माभ्यामुभाभ्यां शरीराभ्याम्, आध्यात्मिक्याः शक्तेः सम्बन्धस्तु त्रिभिः स्थूलसूक्ष्मकारणशरीरैः साकं भवति । अत आसु शक्तिषूत्तरोत्तरा श्रेष्ठा । आधिभौतिकीशक्तिः केवलमन्नमयकोषे, आधिदैविकी अन्नमय-प्राणमय-मनोमयकोषेषु, आध्यात्मिकीशक्तिश्चान्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयेषु पञ्चस्वपि कोषेषु चाधिपत्यं विदधाति । आधिभौतिकं राज्यं केवलं स्थूलप्रपञ्चे व्याप्नोति । अत एव कारणात् पितृगणः स्थूलस्य शरीरस्य तत्सम्बद्धप्रपञ्चस्य च चालकाः सन्ति । दैवराज्यं स्थूलराज्यस्य धारकं चालकं च अतएव कर्मराज्यचालका देवाः समाम्नाताः । परमाध्यात्मिकं किल राज्यमुभयविलक्षणं समुन्नतं च । महत्तत्त्वेन साक्षात् सम्बन्धसत्वात् तद् बुद्धिराज्यचालकम्, बुद्धेः सर्वतः प्राधान्यात् । आध्यात्मिकी शक्तिः सर्वश्रेष्ठा स्वीकार्यैव विद्यते । विशेषतो बुद्धितत्त्वशक्तिरेवाविद्यायाः प्रधानदुर्गभूतमानन्दमयं कोषं भिनत्ति । अतः श्रुतिराह "बुद्धेः परः पुरुषः" इति । बुद्धेरतीतोऽपि परमात्मा बुद्ध्यैव साक्षात् क्रियते । अतोऽविद्याप्रबलदुर्गभेदो बुद्धिसाहाय्येनैव सम्पद्यते । विज्ञानमेतत् प्रकारान्तरेणावबोधति । जगत्सञ्चालकत्वात् कर्मराज्यं स्थूलजगदपेक्षया श्रेष्ठम्, बुद्धिविचारसाहाय्येन अविद्यामपसार्य यदि जीवः कर्मराज्याद् विमुच्यते तदैतदङ्गीकार्यमेव यत् ज्ञानराज्यसम्बन्धिनी आध्यात्मिकी शक्तिः कर्मराज्यसम्बद्धाधिदैवशक्तितो गरीयसी शक्तिशालिनी च । अत एतास्तिस्रः शक्तय उत्तरोत्तरं शक्तिशालिन्यः सिध्यन्ति ॥ ७३ ॥

प्रसङ्गतस्तिसृणां स्वरूपतो महत्त्वमुच्यते—

**समास्ताभावे शक्तौ त्वसमाः ॥ ७४ ॥**

तास्तिस्रोऽपि शक्त्यो भावे समानाः शक्तौ न समानाः सन्ति । परमात्मा सच्चिदानन्दमयः । तदीयाः सच्चिदानन्दसत्ताः स्वतन्त्रान् त्रीन् भावान् प्रकटयन्त्यः कथमिव सर्गानुभवं कारयन्तीति दर्शनेऽत्र सम्यङ् निर्णीतिम् । भगवतश्चिद्भावमवलम्ब्य प्रकृतिभावस्य,

आनन्दभावमवलम्ब्य प्रकृतिपुरुषत्रिगुणात्मकजगत्प्रपञ्चस्य च सृष्टिः, सद्भावमाश्रित्य च आध्यात्मिक प्रपञ्चः प्राकट्यमुपैति। सुतरां स्वतः सिध्यतीदं यद् भावविचारतस्तिस्रोऽपि समाना एव सन्ति। केवलेन शक्तिविचारेणैव तदधिकारेषु तारतम्यमिति पूर्वसूत्रभाष्ये स्पष्टीकृतमास्ते ॥ ७४ ॥

इदानीं भाषाविभागं वर्णयति—

**भावहेतवो भाषास्त्रिविधाः ॥ ७५ ॥**

भाव एव हेतुर्यासां ता भाषास्त्रिविधास्त्रिप्रकारा विज्ञेयाः। शब्देन भावः प्रकाश्यते, भाषा च शब्दयोजनया सम्पद्यते। अन्तर्जगति भावो बहिर्जगति भाषा च परस्परं न भिद्यते। अतोऽन्तर्जगतो भावैस्त्रिभिः साकं बहिर्जगतो भाषाया विभागत्रयस्य कार्यकारणसम्बन्धो निबद्धः। वेदेषु तत्सम्मतशास्त्रेषु च यो हि समाधि-लौकिक-परकीयनामकभाषात्रयविन्यासः स च यथाक्रमम् अध्यात्माधिदैवाधिभूताख्यभावत्रयसम्बन्धवानास्ते। त्रिविधानामपि भाषाणां सविस्तरं वर्णनं शास्त्रस्वरूपप्रकाशकसूत्रभाष्ये प्रागेवानुष्ठितम् ॥७५॥

तद्वैशिष्ट्यमुच्यते—

**तास्तिस्र एकैकस्यां तिसृणां सम्भवात् ॥७६॥**

यथा सच्चिदानन्दमये ब्रह्मणि सच्चिदानन्दात्मका भावाः परस्परं पार्थक्यं वहन्तोऽपि अद्वैतस्वरूपभावे ह्येकस्वरूपा एव तथैव समाधि-लौकिक-परकीयाख्यास्तिस्रो भाषा वेदादिशास्त्रेषु विभिन्नस्वरूपा अपि लक्ष्यैकसम्बन्धात् विज्ञानदृशा अभिन्ना एव। वस्तुतः तिस्रोऽपीमा अद्वितीयं ब्रह्मैव निर्णयन्ति। विज्ञानमिदं सुस्पष्टयितुमिदमुच्यते यत् त्रिविधभाषोदाहरणं लिङ्गपुराणोक्तं यत् प्राङ्निर्दिष्टं, तेन चिन्मयलिङ्गे अनन्तकोटिब्रह्माण्डानि भासन्ते इति निर्णीयते। एतज्जगद्योनिशिवलिङ्गस्वरूपवर्णनं समाधिभाषाया उदाहरणस्वरूपम्। यतो हि तदनाद्यनन्तं चिन्मयं लिङ्गमुदाहृतम्। अन्यच्च यद्धि भगवतो ब्रह्मणो विष्णोश्चान्योन्यविवादसम्बन्धेन तल्लिङ्गस्यानाद्यनन्तत्वमहिमा प्रख्यापितस्तदपि तस्यैव चिन्मयलिङ्गस्य लौकिकभाषया रहस्यमुद्घाटितम्। उक्तसूत्रभाष्यस्य तृतीयस्थले गाथारूपपरकीयभाषाया वर्णनं तदपि तस्यैवैकमात्रस्य चिन्मयलिङ्गस्य रहस्यं प्रतिपादितमवसीयते। अतो यदि त्रिविधा अपि भाषा एकस्यैव जगद्योनेः चिन्मयस्य शिवलिङ्गस्य रहस्यविज्ञानं प्रकाशयन्ति, तर्हि विज्ञानदृशा ताः परस्परमभिन्ना एव, तासु चैकाऽद्वितीया शक्तिर्निहिता तिष्ठति। इमास्त्रिप्रकारा वर्णनपद्धतयो वेदस्मृतिपुराणतन्त्रादिषु सर्वत्रैव समुपवर्णिता उपलभ्यन्ते। एतासां याथातथ्यस्वरूपपरिज्ञानेन वेदशास्त्रेषु न कथमपि कोऽपि शङ्कोदयावसरः ॥ ७६ ॥

सम्प्रति लौकिकभाषा महत्वमुच्यते—

**गरीयसी लौकिकी भाषा भाववैचित्र्यात् ॥ ७७ ॥**

भाववैचित्र्येण हेतुना लौकिकी भाषा गरीयसी सर्वश्रेष्ठेत्यर्थः, समाधिलौकिकपरकीयभाषोदाहरणलक्षणानि वेदशास्त्रप्रामाण्यसम्बन्धीय सूत्रभाष्ये सविस्तरमुक्तानि। भाव एव मुख्यतत्त्वम्, तदपि सविस्तरं प्राक् प्रपञ्चितम्। शब्दएवान्ताराज्यभावव्यञ्जकः, शब्दानां सुकौशलपूर्णेन विन्यासेन भाषा समुत्पद्यते। सा च पूर्वोक्तप्रकारतो भावत्रयविभक्ता। सनातनधर्मस्य आर्यजातेश्चाध्यात्मलक्ष्ययुक्तत्वात् पूर्वोक्तभाषायास्त्रैविध्यमार्यशास्त्रेषु निर्णीतम्। निष्कर्षोऽयं यत् या किल भाषा नास्त्यध्यात्मलक्ष्यसंयुक्ता नासौ सनातनधर्मस्य आर्यजातेश्च दृष्ट्या भाषाशब्दवाच्या

भवितुमर्हति। एतद्विज्ञानमनुसृत्यैव पूज्यपादैर्महर्षिभिर्वेदादिशास्त्रसमुच्चये त्रिविधा भाषा व्यवहार-कोटिं गमिताः। सा च त्रिविधा भाषा समाधि-लौकिक-परकीयनाम्ना निर्णीता।

एतासु त्रिप्रकारास्वपि भाषासु समाधिभाषा अध्यात्मतत्त्वप्रकाशिका, द्वितीया परकीया भाषा अध्यात्मतत्त्वपुष्टिकरी, किन्तु लौकिकी विचित्रतापरिपूर्णा गम्भीरविज्ञानमूलिका रुचिकरी माधुर्यगुणसम्पन्ना च। लौकिक्या चैतया सात्त्विकराजसिकतामसिकास्त्रयोऽप्यधिकारिणो लाभवन्तो भवन्ति। अध्यात्मविज्ञान-गुम्फितत्वात् समाधिगम्यभावव्यञ्जकत्वाच्च ज्ञानिनोऽप्यौपनिषत्कमानन्दमनुभवन्ति। अत एव कारणात् केचिद् विज्ञा भागवतादि पुराणानि उपनिषन्नाम्ना, परमहंससंहिता नाम्ना च जगुः। उत्तमाधिकारिणः तया समाधेरानन्दम्, मध्यमाः समाधिगम्यभावम्, सर्वसाधारणाश्च साक्षात् परोक्षरूपतो वा सर्वविधं सुखमनुभवन्ति कल्याणं च लभन्ते। सुतरां भाव-वैचित्र्येण हेतुना माधुर्यकारणेन च लौकिकी भाषा श्रेष्ठा निर्णीता॥ ७७॥

भावसम्बद्धभाषावर्णनानन्तरं भावभूमिं वर्णयते—

**भावहेतोर्भूमयस्तिस्रः॥ ७८॥**

भावकारणात् भूमयोऽपि तिस्रो भवन्ति। जड-चेतनात्मिक्यो ज्ञानाज्ञानात्मिक्यः, प्रकृतिपुरुषात्म-शीलाः स्थावरजङ्गमस्वरूपाः, स्थूलसूक्ष्मात्मिक्यः सर्वा अपि ब्रह्मसृष्टिभूमयः, ब्रह्मणः सद्भावमानन्दभावं चिद्भावं चानुसृत्य अधिभूताधिदैवाध्यात्मरूपेण त्रिविधा भवन्ति। विज्ञानमिदं स्पष्टमवधारयितुं अभिधीयते यत् ब्रह्माण्डपिण्डात्मिकी सृष्टिः पञ्चकोषविभक्ता। सहज-मानवदैवभेदेन जीवपिण्डस्त्रिधा विभक्ता। एतत्समष्टि-रूपमेव ब्रह्माण्डमुच्यते। सर्वमेतत्पञ्चकोषात्मकम्। पञ्चस्वपि कोषेषु प्रथमोऽन्नमयः कोषः सर्वोऽपि आधि-भौतिकभूमेरन्तर्भवति। प्राणमनोमयावधिदैवभूमे-रन्तर्गतौ। विज्ञानानन्दमयौ अध्यात्मभूमेरन्तर्भवतः। प्राणमयः कोष उभयात्मकः, यतोऽसावाधिभौतिक्याधिदैविक्या च भूम्या साकं सम्बद्धः स च उभे अपि भूमी संयोजयते। एवमेव विज्ञानमयः कोषोऽपि उभयव्यापकः, अर्थात् अधिदैवभूमौ अध्यात्मभूमौ च परिव्याप्नोति उभय संयोजयति चापि। विज्ञानमिदं प्रकारान्तरेणाप्यवधेयं यत् अधिभूतभूमेः आधिपत्यं स्थूलशरीरे, अधिदैवभूमेः सूक्ष्मशरीरे, अध्यात्मभूमेश्च कारणशरीरे बोभवीति। एतत्तु प्रागेव निर्णीतं यत् स्थूलसूक्ष्मकारणाख्यप्रपञ्चत्रयस्य त्रिविधसृष्टिस्तरस्य अधिदैवस्वरूपाः पितरो देवा ऋषयश्च समाम्नाताः। त्रयाणामेषां तिसृभिर्भूमिभिः साकं सम्बन्धः। भूमित्रय-मनुसृत्यैव वेदास्तत्सम्मतानि शास्त्राणि गुरव आचार्याश्च उपदेशान् ददत इति॥ ७८॥

भूमित्रयोपरामहेतवे तन्मात्रा गतिर्निरूप्यते—

**द्वे गती तन्मात्राणां चिदुन्मुखी धृत्येतरोन्मुखी त्वधृत्या॥ ७९॥**

तन्मात्राणां द्वे गती स्तः, एका धृत्या धैर्येण चिदुन्मुखी भवति, अपरा तु अधृत्या इतरोन्मुखी विषयोन्मुखी जायते। अन्तःकरणेन्द्रियमध्यवर्त्तिनी तन्मात्रैव, या अन्तःकरणं जीवात्मानं च विषयाकारं विधाय बन्धने निपातयति। इयं हि तन्मात्रागतिः इतरोन्मुखी विषयोन्मुखीत्यवधेयम्। इयं गतिर्जीवचाञ्चल्यसम्बद्धा। योगिराजः साधको यदा योगयुक्तो भूत्वा निजां धृतिं समुन्नमयति, तदानीं तस्य चेतस आसक्तिः क्षीणतामुप-ढौकते। तदीयमन्तःकरणं च सद्भावसाहाय्येन पवित्रतां

भजते। तत्काले धैर्यसंयुक्तत्वात् तन्मात्रा भावतत्व-साहाय्येन आत्मनोऽभिमुखतां प्रपद्यन्ते। एतस्यामवस्थायां भाग्यवान् साधक आत्मसंयुक्तः सन् सर्वं विदधाति। तदानीं तस्य साधकस्य गमनोपवेशन-भोजनपानाद्यखिलमपि कार्यं न कथमपि वन्धनाय कल्पते। सुतरां सिद्धमिदं यत् तन्मात्राया द्वे गती स्वीयवेगप्राबल्येन पूर्वोक्तत्रिप्रकारभूमितो जीवमुपरमयतः। एका गतिश्चञ्चलतया समुत्पद्यते, अपरा चासक्ति-द्वारा पुष्टा सती जीवं विषयेषु निपात्य बन्धनं प्रापयति, तदानीं जीवो विषयाकारतां प्रतिपद्यमानो भूमित्रयज्ञानं विजहाति। अन्या श्रेष्ठा गतिः सा प्रोच्यते या सात्त्विकधैर्यसमुत्पन्ना शुद्धभावतत्त्वद्वारा परिपुष्टा भाग्यशालिनं भक्तं परमात्मचरणे संयोज्य संसारजालान्मोचयति। उत्तमदशायामस्यां भक्तो युक्त उन्मज्जन् निमज्जंश्च पूर्वोक्ताभ्यस्तिसृभ्यो भूमिभ्य उपरामं प्राप्य स्थितिमद्वैतामधिगच्छति। इमां द्विप्रकारां गतिमभिलक्ष्य श्रुतिश्चमत्कारमाह—

आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनो युक्तं भोक्तेत्याहुर्मनीषिणः॥
यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वाइव सारथे॥
यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः॥
यस्त्वविज्ञानवान् भवत्यमनस्कः सदा शुचिः।
न स तत्पदमाप्नोति संसारं चाधिगच्छति॥
यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः।
स तु तत्पदमाप्नोति यस्माद् भूयो न जायते॥
विज्ञानसारथिर्यस्तु मनः प्रग्रहवान् नरः।
सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम्॥७९॥

प्रोक्तगतिद्वयस्वभावसिद्धां गतिं वर्णयति—

## प्रवाह आत्मगामी चेतन इतरगामी तु जडः॥ ८०॥

मायायाः स्वरूपद्वयं शास्त्रकारैरुपवर्णितम्। एका विद्या, अपरा अविद्येति। उभयलक्षणं श्रुतिराचष्टे—

"दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता विद्याभीप्सितं नचिकेतसं मन्ये इति॥

स्मृतावप्युक्तम्—

ब्रह्मानन्दं निजं नूनमविद्यारूपतः सुराः।
विस्तार्य विषयानन्दे तत्र जीवान् निरन्तरम्॥
आवध्नाम्यहमेवालं तान् विद्यारूपतः पुमान्।
अज्ञानमूलकं द्वैत भावोत्पन्नं हि बन्धनम्॥
विच्छिद्योन्मज्जये चापि ब्रह्मानन्दे निमज्जये।
केवलं ज्ञानयोगेन पाशमज्ञानमूलकम्॥
जीवः शिवत्वमासाद्योच्छेत्तु पारयते ध्रुवम्।
विद्यारूपं तु विभ्राणाऽऽनेतुं च प्रयते सुखम्॥

श्रीभगवता स्वयमेवाह—

मम शक्तिर्द्विधा भिन्ना विद्याऽविद्याप्रभेदतः।
धर्माधर्मसुसम्बन्धस्ताभ्यां सार्धं हि विद्यते॥
एतस्यानुभवं सम्यग् धर्मज्ञा एव कुर्वते।
संवर्धयत आसक्तिर्नन्वसद्भावमूलिका॥
अविद्यायाः सदा विज्ञाः प्रभावो भूरिशो भवेत्।

विद्याविलसित आत्मगामीप्रवाह उत्तरोत्तरं चैतन्य-भावं वर्धयते, अविद्योपहितस्तु विषयगामी क्रमशो जीवेषु जडतामज्ञानं च संवर्धयति। व्यष्टिजीवे द्वावप्येतौ प्रवाहौ प्रवहतः। पूर्वोक्त ज्ञानाज्ञानभूमिरूप विद्याऽविद्यासाम्राज्ययोश्चालौकिकं वर्णनं हि बलवदुदाहरणमवधेयम्। मानवयोनिमुपढौकमानो जीवः प्रथमावस्थायां पञ्चमीं, षष्ठीं, सप्तमीं वाऽज्ञानभूमावेव

तिष्ठति। तिस्रोऽपीमा भूमयोऽविद्यासाम्राज्येऽन्तर्भवन्ति। ततश्च मानवो विद्यासाम्राज्यमासाद्य आत्मगामिनि प्रवाहे समुह्यमानः सप्तापि ज्ञानभूमीः क्रमशः समतिक्रमन् मुक्तिमधिगच्छति। एवं हि समष्टिसृष्टावपि प्रवाहद्वयं निभाल्यते। अत एव स्थावरजङ्गमात्मको सृष्टेर्द्वौ स्तरौ दृश्येते॥ ८०॥

प्रसङ्गादानन्दस्य गतिद्वयं वर्ण्यते—

## कदाचित्सति कदाचिच्चिति गमयति योग आनन्दस्य ॥ ८१ ॥

आनन्दस्य योगः कदाचिज्जीवं सति चिति वा गमयति। विज्ञानदशाऽऽलोच्यमाने सिध्यतीदं यत् सतश्चितश्च पृथक् संयोगादेवान्तःकरणे ब्रह्मानन्दानुभवः इन्द्रियद्वारा विषयानन्दभोगश्चेति द्विविधोऽप्यानन्दः समुत्पद्यते। वस्तुतो विषयानन्दो ब्रह्मानन्दसहोदर इति प्रागेव निर्णीतम्। इन्द्रियविषयसंयोगेन एकाग्रतां प्रतिपद्यमान मनसि यो ह्यानन्दानुभवो जायते, स च ब्रह्मानन्दस्यैव प्रतिबिम्बरूपः। विषयानन्दो प्रतिबिम्ब ब्राह्मानंदस्यैव इति रसपादे सविस्तरं प्रपञ्चितम्। वस्तुतो भावशुद्धिपूर्वकविषयानन्दभोगानन्तरं ब्रह्मानन्दोऽधिगम्यते। यथा चात्र स्मर्यते—

ततो यो विषयानन्दे ब्रह्मानन्दो विवर्त्तितः।
मालिन्यमाप्तवान्पूर्वं स्वस्वरूपसौ पुनः॥
सम्प्राप्य पितरो नूनं सच्चिद्भावसमन्वितम्।
भावमद्वैतमासाद्य परानन्दपदात्मकम्॥
कैवल्यं लभते नित्यमवस्थेयं हि षोडशी।

अन्यच्च विषयानन्दोऽपि समाधिस्थेऽन्तःकरणं एवानुभूयते। इयानेव भेदो यत् विषयानन्दभोग कालेऽज्ञानीजीवस्तां समाधिदशां नानुभवति, किन्तु ब्रह्मानन्दभोगिनो योगिन उभयदशायामपि समाधिदशामनुभवन्ति, आनन्दानुभवोऽयं सच्चित्साहाय्येनैव समधिगम्यते। उदाहृत्येदमवगन्तव्यं यत् विषयानन्दभोगावसरे विषयभोगी जीवो विषयैः साकं तदाकारतां दधाति, तदानीं तद्गतिः सतोऽभिमुखतां प्राप्नोति, यदा चासौ स्वकीयमस्तित्वमनुभवति तदा तदन्तःकरणगतिश्चिदाभिमुखमवगन्तव्या। समाधिस्थेन योगिराजेनापीदमनुभूयते यत् यदा स्वरूपदशाव्यतिरिक्तः स्वतन्त्ररूपेणानन्दानुभवस्तेन कर्त्तुमभिलष्यते चेत्तदानीं सहैव सच्चिद्भावयोः स्वतन्त्रा सत्ता तिष्ठति, तस्मिन्काले ब्रह्मानन्दरसास्वादनावसरे योगिनोऽन्तःकरणं क्षणेन सतोऽभिमुखं, क्षणेन च चिदोऽभिमुखं तरङ्गायितं जायते। समाधिदशायां शिवशक्त्योरुभयोरेव दर्शनं योगिराजः कर्त्तुं पारयति। अस्यामेवावस्थायां ब्रह्मानन्दभोगी भक्तो भगवतस्तुरीयायाः शक्तेर्दर्शनं विदधाति॥ ८१॥

इदानीं सृष्टिरहस्यमभिधत्ते—

## सृष्टिरितः कर्मणः ॥ ८२ ॥

इत एतद्दशात एव कर्मणः सृष्टिर्जायते। स्मृतौ ब्रह्मशक्तेर्भेदचतुष्टयमभिहितम्। तथाहि—

दशाद्वैताऽनुभूयेत मच्छक्त्यैव तुरीयया।
तस्या एव तुरीयाया मच्छक्तेर्बलतः खलु॥
निर्विकल्पसमाधिस्थैरात्मारामैर्महात्मभिः।
जीवन्मुक्तैः प्रतीयेऽहमाद्यन्तरहिते विभौ॥
अद्वैते निर्विकारे हि स्वरूपे चिन्मये सुराः।
ममैव विबुधा नूनं शक्तिः कारणरूपिणी॥
ब्रह्मविष्णुमहेशानां जननी नात्र संशयः।
यत्सूक्ष्मशक्तिरेवाहो दैवीं शक्तिं प्रयच्छति॥
पितृदेवर्षिवृन्देभ्यो नाना देवी स्वरूपिणी।
जगत्स्थूलप्रपञ्चोऽयं स्थूलशक्तेर्ममैव हि॥

नानाभेदान् समाश्रित्य नानारूपेषु जायते ।
स्थूलप्रपञ्चरूपं हि जगद् यस्य स्थ रक्षकाः ॥
यूयं देवगणाः सर्वे स्थूलशक्तेर्ममैव च ।
परिणामस्वरूपं तज्जानीति सुरसत्तमाः ॥

सैव तुरीया शक्तिर्या स्वरूप आनन्दमनुभावयति, द्वैतदशोत्पादिका ब्रह्मविष्णुमहेशजननी कारणशक्तिरुच्यते । पूर्वसूत्रप्रतिपादिततुरीयशक्तेरनुभवः कारणशक्तेराविर्भावे कर्मसमुत्पत्तिश्च समाधिस्थैर्योगिभिरेवानुभूयते, कर्मस्वरूपोत्पत्तिविषये स्मृतिदर्शनशास्त्राण्येवमूचुः, तथाहि—

ममैवास्ति स्वरूपं हि कर्मपीयूषपायिनः ।
वेदा वदन्ति कर्मास्ति ब्रह्मसारूप्यभागिति ॥
सर्वं द्वैतप्रपञ्चोऽयं कर्माधीनोऽस्त्यसंशयम् ।
आब्रह्मस्तम्बपर्य्यन्तं दृश्यजातमथाखिलम् ॥
ब्रह्माण्डान्तर्गतं सर्वं वहते कर्मनिघ्नताम् ।
अव्यक्ताया दशायाश्च देवाः ! व्यक्तदशोद्भवे ॥
कर्मैव कारणं वित्त कर्मायत्तमतोऽखिलम् ।
अतः कर्माधिकारोऽस्ति सर्वमूर्धन्यताश्रितः ॥
अहं ममेतिवद्भेदो यथा नास्ति दिवौकसः ।
मन्मच्छक्त्योस्तया कर्म मच्छक्त्योर्नास्ति भिन्नता ॥
देवा उद्भावकं सत्वतमसोः कर्म कथ्यते ।
धर्मः सत्वप्रधानत्वात् त्वधर्मस्तद्विपर्यात् ॥
ब्रह्माण्डपिण्डरूपस्य ह्यनाद्यन्तस्य कोविदाः ।
देवाः ! सृष्टिप्रवाहस्य कर्मैवोत्पादकं जगुः ॥

निष्कर्षमभिधत्ते—

## रहस्यमिदं सृष्टेः ॥ ८३ ॥

स्पष्टोऽर्थः । अहं ममेतिवत् ब्रह्मणि ब्रह्मप्रकृतौ चाभेदे सत्यपि प्रकृतिः परिणामिनी गीयते । ब्रह्मप्रकृतेर्दशाचतुष्टयवर्णनं प्रागेव प्रपञ्चितम् । स्वस्वरूपे ब्रह्मानन्दानुभावयित्री शक्तिरेव तुरीयेत्युच्यते । समाधिस्थैर्योगिभिरेव तुरीया शक्तिरनुभूयते । सच्चिदानन्दमयस्य ब्रह्मणः सच्चिदानन्दभावानां स्वतन्त्रा सत्ता यदा तुरीयशक्ति दययाऽनुभूयते, तदानीं चित्सत्तया पुरुषभावः, सत्सत्तया च प्रकृतिभावः, आनन्दसत्तया च प्रकृतिपुरुषात्मकस्य शृङ्गार भावस्यालौकिकः प्रत्यक्षो योगिजनैरनुष्ठीयते । ब्रह्मप्रकृतिस्त्रिगुणत्वान् परिणामिनी अतः स्वभावसिद्धपरिणामेन हेतुना मूलसृष्टिस्वरूपः प्रकृतिपुरुषात्मकः शृङ्गारोऽपि स्वाभाविकः । फलतः सृष्टिक्रिया स्वाभाविकीति सृष्टिरहस्यमवगन्तव्यम् । स्मर्यते चात्र—

स्वभावात्प्रकृतिर्मे हि स्पन्दते परिणामिनी ।
स एव स्पन्दहिल्लोलः स्वभावोत्पादितो मुहुः ॥
सदैवास्ते भवन् देवाः ! स्वरूपे प्रतिविम्बितः ।
तस्मान्मम प्राकृतानां गुणानां परिणामतः ॥
अविद्याऽऽविर्भवेन्नूनं तरङ्गैस्तामसोन्मुखैः ।
सत्त्वोन्मुखैश्च तैर्देवाः ! विद्याऽविर्भावमेति च ॥
तदाऽविद्याप्रभावेण तरङ्गाणां मुहुर्मुहुः ।
आघातप्रतिघाताभ्यां जलैः पूर्णे जलाशये ॥
अगण्यवीचिसङ्घेषु नैकवैधवविम्ववत् ।
चिज्जडग्रन्थिभिर्देवाः स्वत उत्पद्य भूरिशः ।
जीवप्रवाहपुञ्जोऽयमनाद्यन्तो वितन्यते ॥ ८३ ॥

पूर्वोक्तं विज्ञानं द्रढयति—

## अतोऽनाद्यनन्ता सा ॥ ८४ ॥

अतः कारणात् सृष्टिरसावनाद्यनन्ता, आद्यन्तहीना वर्तते । यदि महामाया त्रिगुणात्मिका, त्रिगुणेन च कर्मोत्पत्तिः, तच्च कर्मब्रह्माण्डपिण्डात्मकसृष्टिकारणम् । तर्हि सृष्टिरियं प्रवाहरूपेणानादिरनन्ता च सिध्यति । ब्रह्मणो ह्यनाद्यनन्तत्वात्, तत्प्रकृतिरप्यनाद्यनन्ता । प्रकृतेरनाद्यनन्तत्वे तत्कम्पनस्याप्यनादित्वात्, कर्मप्रवाहो

अनाद्यनन्तः। तज्जा सृष्टिः प्रवाहरूपेणानाद्यनन्ता स्वतः सिद्धा। देवानुद्दिश्य स्मृतावाह—

दर्शनेऽत्र सम्यङ् निर्णीतमिदं यत्, अध्यात्माधिदैवाधिभूतसृष्टिर्यद्यपि सादिः सान्ता च किन्तु अनन्तकोटिब्रह्माण्डसम्बन्धिनी अध्यात्मस्वरूपा सृष्टिधाराऽनाद्यनन्ता चेति, अतोऽत्र विषयेऽलं बहुना प्रपञ्चेनेति ॥ ८४ ॥

एतस्मान्महाप्रबल सृष्टिप्रवाहतो विरामस्य प्रधानोपायरूपाया उपासनायाः साङ्गोपांगं वर्णनम् उपक्रामति—

**उपासनाशरीरं योगः ॥८५॥**

योगः किलोपासनाशरीरभूतोऽवगन्तव्यः। एतद्दर्शनप्रधानप्रतिपाद्याया उपासनायाः साङ्गोपाङ्गवर्णनपुरस्सरं तदीयरहस्यमवधारयितुं पूज्यपाद सूत्रकारो महर्षिः कथयति यत् योगसाधनं किलोपासनाशरीरमभिधीयते, उपासनाप्राणमग्रे वक्ष्यते। यथाहि जीवशरीरं भोगमोक्षसाधनरूपसर्वविधकर्मणाम् प्रधानमाश्रयस्थानम्, तथैव सर्वविधानामप्युपासनानां शरीररूपं हि योगसाधनम्। योगसाधनेन साधकः क्रमेणोपासनाराज्येऽग्रे सरति। स्मृतावपि प्रोक्तम्—

उपास्तेररित योगो हि स्थलो देहो न संशयः इति।

यथाहि शरीरमन्तरेण किमपि कर्मभोगो वा न सम्पद्यते, तथैव योगसाधनं विना उपासनायाः कापि क्रिया भवितुं नार्हति। लघुस्वरूपायां गुरुरूपायां चोपासनायाम् अष्टाङ्गयोगस्य, मन्त्रहठलयराजयोगानामन्यतरस्य साहाय्यं साधकैर्नूनमाश्रीयते ॥ ८५ ॥

योगसाधनभेदान् वर्णयति—

**मन्त्र-हठ-लय-राजयोगाश्चतुर्धाऽधिकारभेदात् ॥८६॥**

अधिकारभेदेन योगश्चतुर्धा विभक्तः। तथा चोक्तं योगदर्शने—

"योगश्चित्तवृत्तिनिरोधः"।

"तदा द्रष्टुः स्वरूपेऽवस्थानम्"॥

स च योग उपासना शरीरभूतश्चतुर्धा विभक्तः। यथा गुणकर्मभेदेन चत्वारो वर्णाः, यथा चाधिकारभेदेन चत्वार आश्रमाः, यथा वा लघुगुरुभेदेन वैराग्यस्य चत्वारो भेदास्तथैव पूज्यपादैर्महर्षिभिः योगसाधनपद्धतेरपि चत्वारो भेदा निर्णीताः। योगशास्त्रेषु तद्भेदानामनेकानि समुपलभ्यन्ते। यथा चोक्तं पूज्यपादेन योगिराजेन महर्षिणा याज्ञवल्क्येन—

मन्त्रयोगो लयश्चैव राजयोगो हठस्तथा।
योगश्चतुर्विधः प्रोक्तो योगिभिस्तत्त्वदर्शिभिः॥

इति ॥ ८६ ॥

प्रथमो भेदो निरूप्यते—

**नामरूपाश्रयः प्रथमः ॥ ८७ ॥**

प्रथमो मन्त्रयोगो नामरूपाश्रयः प्रोक्तः। स हि नामरूपाश्रयेण साध्यत इत्यर्थः। संसारोऽयं नामरूपात्मकः, वेदेऽप्युक्तम्—

"नामरूपे व्याकरवाणि"
"आकाशोह वै नामरूपयोर्निर्वहिता"
"इन्द्रो मायाभिः पुरुरूप ईयते"
"सर्वाणि भूतानि विचिन्त्य धीरा
नामानि कृत्वाऽभिवदन् यदास्ते" इत्यादि।

संसारेऽत्र सर्वेऽपि सृष्टाः स्थूलसूक्ष्मपदार्थो नामरूपात्मकाः। अतो नामरूपात्मकविषयावलम्बनेन मानवा विषयासक्ता बन्धनमाप्नुवन्ति। सुतरां नामरूपावलम्बनेन चित्तवृत्तिनिरोधसम्पादकः यत्साधनोपाय एव मन्त्रयोग इति कीर्त्यते। मनुष्यो यत्र पतति तामेव भूमिमवलम्ब्योत्तिष्ठतीति हेतोर्नामरूपतो बद्धो जीवो नामरूपावलम्बनेनैव मुक्तो भवति। मन्त्रयोगसाधनभूतानि षोडशाङ्गानि वेदे स्मृतौ च तल्लक्षणानि यथा—

"मन्त्रयोगे ध्याने उपासना च", "सर्वेषामेव मन्त्राणाम्", "प्राणानां संक्षिप्त्यै मन्त्राः संकल्प्यन्ते मन्त्राणां संक्षिप्त्यै कर्माणि संकल्प्यन्ते" "मननात् त्रायते मन्त्रः" मन्त्रोऽयं वाचकः।

नामरूपात्मिका सृष्टिर्यस्मात् तदवलम्बनात्।
बन्धनान्मुच्यमानोऽयं मुक्तिमाप्नोति साधकः॥
तामेव भूमिमालम्ब्य स्खलनं यत्र जायते।
उत्तिष्ठति जनः सर्वोऽप्यक्षेणैतत्समीक्ष्यते॥
नामरूपात्मकैर्भावैर्वध्यन्ते निखिला जनाः।
अविद्या ग्रसिताश्चैव तादृक् प्रकृतिवैभवात्॥
आत्मनः सूक्ष्मप्रकृतिं प्रवृत्तिं चानुसृत्य वै।
नामरूपात्मनोः शब्दभावयोरवलम्बनात्॥
यो योगः साध्यते सोऽयं मन्त्रयोगः प्रकीर्त्तितः।
भवन्ति मन्त्रयोगस्य षोडशाङ्गानि निश्चितम्।
यथा सुधांशोर्जायन्ते कलाः षोडशशोभनाः॥
भक्तिः शुद्धिश्चासनं च पञ्चाङ्गस्यापि सेवनम्।
आचारधारणे दिव्यदेशसेवनमित्यपि॥
प्राणक्रिया तथा मुद्रा तर्पणं हवनं वलिः।
योगो जपस्तथा ध्यानं समाधिश्चेति षोडश॥८७॥

तदङ्गविज्ञानं सुस्पष्टयितुं प्रधानान्यङ्गानि वर्ण्यन्ते—

**गानजपध्यानानि प्रधानान्यङ्गानि ॥ ८८ ॥**

मन्त्रयोगस्य गानजपध्यानानि प्रधानान्यङ्गानि प्राङ्निरूपितानि तद्विज्ञानदार्ढ्याय पूज्यपादेन महर्षिणा सूत्रकारेण सूत्रमिदमाविष्कृतम्। मन्त्रयोगस्य षोडशान्यङ्गानि स्थूल-सूक्ष्म कारणनाम्ना त्रिधा विभक्तुं शक्यन्ते। स्थूलमन्नमयकोषेण, सूक्ष्मं मनोमयकोषेण कारणं चाऽऽनन्दमयकोषेण सम्बद्धमवगन्तव्यम्। त्रिभागविधानेन सूत्रकृता त्रयाणामङ्गानां प्राधान्यं संदर्शितम्। ध्यानेन समाधिः सिध्यतीति उपासनायाः पूर्णरूपेण साफल्यसम्पादकं ध्यानमेव, मन्त्रयोगस्य ध्यानं कीदृग् विज्ञानसिद्धमिति वक्ष्यते। जपेन मनसो लयः। जपोऽपि मानसोपांशुवाचनिकभेदेन त्रिविधः। जपेन चित्तवृत्तिनिरोधे साहाय्यमधिगम्यत इति हेतोस्तत्साधनं प्रधानमङ्गमाम्नातम्। पञ्चाङ्गसेवनमुख्याङ्गभूता स्तुतिश्च प्रत्याहारसिद्धिं सम्पादयन्ती साधकमुपास्यसान्निध्यं प्रापयितुं साहाय्यमनुतिष्ठति। स्तुत्या साधको बहिर्जगद् विस्मरति। साधकान्तःकरणं शब्दतो भावे, भावाच्च बोधे स्वतो गच्छति। अतस्तुतिस्तु मन्त्रयोगस्य प्रधानाङ्गभूतेत्यत्र नास्ति संशीतिलवः। सा च स्तुतिर्यदि सप्तस्वर-रागरागिणीसाहाय्येन सम्पाद्यते तर्हि सा समधिकफलोत्पादयित्रीति कः सन्देहः? 'वेदानां सामवेदोऽस्मीति" भगवता सामवेदमाहात्म्यं स्वमुखेन प्रकटीकृतम्, यतो हि सामवेद उपासनाप्रधानः स्वरसाहाय्येन गीयते, एतद्वैज्ञानिकं रहस्यमनुसृत्य गानजपध्यानानां त्रयाणामङ्गानां प्राधान्यमङ्गीकृतम्॥८८॥

प्रसङ्गतः शंकां समाधत्ते—

**न काल्पनिकं ध्येयरूपत्वात्समाधिसिद्धत्वात् ॥ ८९ ॥**

जिज्ञासुरत्र शङ्कते यत् ब्रह्मध्यानं राजयोगस्य, बिन्दुध्यानं लययोगस्येति ध्यानद्वयं स्वाभाविकम्। हठयोगस्य ज्योतिर्ध्यानं मन्त्रयोगस्य च स्थूलध्यानम्। कल्पनया स्थूलध्यानमनुष्ठीयते। अत एतादृश ध्यानेन कथं समाधिसिद्धिः? ध्यानसाधनस्य समाधेः प्रधानोपायभूतत्वात् कल्पनाकृतेन ध्यानेन कथं समाधिसिद्धिरिति शङ्कायाः समाहितये पूज्यपादो महर्षिः सूत्रकारो व्याचष्टे यत् वेदेषु वेदसम्मतशास्त्रेषु च येषां देवानां देवीनां च ध्यान-वर्णनमुपलभ्यते तत्सर्वमपि ध्यानं समाधिगम्यबुद्धिप्रादुर्भूतमवधेयम्। अतः स्तानि ध्यानानि न कदापि कल्पितानि भवितुमर्हन्ति। समाधि-

गम्यबुद्धिप्रादुर्भूतानि स्थूलध्यानानि समाधे साधकान्येव सन्ति न बाधकानि । यस्य पदार्थस्याधिदैवस्वरूपं समाधिसाहाय्येनालौकिकप्रत्यक्षीकृतं आस्ते, यस्य चाध्यात्मस्वरूपं समाधियुक्त्या बुद्धया निर्णीतम्, तस्याधिभौतिकं रूपमपि नूनं सत्यं स्यात् । अस्मादेव-हेतोः भक्ता यदा तत्तद्देवदेवीनां प्रत्यक्षदर्शनं कामयन्ते तदानीं भक्तयोग्यतामनुसृत्य ते देवा देव्यश्च स्थूलरूपैर्भक्तेभ्यो दर्शनं ददति । वस्तुतो वेदतत्सम्मतशास्त्रोक्तदेवदेवीविग्रहो नैव, मिथ्या कल्पनाप्रसूतो वा । देवदेवीनामधिभूतरूपाणि उपासनाबलेन निजभक्तानामलौकिकप्रत्यक्षगोचराणि भूत्वा भक्तमानससमीहां सफलयन्ति। तेषामधिदैवस्वरूपं शास्त्रोक्तध्याने प्रकाशत एव उदाहृतेर्नास्त्यावश्यकता। वेदशास्त्रेषु समुपलभ्यमानं तेषामध्यात्मरूपं यत् तस्योदाहरणं निम्नाङ्कितमवधेयम्—

"पञ्चभूतात्मकं शङ्खं करे रजसि संस्थितम् ।
बालस्वरूपमित्यन्तं मनश्चक्रं निगद्यते ॥
आद्या माया भवेच्छार्ङ्गं पद्मं विश्वं करे स्थितम् ।
आद्या विद्या गदा वेद्या सर्वदा मे करे स्थिता ॥
धर्मार्थकामकेयूरैर्दिव्यैर्दिव्यमपेरिते ।
कण्ठं तु निर्गुणं प्रोक्तं माल्यते आद्ययाऽजया॥
इति श्रुतिः ॥

अन्यच्च—
कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः ।
तत्प्रभाव्यापिनी साक्षाच्छ्रीवत्समुरसा विभुः ॥
स्वमायां वनमालाख्यां नानागुणमयीं दधत् ।
वासश्छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत् स्वयम् ॥
बिभर्त्ति सांख्यं योगं च देवो मकरकुण्डले ।
मौली पादं पारमेष्ठ्यं सर्वलोकाभयंकरम् ॥
अव्याकृतमनन्ताख्यमासनं यदधिष्ठितः ।
धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते ॥
ओजः सहोबलयुतं मुख्यतत्त्वं गदां दधत् ।
आद्यां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम् ॥
न भीतिभं नमस्तत्त्वमसिचर्मतमोमयम् ।
कालरूपं धनुः शार्ङ्गं तथा कर्ममयं युधिम् ॥

अन्यच्चापि—
श्वेतपीतादिको वर्णो यथा कृष्णे विलीयते ।
प्रविशन्ति तथा काल्यां सर्वभूतानि शैलजे ॥
अतस्तस्याः कालशक्तेर्निर्गुणाया निराकृतेः ।
द्वितीय प्राप्तयोगानां वर्णः कृष्णो निरूपितः ॥
नित्यायाः कालरूपाया अव्यक्तायाः शिवात्मनः ।
अमृतत्वाल्ललाटेऽस्याः शशिचिन्हं निरूपितम् ॥
शशिसूर्याग्निभिर्नित्यैरखिलं कालिका जगत् ।
संपश्यति यतस्तस्मात् कलितं नयनत्रयम् ॥
ग्रसनात् सर्वतत्वानां कालदन्तेन चर्वणात् ।
तद्रक्तवासो रूपेण भासितं सकलं जगत् ॥
समये समये जीवरक्षणं विषदः शिवे ।
प्रेरणं सर्वकार्येषु वरं चाभयमीरितम् ॥
रजोजनितविश्वानि विष्टभ्य परितिष्ठति ।
अतो हि कथितं भद्रे रक्तपद्मासनस्थिता ॥
क्रीडन्तं कालिकं कालं पीत्वा मोहमयीं सुराम् ।
पश्यन्ती चिन्मयी दैवी सर्वसाक्षिस्वरूपिणी ॥
एवं गुणानुसारेण रूपाणि विविधानि च ।
कल्पितानि हितार्थाय भक्तानामल्पमेधसाम् ॥

उपर्युक्तैस्त्रिभिरुदाहरणैर्विज्ञानमिदं नितरां परिपोष्यते । भगवतो विष्णोरध्यात्मस्वरूपं वेदेषु पुराणेषु च यद् वर्णितं तदन्योन्यं भेदमाकलयति, भावभेद एव तत्कारणम् । एवमेव प्रत्येकस्मिन् स्वरूपे पुराणेषु तन्त्रादौ च यो हि मतभेदस्तस्याऽपि कारणं भाव एव । फलतो देवदेवीनामध्यात्मरूपाणि अधिदैवरूपाणि च समाधिगम्यत्वात् काल्पनिकानि किन्तु न मिथ्या-

भूतानि सन्ति। वेदशास्त्रोक्तं देवदेवीनां स्वरूपं समाधिगम्ये सत्ये प्रतिष्ठितमास्ते ॥ ८९ ॥

द्वितीयां शङ्कां निवारयति—

मन्त्रोऽप्येवम् ॥ ९० ॥

मन्त्रः प्रणवनानाबीजमन्त्रसमूहोऽपि एवम् अर्थात् समाधिद्वाराऽऽविर्भूतोऽवधेयः। शाखापल्लवादियुक्तो मन्त्रसमूहः समाधिगम्यभावसंवलितः। अतो वैदिकास्तान्त्रिका वा मन्त्रा न सन्ति काल्पनिकास्तेषां द्वारा सिद्धिरवश्यभाविनी, प्रणवादिमन्त्रविज्ञानविषये शास्त्रेषु निम्ननिर्दिष्टं प्रमाणमुपलभ्यते—

कार्यं यत्र विभाव्यते किमपि तत् स्पन्देन सव्यापकम्।
स्पन्दश्चापि जगत्त्रये सुविदितश्शब्दान्वयी सर्वदा ॥
सृष्टिश्चापि तदादिमाकृतिविशेषत्वादभूत्स्पन्दिनी।
शब्दश्चादिरभूत् तदा प्रणव इत्योंकाररूपः शिवः ॥
साम्यस्थ प्रकृतेर्यथैव विदितः शब्दो महानोमिति।
ब्रह्मादित्रितयात्मकस्य परमं रूपं शिवो ब्रह्मणः ॥
वैषम्ये प्रकृतेस्त एव बहुधा शब्दाः श्रुताः कालतः।
ते मन्त्राः समुपासनार्थमभवत् बीजानि नाम्ना तथा ॥

मन्त्रविज्ञानविषये जगज्जननी महामाया देवानाह—

अहमेवास्मि भो देवा मन्त्रशक्तिर्न संशयः।
मम शक्तिर्यतो विश्वमश्नुते सचराचरम् ॥
अस्म्यहं कारणं ब्रह्म कार्यंब्रह्मास्मि चाप्यहम्।
अहमेवेश्वरी भूत्वा द्वयोः सम्बन्धमादधे ॥
निर्गुणस्य स्वरूपस्य प्रणवो वाचकोस्ति मे।
महावाक्यसमूहाश्च सन्ति तस्यैव वाचकाः ॥
बीजमन्त्रास्तु ये विज्ञाः शाखापल्लवितास्तथा।
मन्त्रा नानाविधाः सन्ति निगमागमगोचराः ॥
सगुणस्य स्वरूपस्य ते सर्वे वाचका मम।
नाऽत्र सन्देहलेशोऽपि विद्यते विबुधर्षभाः ॥
नास्ति भेदो यता देवा वाच्यवाचकयोरतः।
सर्वेषां खलु मन्त्राणां नास्ति भेदो मया सह ॥
अस्त्येका मे क्रियाशक्तिर्ज्ञानशक्तिस्तथाऽपरा।
आभ्यां द्विधा विभक्ताऽस्ति मच्छक्तिर्वै प्रधानतः ॥
मत्कारणस्वरूपे हि नित्यमेवावतिष्ठते।
नित्या शुद्धा सदा पूर्णा ज्ञानशक्तिर्न संशयः ॥
द्वितीया या क्रियाशक्तिर्विद्यते मे सुरर्षभाः।
सैव प्रपञ्चरूपैतत्कार्यब्रह्मजनन्यहो ॥
ज्ञानशक्तेरतो ह्यस्ति प्रणवो बीजमद्भुतम्।
बीजमन्त्रास्तथा नाना क्रियाशक्तेर्न संशयः ॥
कार्यं यत्र किमप्यास्तेऽवश्यं स्यात् तत्र कम्पनम्।
कम्पनं चापि यत्रास्ति तत्र शब्दो भवेद्ध्रुवम् ॥
ज्ञानं तथैव यत्रास्ते भावस्तत्रास्त्यसंशयम्।
यत्र भावो भवेन्नूनं तत्र रूपं न संशयः ॥
अस्त्वेतत्पुनराचक्षे श्रूयतां सुसमाहितैः।
यथा स्यान्मन्त्रविज्ञानं सम्यग्वो बुद्धिगोचरम् ॥
भावैराध्यात्मिकैर्युक्तै रूपैर्नानाविधैरहम्।
विभ्राणाविग्रहान्नानाशब्दैर्नानाविधैस्तथा ॥
अधिदैवतसम्प्राप्तैर्नानामन्त्रस्वरूपिणी।
ददाम्यभ्युदयं शश्वत् तथा निःश्रेयसं ध्रुवम् ॥
प्रणवो निर्गुणानां वै मन्त्राणामादिमोऽस्त्यतः।
आस्ते प्रणवमाहात्म्यं सर्वमूर्धन्यतां गतम् ॥
अतो हि सच्चिदानन्दस्वरूपोद्भावको मम।
प्रणवो मन्त्रराजोऽस्ति मन्त्राणां सेतुरेव च ॥
तथा नानाविधोपास्तेर्बीजमन्त्रा अनेकधा।
स्वोपासनाधिकारेषु सर्वश्रेष्ठा न संशयः ॥
अतोऽधिदैवशब्दानां वैभव द्योतका मम।
सगुणेष्वपि मन्त्रेषु बीजमन्त्राः खलूत्तमाः ॥
उत्पद्यन्ते यथाबीजाद् वृक्षाः पञ्चाङ्गसंयुताः।
सम्बन्धो बीजमन्त्राणां मन्त्रैर्ज्ञेयस्तथाऽखिलैः ॥

सत्यं वो वच्म्यहं देवाः प्रणवस्य गतिः खलु ।
उच्चैः सप्तोर्ध्वलोकेभ्यस्तथास्ते पञ्चकोषतः ॥
गतिश्च वीजमन्त्राणां षष्ठलोकावधि ध्रुवम् ।
साङ्गानङ्गप्रभेदाभ्यां द्विविधो मन्त्र ईरितः ॥
प्रणवो वीजमन्त्राश्च निरङ्गास्तत्र कीर्त्तिताः ।
तेभ्यश्चान्येऽखिला मन्त्राः साङ्गा हि समुदाहृताः ॥
निरङ्गा ध्वनिमुख्याः स्युः साङ्गा भावप्रधानकाः ।
निरङ्गाश्चित्तमाकर्ष्टुं मन्त्रा राज्येऽन्तरत्यलम् ॥
वहिर्विश्वप्रपञ्चात्तु साङ्गा मन्त्रा मनो ध्रुवम् ।
अन्तर्जगति वैकर्ष्टुं क्षमन्तेऽतिशयं सुराः ॥
अतो द्वावेव मन्त्रौ स्तः समानौ शक्तिशालिनौ ।

पूर्वोक्तेन विज्ञानेन शास्त्रोक्त प्रमाणपुंजेन च सिद्ध-मेतत् यद् वेदशास्त्रोक्तमन्त्रसमूहो वेदशास्त्रोक्तध्यानवत् सत्यसमाधिगम्यश्च । नैव काल्पनिक इति ॥ ९० ॥

सम्प्रति हठयोगवर्णनमुपक्रामति—

**स्थूलतः सूक्ष्माधिपत्यं द्वितीयः ॥ ९१ ॥**

स्थूलतः स्थूलशरीरसाधनेन सूक्ष्माधिपत्यं सूक्ष्मे शरीरे येन आधिपत्यं क्रियते स हि द्वितीयो हठयोग उच्यते । योगसाधने द्वितीयस्य हठयोगस्य साधन-प्रणालीविषये महर्षिः सूत्रकृद् व्याचष्टे यत् स्थूल-शरीरसाधनद्वारा सूक्ष्मशरीरे स्वाधिपत्यस्थापनकरं हठयोगसाधनमुदीर्यते । स्थूलशरीरं हि सूक्ष्मशरीर-परिणाममात्रम् । अतः स्थूलशरीरसाधनविशेषेण सूक्ष्म-शरीरे आधिपत्यस्थापनं हठयोगः प्रोच्यते । हठयोग-लक्षणसम्बन्धे तदङ्गविषये च श्रुतयः स्मृतयश्च प्रोचुः । तथाहि—

"हठाच्चेतसो जयम्" "हठेन लभ्यते शान्तिः"
स्थूलः सूक्ष्मस्य देहो वै परिणामान्तरं यतः ।
कादिवर्णान् समभ्यस्य शास्त्रज्ञानं यथाक्रमम् ॥
यथोपलभ्यते तद्वत् स्थूलदेहस्य साधनैः ।
योगेन मनसो योगो हठयोगः प्रकीर्त्तितः ॥
प्राणापाननादविन्दुर्जीवात्मपरमात्मनाम् ।
मेलनाद् घटते यस्मात् तस्माद् वै घट उच्यते ॥
आमकुम्भमिवाम्भस्थं जीर्य्यमाणं सदा घटम् ।
योगानलेन संदह्य घटशुद्धिं समाचरेत् ॥
हठयोगेन प्रथमं जीर्यमाणामिमां तनुम् ।
द्रढयन् सूक्ष्मदेहं वै कुर्याद् योगयुजं पुनः ॥
षट् कर्मासनमुद्रा प्रत्याहारश्च प्राणसंयामः ।
ध्यानं समाधिः सप्तैवाङ्गानि स्युर्हठस्य योगस्य ॥
शोधनं दृढता चैव स्थैर्यं धैर्यं च लाघवम् ।
प्रत्यक्षमपि निर्लिप्तं हठस्य सप्तसाधनम् ॥
षट्कर्मणा शोधनं च आसनेन भवेद्दृढम् ।
मुद्रया स्थिरता चैव प्रत्याहारेण धीरता ॥
प्राणायामाल्लाघवं च ध्यानात्प्रत्यक्षमात्मनः ।
समाधिना निर्लिप्तं च मुक्तिरेव न संशयः ॥

वेदशास्त्रप्रोक्ताभिः याभिः क्रियाभिः स्थूलसूक्ष्म-शरीरयोराधिपत्यस्थापनद्वारा चित्तवृत्तिनिरोधसमाधि-प्राप्तिव्यवस्थायाः साधनसमूहो हठयोगसाधनप्रणाल्य-न्तर्गतो वेद्यः ॥ ९१ ॥

हठयोगविज्ञानं द्रढयति—

**मनोवायुवीर्याणां मिथः सम्बन्धादेकमायत्त-श्चेदन्यदप्येवम् ॥ ९२ ॥**

मनश्च वायुश्च वीर्यं चेत्येषां मिथः सम्बन्धसत्वाद् यद्येकम् आयत्तं वशीभूतं तर्हि अन्यदपि वशीभूतं भवति । पञ्चकोषेषु अन्नमयेन स्थूलस्य प्राणमयमनोमय-विज्ञानमयैः सूक्ष्मस्य आनन्दमयेन कोषेण च कारणस्य शरीरस्य सम्बन्धेऽपि यथा पञ्चापि कोषाः परस्परं ग्रन्थितास्तथैव त्रीण्यपि शरीराणि मिथो ग्रन्थितानि

सन्ति। स्थूले देहे वशीभूते सूक्ष्मं शरीरमपि वशतामुपैति, तेन चाज्ञानमयं कारणशरीरं कथमिव प्रणश्यतीति विज्ञानं सुदृढीकर्त्तुं पूज्यपादो महर्षिः सूत्रकारः सूत्रमेतदाविरभावयन्। यद्यपि मनोवायुवीर्याणामन्योन्यं पार्थक्येऽपि, वस्तुतः त्रीण्यप्येतानि सजातीयत्वात् कार्यतोऽभिन्नान्येव सन्ति। एतेष्वेकत्राधिपत्ये अन्ययोरुभयोरप्याधिपत्यं जायते। यतस्त्रीण्यपि तानि परस्परसम्बन्धयुक्तानि सन्ति। विषयेऽत्र स्मृतिप्रमाणमुदाह्रियते। यथा—

चित्तायत्तं नृणां शुक्रं शुक्रायत्तं च जीवितम्।
तस्माच्छुक्रं मनश्चैव रक्षणीयं प्रयत्नतः॥
प्रधानशक्तयः प्राणास्ते वै संसाररक्षकाः।
वशीकृतेषु प्राणेषु जीयते सर्वमेव हि॥

स्थूलशरीरसम्बद्धेषु सप्तस्वपि धातुषु वीर्यस्य प्रधानत्वात् अन्येषां तदधीनत्वाच्च वीर्ये परिपुष्टेऽन्ये धातवो व्रजन्ति परिपुष्टताम्। सृष्टिविज्ञाने विचार्यमाणे निर्णयेनैतदेव निश्चितं भवति यत् वीर्यमेव सर्गस्यास्य प्रधानकारणम्। मनोवायुवीर्याणामुपर्युक्तं घनिष्ठसम्बन्धत्वात् पितुः संस्कारादयः शारीरिकमानसिकधर्माः पुत्रे संक्रमन्ति। वायुः प्राणश्चोभौ कार्यकारणयुक्तौ। वायुः कार्यं, प्राणश्च कारणम्। अत एव प्राणमयादिना वायावाधिपत्ये जाते प्राण अपि वशतामुपयान्ति। मन इन्द्रियाणां राजा। तच्च सूक्ष्मशरीरचालकम्। प्राणमयो हि कोषो वस्तुतोऽन्नमयं मनोमयं च कोषं किञ्च सूक्ष्मं शरीरमपि स्वनिघ्नीकरोति, अतएव कारणात् प्राणमये कोषे शक्तिहीने जाते स्थूलस्य शरीरस्य मृत्युर्जायते सूक्ष्मं च शरीरं लोकान्तरं प्रतिष्ठते। वैज्ञानिकं सिद्धान्तमनुसृत्य सिध्यतीदं यद् वीर्ये वशीकृते वायुर्मनश्च वशीभूते भवतः। वायावाधिपत्ये संस्थापिते वीर्यमनसी वशतां गच्छतः। किं वा मनस्याधिपत्येन शुक्रे प्राणेषु चापि स्वत एवाधिपत्यं जायते। अत एव गीतायामुक्तम्—"मन एव मनुष्याणां कारणं बन्धमोक्षयोः" इति। सुतरां मनसो निरोधेन चित्तवृत्तयः प्रशाम्यन्ति। यथा यथा चित्तवृत्तयः प्रशाम्यन्ति तथा तथा साधकेन विज्ञानमयकोषे स्वाधिपत्यं स्थाप्यते। तदा च साधके ऋतम्भरा प्रज्ञा समुदेति। ततश्च यथार्थं ज्ञानमुत्पद्यते, यथार्थज्ञानमेव स्वरूपज्ञानम्, तदोदयेन कारणशरीरनाशः, ततश्च मुक्तिः। हठयोगविज्ञानमनुसृत्य मनःप्राणवीर्येषु अन्यतराधिपत्येन सर्वत्राधिपत्यं जायते। अस्मादेव कारणात् स्थूलशरीराधिपत्यस्थापनानन्तरं सूक्ष्मशरीरआधिपत्यं जायते, तेन च मुक्तिपदमधिगम्यते॥ ९२॥

क्रमप्राप्तं लययोगं वर्णयति—

**व्यष्टि-समष्टि-दृष्ट्या कुण्डलिन्या लयोन्मुखीकरणं तृतीयः॥ ९३॥**

व्यष्टिभावेन समष्टिभावेन च कुण्डलिन्याः शक्तेः लयोन्मुखत्वसम्पादकसाधनं हि लययोग उच्यते। सहि क्रमेण चित्तवृत्तिं निरुध्य मुक्तिपदं प्रापयति। यथा—ब्रह्मतो ब्रह्मशक्तिर्बहिर्मुखिनी भूत्वा स्वकीय त्रिगुणविकारतो हि ब्रह्माण्डस्य सृष्टिस्थितिप्रलयान् सम्पादयन्तो महाप्रलये ब्रह्मणि विलीयते, तथैव प्रत्येकपिण्डे सैव शक्तिः कुण्डलिनी नाम्ना आधारपदे बहिर्मुखीना भूत्वा शयानामपि सृष्टिक्रियां स्थायिनीं विधत्ते। योगी यदा किल तस्या महाशक्तेः समष्टिव्यष्टिस्वरूपमवगत्य स्वकीय एव शरीरे तां जागृतां विधाय स्वशरीरस्य परमपुरुषस्थाने गमयित्वा लीनां विदधाति, तदैवात्मज्ञानमधिगम्य बन्धनाद् विमुच्यते। तामेव शक्तिं जागृतां कर्तुं तां चोर्ध्वं गमयितुं ब्रह्मस्थाने लीनां च विधातुं साधनसमूहो हि लययोगान्तर्गतः, लययोगस्य लक्षणविषये

तदङ्गोपाङ्गसम्बन्धे च वेदेषु स्मृतिषु निम्ननिर्दिष्टानि प्रमाणान्युपलभ्यन्ते—

"तस्मिन्नेव लयं यान्ति" "ते लयं यान्ति तत्र वै।"

ब्रह्माण्डपिण्डे सदृशे ब्रह्मप्रकृतिसम्भवात्।
समष्टिव्यष्टिसम्बन्धादेकसम्बन्धगुम्फिते ॥
ऋषिदेवौ च पितरो नित्यं प्रकृतिपूरुषौ।
तिष्ठन्ति पिण्डे ब्रह्माण्डे ग्रहनक्षत्रराशयः॥
पिण्डज्ञानेन ब्रह्माण्डज्ञानं भवति निश्चितम्॥
गुरूपदेशतः पिण्डज्ञानमात्थ यथायथम्॥
ततो निपुणया युक्त्या पुरुषे प्रकृतेर्लयः।
लययोगाभिधेयः स्यात् प्रोक्तमेतन्महर्षिभिः॥

लययोगविज्ञानेन सह कुण्डलिनी नामिकायाः शक्तिरूपिण्याः परमेश्वर्याः कीदृशः सम्बन्धः, इत्यत्र विषये उपनिषदा प्रोक्तम्—

योगमार्गेण गन्तव्यं ब्रह्मस्थानं निरामयम्।
मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी॥
प्रबुद्धा वह्नियोगेन मनसा मरुता सह
सूचीवद् गुणमादाय व्रजत्यूर्ध्वं सुषुम्नया॥
उद्घाटयेत् कपाटं तु यथा कुञ्चिकया हृषत्।
कुण्डलिन्या तथा योगी मोक्षद्वारं विभेदयेत्॥

लययोगस्याङ्गविषये यथा—

अङ्गानि लययोगस्य नवैवेति पुराविदः।
यमश्च नियमश्चैव स्थूलसूक्ष्मक्रिये तथा॥
प्रत्याहारो धारणा च ध्यानं चापि लयक्रिया।
समाधिश्च नवाङ्गानि लययोगस्य निश्चितम्॥
स्थूलदेहप्रधाना वै क्रिया स्थूलाभिधीयते।
वायुप्रधाना सूक्ष्मा स्यात् ध्यानं विन्दुमयं भवेत्॥
ध्यानमेतद्धि परमं लययोगसहायकम्।
लययोगानुकूला हि सूक्ष्मा या लभ्यते क्रिया॥
जीवन्मुक्तोपदेशेन प्रोक्ता सा हि लयक्रिया।
लयक्रिया साधनेन सुप्ता कुल कुण्डलिनी॥
प्रबुद्धय तस्मिन् पुरुषे लीयते नात्र संशयः।
शिवत्वमाप्नोति तदा साहाय्यादस्य साधकः॥

लययोगसाधनसिद्धान्तदृढतायै प्रधानं विघ्नं निर्दिशति—

## मात्रास्पर्शो हेतुर्बन्धनस्य॥ ९४॥

मात्रास्पर्शो हि जीवस्य बन्धनकारणमवगन्तव्यम्। यथा च मन्त्रयोगसाधने ध्यानस्य मन्त्रविज्ञानस्य वैशिष्ट्यम्, हठयोगसाधने मनोवायुवीर्याणां समशक्तिसम्पन्नता समपेक्षिता, तथैव लययोगसाधनस्य विशिष्टं विज्ञानं महर्षिः सूत्रकारो वर्णयति। सूत्रेऽत्र बन्धनहेतुर्निर्दिश्यते। बन्धनतो विमुक्तिर्वक्ष्यमाणसूत्रे वक्ष्यते।

मात्रास्पर्शरूपविषययुक्ततन्मात्राभिर्जीवो बन्धनमुपैति। पञ्चतन्मात्रा वहिर्मुखतां प्राप्नुवत्यः स्वस्वाधिकारोपयोगिषु विषयेषु पातयित्वा बन्धनदशां प्रापयन्ति। तन्मात्राऽऽकृष्टं मन इन्द्रियसाहाय्येन बहिर्विषयेषु ग्रस्तं जायते तदा जीवान्तःकरणं विषयाकारतां प्रतिपद्यते। इयं हि जीवस्य बन्धनदशा। इमामवस्थां प्राप्तो जीवात्मा स्वरूपं विस्मृत्य गमागमचक्रे परिभ्राम्यति।

यथा चाह श्रुतिः—

पराञ्चिखानि व्यतृणत् स्वयम्भूः
तस्मात् पराङ् पश्यति नान्तरात्मन्।
कश्चिद् वीरः प्रत्यगात्मानमैक्षत्
आवृत्तचक्षुरमृतत्वमिच्छन् ॥
पराचः कामाननुयन्ति बालाः
ते मृत्योर्यन्ति विततस्य पाशम्।
अथ धीरा अमृतत्वं विदित्वा।
ध्रुवमध्रुवेष्विह न प्रार्थयन्ते॥ ९४॥

विघ्नं निरस्य साधनसोपानमग्रेसर्तुमुपायमाचष्टे—

**एकस्मात्तस्मादन्यस्मिन् सम्बन्ध-शैथिल्यमस्य ॥ ९५ ॥**

तस्मात् कारणात् एकस्मात् द्वितीयस्मिन् परिवर्तनेन बन्धनशैथिल्यं जायते। पूर्वप्रतिपादित बन्धनहेतुं विघ्नं विदूरयितुं साधारणोपायो महर्षिणा सूत्रकारेण निर्दिश्यते। यदा काचिदेका तन्मात्रा जीवान्तःकरणं विषये बलादाकृष्यविषयाकारवद् विदधाति, तदानीं साधको यदि नैजं मनोऽन्यत्र तन्मात्रायां व्यापारयेत्, तर्हि नूनमेव तद्बन्धनस्य शैथिल्यं भवेत्। उदाहृत्याऽवधेयं यत् सुन्दरपुष्पसम्बन्धयुक्ता किंवा सुन्दरनारीसम्बन्धयुक्ता रूपतन्मात्रा यदि कमपि दर्शकपुरुषं स्ववशं वदतां विधत्ते, तदाऽसौ दर्शको यदि पुष्पसुगन्धे वा तत्सुन्दरीगीतेषु वा मनः सन्निवेशयेत् तर्हि दर्शकस्य रूपतन्मात्राकर्षणे ध्रुवमेव शिथिलता जायते। एवं प्रकारतो यदि लययोगी नैजेन प्रबलेन मात्रास्पर्शेन केनचिदन्येन मात्रास्पर्शेन सह मनो निवेशयेत् तदानीं तन्मात्राशैथिल्यं कुर्वाणः कालान्तरे तन्मात्रास्पर्शबन्धनान्नूनं विमोक्ष्यते। लययोगस्य विज्ञानमेतदेतावत् सुस्पष्टं यदेतस्य परिपोषणाय नास्ति वेदशास्त्रप्रमाणानामावश्यकत्वम्, न वा विचारविस्तारप्रयोजनम्। प्रत्येकः सुविचारशीलजिज्ञासुपुरुषः स्वान्तःकरणसंश्लिष्टां कामप्येकां प्रबलां तन्मात्रामन्यया तन्मात्रया मेलयन् परीक्षेत तर्हि पूर्वोक्तविज्ञानमतिशयसुगमरीत्या परिपुष्टं बोधगम्यं च भवितुं शक्नुयात् ॥ ९५ ॥

इदानीं सुमन्नतमुपायं वर्णयति—

**विशिष्टशैथिल्यं कारणविचारे ॥ ९६ ॥**

कारणविचारे क्रियमाणे सति विशिष्टं शैथिल्यं जायते। यदा लययोगी एकस्यास्तन्मात्राया अन्यस्यां तन्मात्रायां मनो नियोजयन् क्रमशो निजान्तःकरणबन्धनदशां शिथिलयित्वा तत्कारणेषु विचारं कर्तुमभ्यसेत् तर्हि मात्रास्पर्शबन्धनशक्तौ विशिष्टं शैथिल्यमवश्यमापतेत्। एवं प्रकारेण रूपरसादिप्रत्येकतन्मात्राकारणेषु विचारे क्रियमाणे साधकस्तन्मात्राबन्धनतो विचारे क्रियमाणे साधकस्तन्मात्राबन्धनतो विमुच्यते—

श्रुतावप्याह—

येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान्।
एतेनैव विजानाति किमत्र परिशिष्यते ॥

निष्कर्षोऽयं यत् मात्रास्पर्शकारणविचारतो बुद्धिः परमतत्त्वमधिगच्छति, तदा मात्रास्पर्शबन्धनप्रापिका आकर्षणशक्तिनिरतिशयं शैथिल्यं भजते। यः किल भाग्यवान् योगी रूपरसगन्धादि तन्मात्रासु स्वकीयमन्तःकरणं विनिविष्टं विलोक्य तत्तत्कारणविचारस्य विविधः गुरुमुखप्रसूतां प्रक्रियामवलम्बते नासौ बन्धनं प्राप्नोति ॥ ९६ ॥

विज्ञानमिदं परिपोषयति—

**समाधिमुपजनयति लयोन्मुखिनी गतिरस्य ॥ ९७ ॥**

स्पष्टोऽर्थः। वेदशिरस्सूपनिषत्सु एतत्सूत्रोक्तविज्ञानपरिपोषकाण्यन्येकानि वचनानि समुपलभ्यन्ते—

कुण्डलीं चालयन् प्राणान् भेदयन् शशिमण्डलम्।
साधयन् व्रजकुम्भानि नव द्वाराणि बन्धयेत् ॥
सुमनः पवनारूढः सरागो निर्गुणस्तथा।
ब्रह्मस्थाने तु नादः स्याच्छाकिन्यामृतवर्षिणी ॥
षट्चक्रक्रमणोद्गारं ज्ञानदीपं प्रकाशयेत्।
सर्वभूतस्थितं देवं सर्वेशं नित्यमर्चयेत् ॥
आत्मरूपं तमालोक्य ज्ञानरूपं निरामयम् ॥

योगशास्त्रेऽप्युक्तम्—

लयक्रियायाः संसिद्धौ लयबोधः प्रजायते।
समाधिर्येन निरतः कृतकृत्यो हि साधकः॥

एतत्सूत्रतात्पर्यमिदं यत् प्राणमनःसाहाय्येन तन्मात्राप्रबलशक्तिं निरुध्य चित्तवृत्तिं निरुन्धानो बहिर्मुखिनीं कुलकुण्डलिनीं शक्तिमन्तर्मुखिनीं सम्पादयन् लयोन्मुखगतिमासाद्य साधकः स्वत एव योगसर्वोन्नतसोपानरूपं समाधिं समुपैति। लययोगसाधनसिद्धान्तेषु सर्वप्रधानं साधनमेतद् यत् शरीरप्रथमचक्रमूलाधारे प्रसुप्तां भुजङ्गाकारां कुलकुण्डलिनीं शक्तिं प्राणमनःक्रियाभिर्जागृतां विधाय तामन्तर्मुखीनां कृत्वा सप्तमेऽन्तिमचक्रे सहस्रदले स्थित परमपुरुषे मेलयन्तो योगिनो मुक्तिपदभाजो भवन्ति। विज्ञानमिदं प्रकारान्तरेणाप्यवबोधयति यत् कुलकुण्डलिन्याः शक्तेः प्रसुप्तत्वात्स्वभावत एव जीवो मनःप्राणद्वारा समाकृष्टो विषयपाशे पतति। पूर्वोक्तसाधनेन तन्मात्राबन्धनकारिणी शक्तिर्यदि शैथिल्यं गता स्यात् तदा प्राणमनसोरूद्ध्र्वगतित्वात् कुलकुण्डलिनीशक्तिर्जागृता भूत्वा ऊद्र्ध्वं गन्तुं प्रवर्त्तते॥ ९७॥

एतत्साधनस्योदर्कोऽभिधीयते—

## तद्धानमात्मविनियोगे॥ ९८॥

मात्रास्पर्शानामात्मनि परमात्मनि वा विनियोगेन नियोजनेन तद्धानं तेषां मात्रास्पर्शानां हानिर्जायते। भर्जित बीजवत् आत्मनि विनियुज्यमान तन्मात्रा भाग्यशालिनः साधकस्य कृते नांकुराय प्रकल्पन्ते।

श्रुतिरप्याह—

स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥

तात्पर्यमिदं यत् स्वप्नावस्थायां जाग्रदवस्थायां वा मात्रास्पर्शसम्बद्धा विषया येऽनुभूयन्ते, ते सर्वेऽपि तन्मात्राणामात्मना सह मेलनेन स्वतो विनश्यन्ति तदानीं च मात्रास्पर्शा न प्रकल्पन्ते योगिनो बन्धनायेति। यथा चोक्तं भगवता गीतोपनिषदि—

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥

आपूर्यमाणमचलं प्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत्।
तद्वा कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी॥

निष्कर्षोयं यत् मात्रास्पर्शा विषयसंयुक्ताः सन्तो मानवान् बन्धनपाशे पातयन्ति। परन्तु यदि सुकौशलपूर्णप्रक्रियासाहाय्येन तान् मात्रास्पर्शान् अन्तर्मुखान् कृत्वा तानात्मनि विनियोजयेत् तर्हि तेषां विनाशेन साधको मुक्तिपदं नूनमासादयेदित्यत्र नाणीयानपि संशीति लेशः॥ ९८॥

क्रममनुसृत्य राजयोगो वर्ण्यते—

## सर्गादि हेत्वन्तःकरणविवेकजश्चतुर्थः॥ ९९॥

सृष्टिकारणभूतान्तःकरणस्य यो हि विवेकस्तत्साहाय्येन यस्य साधनमनुष्ठीयते स राजयोगो विज्ञेयः। अयं हि योगशिरोमणिः, अतएव अयं राजयोग उदीर्यते। एतेन सह मुक्तेः साक्षात्सम्बन्धः। मन्त्रयोगसाधकेन, हठयोगिना लययोगनिरतेन वा निर्विकल्पसमाधिमधिगत्य मुक्तिपदमासादयितुं राजयोगो नूनमेवाश्रयणीयो भवति। अन्तःकरणमेव जीवस्य बन्धनमुक्तिकारणम्। अज्ञानयुक्तमन्तःकरणं बन्धनस्य, ज्ञानयुक्तं च मुक्तेः कारणतां भजते। तदेव सृष्टिस्थितिलयहेतुभूतम्।

अन्तःकरणसाहाय्येन विवेकप्रधानानि योगसाधनानि राजयोगशब्देनाख्यायन्ते। राजयोगलक्षणत-

त्साधनसम्बद्धाङ्गानां विषये शास्त्रेषु निम्ननिर्दिष्टं वर्णनमुपलभ्यते—

सृष्टिस्थितिविनाशानां हेतुता मनसि स्थिता।
तत्साहाय्यात्साध्यते यो राजयोग इति स्मृतः॥
अन्तःकरणभेदास्तु मनो बुद्धिरहंकृतिः।
चित्तज्योतिर्विनिसृष्टा चत्वारो योगपारगैः॥
तदन्तःकरणैर्दृश्यमात्मा द्रष्टा निगद्यते।
विश्वमेतत् तयोः कार्यं कारणत्वं सनातनम्॥
दृश्यद्रष्ट्रोश्च सम्बन्धात् सृष्टिर्भवति शाश्वती।
चाञ्चल्यं चित्तवृत्तीनां हेतुमात्रं विदुर्बुधाः॥
विचारबुद्धेः प्राधान्यं राजयोगस्य साधने।
ब्रह्मध्यानं हि तद्ध्यानं समाधिर्निर्विकल्पकः॥
तेनोपलब्धसिद्धिर्हि जीवन्मुक्तः प्रकथ्यते।
वृत्तिं जित्वा राजयोगः स्वस्वरूपं प्रकाशयेत्॥

विषयेऽत्र श्रुतयः स्मृतयश्च प्रोचुः—

नाश्त्रैर्न शस्त्रैर्नानिलेन वह्निना,
छेत्तुं न शक्यो न च कर्मकोटिभिः।
विवेकविज्ञानमहासिना विना
धातुप्रसादेन शितेन मञ्जुना॥
इति स्मृतिः॥

यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते॥
एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते।
दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥

"ऋते ज्ञानान्नमुक्तिः" . "मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन" इति।

राजयोगस्याङ्गविषये निम्ननिर्दिष्टमुपलभ्यते—

कला षोडशकोपेत राजयोगस्य साधने।
सप्त चाङ्गानि विद्यन्ते सप्त ज्ञानानुसारतः॥
विचारमुख्यं तज्ज्ञेयं साधनं बहु तस्य च।
धारणाङ्गे द्विधा ज्ञेये ब्रह्मप्रकृतिभेदतः॥
ध्यानस्य त्रीणि चाङ्गानि विदुः पूर्वं महर्षयः।
ब्रह्मध्यानं विराड्ध्यानं चेशध्यानं यथाक्रमम्॥
ब्रह्मध्याने समाप्यन्ते सर्वध्यानानि निश्चितम्।
चत्वार्य्यङ्गानि जायन्ते समाधेरितियोगिनः॥
सविचारं तथाभूतं निर्विचारं तथा पुनः।
इत्थं संसाधयन् राजयोगस्याङ्गानि षोडश॥
कृतकृत्यो भवत्याशु राजयोगपदो नरः॥९९॥

राजयोगफलमुदीर्यते—

**इतः परा विवेकप्राधान्यात्॥ १००॥**

विवेकस्य ज्ञानस्य प्राधान्यात् परा भक्तिः प्राप्यते योगिराजेन साधकेनेत्यर्थः। या भक्तिर्भगवत्कृपासाध्या, तस्याः सर्वोत्तमावस्था राजयोगेनैवाधिगम्यते। अतोऽयं सर्वयोगशिरोमणिरुच्येते। प्रागेवेदं प्रमाणितं यत् यदा समुन्नतो भक्तशिरोमणिः भक्तेः परां काष्ठामधिगच्छति, तदानीमसौ ब्रह्मसद्भावेन सर्वत्रैव सर्वावस्थायामपि ब्रह्मैवानुभवति। तस्य स्थित्यामस्यां ब्रह्मव्यतिरिक्तं द्वैतप्रपञ्चभावं न जायते। राजयोगस्य निर्विकल्पनामकसमाधिद्वाराऽद्वैतभावः समुदेति। अतोऽभ्युपगन्तव्यमेवेदं यत् राजयोगस्यान्तिमं फलं परा भक्तिप्राप्तिरेवेति। श्रुतावप्युद्घोषितम्—

न चक्षुषा गृह्यते नापि वाचा
नान्यैर्देवैस्तपसा कर्मणा वा।
ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यति निष्कलं ध्यायमानः॥
सम्प्राप्यैनम् ऋषयो ज्ञानतृप्ताः
कृतात्मानो वीतरागाः प्रशान्ताः।
ते सर्वगं सर्वतः प्राप्य धीराः
मुक्तात्मानः सर्वमेवाविशन्ति॥
वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद् यतयः शुद्धसत्वाः।

ते ब्रह्मलोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्वे ॥
वेदान्तवेद्यं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाऽतिमृत्युमेति
नाऽन्यः पन्था विद्यतेऽयनाय ॥१००॥

प्रसंगतो वेदकाण्डत्रयलक्ष्यं समन्वयति—

**ब्रह्मसद्भावाः परपर्यायाः ॥ १०१ ॥**

ब्रह्मसद्भावाः अर्थात् निर्विकल्पः समाधिः कर्मयोगः, जीवन्मुक्तिः, ब्रह्मसद्भावश्चैते परपर्यायाः परायाः भक्तेः पर्यायवाचका इत्यर्थः। काण्डत्रयविभक्तो वेद एकमेवलक्ष्यं साधयितुं प्रयतते। यदि वेदस्य त्रीण्यपि काण्डानि मुक्तिपदं निर्दिशन्ति तर्हि कथं काण्डत्रयलक्ष्यसमन्वय इति जिज्ञासुशङ्कां समाधातुमेव महर्षिः सूत्रकारः सूत्रमिदं व्याजहार। निर्विकल्पः समाधिः, कर्मयोगः, जीवन्मुक्तिः, कर्मकाण्डं च आधिभौतिकशुद्धिप्रधानतया समुन्नतिसम्पादनेन मुमुक्षून् मुक्तिपथेऽग्रेसरान् प्रकुर्वते। कर्मकाण्डसाधनानामन्तिमं हि फलं कर्मयोगप्राप्तिरेव। कर्मयोगस्य सरहस्यं जाज्वल्यमानमुदाहरणं गीतोपनिषदि सम्यग् विवेचितमास्ते। भक्तिप्रधाना योगप्रधानश्चेत्युपासनाया द्विविधो भेदः। किन्तूपासनाकाण्डस्य शरीरं योगः, प्राणरूपो तु भक्तिरेव भक्तिमार्गस्य पराभक्तिर्योगमार्गस्य निर्विकल्पसमाधिश्चेत्येतद् द्वितयमेतयोरन्तिमं फलस्वरूपमभ्युपगन्तव्यम्। ज्ञानकाण्डस्यान्तिम उदर्को ब्रह्मसद्भाव एव, तमधिगतो महापुरुषो जीवन्मुक्त इति गीयते। अत इदं स्वीकार्यमेव यत् कर्मयोगः, पराभक्तिः, निर्विकल्पसमाधिः, ब्रह्मसद्भावः, जीवन्मुक्तिश्चेति शब्दाः विभिन्नां दशां प्रतिपादयन्तोऽपि वस्तुतस्तु पर्यायवाचका एव। स्मर्यते चापि—

परं ज्ञानं परं साख्यं परं कर्मविरागता।
परा भक्तिः समाधिश्च योगपर्यायवाचकाः ॥
इति ॥ १०१ ॥

कथं भेदप्रीतिरित्याह—

**भेदप्रतीतिः प्रकृतितारतम्यात् ॥ १०२ ॥**

प्रकृतेस्तारतम्यमनुसृत्य भेदस्य प्रतीतिर्दृश्यते। पराभक्तिः, कर्मयोगः, ब्रह्मसद्भावाश्चेत्यादयो यदि पर्यायवाचका एकस्थितिपरिचायकाश्चेत्तर्हि तेषां नामपार्थक्यस्य किं प्रयोजनम्? कथमेषु च भेदप्रतीतिरित्यादि शङ्कानां समाधानार्थमेव पूज्यपादेन महर्षिणा सूत्रकारेण सूत्रमिदमाविष्कृतम्। प्रतिमानवं प्रकृतिर्भिद्यते। कस्यचित् प्रकृतिराधिभौतिकभावप्रधाना, कस्यचनाधिदैविकभावप्रधाना, कस्यापि चाध्यात्मिकभावप्रधाना भवति। कस्यापि प्रकृतिः कर्म समाद्रियते, अपरस्योपासनाम् अन्यस्य च ज्ञानचर्चाम् ईहते। प्रथमश्रेणिकः साधकः कर्मकाण्डस्य, द्वितीयश्रेणिकः उपासनाकाण्डस्य, तृतीयश्रेणिकश्च ज्ञानकाण्डस्य पक्षपाती दृश्यते। प्रथमः साधकः कर्मयोगाय, द्वितीयो भक्तियोगाय, तृतीयश्च नित्यानित्यविचारस्वरूप ज्ञानयोगाय स्पृहयति। निष्कर्षोऽयं यत् शरीरपरिपुष्ट्यै मुख-पाकस्थलीहृदयेति त्रयाणामपि समानमुपयोगित्वमवगम्यते। यतोहि पूर्वं मुखेऽन्नं दीयते, ततः पाकस्थल्यां परिपाकमेति। तदनु च रसस्वरूपमासाद्य हृदय यन्त्रमुपढौकमानं रक्तरूपतां धत्ते। अन्यच्च मुखे गच्छत् खाद्यं पाकस्थलीं ततश्च रूपान्तरितं सत् हृदययन्त्रमवश्यमेव यथा प्रविशति, तथैव कर्मकाण्डोपासनाज्ञानकाण्डरहस्यमवधेयम्। फलतः साधकानां प्रकृतेर्विभिन्नतया काण्डत्रयस्याधिकारोऽपि विभिन्नत्वमेति, त्रयाणां साधनेष्वपि स्वतन्त्रो भेदः। साधनेषु च लक्षणस्वातन्त्र्येण साधकानां बहिर्लक्षणे स्वातन्त्र्याद्

भेदप्रतीतिः। अत एव कारणात् ईशकोटिजीवन्मुक्तदशायां कर्मप्रधानदशा, भक्तिप्रधानदशा, ज्ञानप्रधानदशा च स्वतन्त्ररूपेण दृष्टिगोचरतामायान्ति ॥१०२॥

प्रसङ्गतो योगलक्षणं निर्दिशति—

**कर्म सुकौशलयोगः ॥ १०३ ॥**

सुकौशलपूर्णा क्रियैव योगः। पूर्वोक्तविज्ञानदार्ढ्याय कर्मकाण्डसम्बन्धीय योगविज्ञानलक्षणमिदमाख्यातम्। उक्तमपि स्मृतौ—

यदेतल्लक्षणं गीतं योगः कर्म सुकौशलम्।
तन्नूनं कर्मकाण्डीय योगलक्षणमीरितम् ॥

कर्ममीमांसादर्शनं कर्मविज्ञानसर्वोत्तमसिद्धान्तग्रन्थो भगवद्गीताऽपि उपर्युक्तलक्षणमेव प्रतिपादयतः। कर्मैव जीवं बध्नाति विमुञ्चति च। यथा हि सुकौशलविरहितया हस्तक्रियया रज्जुर्विश्रृङ्खलतामेति सुकौशलपूर्णया च विश्रृङ्खलत्वराहित्यं भजते तथैव सुकौशलरहितकर्मणा मानव आवागमनचक्रे भ्राम्यति, सुकौशलपूर्णकर्मणा च गमागमचक्रतः साधको विमुच्यते। अतः कर्मकाण्डमनुसृत्य सुकौशलं कर्मैव योग इत्युच्यते ॥ १०३ ॥

द्वितीयं लक्षणं निर्दिशति—

**चित्तवृत्तिनिरोधो योगः ॥ १०४ ॥**

एतद्धि उपासनाकाण्डीययोगलक्षणं निर्दिष्टम्। स्मर्यते चात्र—

चित्तवृत्तिनिरोधो वै योग एतद्धि लक्षणम्।
विज्ञेयं सर्वथोपास्ति काण्डयोगस्य निर्जराः ॥

योगविज्ञानदर्शनशास्त्रं योगदर्शनमपि एतदेव योगलक्षणं व्याजहार। भक्तिमार्गस्य योगमार्गस्य च साहाय्येन साधकश्चित्तवृत्तिं निरुणद्धि। निरुद्धायां चित्तवृत्तौ स्वान्तःकरणे सर्वव्यापकः परमात्मा स्वत एव विकसति। सर्वाण्यप्युपासनाकाण्डसाधनानि पूर्वोक्तामेव भित्तिमाश्रयन्ति। कर्मकाण्डप्रोक्तसुकौशलपूर्णकर्मयोगेन यथा कर्मबन्धनमपास्य मुक्तिरवाप्यते। तथैवोपासनाकाण्डीय चित्तवृत्तिनिरोधस्वरूपयोगद्वारा द्रष्टुः परमात्मनः स्वरूपं साक्षात्कृत्य साधको भवबन्धनाद् विमुच्यते ॥ १०४ ॥

तृतीयं लक्षणं वक्ति—

**उपाधिनिराकरणेन जीवात्मपरमात्मनोरेकीकरणं योगः ॥ १०५ ॥**

निजसमन्वयविज्ञानपरिपुष्टये ज्ञानकाण्डीययोगविज्ञानं वर्णयता महर्षिणा सूत्रकारेण प्रोच्यते यत् ज्ञानकाण्डस्य विचारप्राधान्यात् अज्ञानोपाधिं निरस्य ज्ञानसाहाय्येन जीवात्मपरमात्मनोरेकीकरणमेव योगः। स्मृतावप्युक्तम्—

अज्ञानजनितोपाधिं निःशेषमपनोद्य हि।
एकत्वप्रतिपत्तिर्या योगः स्याच्छिवजीवयोः ॥

यथा हि मानवस्तद्वाच्छक्तिश्च व्याहरणकाले पृथक्त्वेन प्रतीयते, तदा द्वैतं प्रतीयते, किन्तु यदा स वाच्छक्तिर्वक्तरि निलीयते तदा न प्रतीयते द्वैतम्, तथैव ब्रह्मणस्तच्छक्तेर्मायायाश्च पार्थक्ये शक्तिव्यक्तावस्थायां भेदप्रतीत्या द्वैतप्रपञ्चमनुभूयते। परा भक्तेरुदयेन द्वैतभावो विनश्यति, मायायाः परब्रह्मणि लयेन द्वैतप्रपञ्चस्यापि विनाशो जायते। तदानीं परया भक्त्या अद्वैतभावस्योदयेन महाकाशे घटाकाशमठाकाशवत् जीवशिवयोरेकत्वमुत्पद्यते। इदं किल ज्ञानकाण्डयोगरहस्यमवगन्तव्यम्। परया भक्त्यैव इयमद्वैतदशोपलभ्यते। एतत्साक्षात्कारणमात्मज्ञानं तत्फलं मुक्तिरिति ॥ १०५ ॥

परा भक्तेः परमसहायको धर्मः प्रणिगद्यते—

**येनैतद्धार्यते स धर्मः ॥ १०६ ॥**

येन एतत् विश्वं धार्यते स धर्मो वेद्यः। स्मर्यते चात्र—

या बिभर्त्ति जगत्सर्वमीश्वरेच्छा ह्यलौकिकी।
सैव धर्मो हि सुभगे नेह कश्चन संशयः॥
उन्नतिं निखिला जीवा धर्मेणैव क्रमादिह।
विदधानाः सावधाना लभन्तेऽन्ते परं पदम्॥

धर्मस्येत्यादि लक्षणैरिदं सिध्यति यत् आध्यात्मिके जगति अग्रे सत्तु धर्मः साधकाय शक्तिं प्रयच्छति, तच्च स्थानमधिगमयति यत्र मुक्तिः सुलभा। परा भक्तिर्मुक्तिहेतुः। सुतरां धर्मः किल परायाः भक्तेः साक्षात् साहाय्यमनुतिष्ठति। धर्मो हि प्रथमदशायामैहलौकिकम्, द्वितीयावस्थालयां पारलौकिकमभ्युदयं प्रयच्छन् अन्तिमदशायां पराभक्तिप्राप्तिद्वारा साधकाय निःश्रेयसं प्रददाति। धर्मस्य विश्वधारकत्वे स्मृतिराह—

धर्माधारा स्थिता सृष्टिः स एवास्या नियामकः।
केवलं धर्ममेवैकमाश्रित्य जीवजातयः॥
अग्रेसरा भवन्तीमा मां प्रत्येव न संशयः।
ममानुशासनं धर्म इति तत्त्वविदो विदुः॥
जगन्नियामिका शक्तिर्धर्मरूपास्ति या मम।
तथा ह्यनन्तब्रह्माण्डान्यनन्तालोकराशयः॥
ऋषयः पितरो भूयं स्वस्वस्थाने स्थिताः सदा।
रक्षन्ति सृष्टिमखिलामिति जानीत सत्तमाः॥
धर्मे धारणरूपा या शक्तिरस्मि दिवौकसः।
तथैव स्वस्वकक्षायामिमे सर्वे स्थिताः सदा॥
ग्रहनक्षत्रप्रमुखा लोका ब्रह्माण्डकानि च।
तथैव पितरो यूयमृषयश्च तथाऽसुराः॥
रक्षन्तः पदमर्यादां स्वीयां लोकानयन्त्यलम्।
यदा स्वधर्माच्च्यवथ विघ्नं वो जायते तदा॥
अत्यन्तं येन लोकेषु नित्यं सीदन्ति प्राणिनः।
अनन्तकोटिब्रह्माण्ड - युक्तसृष्टिप्रवाहकः॥
आस्थितः केवलं धर्ममेवैकमवलम्ब्य हि।
वर्त्तते धर्म एवातो विश्वधारक ईरितः॥
अनन्ता ये ग्रहाः सर्वे तथोपग्रहराशयः।
ब्रह्माण्डशब्दनिर्वाच्यास्तथैवामरपुङ्गवाः॥
नानावैचित्र्यसंयुक्ता उद्भिज्जस्वेदजाण्डजाः।
जरायुजा इमे नूनं भूतसंघाः समीरिताः॥
सर्वाण्येतानि निर्दिष्टै नियमै परिचालयन्।
एक एवास्ति धर्मोऽतो जगतां स नियामकः॥१०६॥

ज्ञानं द्रढयति—

**मुक्त्युन्मुखताकारः सत्त्वप्राधान्यात् ॥ १०७ ॥**

सत्वस्य सत्त्वगुणस्य प्राधान्यात् प्रधानतया मुक्तेः मोक्षस्य उन्मुखताकर उन्मुखत्वकारको ज्ञानापरनामको बोधोऽवगन्तव्यः। स्थूले जगति आकर्षण-विकर्षणे अन्तर्जगति च रागद्वेषौ यथाक्रमम् रजस्तमोमूलकौ विज्ञातव्यौ। उभयसमन्वये सत्त्वगुण उदेति। स्थूले जगत्यपि यत्र आकर्षणविकर्षणयोः समन्वयस्तत्रैव स्थितिरुदेति। आपरमाणोः सूर्यादिग्रहोपग्रहं यावत् आकर्षणविकर्षणसमन्वयो दृश्यते स च समन्वयः सत्वगुणमूलक एव येन ब्रह्माण्डस्थितिः। अन्तर्जगति च रागद्वेषसमन्वयेनैव साधुहृदये चित्तवृत्तिनिरोधपूर्वकं द्रष्टरूपस्यात्मनो याथातथ्यस्वरूपं प्राकट्यमापद्यते। इयं किल सत्त्वमूलिकाऽवस्था। समुन्नताऽवस्थेयं धर्मद्वारैव भक्तमानसे क्रमेण विकासमेति। स्मृतावपि सत्त्वगुणवर्द्धकमेव धर्ममाह—

सत्त्ववृद्धिकरो यश्च पुरुषार्थोऽसि केवलम्।
धर्मशीले तमेवाहुर्धर्मं केचिन्महर्षयः॥

साधको नैजे हृदये यथायथा रजस्तमोगुणौ न्यूनी-

कुर्वन् सत्त्वगुणं वर्धयति तथातथाऽसौ धर्मात्मा भवन् मुक्तिपदाभिमुखमग्रे सरति। पूर्णरूपेण सत्त्वगुणे समुदीयमाने भाग्यशाली साधकः स्वकीये शान्ते समाधिस्थेऽन्तःकरणे भगवत्साक्षात्कारेण परां भक्तिमासाद्य कैवल्यमश्नुते। सुतरां सत्वगुणवर्द्धिकाधर्मशक्तिः साधकमध्यात्मराज्ये अग्रे सारयन् मुक्तिपदमधिगमयति।

स्मृतावप्याह—

प्रकाशकत्वात् सत्त्वस्य ज्ञानहेतुत्वमीर्यते।
लघुत्वादूर्ध्वनेतृत्वं सत्त्वाद् धर्मो हि निर्वभौ॥
धर्माचरणतः सत्त्वं वर्धयन् परमोन्नतिम्।
ऐहिकीमामुष्मिकीं च प्राप्य मोक्षं ततोऽश्नुते॥१०७॥

धर्मसम्बन्धेन भक्तिमहत्त्वमभिधत्ते—

**भक्त्यपेक्ष्याण्येतदङ्गानि ॥ १०८ ॥**

एतदङ्गानि धर्माङ्गानि भक्त्यपेक्ष्याणि भवन्ति। विश्वधारकधर्मस्य मुक्तिसहायकत्वेऽपि तत्सम्बन्धेन भक्तिमहत्त्वं प्रतिपादयति पूज्यपादो महर्षिः सूत्रकारः। अखिलमहत्त्वपरिपूर्णधर्माङ्गसमूहो भगवद्भक्तिसापेक्षो विद्यते। धर्माङ्गानि प्रतिपादयितुं महाशक्तिर्ब्रह्ममयी महामायास्वयमित्थमाह—

अहमेवास्मि भो देवाः धर्मकल्पद्रुमस्य च।
बीजं मूलं तथाधारो नात्र कश्चन संशयः॥
स्कन्धस्तस्य द्रुमस्यास्ते धर्मो वै विश्वधारकः।
मुख्यं शाखात्रयं चास्य यज्ञो दानं तपस्तथा॥
ब्रह्मार्थाभयदानानि देवाः! त्रैगुण्यभेदतः।
दानस्य प्रतिशाखा स्युर्नवधा नात्र संशयः॥
तपोऽपि त्रिविधं ज्ञेयं कायवाणीमनोभवम्।
त्रैगुण्ययोगेनास्यापि प्रतिशाखा नवासते॥
प्रतिशाखा अनेकास्युर्यज्ञशाखासमुद्भवाः।
काम्याध्यात्माधिदैवाधिभूतनैमित्तनित्यकाः॥
कर्म यज्ञ प्रशाखाया भेदास्त्रैगुण्ययोगतः।
त एवाष्टादशास्याहि प्रतिशाखा मनोहराः॥
पितृदेवर्षिवृन्दानामवतारगणस्य च।
पञ्चानां सगुणब्रह्मरूपाणां निर्गुणस्य च॥
ब्रह्मणश्चासुरौघाणामुपास्तेः पञ्च भक्तितः।
मन्त्रो हठो लयो राज एते योगेन च ध्रुवम्॥
अस्या भेदाश्च चत्वारो भेदा एवं नवासते।
एते भेदा नवैवाहो देवाः! त्रैगुण्य योगतः॥
उपास्तेःप्रतिशाखाः स्युः संख्यया सप्तविंशतिः।
श्रवणं मननं चैव निदिध्यासनमेव च॥
त्रयोऽमी ज्ञानयज्ञस्य भेदास्त्रैगुण्ययोगतः।
नवधा संविभक्ता हि प्रतिशाखा नवासते॥
द्विसप्तत्या प्रशाखाभिः शाखाभिश्चैवमेव भोः।
निजानां ज्ञानिभक्तानां धर्मकल्पद्रुमात्मना॥
विराजे स्वान्तदेशेऽहं निर्ज्जरा नात्र संशयः।
धर्मकल्पद्रुमस्यास्य पत्रपुष्पात्मकान्यहो॥
उपाङ्गानि न संख्यातुमर्हाणि कैरपि क्वचित्।
विचित्राणि मनोज्ञानि सन्ति तानि ध्रुवं सुराः॥
पक्षिणौ द्वौ सदा तत्र जगतां मोहकारिणौ।
मनोज्ञे वृक्षराजे स्तो वसन्तौ शाश्वतीः समाः॥
स्वादतेऽभ्युदयस्यैको ह्यपक्वे द्वे फले तयोः।
अपरश्चतुरः पक्षी सुपक्वं त्वमृतं फलम्॥
सुस्वाद्यास्वाद्य गीर्वाणा नूनं निःश्रेयसं पदम्।
ब्रह्मानन्दसमुल्लास-सार्थकत्वं प्रकाशयेत्॥

उपर्युक्तस्मृतिवचनैर्धर्मस्य विस्तृतिः सम्यक् स्फुटीभवति। धर्मस्य मूलभूतैरङ्गैर्दानतपः कर्मोपासनाज्ञानाख्यैर्यज्ञैः पञ्चभिरेभिरेव द्विसप्ततिशाखा धर्मस्य भवन्ति। सूक्ष्मक्षिकया विचारे क्रियमाणे चेदं सिध्यति यत् यथा पानीयमन्तरेण मृदो बीजवपनयोग्या न कदापि भवितुमर्हन्ति, न वाताभिर्घटेष्टकादयो निर्मातुं

शक्यन्ते, तथैव भक्तिसाहाय्यम् तरेणोपर्युक्त धर्माङ्गानि नैव पूर्णरूपेण साफल्यमधिगच्छन्ति, जलसंयोगेन मृदः पूर्णकार्यकारिण्यो भवन्ति, धर्माङ्गसमूहोऽपि भक्तिरस-संयोगादेव कार्यकारित्वं भजते। विश्वासश्रद्धाभगवद्-भक्तिराहित्येन दाता सात्त्विकदानाधिकारवान् न जायते। अन्तर्जगति विश्वासं, शास्त्रेषु श्रद्धां कर्मनियन्तरि भगवति च भक्तिमन्तरेण तपोयज्ञकर्मयज्ञाश्च न साफल्य-भाजो भवन्ति। उपासनायज्ञस्तु भक्तेः प्राणस्वरूप इति प्रागेव निर्णीतम्। उपासनायज्ञस्य सर्वेष्वप्यङ्गेषु भक्तेः प्राधान्यम्। भगवद्भक्तिविहीनज्ञानयज्ञसाधकोऽहङ्कार-ग्रस्तो भूत्वा पातित्यमभ्युपैति। सुतरां भक्तिः सर्वाभ्य-र्हिता॥ १०८॥

सम्बन्धान्तरेण भक्तिमहत्त्वं वर्ण्यते—

## सा निखिलसाधनयज्ञाधिकरणम्॥ १०९॥

सा भक्तिर्निखिलसाधनरूपयज्ञानामधिकरणम् आधारभूतेत्यर्थः। सर्वाण्यपि धर्मप्राप्तिसाधनानि यज्ञ-शब्दवाच्यानि। यथा च गीतोपनिषदि—

"द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे" इत्यादि। इतः प्राङ्निर्दिष्टानि सर्वाण्यपि धर्माङ्गानि यज्ञशब्द-वाच्यानि विज्ञातव्यानि। महर्षिसूत्रकारतात्पर्यं सिद्धं यत् सर्वेषामपि यज्ञानां भक्तिः सहायिका। श्रद्धामन्त-रेणास्तिकत्वमसम्भवम्। आस्तिकत्वमधिगतवति मनुष्ये भक्तेरङ्कुरः समुत्पद्यते। सुतरां भक्तिविहीने नरे धर्म-प्रवृत्तिरसम्भवा, धर्मसाधनस्वरूपयज्ञानामङ्गोपाङ्गेषु आस्तिकतामूलिका भक्तिः प्राणरूपाऽवगन्तव्या। यथा किल ऋते प्राणान् शरीरं न जीवति, तथैव श्रद्धा-भक्तिराहित्येन यथार्थरूपतो धर्मसाधनमसम्भवम्। अन्यच्च भक्तिश्रद्धाविरहितो दाता दाम्भिकतां प्रमाद-ग्रहग्रस्ततां चोपढौकते। भक्तिरहितस्तपस्वी क्रोधा-हङ्कारवान् जायते। विना भक्तिं कर्मकाण्डनिरतो दम्भदर्पाभिमानद्वारा विवेकहीनतामापद्यते। भक्ति-हीनेनोपासकेन न किमप्युचितं स्थानमासाद्यते। भक्ति-रहितो योगी नटवद् गीयते निजकर्मणि वैफल्यमासाद्यते च। भक्तिमन्तरेण ज्ञानी अहङ्कारी भवन् न कदापि ज्ञानोन्नतिमासादयति। सुतरामिदमभ्युपगन्तव्यमेव यत् भक्तिसाहाय्येनैव साधको धर्मोन्नति मार्गेऽग्रे सरति॥ १०९॥

समष्टिव्यष्टिभेदेन साधनभेदानाह—

## यज्ञमहायज्ञौ व्यष्टिसमष्टिसम्बन्धात्॥ ११०॥

यत् साधनं व्यक्तिगतरूपव्यष्टिसम्बन्धयुक्तं भवति तद् यज्ञवाच्यतामर्हति। यच्च संसाररूपसमष्टिकल्याण-सम्बन्धयुक्तं साध्यति तन्महायज्ञशब्दवाच्यतामर्हति। उक्तं चापि स्मृतिशास्त्रे—

इत्यन्वशासुर्धर्मस्य मुख्यान् भेदानशेषतः।
चतुर्विंशतिं संख्याकान् मुनयस्तत्त्वदर्शिनः॥
एषामपि च धर्माङ्गभेदानां गुणभेदतः।
भेदा द्विसप्ततिर्भूयो भवन्तीति विभाव्यताम्॥
एषु जीवहितायैकमप्यङ्गं यदनुष्ठितम्।
व्यष्टिबुद्ध्यानरैरत्र यज्ञ इत्युच्यते तदा॥
एकं चापि तदा तच्च महायज्ञ इतीर्यते॥

अन्यच्चापि—

तथा कलिप्रधानस्य दानस्य स्वार्थत्यागिता।
पितृपूजोपासनायाः क्षात्रं कर्म च कर्मणः॥
समष्टिरूपेणैतानि देशजात्यर्थकानि चेत्।
महायज्ञोपाङ्गभावं भजन्तीति विभाव्यताम्॥११०॥

उभयोर्यज्ञमहायज्ञयोर्भक्तिसम्बन्धमभिधत्ते—

## गौणीभक्तिदो यज्ञः पराभक्तिदो महायज्ञः॥ १११॥

यज्ञो हि गौणीं भक्तिं यच्छति, महायज्ञस्तु परां भक्तिं

ददाति। भक्तिस्तु सर्वसाधनसहायिका। तस्याः यज्ञेन महायज्ञेन च सम्वन्धस्थापनप्रदर्शनार्थं पूज्यपादो महर्षिः सूत्रकारः सूत्रमिदमाविश्चकार। यज्ञस्य व्यक्तिगतसम्वन्धसत्त्वात् सर्वोऽपि मानवस्तदधिकारी। महायज्ञसाधनाधिकारी तु निष्कामकर्मयोगी एव यथार्थतो विज्ञेयः। यद्यपि गृहस्थमात्रकृते महायज्ञसाधनं विहितं, किन्तु विधिरयं निष्कामकर्म शिक्षणार्थमेव। शिक्षणेनैतेन मनुष्यः क्रमशः समुन्नमन् निष्कामकर्मयोगी सम्पद्यते। फलतो यज्ञेन स्वार्थस्य महायज्ञेन च परार्थस्य सम्वन्धसत्वात् प्रथमेन गौण्या भक्तेः द्वितीयेन च पराभक्तेः सम्वन्धः स्थिरीकृतः। स्वार्थस्य चत्वारो भेदाः स्मृतावुक्ताः—

स्वार्थश्चापि परार्थश्च परोपकार इत्यपि।
चतुर्विधास्ति परमोपकार इति वासना॥
ऐहिकोऽभ्युदयस्तत्र स्वार्थो विद्वद्भिरुच्यते।
स्वीयामुष्मिककल्याणं परमार्थः प्रकीर्त्तितः॥
अपरैहिककल्याणं परोपकार उच्यते।
अपराऽऽमुष्मिकशिवं सकलान्तस्य लक्षणम्॥

स्वार्थपरमार्थाभ्यां यज्ञस्य उपकारपरमोपकाराभ्यां च महायज्ञस्य सम्वन्धः स्वतः सिध्यति। गौणी भक्तिः किलात्मसम्वन्धेन साध्यते, अतस्तत्साधनसमूहसाक्षात्सम्वन्धो यज्ञेन सहास्त इत्यत्र नाणीयानपि संशीतिलवः। आर्तो, जिज्ञासुः, अर्थार्थी चेति त्रिविधो भक्तस्त्रिगुणात्मकः सकामश्चेत्यत्रापि न सन्देहलेशः। अतस्त्रयाणामप्येतेषां गौण्या भक्तेः सम्वन्धः। परन्तु ज्ञानी भक्त एव पराभक्तेरधिकारित्वात् निष्कामः समदर्शी महायज्ञाधिकारवान् भवितुमर्हति॥ १११॥

तदन्यफलं वर्ण्यते—

## ततो दैवक्रियानिष्पत्तिश्च॥ ११२॥

ततो तद्द्वारा दैवीनां दैवसम्वन्धिनीनां क्रियाणां निष्पत्तिर्जायते। यज्ञैर्महायज्ञैश्च ऋषयो देवाः पितरश्च संवर्ध्यन्ते। केन केन कर्मणा कः कः संवर्धितो भवतीति प्राक् सविस्तरं प्रपञ्चितम्। क्रियाभिर्दैवराज्याधीश्वराः संवर्ध्यन्ते, ता एव क्रिया दैवक्रियानिष्पत्तिमूलमित्यभ्युपगम्यते। यथा चोक्तं गीतायाम्—

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥

यज्ञो धर्मश्च पर्यायवाचकौ। धर्मएव व्यष्टिसम्वन्धेन यज्ञः समष्टिसम्वन्धेन च महायज्ञ उच्यते। व्यष्टिसम्वन्धोपेतो वा समष्टिसम्वन्धयुक्तो वा असौ देवान् संवर्धयति। ज्ञानापरनामकेन ब्रह्मयज्ञेन ऋषयः देवयज्ञेन देवाः, पितृयज्ञेन च पितरः प्रसीदन्ति, विज्ञानमिदं पूर्वमपि सम्यक् संसाधितम्। सुतरां व्यष्टिसम्वन्धयुक्तैर्महायज्ञैश्च दैवं जगत् परिपोषमेति। फलतः यैः क्रियाकलापैस्त्रिविधा अधिदैवगणाः प्रियन्ते, दैवं राज्यं च परिपुष्टतां प्राप्नोति, ते किल दैवक्रियानिष्पत्तिमूलमिति स्वतः सिध्यति॥ ११२॥

तत्फलान्तरमप्यभिधत्ते—

## तत उपास्तावधिकार उपासकानाम्॥ ११३॥

ततो यज्ञमहायज्ञत उपासकानाम् उपास्तौ उपासनायामधिकारो जायते। यज्ञमहायज्ञस्वरूपधर्मसाधनाधिकारेषु उपासको यावदग्रे सरति तावदेव भाग्यशालिना धार्मिकमानवेन भक्तिमार्गे उत्तरोत्तरमधिकारो लभ्यते। धार्मिकभक्तेन प्रथममैहलौकिकी, ततः पारलौकिकी समुन्नतिरवाप्यते। ततश्च निःश्रेयसमधिगम्यते। धर्मस्वरूपयज्ञमहायज्ञद्वारा साधके क्रमेण सत्त्वगुणो वर्धते। धर्मस्य सत्त्वगुणशालित्वं प्रागेव सुनिरूपितम्। अन्यच्चेदं स्वतः सिद्धं यत् साधकैः रजस्तमोनाशपुरस्सरं यथायथा सत्त्वगुणः समुदेति तथा तथाऽसौ

समुन्नतं भक्तिमार्गमासादयति। तामसिकात् आर्त्त-भक्ताद् राजसिको जिज्ञासुः, ततश्च सत्त्वगुणप्रधान अर्थार्थी भक्तः श्रेष्ठः। एतेषां त्रयाणामप्यपेक्षया शुद्धसत्त्वगुणप्रधानो ज्ञानी भक्तः सर्वश्रेष्ठः समाम्नातः। विज्ञानमिदमनुसृत्यापि भक्तिमार्गे सत्त्वगुणस्योत्तरो-त्तराभिवृद्धिरेव परमसहायिका निर्दिष्टा। सुतरां यदा धर्मस्वरूपा यज्ञमहायज्ञाः क्रमशः सत्त्वगुणं वर्धयन्ते, यदि च भक्तिमार्गे क्रमशः सत्त्वगुणाभिवृद्धिरेव वांछनीया, तर्ह्येतत् सुसिद्धं यत् यज्ञमहायज्ञैः उपासकेन भक्तिमयोपासनामार्गे समुन्नतादपि समुन्नततरः, समु-न्नततमश्चाधिकारः समधिगम्यते॥ ११३॥

प्रसङ्गतः उपासनाभेदानाह—

**सा द्विविधा निरवलम्बना सावलम्बना च॥ ११४॥**

सावलम्बन-निरवलम्बनभेदेन उपासना द्विप्रकारा बोद्धव्या। उपास्यसान्निध्यकारकोपायसमूहा उपासना-शब्दवाच्याः। ते च क्रियारूपा उपायाः सावलम्ब-निरवलम्बतो द्विधा विभक्तुं शक्यन्ते। विज्ञानसिद्धेना-वलम्बनेन साध्यमानक्रियया सम्पद्यमानोपासना सावलम्बना। तादृशावलम्बनराहित्येन क्रियमाणा निरवलम्बना गीयते। अवलम्बनं भावमूलकम्, तत्र ध्येयप्राधान्यम्। मनसो ध्येयाभिमुखीकरणमन्तरेण ध्यानसिद्धिरसम्भवा। फलतो वेदमूलिका तत्सम्मत-शास्त्रमूलिका प्रकारान्तरेण योगचतुष्टयविज्ञानमूलिका वा उपासनाप्रणाली सावलम्बना। अन्यच्च वेदशास्त्र-प्रमाणविरहिता योगविज्ञानविपरीता केवलं मनःकल्पिता, ध्यातृ-ध्यान-ध्येयरूपत्रिपुटी विवर्जिता, मतान्तरप्रचरिता अवैदिक्य उपासनाप्रणाल्यो निरवलम्बनान्तर्गता वेद्याः।

वैदिकविज्ञानयुक्ता निराकारब्रह्मोपासना विला-ध्यात्माधिदैवाधिभूतभावसंयुक्ता ब्रह्मेशविराड्रूपसंव-लिता विद्यते। तद्वदेव ब्रह्मस्वरूपध्यानमपि सच्चिदानन्द-मयमेव। वैदिकविज्ञानस्य सगुणपञ्चोपासना लीला-विग्रहोपासनाप्रभृतयश्च मूर्त्तियुक्तध्यानसंयुक्ताः सन्ति। अतो वैदिक्य उपासनाप्रणाल्यः सावलम्बा इत्यत्र न कस्यापि विमतिः सन्देहलेशोवाऽपि। अन्यच्च निपुणं विशेषेण विचार्यमाणे स्थूलध्यानमयमन्त्रयोगस्य विन्दु-ध्यानमयहठयोगस्य ज्योतिर्ध्यानमयस्य लययोगस्य ब्रह्मध्यानमयराजयोगस्य च साधनाप्रणाल्यः सावलम्बः एवेति सर्वजनवेद्यम्। अतो वैदिक्य उपासनापद्धतयः सावलम्बा एव। परन्तु जगत्यवैदिकधर्ममार्गप्रचरितो-पासनाप्रणाल्यो भावविज्ञानमनुसृत्य स्वस्वरीत्यनुसारे-णाभ्युदयप्रदाः सन्ति, किन्तु ध्येयस्वरूपनिर्णयविरहात ध्यातृध्यानध्येयरूपत्रिपुट्यभावेन च योगविज्ञानविरुद्धाः, आध्यात्मिकसिद्धान्तशून्याः सन्तीति हेतोस्ताः सर्वा अपि निरावलम्बा इत्यत्र न मनागपि संशीतिलवः॥ ११४॥

साधारण्येनोपासनाभेदमाख्याय वैदिकोपासनाया विशिष्टान् भेदानाह—

**प्रणवाश्रयतः॥ ११५॥**

प्रणवाश्रयतः समनुष्ठीयमाना उपासनापद्धतयो वैदिक्यो वेदितव्याः। "तस्य वाचकः प्रणवः।" "तज्जपस्तदर्थभावनम्" इत्यादि योगदर्शनोक्ता उपा-सनाप्रणाल्यश्च उपर्युक्ता वैदिक्यः प्रणाल्य एव विद्यन्ते। प्रणवस्य सविस्तर वर्णनं दर्शनस्यैतस्य स्थानान्तरे निभालनीयम्। ब्रह्मप्रकृत्याः साक्षात् शब्दसम्बद्धत्वात्-साक्षात् रूपेण च ब्रह्मवाचकत्वात् ब्रह्मणा साक्षात् सम्बन्धनिबन्धनत्वाच्च प्रणवस्यावलम्बनं सर्वाभ्यर्हितम्।

एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते॥

"एतद् वै सत्यकाम परश्चापरश्च ब्रह्म यदोङ्कार-स्तस्माद् विद्वानेतेनैवायतने वै कतरमन्वेति" "तमोङ्का-

रेणैवायतने नान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्चेति ।"

प्रणवसाहाय्येनोपासनायास्त्रैविध्यम् । ओङ्कारस्य त्रिविधो जपः, यान्त्रिकनादसहायतया वा क्रियते स प्रथमो भेदः । द्वितीयश्चान्तःकरणसाहाय्येनानुष्ठीयते । एष किल भगवत्स्वरूपप्रणवध्वनितोऽक्षरमयस्वरूपेण साकं योजनया क्रियते । तदर्थभावना शब्दद्वारा महर्षिणा पतञ्जलिना साधनपद्धतिरियमेव परिलक्षिता । तृतीयो भेदः स एवावगन्तव्यो यत्र हि प्राणायामसिद्धेरनन्तरम् ओङ्कारादिलययोगक्रियासाहाय्येन ध्वन्यात्मकं प्रणवम् ।

"तैलधारामिवाच्छन्नं दीर्घघण्टानिनादवत्" इति वाक्यप्रतिपादितं प्रणवमन्तर्जगति शृण्वन्तो योगिनः स्वकीयमन्तःकरणं भगवत्पादारविन्दे विलीनं कर्त्तुं सामर्थ्यं लभन्ते । प्रणवाश्रयेण साध्यमानाया उपासनाप्रणाल्या इमे एव त्रयो भेदा मुख्यरूपेणावगन्तव्यास्ते च गुरूपदेशगम्याः सन्ति ॥ ११५ ॥

भेदान्तरमाचष्टे—

## उद्गीथाश्रयतः ॥ ११६ ॥

उद्गीथाश्रयेण चाप्युपासना क्रियते । उद्गीथोपासनाया एका स्वतन्त्रा पद्धतिर्वेदे निर्दिष्टा । पूर्णज्ञानमयवेदस्य मन्त्रः ब्राह्मणोपनिषद्भागेषु उपासनाकाण्डीयं सम्पूर्णं रहस्यं तत्साधनप्रणाल्यश्चेङ्गितरूपेण विवृतमास्ते । साधनस्यानेकाः पद्धतयः । तासु प्रधानरीतयो निम्ननिर्दिष्टप्रणाल्यन्तर्गता वेद्याः । सूत्रकारतात्पर्यमेतदेव । श्रुतावप्युक्तम्—

"एषां भूतानां पृथिवीरसः पृथिव्या आपो रसोऽयमोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाचऋग्रसऋचः सामरसः साम्नउद्गीथो रसः" "संवर्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते" इति । एवं किलाष्टमकोटिमाटीकमान उद्गीथो नाम श्रेष्ठतमो रसः, एतदुपासकस्य सर्वे कामाः साफल्यमुपयान्ति । अवलम्बनेषु उद्गीथोपासना अष्टकोटिषु सर्वोत्तमकोटिप्रविष्टः । यथा किल ब्रह्मप्रकृतेर्महामायाया अष्टास्वपि प्रकृतिषु उत्तरोत्तरसंबन्धेन बुद्धिः श्रेष्ठा । तथैवोपासनाया अष्टस्वप्यवलम्बनेषु उद्गीथो नाम अष्टमकोटिप्रविष्टः श्रेष्ठश्च । उपासनायां पार्थिवावलम्बनं प्रथमम् , यतः पार्थिवतत्वेन सह मृत्युलोकस्य साक्षात्सम्बन्धो घनिष्ठसम्बन्धश्च । स्थूलावलम्बनेनानुष्ठीयमानोपासना अत्रैव प्रथमकोटौ प्रविष्टा वेदितव्या । जलस्यावलम्बनं द्वितीयम् । गायत्रीप्रभृतिसन्ध्योपासनादौ जलस्य सर्वोपरि सम्बन्धः । विशेषतः पवित्रतासम्पादकेषु पदार्थेषु सर्वश्रेष्ठं जलमेव । उपासनायोग्यशरीरनिर्माणे ओषधयः सर्वप्रधानाः । यतोऽन्नानि प्राणाश्च तन्मूलका एव,अन्नैरेव प्राणा अपि परिरक्ष्यन्ते । ओषधयश्च शरीररक्षकान्नाधिगतौ प्राधान्यमावहन्ति । अतएवौषधयोऽपि साधारण्येनान्नान्तर्गता एव । "अन्नं ब्रह्मेति श्रुतावप्युक्तम् । ओषधिभ्योऽन्नानि । तेभ्यश्च वीर्यमुत्पद्यते । वीर्यमेव स्थूलशरीरस्योत्पादकम् । स्थूलं शरीरं हि उपासनायां प्रधानं सहायकम् । यद्यपि वीर्यं स्त्रीष्वपि सम्भवति । स्त्रीशरीरेषु अष्टौ धातवः, पुंशरीरेषु तु सप्तैव । किन्तु पुरुषशरीरे वीर्यस्य स्त्रीशरीरे च रजसः प्राधान्यम् । अत एव पुरुषो वीर्यदातृत्वात् उपासनाविषयेऽन्यापेक्षया वैशिष्ट्यमधिगच्छति । ओषधिप्रधानैः सात्त्विकैरन्नैरुपासनोपयोगि सात्त्विके मनः समुत्पद्यते । सात्त्विकमनाश्च पुमान् उपासनाधिकारी । पुरुषेषु वाग्वैशिष्ट्यम् , शब्दोच्चारणे वीर्यप्राणानां प्रधानसम्बन्धः । तच्छक्तिपूर्णत्वं पुरुषेष्वेव समुपलभ्यते । व्याकरणशास्त्रसिद्धस्य शब्दोत्पत्तिविज्ञानस्य संगीतशास्त्रसिद्धस्य शब्दोत्पत्तिविज्ञानस्य च

द्वारेण पुरुषाणामुपासना सहायकवाक्याधिकारः सर्ववादिसम्मतः। पुरुषेषु वाक्याधिकारः शब्दाधिकारश्च पर्याप्तरूपेण परिदृश्यते। अतएव पुरुषाणां द्विजानामेव वेदेष्वधिकारः। संगीतोक्तत्रिसप्तके चापि पुरुषाणामेवाधिकारः। सुतरां पुरुषेष्वेव श्रेष्ठो वाक्याधिकारः सम्भवति। वाक्येषु च वेदवाक्यगरीयस्त्वं सर्ववादिसम्मतम्। वेदमहत्त्वमुक्तपूर्वम्। वाच्यवाचकसम्बन्धेनैवोपास्योपासकसन्निधानमासाद्यते। अतएव कारणात् शब्दमयमन्त्रद्वारा भावमयं रूपमधिगम्यते। प्रणवविज्ञानमेतस्य समुज्ज्वलो दृष्टान्तः। सुतरां शब्दमयवाक्यस्योपासनायामुपयोगित्वं सिद्धयति। वैदिक्यामुपासनायां शब्दमयवाक्यानां प्रधानसहायकत्वं सर्वे समाद्रियन्ते। यतो हि वैदिकाः शब्दा ब्रह्मस्वरूपस्य भगवतो वाक्यमेव। भगवद्वाक्यस्यावलम्बनेन भगवत्प्राप्तिरवश्यम्भाविनी। "वेदानां सामवेदोस्मीति" कथितवता भगवता वेदेषु समावेदस्य महत्त्वं समधिकमङ्गीचक्रे। वस्तुतः किलोपासनाकाण्डाधिकाराधिगमो सामवेदः सर्वप्रधानस्वरूपः। समावेदस्य विस्तारोऽपि सुमहान्। सामवेदे चापि समुपासनावलम्बनविचारतः उद्गीथं परमसहायकं श्रेष्ठं च। सुतराम् उद्गीथं हि उपासनाकोटिषु सर्वश्रेष्ठमष्टमं स्थानमधिकरोति। गानरीतिर्भागद्वयविभक्ता। एका देशीति द्वितीया मार्गी चोच्यते। आर्यजातीयाः सर्वा अपि गानपद्धतिः, देश्यन्तर्गताः सन्ति। द्वितीयया मार्गीपद्धत्या उद्गीथस्य साधनमनुष्ठीयते। जीवात्मा देही पञ्चकोषैरावृतः। परमात्मा किल पञ्चभिः कोषैरतीतः। परमात्मासान्निध्यकराणि सर्वाण्यपि साधनानि उपासनाशब्देनाख्यायन्ते। संगीतशास्त्रविश्रुताः सप्त स्वराः प्राणसाहाय्येन अन्नमयकोषतः समुत्पद्य आनन्दमये कोषे लीयमाना ब्रह्मशक्तौ महामायायां विलयमुपगच्छन्ति, उद्गीथावलम्बेन उपासकान्तःकरणं प्रथमं शब्दब्रह्मस्वरूपं वेदवाक्यमाश्रयति, ततश्च शब्दविज्ञानमयमुद्गीथस्वरविज्ञानमाश्रयत् आनन्दमयं कोषमासाद्य अष्टाङ्गयोगसाहाय्यमन्तरेणैव समाधिस्थं जायते। गुरुकृपया एतस्यां पद्धत्यां दृढीभूतायां साधकेनोपासनाया उच्चतरोऽधिकारः स्वतएव प्राप्यते। केवलमुद्गीथस्य यथाक्रमभ्यासस्य, सश्रद्धं मनोयोगस्य लक्ष्यस्थाननिर्णयस्य चावश्यकता वरीवृत्यते॥ ११६॥

तृतीयवैदिकभेदमुदाहरति—

## सामोपासनतः॥ ११७॥

सर्वप्रथमं किल प्रणवसाहाय्येनोपासनां वर्णयित्वा उद्गीथसाहाय्येनोपासनाविज्ञानं समुपवर्णितम्। साम्प्रतमत्र सूत्रे पूज्यपादेन महर्षिणा सूत्रकृता सामगानसाधनरीतिसहायतया उपासनासम्बन्धो निर्णीयते। यथा प्रकृत्या सप्तविधाः सृष्टयस्तथैवोङ्कारेण संगीतस्य सप्तस्वरा आविर्भवन्ति। उद्गीथे सप्तस्वरप्राधान्यम्। यतो मार्गीनामकसङ्गीतविद्याया अवलम्बनेन उद्गीथमुपास्यते गीयते वा। अतएव प्रणवोपासनानन्तरं प्रणवविस्तारस्वरूपोद्गीथोपासना वर्णिता। उद्गीथविस्तारः सामोपासनायां वेदितव्यः। यतः प्रणवे एकमवलम्बनम् उद्गीथे सप्तस्वराणामवलम्बनम्, सामोपासनायां विविधस्वरविन्यासानां शब्दमयस्य भावस्य चावलम्बनं पूर्णरीत्या तिष्ठति। प्रणवत उद्गीथे ततोऽपि च सामगाने विस्ताराधिक्यम्। उपासनाविज्ञानमनुसृत्य त्रयाणामुपयोगित्वेऽपि अवलम्बनतारतम्यतो वर्णनरीत्या पूर्वापरविचारो विहितः। सामोपासनायामुद्गीथविस्तारः, यतः प्रणवेऽवलम्बनमेकमेव, उद्गीथे सप्तस्वराणामवलम्बनम्, सामोपासनायां व विविधस्वरविन्यासानां शब्दमयभावानां पूर्णरूपेणावलम्बनं तिष्ठति। प्रणवतः उद्गीथे विस्तारः, ततश्चापि सामगानेऽधिकं

विस्मृतिः। उपासनाविज्ञानानुसारेण त्रयाणामुपयोगित्वेऽपि अवलम्बनतारतम्यत्वात् वर्णने पूर्वापरविवेकोऽनुष्ठितः। सामरहस्यविषये वेदेषु बहूनि प्रमाणानि समुपलभ्यन्ते तेषु किञ्चिद् यथा—

ॐ सामस्तस्य खलु साम्न उपासना ँ साधु यत् खलु साधु तत्समेत्याचक्षते यदसाधु तदसामेति। तदुताप्याहुः साम्नैनमुपगादिति साधुनैनमुपागादित्येव तदाहुः। अथोताप्याहुः सामनोवतेति यत् साधु भवति साधुवदेत्येव तदाहुरसामनोवतेति यदसाधुभवत्यसाधुवदेत्येव तदाहुः। स एतदेवं विद्वान् साधु सामेत्युपास्तेऽभ्याशोहयदेन ँ साधवो धर्मा आचगच्छेयुरुप च नमेयुः।

वेदे सामोपासनाबहुविधोपवर्णिता। तथाहि—

वृष्टौ पञ्चविध ँ सामोपासीत् पुरो वातो हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्‌गीथो विद्योतते स्तनयति सप्रत्याहारः उद्गृह्णाति तन्निधनम्"

"वर्षास्वप्सु पञ्चविध ँ सामोपासीत मेघो यत् संप्लवते स हिङ्कारो यो वर्षति स प्रस्तावो याः प्राच्यः स्पदन्ते स उद्‌गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम्"।

"ऋतुषु पञ्चविध ँ सामोपासीत् वसन्तो हिङ्कारो ग्रीष्मप्रस्तावो वर्षा उद्‌गीथः शरत् प्रतिहारो हेमन्तो निधनम्।"

वेदेष्वेवं बहुविधान्युदाहरणानि समधिगम्यन्ते। यतस्तेषु विचित्रा अद्‌भुताश्च वर्णनरीतयः समुपलभ्यन्ते। अनुलोमप्रतिलोमयोरुभयोरेव स्वरूपेण साम्यसमतादृष्टिसम्पन्नतायै उदाहरणरूपेणैकाश्रुतिर्निर्दिश्यते, तथाहि—

"लोकेषु पञ्चविध ँ सामोपासीत् पृथिवी हिंकारः, अग्निः प्रस्तावोऽन्तरिक्षमुद्‌गीथ आदित्यप्रतिहारो द्यौर्निधनमिर्ध्वेषु, अथावृत्तेषु द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्‌गीथोऽग्निः प्रतिहारः पृथिवीनिधनम्।"

यथा किल प्रत्येकस्य वस्तुनस्त्रिभावात्मकं स्वरूपं वेदविहितं तथैव स्वर्गस्य सर्वोऽपि वैभवः सामविज्ञानमनुसृत्य पञ्चधा सप्तधा वा विभक्तो वेदानुकूल एव बाहुल्यभयेन बहूनि श्रौतप्रमाणानि न समुपस्थापितानि। सामवेदशिक्षामनुसृत्य सप्तस्वरावलम्बनेन विधीयमानोपासनापद्धतिर्या किल पूज्यचरणैर्महर्षिभिः सञ्चालितास्तस्याः पञ्चभेदाः कुत्रचिच्च सप्तोच्चारणविभागभेदाः समाम्नाताः। गानपद्धतिविभागा इमे ह्युपर्युक्ताः सुगभीरविज्ञानसंवलिताः सन्ति। हिङ्कार-प्रस्ताव-आदि-उद्‌गीथ-प्रतिहार-उपद्रव-निधनाख्याः सप्तविभागाः प्रोक्ताः, सामोपासनाविधौ तु शेषोक्ताः पञ्चैवाधिकारभेदाः संगृहीताः। यतो हि पाञ्चभौतिक्यां सृष्टौ पञ्चभेदात्मकोऽधिकार एव सौविध्यजनकः। अतएव सामोपासनानिर्दिष्टोपास्तावपि प्रायः पञ्चैव भेदः संगृहीतः। उपर्युक्तमन्त्रप्रामाण्येनेदं प्राकट्यमेति। दृश्यप्रपञ्चमयोऽयं संसारो ब्रह्मतः समुत्पद्यते, ब्रह्मणि च विलीयते। यद्यपि ब्रह्माण्डसृष्टिरनादिसत्ताया किन्तु ब्रह्माण्डमयी अधिदैवसृष्टिः पिण्डमयी अधिभूतसृष्टिश्च सादिः सान्ता च। अतएवेदमभ्युपगन्तव्यमेव यत् संसारोऽयमेकस्मिन् ब्रह्माण्डे जलबुद्‌बुदवत् समुत्पद्यते विलीयते चापि। यथा मानवपिण्डोऽयं प्रकृतिपुरुषसम्बन्धेन समुत्पद्यमानो बाल्य-यौवन-जरावस्थाः समधिगम्यमानोऽन्ते प्रकृतिपुरुषात्मकसृष्टिचक्रे ह्यदृश्यतामापद्यते, तथैवोपासनोपयोगिनी सामसृष्टिः हिङ्कार-प्रस्ताव-उद्‌गीथ-प्रतिहार-निधनाख्यां पञ्चविधामवस्थां प्रापय्योपासकं स्वस्वरूपमधिगमयति। हिंकारे स्वरोत्पत्तिः, प्रस्तावे तद्विस्तारः, उद्‌गीथे पूर्णस्वरूपाधिगमः, प्रतिहारे भावावेशोत्पत्तिः, निधनदशायां तु अन्तःकरणस्य लयावस्था समुत्पद्यते। अंतःकरणलयावस्थायां समाधेरुत्पत्तिर्भगवत्साक्षात्कृतिश्च

जायते। प्रणवोपासनायामेकतत्त्वस्य साक्षात्साहाय्यम्, उद्गीथोपासनायां स्वरसाहाय्येनैकतत्त्वाधिगमः सामोपासनायां च स्वरभावयोः सहायतायै एकतत्वसाहाय्याधिगतिरित्येतत्विज्ञानरहस्यमवधेयम्। अध्यात्माधिदैवाधिभूतभावानां सविस्तरं वर्णनं प्रागेवानुष्ठितम्। त्रिष्वपि भावेष्वेषु यदाऽध्यात्मलक्ष्येऽमन्यता समुत्पद्यते, तदानीमेवैकत्वप्राप्तिद्वाराऽन्तःकरणे समाधिभूमिर्जागर्त्ति।

इयमेव च श्रेष्ठतमा दशा भगवत्साक्षात्कारस्य मोक्षस्य कारणम्। अध्यात्मलक्ष्यप्रधानत्वादेव सन्यासाश्रमः सर्वाभ्यर्हितस्त्रिविधशुद्धियुक्तो ब्राह्मणश्च त्रिलोकपूज्यः समाम्नातः, यथाऽध्यात्मलक्ष्यप्रतिष्ठा तथा साधनपद्धत्या उपासनामार्गे परमं साहाय्यमासाद्यत इत्यत्र नास्त्यणीयानपि संशीतिलवः। एतत्सूत्रोक्तसामोपासनया साधकः स्वान्तःकरणे एकतत्त्वयुक्तमध्यात्मलक्ष्यं प्रतिष्ठापयितुं सामर्थ्यं लभते। पूज्यपादैर्महर्षिभिराविष्कृता सामगानसम्बन्धिनी हिङ्कारादिगानपरिपाठी स्वस्वभावप्राप्तिमूलिकाऽवधेया। अन्यच्च सामवेदसम्बन्धिन उपासनामन्त्रा अध्यात्मभावपरिपूर्णाः सर्ववेदापेक्षया सामवेदस्य सर्वाधिका विस्तृतिः। अतएव तत्र वर्णनप्राचुर्यमधिगम्यते। सहस्रशाखासंवलितः सामवेदः सर्वतोभावेन भगवदुपासनायां तत्परतामाधत्ते। एतस्माद्विचारत एव पूर्वोक्ता अनेका वर्णनपद्धतिः सामगानवैचित्र्यं चैकत्राध्यात्मभावे परिणमय्य भगवदुपासनामार्गः सरलीकृतः। एतदेव किलैतत्सूत्रोक्तं विज्ञानमवधेयम्। ब्रह्मस्वभाव एवाध्यात्मेति चोच्यते, अथच सर्गस्य प्रत्येकविभागे भावशुद्धिं द्वारीकृत्य अध्यात्मतत्त्वाश्रयेण स्वभावाधिगमः, तदनुसरणतश्च भगवत्साक्षात्कृतिः सम्भवति। हिंकारतः समुदीयमानविचित्रस्वरूपमयसामगाननिधनाश्रयतः स्वस्वरूपे लयो जायते। एतस्य वास्तविकानुसरणेन स्वभावप्राप्तिः सम्भवा। स्वभावानुसरणेनैव भगवत्साक्षात्काराधिगमः। हिङ्कारोत्पन्नं विचित्रस्वरूपमयं सामगानं निधनाश्रयेण स्वस्वरूपे विलीयते। वस्तुतस्तदनुसरणेनैव स्वभावाधिगतिः। अन्यच्च सर्गस्य प्रत्येकविभागे यैर्भावैः सामोपासना क्रियते, तेषामवलम्बनेषु अध्यात्मभावाश्रयेण स्वभावप्राप्तिरेव सामोपासनायाः सर्वोत्तमं विज्ञानमवधेयम्। उदाहरणसाहाय्येन विज्ञानमिदमवगमयितुमनुलोमविलोमाभ्यामुभाभ्यामेव सामोपासनापद्धतेरलौकिकं रहस्यं किञ्चित् दर्शयति। तथाहि—पृथिव्यग्न्यन्तरिक्षादित्यस्वर्गाणाम् अनुलोमतः, स्वर्गादित्यान्तरिक्षाग्निपृथिवीनां विलोमतश्च हिङ्कार-प्रस्ताव-उद्गीथ-प्रतिहार-निधनरूपतो भावशुद्धिं द्वारीकृत्य अध्यात्मतत्त्वमूलकः स्वभावः परिलक्षयितुं योग्यः। पृथिवीकर्मभूमिः, अग्नितः कर्म, अन्तरिक्षे स्थितिः, आदित्यादूर्ध्वाकर्षणम्, स्वर्गतश्च क्रमोन्नत्यालोकप्राप्तिश्चेति विज्ञेयम्। अन्यच्च आदित्यरश्मिसाहाय्येन स्वर्गतः पुनरावृत्तिः, अन्तरिक्षाश्रयेण चागमनम्, ततश्च कर्माश्रयणम्, तदनन्तरं हि कर्मभूमिरूपपृथिव्यां कर्मानुष्ठानेन समभ्युदयावसरस्य प्राप्तिः। इयमेव आवागमनचक्रद्वारा स्वभावसिद्धा क्रमोन्नतिः, स एव च लोकगमागमस्वभावः। सर्गस्य प्रत्येकपदार्थे स्वभावसिद्धं भावमिमं यदा भक्तो द्रष्टुं सामर्थ्यमधिगच्छति तदा तदीयाऽऽध्यात्मदृष्टिर्दृढा जायते। वेदेषु सृष्टिवैभवानां विविधशक्तीनामवलम्बनेन नाना वैचित्र्यपरिपूर्णाया उपासनापद्धतयः समुपवर्णितास्ता दृष्ट्वा केचिद् विमुग्धाः सन्तः सन्दिहन्ते यद् वेदेषु तादृशलघूनां विषयाणां कथं समावेश इति। किन्तु सामोपासनाया गम्भीरं रहस्यम्, समताया लोकोत्तरं विज्ञानम्, सर्वस्मिन् अपि काले स्वभावोपलब्धिपूर्वकं मुक्तिपथस्य

सरलो मार्गः, एकतत्त्वस्य समाधिप्राप्तेश्च स्वाभाविकाः सरलाश्चोपाया यदा परिदृश्यन्ते तदा कस्यापि शङ्कायाः कश्चिदवसर एव नास्ति। सर्वत्रैवाध्यात्मभावस्थायित्वमेव साम इत्युच्यते। इयं हि सामदृष्टिर्वेदपरिपूर्णा। प्रत्येकोऽपि श्रुतिमन्त्रस्त्रिभावात्मकः। वेदोऽपि च त्रिविधाधिकारिकल्याणपरः। किन्तु समदृष्टिसमुत्पत्तिरेव वेदनिदेशः, इयमेव सर्वसुगमा सर्वाभ्यर्हिता सामोपासना समवधेया। प्रत्येकयज्ञकर्मणि अध्यात्मदृष्टिद्वारा स्वस्वभावाधिगमो जायते। अनया दृष्ट्या चैकतत्त्वसाहाय्येन भगवत्साक्षात्कारमार्गो निष्कण्टकायते। सर्गस्य सर्वेष्वपि वैभवेषु अनुलोमप्रतिलोमतः स्वाभाविकी दृष्टिरेव साम इत्युच्यते। अस्वाभाविकी तद्भिन्ना दृष्टिरेव असाम इति। सामद्वारा भगवत्साक्षात्कृतिर्जायते। भगवत्सान्निध्यविरहस्त्वसामद्वारेति निर्गलितार्थः॥ ११७॥

चतुर्थं वैदिकमुपासनाविज्ञानं निरुच्यते—

## पुरुषधारणातः॥ ११८॥

पुरुषस्य धारणातः, सर्वत्रैव पदार्थे पुरुषस्य परमेश्वरस्य धारणया तदधिगम्यते। योगशास्त्रप्रोक्तेन संयमेन विषयस्य याथातथ्यस्वरूपनिर्णयः, एकतत्त्वाभ्यासेन च परमात्मस्वरूपोपलब्धिः, सर्वमिदं विज्ञानसिद्धम्। धारणाध्यानसमाधीनाम् एकत्रोपयोगेन संयमः समुदेति, तदानीमतीन्द्रियपदार्थावबोधः। केनापि प्रकारेणैकतत्त्वोदयतोऽन्तःकरणे नूनमेव परमात्मनः साक्षात्कारो जायते। पुरुषधारणाचैतस्यैव सहायिका। छान्दोग्योपनिषदि एतद्धारणोपासनासम्बन्धे निम्ननिर्दिष्टं प्रमाणमुपलभ्यते। तथाहि—

"स एष आदित्ये पुरुषो दृश्यते, सोऽहमस्मि स एवाहमस्मि।" इति।

चन्द्रमसि विद्युदादौ च पुरुषस्वरूपब्रह्मणः सत्ता परिदृश्यते। व्योमवायुवह्निजलादर्शदिक्छायापुरुषेषु धारणाविधिः समुपलभ्यते। एतादृशप्रमाणानि वेदेषु बहूनि समुपलभ्यन्ते। एतत्साधनारहस्यमिदं यत् सर्वत्रैव चिन्तासु यदि उपासकोऽद्वितीयपरमपुरुषधारणां कर्त्तुं शक्नुयात्, तत्साहाय्येन च नैजमन्तःकरणमेकतत्त्वयुक्तं विदध्यात्, तर्ह्येतत्साधनसिद्धावस्थाया सर्वत्रैव सर्वदा चैकतत्त्वयुक्तस्य परमेशितुर्धारणया भगवत्सान्निध्यमासाद्यो उपासनायाश्चरमं फलमधिगन्तुं शक्यते। एतादृगुपासना राजयोगप्रणाल्यन्तर्गता वेद्या। राजयोगपद्धतेः सविस्तरं वर्णनं प्रागेवानुष्ठितम्।

उक्तं चापि—

यस्मिन् सर्वे यतः सर्वे, यः सर्वे सर्वतश्च यः।
यश्च सर्वमयो देवः, तस्मै सर्वात्मने नमः॥

परमपुरुषः परमात्मा सर्वस्याप्यादौ मध्ये अन्ते च विराजते। तादृशाद्वैतज्ञानमूलिकायाः परायाः भक्तेरुदयो यदा यत्रोपासके जायते तदानीमसौ भाग्यवानुपासकः स्वकीयैकतत्त्वमयपुरुषधारणया सर्वेष्वपि पदार्थेषु प्रियतमस्य स्वेष्टदेवस्य दर्शनं कर्त्तुं समर्थो भविष्यतीत्यत्र कः सन्देहः। पूर्वं वचसा ततश्च मनसा तदनु च बुद्धया क्रमशो धारणायाश्चैतस्याः सिद्धिः क्रियते। सर्वोत्तमं साधनं चैतद् गुरुगम्यमास्ते॥११८॥

पञ्चमीं वैदिकीमुपासनां वर्णयति—

## सा ब्रह्मधारणातः॥ ११९॥

सा पञ्चमी वैदिक्युपासना ब्रह्मधारणातः सम्पद्यते। वेदेषु मन्त्रहठलयराजाख्यानां चतुर्णामपि योगानामुपासनापद्धतेर्वर्णनमुपलभ्यते। परमुपनिषत्सु लयराजयोगयोर्मिश्रिताया वा उपासनाया रहस्यं वर्णितमास्ते। तासूपासनापद्धतिषु प्रधानशैलीनां रहस्यमुद्घाटयितुं

पूज्यपादेन महर्षिणा सूत्राणीमानि समाविर्भावितानि। पूर्वनिर्दिष्टास्तिस्रः पद्धतयो लयराजाख्ययोर्योगयोर्मिश्रितस्य साधनस्य प्रोक्ताः सन्ति। एतत्सूत्रतः पूर्वोक्ताः पद्धतय एतत्सूत्रोक्ताश्च राजयोगविज्ञानसम्मता वेद्याः। कार्यब्रह्मावलम्बनेन कारणब्रह्मस्वरूपावगम एतद्रीतिरहस्यमास्ते। उक्तं च छान्दोग्योपनिषदि—

"मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मञ्चाधिदैवतं च" "तदेतच्चतुष्टयात् ब्रह्मवाक्यात् प्राणपादश्चक्षुपादः श्रोत्रं पाद इत्याध्यात्ममथाधिदैवतमग्निःपादो वायुःपाद आदित्यःपादो दिशःपादइत्युभयमेवानिर्दिष्टं भवत्यध्यात्मं चाधिदैवतं च" "वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च।"

"प्राण एव ब्रह्मणश्चतुर्थः पादः सवायुना ज्योतिषा भाति च तपति च", "चक्षुर्ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च" "श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद।" इति।

कारणब्रह्म स्वस्वरूपाश्रयेण ब्रह्माण्डपिण्डात्मकं कार्यब्रह्म प्रकटितमास्ते। समष्टिव्यष्टिरूपेण कार्यब्रह्मसृष्टिश्चतुर्विंशतितत्त्वात्मिका। चतुर्विंशतितत्त्वविचारेण परिदृश्यमाने मन एवेन्द्रियाणां राजा। अहंतत्त्व-महत्तत्त्व-मूलप्रकृतीनामनुभवः समाधिस्थैर्योगिभिरेवानुष्ठातुं शक्यते। साधारणरीत्या मनसोऽनुभवस्तु सदैव क्रियते। अतः सदैव समनुभूयमानस्य तत्त्वस्यावलम्बनेनैव समुपासना सौविध्यजननी। अन्यच्च मनसो जीवानां बन्धनमोक्षयोर्हेतुत्वात्, सृष्टिधारकत्वात् स्वामित्वाच्चेन्द्रियाणां, सृष्टौ चाध्यात्मरूपत्वात्, उपासनायां तस्य प्रधानता। ब्रह्मणो व्यापकधारणायै आकाशो हि प्रधानमवलम्बनम्। तत्रैव च स्थूलप्रपञ्चानां स्थितित्वात् आकाशो ह्यधिदैवभूतो वेद्यः। सुतराम् एतद् विज्ञानाश्रयेण कदाचिन्मनसि ब्रह्मधारणया कदाचिच्चाकाशे ब्रह्मधारणया साधकस्तत्त्वातीतं पञ्चकोशातीतमद्वितीयं ब्रह्म स्वान्तःकरणसंयुक्तमनुष्ठाय स्वस्वरूपमनुभवितुं शक्नोति। परमेतादृगभ्यासो निरन्तरमनुष्ठातुं समुचितः। स्थूलेन सर्गेण स्वान्तःकरणसम्बन्धस्थापनाय प्राधान्येन प्राणवाक्-चक्षुश्श्रोत्राणामेषां चतुर्णां हि विशिष्यसहायकत्वम्। अत एते मनसश्चत्वारः पादाः। एतेषामवलम्बनेन मनसि ब्रह्मधारणानुष्ठाने विशिष्टं सौविध्यमास्ते। सर्वदैव मनसि ब्रह्मधारणा न सम्भवा, यतो विषयाकारतामधिगतं मनः साधकस्य साधनलक्ष्यं विस्मारयितुमर्हति, अतएवैतेषां पादानामवलम्बनेन साधकस्य साधना स्थैर्यमासादयति। मनसो विह्वलत्वे प्राणक्रियावागादि प्राकृतिकविविधदृश्यावलम्बनतः साधकः स्वीयां धारणाशक्तिं परिवर्धयन् मनोब्रह्मावलम्बनेन स्वकीयमन्तःकरणमूद्ध्र्वस्थं विदधद् भगवत्पादारविन्दमासादयति।

अथ च आकाशब्रह्मणि समनुष्ठीयमानायां धारणायां यदि बाधा समुपस्थिता स्यात् तर्हि पूर्वोक्तानामाकाशस्य चतुर्णामपि पादानामवलम्बनेन साधको नैजमन्तःकरणमूद्ध्र्वस्थं विदधत् सर्वव्यापके ह्याकाशे ब्रह्मधारणां कुर्वाणः स्वकीयमन्तःकरणं भगवच्चरणारविन्दं प्रापयितुमर्हति। कीटभृङ्गन्यायमनुसृत्य साधकस्य ब्रह्मधारणायुक्तमन्तःकरणमूद्ध्र्वगामि कालान्तरो ब्रह्मसाक्षात्कर्तुं प्रभवति। आकाशस्य स्वरूपमनुभवितुम् आकाशव्यापी पावकः, व्यापिकातडिच्छक्तिः, तत्र च सरलया रीत्या समनुभूयमाना वायु-सूर्य-दिशश्च परमं साहाय्यमाचरन्ति। विषयेऽत्रचतुर्णामपि शक्त्यः सरलया पद्धत्याऽनुमातुं शक्यन्ते। एवं प्रकारतो वेदेषु

पादानामपि सम्बन्धेन तत्त्वान्तरवर्णनमुपलभ्यते, तदपि ब्रह्मधारणायां सहायकमवधेयम्।

गीतायामुक्तं च—

"उद्धरेदात्मनात्मानं नात्मानमवसादयेत्"। विज्ञानमिदमनुसृत्य सर्वत्रैव पदार्थे धावति मनसि ब्रह्मधारणया ब्रह्मपदाभिमुखं मनसः समाकर्षणमेव साधनरथैतस्य रहस्यमवगन्तव्यम्। साधनेऽत्र चित्ताकाशावेव प्रधानावलम्बनरूपौ एतदुपासनाहेतुभूतौ समाम्नातौ ॥ ११९ ॥

षष्ठीं वैदिकीमुपासनां निर्दिशति—

**व्याहृतिसम्बन्धतः ॥ १२० ॥**

सा वैदिकी उपासना व्याहृतिसम्बन्धतोऽपि समनुष्ठीयते। वेदेषु विविधधारणावलम्बनेन ब्रह्मोपासनाया विधानं परिदृश्यते। एतेषु प्रधानविधीनामवलम्बनेनोपासनाविज्ञानरहस्योद्घाटनाय पूज्यपादो महर्षिः सूत्रकारः सूत्राण्येतानि प्रादुरभावयत्। एतानि सर्वाण्यपि साधनानि राजयोगमूलकान्यवगन्तव्यानि। राजयोगनिष्णाता गुरव एव साधनानामेतेषां प्रक्रियां सिद्धान्तं च वेत्तुं शक्ष्यन्ति, नान्ये। व्याहृतीनामवलम्बनेन साधनं सम्बन्धं निम्ननिर्दिष्टप्रमाणानि समुपलभ्यन्ते। तथाहि—

"भूर्भुवःस्वरिति वा एतास्तिस्रो व्याहृतयः" "भूरिति वा अयं लोकः भुव इत्यन्तरिक्षं स्वरित्यसौ लोकः" "तथा वेद स वेदब्रह्म। तस्मै देवा बलिमावहन्ति"।

भूः, भुवः, स्वः इति तिस्रो व्याहृतयः। भूर्लोके अस्माकं निवासः। अन्तरिक्षमेवभुवर्लोकः, ततश्च तृतीयः स्वर्लोकः। एतासां व्याहृतीनां वेत्तारो ब्रह्म जानन्ति। तेषां कृते देवा अपि बलिमाहरन्ति। सप्तव्याहृतीनामवलम्बेन प्राणायामविधिः सन्ध्यासाधनप्रयोगे परिदृश्यते। गायत्र्युपासनायां प्रणवप्रयोगतः ॐ भूः, ॐ भुवः, ॐ स्वः, इति व्याहृतित्रयसम्बन्धेन समुपासनविधिः परिदृश्यते वेदेषु।

सन्ध्याप्रयोगे साधारण्येन विधिरयं निर्दिष्टः। अतोऽत्र विशिष्टं प्रमाणं नापेक्ष्यम्। नित्यसन्ध्योपासनायां विविधः प्रयोगोऽयं समुपलभ्यते। ऊर्द्ध्वसप्तलोकवर्णनमुक्तपूर्वम्। भूर्लोकस्य चतुर्षु विभागेष्वेको मृत्युलोकः। एतद्भूर्लोकस्योर्द्ध्वस्थितः पितृलोकः। भूर्भुवःस्वरिति त्रयः साधारणाऊर्द्ध्वलोकाः। ऊर्द्ध्वगामिजीवानां प्रायेण त्रिभिरेतैरेवसम्बन्धः। अवशिष्टाश्चत्वारो विशिष्टा ऊर्द्ध्वलोकाः सन्ति। अन्तिम सप्तमो लोको मुक्तिप्रदं ब्रह्मस्थानमवगन्तव्यम्। एतैः सप्तभिर्लोकैः सम्बन्धं स्थापयित्वा सप्तव्याहृतिमन्त्राणां सृष्टिः। प्रणवस्तु सेतुभूतो व्याहृतिमन्त्रेषु संयुक्तः। गायत्र्युपासना वस्तुतो ब्रह्मोपासनैव। अत एतस्याः सर्वाभ्यर्हिता महिमा। अतो गायत्रीमन्त्रेण सह व्याहृतित्रयस्य तेनैव च साकं प्राणायमस्य च सम्बन्धः सुरक्षितः। इदं तु प्रागेव निर्णीतं यत् येन साधनेन नियमितरूपेण अन्तःकरणस्योर्द्ध्वगतिः सुरक्ष्यते तदेव साधनं सर्वाभ्यर्हितम्। सप्तोर्द्ध्वलोकसम्बन्धसंयुक्तसप्तव्याहृतीनां निजान्तःकरणे धारणया ब्रह्मोपासनां कुर्वाणस्य साधकस्यान्तःकरणे तत्तेजसा सर्वव्यापकं ब्रह्म समाकृष्यते। साधकश्च विष्णुपदमभ्युपैति। तिसृणां सप्तानां च व्याहृतीनां रहस्यमिदं यत् तिसृभिः सप्तभिश्च ब्रह्मतेजसः साहाय्यमधिगम्यते। तिसृभिस्तु सारल्यमस्ति। फलं तूभयोः समानमेव अतस्तिसृणां सम्बन्धो गायत्रीमन्त्रेण संन्यासमनुनाऽन्येनापि समधिगम्यते। यथा किल प्रणवो मन्त्रसेतुः, अर्थात् सेतुर्यथा नद्यादीनां मार्गं सरलीकरोति, तथैवासौ मन्त्रान्तरसर्वविधबाधां शमयन् अधिदैवगतिं सरलीकुरुते। व्याहृतिमन्त्रा

अपि मन्त्रान्तरस्थितिमन्तःकरणगतिं च स्वस्वरूपाभिमुखीमूर्द्ध्वगां विदधते ॥ १२० ॥

सप्तमीं वैदिकीमुपासनापद्धतिं निर्णयति—

**सा पञ्चकोषावलम्बनतः ॥ १२१ ॥**

सा पञ्चकोषावलम्बनेनापि समनुष्ठीयते। समष्टिव्यष्टिरूपेण पञ्चकोषा ब्रह्माण्डं परिव्याप्नुवन्ति। सहज-मानव-दैवाख्यपिण्डत्रये पञ्चकोषा विलसन्ति। उद्भिज्जादिपशुशरीरेषु पञ्चकोषा भवन्ति, किन्तु तेषां विकासस्तेषु नास्ति। मानवशरीरे पञ्चापि कोषा विकासं प्राप्ताः। दैवेषु मानवीयेषु च पञ्चकोषेषु भेद इयानेव यत् मानवीयपञ्चकोषापेक्षया दैवा पञ्चकोषाः समधिकदैवशक्तिसम्पन्नाः सन्ति। वस्तुतः पञ्चकोषाः सर्वत्रैव समाना एव सन्ति। यदि साधकः स्वीयपञ्चकोषेषु स्वाधिपत्यं संस्थापयेत् स्वकीयमन्तःकरणमूर्द्ध्वलोकं प्रापयेत् किमधिकं विष्णुपदमपि प्राप्तुमर्हेत्। अतः पञ्चकोषावलम्बनेन विधीयमाना धारणा मुक्तिदायिनी। अत्र विषये स्वयमुपनिषदो व्याहरन्ति—

"अन्नं ब्रह्मेति व्यजानात्" "अन्नादेव खल्विमानि भूतानि जायन्ते, अन्नेन जातानि जीवन्ति, अन्नं प्रयन्त्यभिसंविशन्ति"। "प्राणो ब्रह्मेति व्यजानात्। प्राणद्देव खल्विमानि भूतानि जायन्ते, प्राणेन जातानि जीवन्ति, प्राणे प्रयन्त्यभिसंविशन्ति"। "मनो ब्रह्मेति-व्यजानात्, मनसोह्येव खल्विमानि भूतानि जायन्ते, मनसा जातानि जीवन्ति, मनः प्रयन्त्यभिसंविशन्ति"। "विज्ञानं ब्रह्मेति व्यजानात्। विज्ञानात् ह्येव खल्विमानि भूतानि जायन्ते, विज्ञानेन जातानि जीवन्ति, विज्ञानं प्रयन्त्यभिसंविशन्ति"। "आनन्दो ब्रह्मेति व्यजानात्, आनन्दादेव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ति"।

कोषैः सह तत्पिण्डस्यात्मना साकं यो हि सम्बन्धः स एवात्मानमाच्छादयितुं साहाय्यमातनोति। अत एकस्मिन् पिण्डे प्रत्येककोषस्य प्रभावं स्वीययोगयुक्तबुद्ध्या साधको यथा यथा न्यूनीकुरुते, तथातथैवासौ पिण्डेऽन्यत्रलोकान्तरे वापि निजान्तःकरणं प्रापयितुमर्हति। अतएव कारणात् समुपासनरतभक्तस्य मानस्यो वृत्तयः शीघ्रमेव देवलोकनिवासनिरतैर्देवैरवगम्यन्ते, देवर्षिपितृभक्ताः साधकाः स्वकीयमनोमयकोषे देवादिषु कस्यचिदपि धारणाः कुर्वीरन्, भक्तमनोमयकोषच्छायाप्रोक्त देवादिमनोमयकोषमासाद्य स्वकीयोपास्यदेवसान्निध्यमधिगन्तुमर्हेत्। निष्कर्षोऽयं यत् योगीसाधको नैजयोगयुक्तपञ्चकोषावलम्बनेन स्वकीयमन्तःकरणं द्वारीकृत्य सूक्ष्मातिसूक्ष्मे देवलोके समुपढौकमानस्तत्रत्यं यथोचितं कर्मकलापमनुष्ठातुं शक्नोति। यदा पञ्चकोषाणां संकोचविकाशभेदज्ञानेन पञ्चकोषेष्वाधिपत्यसंस्थापनपूर्वकं समुद्भूतया योगशक्त्या सूक्ष्मातिसूक्ष्ममूर्द्ध्वलोकं उपस्थाय यथोचितं कार्यमनुष्ठातुं शक्नोति तर्हि यथाक्रमं पञ्चावपि कोषेषु ब्रह्मधारणया योगी स्वस्वरूपमासादयति तेषु चाधिपत्यमनुष्ठाय पञ्चकोषातीतं परमं पदमपि समासादयितुमर्हतीत्यत्र विज्ञानसिद्धे कार्ये नास्ति संशीतिलवोऽपि। पञ्चकोषस्वरूपकार्यब्रह्मणि ब्रह्मधारणया विराड्ध्यानसाहाय्येन कार्यकारणयोरैक्यमधिगच्छन् योगिराजः स्वस्वरूपोपलब्धिं कर्तुं समर्थो जायते ॥ १२१ ॥

साम्प्रतमष्टमीमुपासनां वैदिकीं वर्णयति—

**कारणप्रतिष्ठासम्बन्धतश्च ॥ १२२ ॥**

साह्युपासना कारणप्रतिष्ठायाः सम्बन्धेनापि सम्पाद्यते, योगस्याष्टानामङ्गानां मध्ये यमनियमादीनि बहिरङ्गानि प्रत्याहारधारणादीन्यन्तरङ्गानि विज्ञातव्यानि। एतानि सर्वाण्यप्युपासनायाः शरीराणि सन्तीत्युक्तपूर्वम्।

अन्तरङ्गेषु प्रत्याहारो बाह्यजगतः साधकं विमुखीकरोति अन्तर्मुखं सम्पाद्य च तं ब्रह्मसाक्षात्कारयोग्यं विधत्ते। धारणाभूमितो ब्रह्मसान्निध्यप्राप्तिकरसाधनानि प्रारभ्यन्ते। ध्याने ब्रह्मसाक्षात्कृतिः। समाधौ तूपास्योपासकयोरैक्यं जायते। विज्ञानं चेदमनुसृत्य ब्रह्मधारणाश्रयेण यत्र यत्र साधकस्य मनो गच्छेत् तत्र तत्र यदि कारणे ह्यन्तःकरणस्य प्रतिष्ठा क्रियेत तर्हि द्रुतमेव चित्तवृत्तिनिरोधे साफल्यं लभ्येत। अत्रविषये उपनिषद इत्थमाहुः—

"क्षेम इति वाचि। योगक्षेम इति प्राणापानयोः। कर्मेति हस्तयोगः। जातिरितिपादयोः। विमुक्तिरिति-पायौ। इति मानुषीः समाज्ञाः। अथ दैवीः। तृप्तिरिति वृष्टौ। बलमिति विद्युति। यश इति पशुषु। ज्योतिरिति नक्षत्रेषु। प्रजापतिरमृतमानन्द इत्युपस्थे। सर्वमित्याकाशे। तत्प्रतिष्ठेत्युपासीत प्रतिष्ठावान् भवति" इत्यादि।

वेदोक्तस्यास्याष्टमब्रह्मधारणासाधनस्य रहस्यं यादृक् सुबोधं तथैव व्यापकमपि। अतएव पूज्यचरणेन महर्षिणा सूत्रकृता सर्वान्ते चैतद्वर्णनमनुष्ठितम्। कारणप्रतिष्ठा शब्दतात्पर्यमेतद् यत् प्रत्येकवृत्तिः, प्रत्येकवृत्तिसम्बन्धयुक्तं दृश्यं च साधकं यां बन्धनदशां प्रापयति तत्कारणानुसन्धानमेव कारणप्रतिष्ठा। यथा ह्याकाशो व्यापकः, तत्र सर्वं तिष्ठति, उपस्थमिन्द्रियम् आनन्देन सृष्ट्या च विमोहयति, वाचा मानवो बहुविधेयं विधत्ते। सर्वकल्याणहेतुभूता बुद्धिस्तु महत्त्वाधायिका। उदाहृतिमिमामनुसृत्य सर्ववृत्तिविषयेषु ब्रह्मबुद्धया कारणप्रतिष्ठा साधनीया। योगदर्शनविज्ञानानुसारेण पुण्यात्मानं विलोक्य प्रसन्नतां सुखिनमानन्दं पापिनमुपेक्षां, दुःखिनं च दृष्ट्वा करुणामुद्भावयतः पुरुषस्य चेतसि यथा समाधेरुदयः आत्मसाक्षात्कारे च सौविध्यमासाद्यते, प्रत्येकदृश्यपदार्थकारणे निजान्तःकरणप्रापणेन समाधिदशा समुदेति, ततश्चात्मसाक्षात्कारेण साधकः कृतकृत्यतां भजते। उक्तं च योगदर्शने—

"मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्।" इति।

समाधिप्राप्तिहेतुभूतं विशिष्टं साधनमिदम्। यतो हि दुःखिनं विलोक्य कारुण्यवृत्तिर्नोसाद्येत, तर्हि निष्ठुरता-निर्दयताप्रभृतयः क्लिष्टवृत्तयः समुदयन्ति सुखिनं दृष्ट्वा ईर्ष्यादिक्लिष्टवृत्तीनामुदयो जायते। पुण्यात्मनां पुण्यभोगं निरीक्ष्य यदि मानव आनन्दितो न स्यात् तर्हि द्वेषनिन्दापरायणतादि घृणितवृत्तीनां समुद्गमो भवेत्। पापिनं विलोक्य यदि उपेक्षा न क्रियते तर्हि घृणाविद्वेषप्रभृतिक्लिष्टवृत्तयः समुदीयमानाः साधकं स्वप्रियतमात् श्रीभगवतो विमुखीकुर्वाणः सुतरां यथाक्रमं मैत्री-करुणा-मुदितोपेक्षेति चतसृणामपि वृत्तीनां यथाक्रममभ्यासतः साधकचित्तं शीघ्रं प्रशाम्यति समाधिदशामधिगच्छति च। एतद्वृत्तिचतुष्टयसाधनावसरः सदैव न सम्प्राप्यते; किन्तु कारणप्रतिष्ठासाधनकालस्तु साधकेन सदैवाधिगम्यते। ज्ञानिना भाग्यशालिना साधकेन शास्त्रगुरूपदेशमनुसृत्योपर्युक्तां वैदिकीमाज्ञामनुसरता कामक्रोधलोभमोहमदमात्सर्य-सुखदुःखरागद्वेषप्रभृतिवृत्तीनां समुदयकाले किं वा तत्सम्बद्धदृश्यसमूहे समुपस्थिते तत्कारणानुसन्धानद्वारा ब्रह्मधारणया कारणे नैजमन्तःकरणं प्रतिष्ठाप्येत तर्हि भाग्यवतस्तस्यान्तःकरणं समाधिभूमौ नूनं प्रतिष्ठितं स्याद् येनासौ भगवत्तत्त्वसाक्षात्कारे समर्थ इत्यत्र नास्त्यणीनपि संशयः॥ १२२॥

वेदान्ततया साधनस्यापि बहुत्वं दर्शयति—

**धारणाभेदाद् बहुविधाऽसौ॥ १२३॥**

धारणाया भेदात् असौ बहुप्रकारा समवधेया। पूज्यपादेन महर्षिणा सूत्रकारेण वेदोक्तब्रह्मधारणासम्ब-

न्धीनि कतिचित् साधनानि वर्णयित्वा सूत्रेणैतेनानन्तस्वरूपमयवेदमहत्त्वमनुसृत्य साधनस्यापि बहुत्वमुपवर्ण्यते । "अनन्ता वै वेदाः" इति श्रुतेराज्ञा त्रिगुणात्मिकसृष्टिरप्यनन्तस्वरूपधारिणी । अतोऽधिकारिणां बहुत्वाद् वैदिकसाधनस्यापि बहुत्वमित्यत्र नास्ति संशीतिलवः । केवलं वैदिकस्योपासनाकाण्डस्य मीमांसाहेतवे प्रधानानि साधनानि वर्णयित्वा सूत्रकृता साधनायाः सिंहावलोकनं कारितम् ॥ १२३ ॥

साधनस्य सार्वभौमं लक्ष्यं कारयितुं विभागः क्रियते—

## अगर्भसगर्भभेदतो द्विविधा ॥ १२४ ॥

साधारण्येन सर्वा अपि ब्रह्मधारणा अगर्भसगर्भभेदेन द्विप्रकारा विद्यते । जिज्ञासुरत्र शङ्कते याः किल सांसारिक्यो मानवजातयो वेदमहत्वं स्वहृदयंगमकर्त्तुमसमर्थाः किंवा यदीयः साधनसमूहोऽवैदिकः किंस्विदेते नैव साधनशब्दवाच्यतामर्हन्ति ? समाधत्ते— सर्वजीवहिताधायिकामुपासनाप्रणालीं प्रतिपादयितुमेव पूज्यपादो महर्षिः सूत्रकारः सूत्रमेतद् व्याजहार । साधारणतो ब्रह्मधारणाया द्वैविध्यमास्ते । एका सगर्भा द्वितीया चागर्भेति । शास्त्रेषु प्राणायामपीठादिसाधनसम्बन्धे श्रेणीद्वयमुपलभ्यते । तथाहि—

सहितो द्विविधः प्रोक्तः सगर्भश्च निगर्भकः ।
सगर्भो बीजसहितो निगर्भो बीजवर्जितः ॥

अस्य प्रमाणस्य निर्गलितार्थोऽयं यत् बीजमन्त्रसहितः प्राणायामो हि सगर्भः, तद्रहितश्च निगर्भ इति । ध्यानं समाधिश्चेति साधनद्वयं सर्वाभ्यर्हितत्वात् वैदिकपद्धतिं विहाय न किल सम्यनुष्ठातुं शक्यते । योगस्याष्टसु अङ्गेषु सप्तमस्य ध्यानस्य, अष्टमस्य च समाधेर्याथातथ्यं साधनं वेद-तत्सम्मतशास्त्राण्यनुसृत्यैव सम्भवितुमर्हति नान्यथेति । अतः साधनद्वयेऽत्र सगर्भागर्भभेदः स्वाभाविकः । प्राणायाम-प्रत्याहार-धारणा, मन्त्रयोगसम्बद्ध स्थूलसाधनस्य सगर्भागर्भभेदो निरूपितः ।

वेद-तत्सम्मतशास्त्रप्रतिपादितेषु भगवतः स्वरूपेषु कस्याप्यवलम्बनेन क्रियमाणा धारणा सगर्भा प्रोच्यते । यत्र च ध्यानस्य सम्बन्धाभावः, केवलं भावस्यैव सम्बन्धः, सा खल्वगर्भा प्रणिगद्यते । पृथिव्यां यानि संख्यातीतानि धर्ममतानि प्रचलितानि, प्रचलन्ति प्रचलिष्यन्ति च तेषु सगुण-निर्गुणब्रह्मस्वरूपविज्ञानं किमपि नास्ति । अतो न तेषु ध्यानाधिकारः । तेषु मतेषु केवलं नाममात्रत एव ब्रह्मणः परमेश्वरस्य वा लौकिकभावावलम्बनेन धारणा क्रियते । यथार्थरूपेण भगवत्स्वरूपस्य किञ्चिदपि विज्ञानं तदनुयायिनो न विदन्ति । अतस्तादृशोपासकधारणासाधनानि ध्यानविज्ञानराहित्यादगर्भाणि कथ्यन्ते । सुतरां संसारेऽत्र प्रचलित प्रचरिष्यमाण-धारणासाधनानि सूत्रोक्त भागद्वयविभक्तानि विज्ञेयानि ॥ १२४ ॥

शङ्कां समाधत्ते—

## अवैदिकत्वेपि न वैफल्यमगर्भायाः ॥ १२५ ॥

अगर्भाया धारणाया अवैदिकत्वेऽपि वेदविरुद्धत्वेऽपि वैफल्यं विफलता न विद्यते । किमवैदिकधर्ममतक्रियमाण भगवद्धारणासाधनानि निष्फलानि ? यानि च धर्ममतानि परमात्मनो ब्रह्मेशो विराड्इति रूपत्रयं न विदन्ति, सगुणनिर्गुणभेदमपि न जानन्ति, किं वा धर्मराजमेव परमेश्वरं मन्यमानानि समुपासन्ते किं तदीया ब्रह्मधारणा निष्फला ?. किंस्विदवैदिकत्वादगर्भाया धारणायाः साधनानि निष्फलानि ? एतादृशशङ्कासमाहितय एव सूत्रकृता महर्षिणा सूत्रमिदमूचे । यद्यप्यगर्भधारणासाधने ब्रह्मेश्वरसगुणनिर्गुणतत्त्वानां

किञ्चिदपि ज्ञानं साधकेन नाधिगम्यते, तथापि तत्र भक्तिभावनया भक्तेः समुदयो भवत्येव। भावस्यालौकिकं विज्ञानमुक्तपूर्वम्। अतः सद्भावसाहाय्येनावैदिकोऽपि साधकः किञ्चिदभ्युदयमार्गमधिगच्छत्येव। सर्वान्तर्यामी परमेश्वरः साधकस्य तस्य हार्दमवगत्य न तत्साधनं विफलीकुरुते। यथा किल नरपतिस्तमजानन्तमपि स्वमस्तुवन्तमपि, कर्त्तव्यपरायणं पुरुषं पुरस्करोत्येव न तिरस्करोति; तथैव समदर्शी श्रीभगवानपि अवैदिकधारणासाधकं भगवद्भक्तिमाश्रयन्तमभ्युदयाभिमुखमग्रेसारयत्येव ॥ १२५ ॥

सगर्भाया वैशिष्ट्यम् व्यनक्ति—

**सगर्भाऽभ्युदयनिःश्रेयसहेतुर्वैदिकत्वात् ॥१२६॥**

अगर्भापेक्षया सगर्भधारणासाधनमहिमानं वक्ति यदगर्भा केवलमभ्युदयं प्रयच्छति, सगर्भधारणासाधनं तु अभ्युदयं निःश्रेयसं चोभयं प्रददाति। सगर्भधारणासाधनं कुर्वाणस्तु स्थिरलक्ष्यो ध्यानयोग्यताशाली गुरुवेदशास्त्रद्वारा ब्रह्मस्वरूपं विन्दन् धारणाभूमितो ध्यानभूमिं ततश्च समाधिभूमिमन्ते च निर्विकल्पसमाधिदशामासाद्य निःश्रेयसमधिगच्छति ॥ १२६ ॥

लक्ष्यं स्थिरीकर्त्तुमभिधत्ते—

**स्वरूपप्रकाशिका ब्रह्मोपासनाऽऽद्या ॥ १२७ ॥**

आद्या प्रथमा ब्रह्मोपासना स्वरूपस्य आत्मास्वरूपस्य प्रकाशिका प्रकाशयित्री विज्ञेया। धारणायाः समनन्तरं ध्यानभूमिमासाद्य कथंकारं सगर्भधारणासिद्धिः, निश्रेयसपदप्रदसगर्भधारणायां कीदृशलक्ष्यावलम्बनेन साधनभूमौ साधकोऽग्रे सरति, अग्रिमध्यानभूमौ च कीदृशं साधनमनुष्ठीयते, इत्यादि विज्ञानं सूत्रकारो महर्षिरिदानीं निर्णयति। प्रोक्तेषु लक्ष्येष्वादिं वर्णयति। ब्रह्मोपासनैव प्रथमा। उपासनान्तरवर्णनं वक्ष्यते। ब्रह्मस्तदुपासनाया विषये श्रुतिस्मृतिषु निम्ननिर्दिष्टप्रमाणानि समुपलभ्यन्ते।

न जायते म्रियते वा विपश्चित्
नायं कुतश्चिन्न बभूव कश्चित्।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥
अणोरणीयान् महतो महीयान्
आत्माऽस्य जन्तोर्निहितो गुहायाम्।
तमः क्रतुः पश्यति वीतशोको
धातुप्रसादात् महिमानमात्मनः ॥
अशब्दमस्पर्शमरूपमव्ययम्
तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥
न तत्र सूर्यो भाति न चन्द्रतारकम्
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥
श्रोत्रस्य श्रोत्रं मनसो मनो यत्
वचो ह वाचं स उ प्राणस्य प्राणः।
चक्षुषश्चक्षुरतिमुच्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति ॥
यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥
आत्मेत्येवोपासीत तदात्मानमेववित्।
इत्यादि ॥१२७॥

द्वितीयं प्रकारमभिधत्ते—

**तत्त्वभेदात् पञ्चविधा सगुणा ॥ १२८ ॥**

तत्त्वभेदात् पञ्चतत्त्वभेदेन सगुणोपासना द्वितीयः प्रकारः। सगुणोपासनाऽपि ब्रह्मोपासनाभिन्नैव विज्ञेया।

केवलमधिकार-भाव-भेदाभ्यामवलम्बनभेदः । पञ्च-तत्त्वान्यनुसृत्य साधकेषु पञ्चविधाधिकारसत्वात् सगुणोपासना पञ्चधा समाम्नाता । अत्रापि श्रुतिस्मृति-प्रमाणानि यथा—

उपासनं पञ्चविधं ब्रह्मोपासनमेव तत् ।
आकाशस्याधिपो विष्णुरग्नेश्चैव महेश्वरी ॥
वायोः सूर्यः क्षितेरीशो जीवनस्य गुणाधिपः ।
गुरवो योगनिष्णाता प्रकृतिं पञ्चधा गताम् ॥
परीक्ष्य कुर्य्युः शिष्याणामधिकारविनिर्णयम् ।
मानवानां प्रकृतयः पञ्चधा परिकीर्तिताः ॥
यतो निरूप्यते सर्गः पञ्चभूतात्मको बुधैः ।
भिन्ना यद्यपि भूतानां प्रकृतिः प्रकृतेर्वशात् ॥
तथापि पञ्चतत्त्वानामनुसारेण तत्त्ववित् ।
प्रत्येकतत्त्वप्राचुर्य्यं विमृश्य विधिपूर्वकम् ॥
उपासनाधिकारस्य पञ्चभेदमवर्णयत् ।
विष्णुः सूर्यश्च शक्तिश्च गणाधीशश्च शंकरः ॥
पञ्चैवोपासना देवि ! सगुणोपासनाविधौ ।
एते पञ्च महेशानि ! सगुणो भेद ईरितः ॥
सच्चिदानन्दरूपस्य ब्रह्मणो नात्र संशयः ।
निर्गुणोऽपि निराकारो व्यापकः स परात्परः ॥
साधकानां हि कल्याणं विधातुं वसुधातले ।
बिभर्त्ति सगुणं रूपं त्वत्साहाय्यात् पतिव्रते ॥
इति ॥ १२८ ॥

तृतीयं प्रकारं व्याचष्टे—

**अवतारोपासनापीत्यमेव ॥ १२९ ॥**

अवतारोपासना अपि इत्थमेव सगुणपञ्चोपासना-समानैव विज्ञेया । साधनलक्ष्ये उपासनाया भेदे चेयं तृतीयाधिकारान्तर्गता । अवतारोपासनासम्बन्धे विस्तृतं विज्ञानं पूर्वमेव प्रतिपादितम् । एतदुपासनाविषये श्रुतयः स्मृतयश्चेत्थमाहुः—

"यद्यच्छरीरमाश्रित्य भगवान् सर्वशक्तिमान् ।
वतीर्णो विविधां लीलां विधाय वसुधातले ॥
जगत्पालयते देवि लीलाविग्रह एव सः ।
उपासनानुसारेण वेदाशास्त्रेषु भूरिशः ॥
लीलाविग्रहरूपाणामितिहासोऽपि लभ्यते ।
तदुपासनकं चापि सगुणं परिकीर्त्तितम् ॥"

"वाराहेण पृथिवी संविदाना
शूकराय विजिहीते मृगाय"

"वज्रनखाय विद्महे, तीक्ष्णदंष्ट्राय
धीमहि, तन्नः नारसिंहः प्रचोदयात्"

"प्रतद्विष्णुः स्तवते वीर्येण
मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणे-
ष्वधिक्षियन्ति भुवनानि विश्वा ॥"

"क्षीरोदशायिनं नृकेसरिविग्रहं योगिध्येयम् ।
परं पदं यो जानीते सोऽमृतत्वमधिगच्छति ॥
इति ॥ १२९ ॥

सगुणोपासनायां अवलम्बनविज्ञानमुच्यते—

**लौकिकालौकिकभेदाद् द्विविध-मवलम्बनम् ॥ १३० ॥**

स्पष्टोऽर्थः । आसक्तिर्मनोराज्यस्य भावस्तु बुद्धि-राज्यस्य विषय इति प्रागेव वर्णितम् । चित्तापरनामक-मनसः संगमेन भावोदयः । तद्वदेव लौकिकमवलम्बनं मनोराज्यस्य अलौकिकं तु बुद्धिराज्यस्य व्यापारः । पूर्वसंस्कारजन्यासक्तिबीजद्वारा यस्य साधकस्य हृदय-क्षेत्रे ये किल लौकिकप्रेमसंस्कारा वर्त्तमानकालेऽङ्कुरिताः सन्ति ताननुसृत्यासौ भगवल्लीलाविग्रहरूपावताराणां तत्तल्लीलाधारणयोपासनाराज्येऽग्रेसरणं हि स्वप्रकृति-प्रवृत्यनुकूलं मन्यते । एतदेव लौकिकावलम्बनरहस्यम् ।

लौकिकवासना परिपाकतो यदा साधकस्यान्तःकरणमासक्तिराज्याद्दुपरमते, तदा केवलमध्यात्माधिदैवाधिभूताख्यभावत्रयावलम्बनेनैवो उपासनामार्गेऽग्रे सरत् तृप्तिमधिगच्छति। एतदेवालौकिकावलम्बनरहस्यम्। उदाहरणरूपेणावधेयं यत् कृष्णावतारस्य धारणायां तदीय बाल्यौवनप्रभृतिलीलानां यावत्यो धारणाः सन्ति, सर्वा अपि लौकिकसंस्कारान् अनुसरन्ति। भगवतः श्रीकृष्णस्य व्रजलीलादारपरिग्रहादिकार्यं लौकिकसंस्कारसंयुक्तधारणया सम्पाद्यते। विष्णुलोक-कैलास-मणिद्वीप-सूर्यलोक-धीशलोकसम्बन्धसंवलिता पञ्चोपास्यानां सगुणमूर्तीनां च धारणा विशिष्टलौकिकभावेन संबद्धा विज्ञातव्या। वस्तुतः पञ्चोपासनाऽपि सगुणब्रह्मोपासनातो नातिरिच्यते। इयानेव भेदो यत् पञ्चोपासनायामलौकिकमवलम्बनमवतारोपासनायां लौकिकावलम्बनं प्राधान्येन तिष्ठतः। एतदेवोपासनायामवलम्बनसम्बन्धेन लौकिकावलौकिकभेदतात्पर्यमवधेयम्॥ १३०॥

प्रसंगत उपासनायां भक्तिप्राधान्यं प्रदर्शयति—

**भक्तिमूलोपासना प्राणरूपत्वात्॥ १३१॥**

उपासना किल भक्तिमूला भवति, यत उपासनायाः प्राणरूपा भक्तिर्विद्यते। यथा स्थूलशरीरेण सह प्राणसम्बन्धस्तथैव भक्त्या सहोपासनायाः सम्बन्धो वेद्यः। स्थूलशरीरात् निःसृतेषु प्राणेषु तद्धि शवस्वरूपं मृदो नातिरिच्यते। प्राणमये कोषे साकमन्यैस्त्रिभिः कोषैः स्थूलं शरीरं विरहय्य जीवे लोकान्तरं प्रतिष्ठमाने स्थूलं तच्छरीरं मृत्तिकास्वरूपमेव जायते, तथैव भक्तिमन्तरोपासनाऽप्यवधेया। यदि उपासनायां भक्तिसम्बन्धो न स्यात् तर्हि नासावुपासनाशब्दवाच्या, भक्तिं विना सा नवनाटकोपमा मिथ्याचाररूपा मन्यते। यतः स्वीयोपास्यदैवसान्निध्यदात्री क्रियैवोपासना कथ्यते, अतोऽभ्युपगन्तव्यमेवैतद् यद् भक्तिं विनोपासना सिद्धिरसंभवा। फलत उपासनायाः प्राणरूपा भक्तिरिति सिध्यति।

"तस्याश्चैव द्विजा ज्ञेया भक्तिः प्राणस्वरूपिणी" इति स्मरणात्॥ १३१॥

भक्तेरधिगमस्य प्रकारः कथ्यते—

**सा महत्कृपातो भगवत्कृपातोऽपि॥ १३२॥**

सा भक्तिर्महतां कृपया भगवतः कृपयाऽपि प्राप्यत इति शेषः। प्रागेवेदं निर्णीतं यत् भक्तिज्ञानयोर्महदन्तरमास्ते, ज्ञानं यथा पुरुषार्थसापेक्ष्यं न तथा भक्तिः। विलक्षणा किल भक्तेः पन्थाः। एतादृग् विलक्षणगतिशालिनी भक्तिर्जीवैः कथमासाद्यत इति जिज्ञासु शंकासमाहितये सूत्रकारो महर्षिः सम्प्रति स्वकीयमतमभिधत्ते। अन्येषां महर्षीणां मतमग्रे वक्ष्यते। सूत्रकृन्मते भागवतानां भगवतश्च कृपया भक्तिरधिगम्यते। संसारेऽत्र येषां मनांसि भगवन्मन्दिराणि जातानि, यैः स्वकीयानि हृदयानि भगवन्मन्दिरीकृतानि त एव महापुरुषा हरिजना भागवताः प्रोच्यन्ते, एतादृशमहात्मनां दयया भगवतः कृपया वा जीवहृदयमरुस्थले भक्तिमन्दाकिनी प्रवहति। भक्तेरलौकिकत्वान्नलौकिकया रीत्या तदधिगमः। भागवतकृपयैव भक्तिप्राप्तिरिति प्रथमपक्षः। उक्तमपि भगवता निजमुखेन गीतोपनिषदि, तथाहि—

"तद् विद्धि प्रणिपातेन परिप्रश्नेन सेवया" इति। तात्पर्यमेतद् यत् प्रथमं भागवतानां प्रणामेन जैवभावरूपोऽहंकारो ह्रसति, तेषां सेवनेन मलविक्षेपयोर्नाशः श्रद्धापूर्वकं परिप्रश्नेन बुद्धिरावरणं दूरीकृत्य निर्मलायते ततश्च जिज्ञासुना भक्तेन कृतकृत्येन भूयते। भागवतकृपयैव भगवत्कृपा, भगवत्कृपामन्तरेण भागवतकृपा नैवासाद्यते।

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीति" गीतोक्तिमनुसृत्य भगवान् भक्तहृदयमन्दिरे सदा विराजते। अतो भगवत्कृपैव भागवतकृपेति वा वक्तुं शक्यते। सर्वान्तर्यामि भगवत्प्रेरणामन्तरेण जीवो नापि भगवद्राज्येऽग्रे सरति, न वा भगवन्तं स्मर्तुमधिकारवान् संजायते नापि च तत्र भागवतसंगप्रवृत्तिरुदेति। अतो भक्तिर्भगवत्कृपासापेक्ष्येति सिद्धम्।। १३२।।

उभयोर्मुख्यता प्रतिपाद्यते—

**महत्संगमहत्त्वं गरीयः ।। १३३ ।।**

महतां संगममहत्त्वमेव श्रेष्ठमित्यर्थः।] पूर्वमिदं प्रमाणितं यत् भगवत्कृपा भागवतकृपाचोभेऽपि भक्तिप्राप्तिकारणभूतैव । एकयाऽन्यस्या अधिगतिः स्वतः सिध्यति। भगवतः प्रसादेनैव भागवतस्य कृपा दर्शनं वा जीवैः प्राप्यते। उभयोः कस्या मुख्यता? कृते कस्याः पूर्वं प्रयत्नो विधेयः? इति जिज्ञासु शङ्कासमाधानार्थमेव सूत्रस्यैतस्याविर्भावः। श्रीभगवतः प्रसादेनैव भागवतदर्शनं जीवरवाप्यते। भागवतस्वरूपतः प्रकटीभूय सत्संगसदुपदेशादिना जीवकल्याणं विधत्ते किल भगवान भवानीपतिः। यर्हि भागवतहृदयमन्दिरे श्रीभगवान् सदैव विराजते, तर्हि भगवद्भागवतयोर्भेदाभाव एव। महाजनो भागवत एव गुरुस्वरूपं दधत् जिज्ञासुं भक्तं भगवत्सान्निध्यं प्रापयति। अतः स्वत इदं सिध्यति यत् साधककृते सतां संगतिरेव मुख्या। सत्संगमहत्त्वविषये शास्त्रेषु बहूनि प्रमाणानि समुपलभ्यन्ते। तथाहि—

यथा कथंचिद् यैः कैश्चित् सम्प्राप्तास्तत्त्वभूतयः।
चराचरेषु जीवेषु सत्संगस्तत्रकारणम्।।
स एव श्रेयसां हेतुर्विवेकस्य च साधकः।
विना श्रीविष्णुकृष्णाभ्यां फलसिद्धि र्न लभ्यते।।
असाधुरपि साधुत्वं यत्प्रभावेण विन्दते।
पारदेनेव संपृक्तस्ताम्रधातुः सुवर्णताम्।।
मणिः फणि फणानग्रे वद कस्मै प्ररोचते।
विकृतिं नैव चेच्छन्ति संगदोषेण साधवः।।
आवेष्टितं महासर्पैश्चन्दनं न विषायते।
सत्संगाद् भवति हि साधुता खलानाम्
साधूनां न हि खलसंगमात् खलत्वम्।
आमोदं कुसुमभवं मृदेव धत्ते
मृद्गन्ध न हि कुसुमानि धारयन्ति।।
वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम्।
भक्तिः शक्तिनि शक्तिरात्मदमने संसर्गमुक्तिः खले
एते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः।।
सतां समागमः सद्भिर्निष्फलो जायते क्वचित्?
विमुक्तं नरकात् पश्य नृगं साधुसमागमात्।।
निमज्जतामत्र घोरे भवाब्धौ परमाश्रयः।
सन्तो ब्रह्मविदः शान्ता नौर्जले मज्जतामिव।।
सङ्गः सर्वात्मना त्याज्यः स च त्यक्तुं न शक्यते।
स सुद्भिः सहकर्त्तव्यः सतां संगो हि भेषजम्।।
पत्रादयः सतां सद्भिः संगमो नाफलो यतः।
तस्मात् तत्संशयाद्युक्ता मया प्राप्ता समुन्नतिः।
नेष्टे वक्तुं सतां संगमहिमानं बृहस्पतिः।। १३३।।

पूर्वोक्तविज्ञानं द्रढयति—

**गुरुकृपा भगवत्कृपैव ।। १३४ ।।**

स्पष्टोऽर्थः। भगवद्भागवतयोर्भागवतकृपाया गुरुत्वं प्रदर्श्य, तत्सम्बन्धेन च सत्संगमहिमानं प्रकाश्य पूर्वविज्ञानदार्ढ्याय गुरौ भगवति चाभेदः प्रदर्श्यते। गुरुकृपा भगवत्कृपैवेत्यर्थः। गुरुमहत्त्वविषये श्रुतौ स्मृतौ चेदमुपलभ्यते, तथाहि—

सर्वशास्त्रपरोदक्षः सर्वशास्त्रार्थवित्सदा।
सुवचाः सुन्दरः स्वङ्गः कुलीनः शुभदर्शनः।।

जितेन्द्रियः सत्यवादी ब्राह्मणः शान्तमानसः।
पितृमातृहिते युक्तः सर्वकर्मपरायणः॥
आश्रमी देशवासी च गुरुरेवं विधीयते॥
सर्वदर्शी तु यः साधुर्मुमुक्षूणां हिताय वै।
व्याख्याय धर्मशास्त्रांशं क्रियासिद्धिप्रबोधकम्॥
उपासनाविधेः सम्यगीश्वरस्य परात्मनः।
भेदान् प्रशास्ति धर्मज्ञः सद्गुरुः समुदाहृतः॥
पञ्चतत्त्वविभेदज्ञः पञ्चभेदान् विशेषतः।
सगुणोपासनां यस्तु सम्यग् जानाति कोविदः॥
चातुर्विध्येन विततां ब्रह्मणः समुपासनाम्।
गम्भीरार्थां विजानीते बुधो निर्मलमानसः॥
सर्वकार्येषु निपुणो जीवन्मुक्तस्त्रितापहृत्।
करोति जीवकल्याणं गुरुः श्रेष्ठः स कथ्यते॥
उपसीदेद् गुरुं प्राज्ञं यस्माद् बन्धविमोक्षणम्।
श्रोत्रियोऽवृजिनोऽकामहतो यो ब्रह्मवित्तमः॥
ब्रह्मण्युपरतः शान्तो निरिन्धन इवानलः।
अहेतुकदयासिन्धुर्बन्धुरानमतां सताम्॥
समाराध्य गुरुं भक्त्या प्रह्वः प्रश्रयसेवनैः।
प्रसन्नं तमनुप्राप्य पृच्छेद् ज्ञातव्यमात्मनः॥
गुरुरेव जगत्सर्वं ब्रह्मविष्णुशिवात्मकम्।
गुरोः कृपाप्रसादेन ब्रह्मविष्णुशिवादयः॥
सृष्ट्यादिकसमर्थास्ते केवलं गुरुसेवया।
देवकिन्नरगन्धर्वाः पितरो यक्षचारणाः॥
मुनयोऽपि न जानन्ति गुरुशुश्रूषणाविधिम्।
न मुक्ता देवगन्धर्वाः पितरो यक्षकिन्नराः॥
ऋषयः सर्वसिद्धाश्च गुरुसेवापराङ्मुखाः।
गुरोः कृपाप्रसादेन आत्मारामो हि लभ्यते॥
सर्वपापविशुद्धात्मा श्रीगुरोः पादसेवनात्।
सर्वतीर्थावगाहस्य फलं प्राप्नोति निश्चितम्॥
यज्ञ-व्रत-तपो - दान - जप - तीर्थावसेवनम्।
गुरुतत्त्वमविज्ञाय निष्फलं नात्र संशयः॥
श्रुतिवेदान्तवाक्येन गुरुः साक्षात्परं पदम्।
गुरुर्देवो गुरुर्धर्मो गुरुनिष्ठा परन्तपः॥
गुरोः परतरं नास्ति नास्ति तत्त्वं गुरोः परम्।
तस्य देवे पराभक्तिर्यथा देवे तथा गुरौ॥
यस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः॥

इति॥ १३४॥

प्रसङ्गाद् गुरुब्रह्मणोरैक्यं प्रतिपाद्यते—

## कार्यकारणसम्बन्धतो गुरुभगवतो-रभेदात्॥ १३५॥

कार्यं च कारणं च तयोः सम्बन्धविचारेण गुरौ भगवति चाभेदः। सगुणब्रह्मस्वरूपस्य श्रीभगवतो विषये स्मृतिरित्थमाह—

यो गुरुः स शिवः साक्षाद्यः शिवः स गुरुः स्मृतः।
गुरौ मयि न भेदोऽस्ति भेदस्तत्र निरर्थकः॥
दीक्षाविधावीश्वरो वै कारणस्थलमुच्यते।
गुरुः कार्यस्थलं चातो गुरुर्ब्रह्म प्रगीयते॥१३५॥

महतां संगस्य महिमानं कथयति—

## महत्सङ्गो दुर्लभोऽमोघो विचित्रश्च॥१३६॥

स्पष्टोऽर्थः। महता सह साक्षात् सम्बन्धे जातेऽपि निजान्तःकरणमालिन्यात् सांसारिको जीवस्तमसाधुमेव मनुते। अतः शुभमदृष्टमन्तरेण साधुसंगतिर्दुर्लभा। मानवानामन्तःकरणे यादृशीनां वृत्तीनामाधिक्यम्, तथाविधैर्भावैरेव तदन्तःकरणमाच्छाद्यते। मनुष्याणामन्तःकरणेषु अक्लिष्टवृत्तीनां समुदयेन तदन्तःकरणानि सद्विचार-सदाचार-पुण्यकार्य-पवित्रचिन्ता-सद्भावाभिमुखं प्रवहन्ति। क्लिष्टवृत्तीनामुदयतश्च तद्विपरीतभावाभिमुखं प्रयान्ति। अतो यद्यपवित्रान्तरात्माऽसाधुः कमपि साधुं पश्यति तर्ह्यसौ साधुमप्यसाधुमेव मन्यते। स्वदर्शनसम्मुखमापतन्तं सत्पुरुषमप्यसावसाधुः स्वीय-

चित्तकालुष्यकारणात् साधुत्वेन नावधारयितुं पारयति। केवलं पवित्रात्मा सदन्तःकरणवान् साधुपुरुष एव साधुं पुरुषं निश्चिनोति। यदा मानवान्तःकरणे रजस्तमसी समुदयतस्तदानीं मानवोऽसौ सन्देह-चाञ्चल्याज्ञाना-विश्वासहेतोर्न साधुपुरुषं विश्वसिति न वा साधुसंगे प्रवर्त्तते। परन्तु यदा मनुतनुजनुषामन्तःकरणेषु सत्त्व-गुणः समुदेति तदानीमेवासौ सन्देहविरहितो जात-श्रद्धः साधुं मन्यते, तत्सङ्गे च प्रवर्त्तते। सुतरामेत-दभ्युपगन्तव्यमेव यत् साधुपुरुषं साधुरूपेण निश्चेतुं साधुसङ्गं च विधातुं स्वीयमन्तःकरणं पवित्रं सत्त्वगुण-मयं च विधातव्यम्। अतः साधुसंगो दुर्लभः। महता-मन्तःकरणमहर्निशं भगवच्चरणारविन्दे मधुकरायमाणं तिष्ठति। अतोऽमोघः साधुसंगः। साधुहृदयस्य भग-वन्निवासत्वाद् भगवति भागवते चाभेदः शास्त्रकारैः समाम्नातः। दिनमणेरुदयेन नैशोन्धकार इव सम्मुखी-भूते साधुजने श्रद्धायुक्तस्य जीवस्य पापराशिः प्रण-श्यति। सर्वशास्त्रैः सिद्धान्तितमेतद् यत् तमोगुणं रजोगुणोऽभिभवति द्वावेप्येतौ सत्त्वगुणो जयति। अतो रजस्तमोयुक्तो मानवो यदा सत्त्वगुणशालिनः साधोः सम्मुखमायाति, तदा तदीये रजस्तमसी तत्कालं स्वत एव ह्रासमुपगच्छतः। अत एतत् सिद्धं यत् महत्संगो-ऽमोघ इति। स विचित्रोऽपि यतस्त्रिगुणवैचित्र्यमय्या महामायायाः प्रभावेण संसारेऽत्रैकासृष्टिर्द्वितीयातो भिन्ना। अन्यच्च कर्मणो वैचित्र्यस्यावश्यम्भावित्वात् साधु संस्कारा अप्यन्योन्यं भेदमाकलयन्ति। सुतरां कश्चित् साधुः कर्मयोगी, कोऽपि भक्तः, अन्यो ज्ञानी, अपरस्तपस्वी, तथा कश्चिच्च प्रारब्धयोगनिरतोह्यात्मा-रामः, जगदुपेक्षको मत्तः, स्तब्धो जगत्सेवानिरतश्च विलोक्यते। अतः साधुचरितस्य बहुवैचित्र्यमयत्वात् तत्संङ्गोऽपि विचित्रो भवितुमर्हत्येवेति॥ १३६॥

स्वमतं निर्णीय मतान्तरमाचष्टे—

## सा भगवत्कृपात एवेति नारदः॥ १३७॥

सा भक्तिर्भगवतः कृपयैव लभ्यत इति नारदमतम्। भगवच्चरणारविन्दे प्रेमस्थापनपूर्वकं संयुक्तत्वे भाग्यवान् जीवो भागवतशब्देन विख्यायते। असावेव महज्जनः प्रतिपाद्यते, येन भगवच्चरणारविन्दे कर्मभक्ति-ज्ञानयोगे-ष्वेकतरस्मिन् युक्तता सम्पाद्यते। अतो यदा भागवत-पदप्राप्तये श्रीभगवानेवैकः प्रधानावलम्ब्यस्थानम्, तर्हि तद्भक्तिप्राप्तयेऽपि स एव प्रधानमवलम्बनम्। जीवोऽ-ल्पशक्तिरल्पज्ञश्च श्रीभगवता स्वयमेव स्वतेजसो गुरु-शक्त्या साधुशक्तिविशिष्टः साधकः स्वाभिमुखमाकृष्यते। अस्मात्कारणादपि भगवद्भक्तिप्राप्तौ भगवत्कृपैव सर्वप्रधान कारणमाम्नायते। विज्ञानमिदं प्रकारान्तरेणापि बोध-यति। कर्मयोगोज्ञानयोगश्चेति द्वौ पुरुषार्थसापेक्षौ। भक्ति-योगाधिगमे तु पुरुषार्थस्य गौणता तिष्ठति। अन्तः-करणस्य चैका विशिष्टा मधुरिममयी या ह्यवस्था भक्त्यैव समुत्पद्यते साऽदृष्टसापेक्षा। अदृष्टप्रेरको भगवानेव। अत एतदभ्युपगन्तव्यमेव यत् श्रीमतो भगवतः कृपैव भगवद्भक्तिप्राप्तौ प्रधानं कारणमिति॥ १३७॥

अन्यस्य मतं निर्दिशति—

## अहङ्कारनिरोधादिति शाण्डिल्यः॥ १३८॥

दैवीमीमांसादर्शनस्यान्यतमाचार्यं पूज्यपाद श्री शाण्डिल्यस्य महर्षेर्मतेऽहङ्कारसन्निरोधादेव भगवद्भक्ति-रधिगम्यते। जगतः कारणभूतस्य भगवतो विष्णोः परम-पदेन भक्तिरूपिण्या मन्दाकिन्याः साक्षात्सम्बन्धः। भगवान् किल भक्तिमन्दाकिनीप्रवाहेण भक्तान्तःकरण-क्षेत्रमनारतं पवित्रयति। "रसो वै सः" इति श्रौत-प्रामाण्याद् भगवान् भक्तिस्वरूप एव सिद्धः। अन्यच्चे-दमवधारणीयं यदहङ्कारएव जीवेषु जीवभावधारकः।

यावदहङ्कारस्तिष्ठति तावदेव जीवसत्ता। अत एतत् सिध्यति यदहङ्कारनिरोधे जाते भगवद्भावोदयेन भक्तेर-धिगमो नूनं भावी। सुतरामहङ्कारनिरोध एव भक्तेरुद-यस्य प्रधानहेतुः ॥ १३८ ॥

मतान्तरं व्याचष्टे—

**दैन्यादिति द्वैपायनः ॥ १३९ ॥**

त्रिविधमीमांसाशास्त्राचार्यं पूज्यचरण महर्षिव्यासस्य मतेन स्वस्मिन् दीनतोत्पत्या साधको भक्तिप्राप्तेरधिकारी जायते। पन्था एष पूर्वोक्त मार्गापेक्षया सुसाध्यः। जीवभावधारकाहङ्कारनिरोधेन साधको भक्तेरधिकारीति प्रागेव निर्णीतम्। दैन्योदयादहङ्कारनाशो भवत्येव। अभ्याससद्विचारद्वारा साधको यथायथा नैजमात्मानं दीनं मन्यते तथातथा तदन्तःकरणात् जीवभावरूपो-ऽहङ्कारो ह्रासमुपगच्छति। अतो दीनतया भक्तिरुदेतीति सिद्धम्। अन्यच्च दीनतयाऽभ्यासस्य निकटसम्बन्धः। अभ्यासद्वारीकृत्यैव मानवः स्वस्मिन् दैन्यवृत्तिवर्धने सामर्थ्यं लभते। अहङ्कारनिरोधो हि सद्विचारसाध्यः परन्तु दैन्यवृत्तेरुदयस्तु अपेक्षाकृताभ्याससाध्यो भवति। शरीरेण वचसा च साधकः स्वदैन्यभावं प्रकटयन् मनसा बुद्धया चापि दैन्यवृत्तिः परां काष्ठां लभते। अतः सिद्धान्तोऽयं पूर्वापेक्षया सुसाध्यः साधकै-रिति ॥ १३९ ॥

अपरमतं वर्णयति—

**योगादिति याज्ञवल्क्यः ॥ १४० ॥**

भक्तियोगादिशास्त्रप्रसिद्धाचार्यं महर्षि याज्ञवल्क्य-मतेन योगाभ्यासं द्वारीकृत्य भक्तिरधिगम्यत इति। योगः कः कतिविधश्च, स हि उपासनाया कथं शरीरभूत इत्येतत्सर्वं पूर्वमेव सुनिर्णीतम्। स्वस्थे शरीरे प्राण-सञ्चार इव योगाभ्यासेन स्वस्थे साधकीयोपासना-शरीरे प्राणरूपिणी भक्तिः स्वतः सञ्चरति। वास्तविको योगी भक्तोऽपि भवत्येव। भक्तिमन्तरेण योगो न योग-शब्दवाच्यः। यतो भक्तिविरहितो योगो नटक्रीडा-वत्परिगीयते। अतो ह्यास्तिको योगी भक्तिमन्दाकिन्यां स्नानाधिकारी ॥ १४० ॥

अन्यस्य मतं निर्णयति—

**भक्तकृपात इति भृगुः ॥ १४१ ॥**

भक्तिशास्त्रोपासनाकाण्डयोः परमाचार्यस्य महर्षे भृगोः सम्मत्या भक्तकृपयैव भक्तिः प्राप्यत इति। पूर्वोक्तसिद्धान्तानां मध्ये राद्धान्तोऽयं साधुमहत्त्व-सम्बन्धे समधिकसुदृढतरः। महज्जनाः साधवो भक्ता भागवताश्चेति सर्वे शब्दा एकार्थवाचकाः पर्यायवाच-काश्च। यद्यपि महर्षि सूत्रकारसिद्धान्तोऽपि भक्तेरुद्रेक-सम्बन्धे भक्तमहिमानं समर्थयति किन्तु तन्मते भक्ते-रुद्रेकाय भगवत्कृपापेक्षाऽपि प्रदर्शिताऽस्ति। भृगुर्मह-र्षिस्तु भक्तिहेतवे प्रधानं कारणं भक्तकृपामेव सम्मनुते। साधुमहत्त्वमुक्तपूर्वम्। महज्जनहृदयं भगवन्मन्दिरम्। महान्तो जनाः सदैव भगवच्चरणारविन्दे मधुकरायन्ते। महतो जनान् द्वारीकृत्यैव निर्गुणो निराकारोऽपि पर-मात्मा सगुणरूपं बिभर्त्ति, अत एतत सिध्यति यद् भक्तकृपयैव भक्तिः प्राप्यते। दुर्लभस्य साधुसंगस्याधिग-माय साधकेन सत्पात्रता स्वीकर्त्तव्या भवति, साधुसंगो अमोघ इति पूर्वं प्रतिपादितम्। साधुसंगत्या साधकस्य रजस्तमसी प्रच्छादिते भवतः, तदानीं साधकः सत्त्व-गुणवान् जायते। अतो रसरूपस्य भगवतो रसस्वरू-पिण्या भक्तेरधिगमाय भगवद्रससागरे सदैवोन्मज्जन् निमज्जंश्च भक्तएव स्वाभाविको हेतुः ॥ १४१ ॥

सिद्धान्तमन्तिमं निश्चिनोति—

**तत्तज्जनयोरभेदोऽभेदः ॥ १४२ ॥**

भगवति तज्जने चाभेदः। सिद्धान्तदार्ढ्याय द्विरुक्तिः। यद्यपि ब्रह्माण्डजीवाः सर्वे ब्रह्माण्डनायकस्य

भगवत एव सन्ति, किन्तु निकटतमसम्बन्धसत्वात् भागवता एव सन्ति वस्तुतः हरिजनाः। उक्तं च भगवता निजमुखेनैव—

समोऽहं सर्वभूतेषु न मे द्वेष्योऽपि न प्रियः।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाऽप्यहम्॥

यदि भागवता भगवत्स्वरूपा भक्तिप्रदाः, यदि पथभ्रान्तसंसारपथिकेभ्य सत्पथप्रदर्शनायैकमात्रकारणम्, यदा साधकस्य कृते ह्यात्मोन्नत्यर्थं सर्वतः समीचीनो मार्गः साधुसंग एव, यदा च जगत्सु साधकाय सर्वतोऽभ्यर्हितं प्रत्यक्षमवलम्बनं महतां कृपासङ्गो वा तर्हि स्थितिपादस्यान्ते लयपादस्य चारम्भे तादृशलक्ष्यनिर्णायकसूत्राविर्भावो विज्ञान एव। अत्राभेदशब्दस्य द्विरावृत्तिः साधकलक्ष्यस्थिरीकरणायापि विज्ञेया॥१४२॥

इति स्थितिपादः समाप्तः।

—:०:—

# अथ लयपादः

मानवजीवनस्य कामार्थधर्ममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्षएव सर्वप्रधानः परमावश्यकीयश्च। वैदिकानि काण्डत्रयाणि अभ्युदयनिःश्रेयसयोरुभयोरपि प्रतिपादकानि, किन्तु निःश्रयसे चैव काण्डत्रयसिद्धान्तपरिसमाप्तिः। अत उपासनामीमांसाया भक्तिमार्गस्य च चरमोऽधिकारस्तदैवाधिगन्तुं शक्यते यदा साधको मोक्षमार्गाधिकारी भवेत्। अतश्चतुर्णां वर्गाणामन्तिमस्य मोक्षाख्यवर्गस्य सिद्धये लयपादस्यारम्भः क्रियते। तस्यायमादिमं सूत्रम्—

**व्युत्क्रमाल्लयः॥ १॥**

सृष्टिभेदस्य विस्तृतं व्याख्यानं प्रागेव प्रदर्शितम्। सृष्टेरारम्भकाले ब्रह्मणस्तच्छक्तिस्ततो महत्तत्वम्, तस्मादहङ्कारस्ततश्च सूक्ष्मप्रपञ्चः, सूक्ष्मप्रपञ्चतश्च स्थूलप्रपञ्चमयं ब्रह्माण्डमुत्पद्यते। किन्तु लयक्रिया तु तद्विपरीतैव जायते। अर्थात् स्थूलप्रपञ्चः सूक्ष्मे, सूक्ष्मश्चाहंतत्त्वे तच्च महत्तत्वे, तच्च प्रकृतौ, सा च ब्रह्मणीति। पञ्चतत्त्वानां लयक्रमोऽपि स एव। पृथ्वीजले, जलमग्नौ, अग्निर्वायौ, वायुराकाशे लयं गच्छन्ति॥१॥

तद्भेदानाह—

**स चतुर्विधः॥ २॥**

स लयो वेदशास्त्रे चतुर्विध उक्तः। तत्र प्रलयद्वयमधिभूतसृष्टेः, द्वयं चाधिदैवसृष्टेः सम्बन्धेन स्वीकृतमास्ते। अध्यात्मसृष्टिरनादिरनन्ता। तत्र प्रलयो न स्वीकृतः। चतुर्विधप्रलयसम्बन्धे स्मृतिप्रमाणानि, यथा—

नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको द्विजः।
नित्यश्च सर्वभूतानां प्रलयोऽयं चतुर्विधः॥
ब्राह्मो नैमित्तिकस्तत्र यच्छेते जगतः पतिः।
प्रयाति प्राकृते चैव ब्रह्माण्डं प्रकृतौ लयम्॥
ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि।
नित्यः सदैव जगतां यो विनाशो दिवानिशम्॥२॥

तत्पूर्वावस्थां वर्णयति—

**तत्पूर्वावस्थे अपि मायावैभवात् ॥ ३ ॥**

तस्य लयस्य पूर्वावस्थे सृष्टिस्थितिस्वरूपे अपि मायाया वैभवादेव भवतः। ब्रह्मशक्तेर्मायायास्त्रिगुणात्मकत्वात्तत् त्रिगुणप्रभावादेव सृष्टिस्थितिप्रलयाः स्वतः सिध्यन्ति। महामायास्वरूपस्य सत्त्वरजस्तमोमयत्वात् तद्गुणप्रभावेण सृष्टिस्थितिलयाः संबोभूयन्ते। प्रलयस्वरूपे विज्ञाते तत्कारणान्वेषणे जिज्ञासुहृदयसमुदीयमानशङ्कासमाहितयएव निर्णीतमेतद् यत् सृष्टिस्थितिप्रलयकारणभूतो भगवत्या महामायाया वैभव एव। अपि शब्दोऽत्र त्रितय द्योतकः ॥ ३ ॥

मायास्वरूपं विविनक्ति—

**अतद्वति तद्वत्ता द्योतिका सा ॥ ४ ॥**

सा माया किल अतद्वति अतद्वस्तुनि तद्वत्तायास्तद्वस्तुसत्ताया द्योतिका ज्ञापिका वेद्या। इदानीं तादृशवैभवशालिन्यास्त्रिगुणमय्या ब्रह्मशक्तेर्महामायाया विशिष्टं स्वरूपं निदर्शयति। एतत्पादस्य प्रधानं तात्पर्यं जीवबन्धनविमोचनमेव। यद्यपि प्रलयः पूर्वोक्तरूपश्चतुर्विधः, किन्तु अघटनघटनापटीयस्या महामायायाः प्रभावेण जीवो भ्रान्तिस्वरूपे यत्र गमागमचक्रे पतितो जायते, तद्बन्धनेन साकं जीवस्य महिष्ठः सम्बन्धः। जीवबन्धनं किलात्यन्तिक प्रलयेनैव नश्यति, नान्यथा। सुतरामात्यन्तिकप्रलये साफल्याधिगमाय सूत्रकारो महर्षिर्यदि लयपादं प्रारभते तर्हि विशिष्टरूपेण मायायाः स्वरूपस्य प्रकाशः समुचित एव। अतो विपरीतज्ञानप्रकाशिका अतद्वति तद्वत्ता जननी मायैवास्ते। असति पदार्थे सद्ज्ञानम्, नाशवति स्थिरत्वबुद्धिः, क्षणभङ्गुरेन्द्रियसुखे चिरस्थायिनो ब्रह्मानन्दस्य प्रतीतिः, जडरूपे शरीरे चैतन्यरूपस्यात्मनो विश्वासश्चेत्यादि सर्वं महामायायाः कार्यमवधेयम्। अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मज्ञापिका मायेत्यर्थः। वस्तुतो माया किल अतत्पदार्थे तत्पदार्थभानजननी सती सृष्टिलीलां विस्तारयति। विज्ञानमेतत् प्रकारान्तरेणापि बोधयति। तथाहि—मूलप्रकृतेर्महामायायाः सत्त्वरजस्तमस्सु स्वभावसिद्धगुणेषु सत्त्वेन ज्ञानस्य तमसा चाज्ञानस्य सम्बन्धः। यतः सत्त्वगुणः प्रकाशमयो निर्मलः शान्तश्च, तमोगुणोऽन्धकारमयः स्वरूपाच्छादको जडत्वोत्पादकश्च। परमुभयत्रापि क्रियाशक्तेरभावः त्रिष्वप्येषु रजोगुण एव सचेष्टः क्रियाशीलश्च। रजोगुणो हि सत्त्वाभिमुखं प्रवहन् जीवेषु पुण्यमयीं वृत्तिं ज्ञानं च समुद्भावयति। तमोगुणाभिमुखं धावन् पापमयीं वृत्तिमज्ञानं च प्रकाशयति। सुतरां यर्हि प्रकृतौ स्वभावत एव गुणत्रयसत्ता, तर्हि त्रिगुणक्रियाऽपि स्वतः सिद्धा। अन्यच्च रजसः स्वाभाविकक्रियाशीलत्वात् स्वाभाविक्या क्रियया साकं सृष्टिप्रपञ्चे ज्ञानाज्ञान चेतनजडावस्थापरिणामोऽपि स्वभावसिद्ध एव। रजोधर्मवती प्रकृतिरेव सत्त्वाभिमुखं परिणामिनी सत्वमयी भूत्वा ज्ञानजननी, तमोऽभिमुखगामिनी चाज्ञानजननी समाम्नायते। ज्ञानजनन्या विद्यायाः अज्ञानजनन्या अविद्यायाश्च सम्बन्धे पूर्वमेव बहुप्रतिपादितमास्ते। सृष्टौ स्थितौ च दशायामक्षुण्णोऽविद्याप्रभावः। जीवस्यात्यन्तिकलयावस्थारूप जीवन्मुक्तदशायां कारणरूपा विद्यैव विद्यते। सुतरां मोक्षमार्गप्रदर्शनार्थमिदमुच्यते यदविद्यारूपा प्रकृतिर्हि असत्पदार्थेषु सत्पदार्थद्योतिका जीवबन्धनकारिणी जायते ॥ ४ ॥

तत्प्रधानकार्यं निर्वक्ति—

**द्वैतभानमस्या गुरुकर्म ॥ ५ ॥**

अस्या अविद्यारूपायाः प्रकृतेः द्वैतबुद्धिरेव प्रधानं कर्म विद्यते। द्वितीयम् तद्व्यतिरिक्तस्य न कस्यचन

पदार्थस्य सत्ता। सच्चिदानन्दसत्तापि ब्रह्मणोऽद्वितीयस्य सत्तातो नातिरिच्यते। सैव ब्रह्मप्रकृतिर्यदा जगत्प्रपञ्चं प्रसूते, तदाऽविद्यारूपं बिभ्राणाऽसौ बहिर्मुखिनी भूत्वा स्वतन्त्रा जायते। तदानीं तस्याः प्रधानं कर्म अद्वितीय-ब्रह्मसत्तायां द्वैतभानकारकमवधेयम्। यथा प्रस्तरस्तम्भेषु टङ्किता मूर्त्तयः प्रस्तरतो भिन्ना इव प्रतीयन्ते, तथैवैकस्मिन्नद्वितीये परब्रह्मणि द्वैतस्यावबोधो विज्ञातव्यः। द्वैतभानमेवैतत् बन्धनहेतुश्चित्स्वरूपस्य जीवस्य। जीवस्तु ब्रह्मैव, किन्त्वसौ स्वशरीरमेव स्वस्वरूपमवगत्य स्वस्मिन् द्वैतभानं वितनुते। सर्वेष्वपि देशकालपात्रेषु द्वैतज्ञानोत्पादनमेवाज्ञानजनन्या अविद्यारूपायाः प्रकृतेः प्रधानं कर्मास्ते ॥ ५ ॥

स्वमतपरिपोषाय दार्शनिकमतानां समन्वयं कुरुते—

## शक्तिरेषा क्रियाप्राधान्यात् ॥ ६ ॥

क्रियायाः प्राधान्येन हेतुना एषा प्रकृतिः शक्तिनामतः प्रोच्यते। मध्यमीमांसापरनामकेऽत्र दर्शने सर्वमतसमन्वयः समुचितः। अतः सूत्रकृता पूज्यपादेन महर्षिणा महामायाया बहूनां दार्शनिकनाम्नां क्रमशः समन्वयं विधत्ते। सर्गस्थितिप्रत्यवहारा यदि महामायाया एव कार्यस्वरूपा, यदि तस्यास्त्रिगुणप्रभावादेव आपरमाणो ब्रह्माण्डं यावत् सर्वत्रैवं सर्वा अपि क्रियाः सम्पद्यन्ते, यदि च सा परिणामधर्मिणी तर्हि तदीयं शक्तिरिति नाम समुचितमेव। यदा स्थूलादपि स्थूलं प्रपञ्चमारभ्य सूक्ष्मादपि सूक्ष्मस्य प्रपञ्चस्य विवेचनं पदार्थवादिनो दार्शनिका वा विद्वांसः प्रकुर्वते, तदा सर्वान्ते तैरिदं प्रतीयते यदेकं परिणामोत्पादकक्रियाशीलमन्तिमं तत्वमवश्यमास्ते यत सर्वनिदानम्। इति विमृश्य मायाया शक्तिनाम योग्यमेवेति ॥ ६ ॥

शक्तिभेदमाह—

## चतुर्विधा ॥ ७ ॥

सा शक्तिश्चतुर्विधा चतुःप्रकारा विज्ञातव्या। योगिराजैर्महर्षिभिर्ब्रह्मशक्तेश्चत्वारस्तरा निर्णीताः। ब्रह्मण्यव्यक्तरूपेण विराजमाना शक्तिस्तुरीयेति गीयते। ब्रह्मविष्णुरुद्रप्रसविनी कारणशक्तिरुच्यते। सृष्टिस्थितिलयकारिणी सूक्ष्मेति कथ्यते। जडजगति कार्यकारिणी स्थूलप्रपञ्चसंरक्षिणी स्थूलशक्तिर्निरुच्यते। पदार्थविद्याविदो विद्वांसः केवलं स्थूलायाः शक्तेः किञ्चिद्रहस्यं विदन्ति। यथा मानवशरीरेषु नखरोमादीनि सन्ति, तेषां स्थितिरस्थितिर्वा शरीरैः सम्बन्धनिबन्धना न विद्यते, तथैव स्थूलशक्तिः सृष्टिषु निवसन्ती कार्याणि विदधाति। स्थितिपादे शक्तीनां विस्तृतं विवेचनमनुष्ठितमेव ॥ ७ ॥

द्वितीयायाः संज्ञाया विज्ञानं निर्दिश्यते—

## विश्वयोनिस्त्रिमूर्त्तिजननात् ॥ ८ ॥

त्रिमूर्तीनां ब्रह्मविष्णुमहेश्वराणां जननादुत्पत्तिकरणात् सा विश्वयोनिः प्रख्यायते। वस्तुतो ब्रह्म निर्गुणं निर्लेपं निष्क्रियं च। सृष्टिस्थितिलयक्रिया प्रकृतिसम्बद्धा। यथा वक्तरि तद्वक्तृत्वशक्तिरव्यक्ता लयीभूता स्वतन्त्रसत्ता विरहिता तिष्ठति किन्तु व्याख्यानकुर्वतो वक्तुस्तद्वक्तृत्वशक्तिस्ततो व्यक्ता सती श्रोतृसुखदायिनी श्रोतृचित्तबहुविधवैचित्र्योत्पादिका जायते, तथैव ब्रह्मशक्तिरव्यक्ता। तुरीयदशा प्राप्ता ब्रह्मणि निलीना स्वतन्त्रसत्ताविरहिता भवति। यदा सा ब्रह्मतो व्यक्तो स्वकीयं गुणत्रयमनुसृत्य गुणजनितक्रियाकलापसंरक्षणाय ब्रह्मविष्णुरुद्राणां जनयित्री जायते, तदाऽसौ विश्वयोनिः संज्ञायते। वस्तुतो ब्रह्म खलु जगत्कारणं न विद्यते, ब्रह्मप्रकृतिरेव व्यक्ता जगत्कारणरूपा प्रगृह्यते ॥ ८ ॥

संज्ञान्तरविज्ञानं निर्वक्ति—

**प्रकृतिः सर्जनात् ॥ ९ ॥**

सर्जनात् सृष्टिकरणात् सा प्रकृतिः कथ्यते। अग्नेर्दहनशक्तिवत् प्रकृतेः सत्त्वं रजस्तम इति गुणत्रयमाम्नातम्। सर्गस्थितिलयसम्पादनं हि प्रकृते स्वभावः। प्रकरोतीति प्रकृतिः। तयैव सृष्टिकार्यं सम्पद्यते। धातुगतस्यार्थस्य सार्थकत्वात् प्रकृतिरिति तदीयं समुचितं नाम ॥ ९ ॥

अन्यां संज्ञामाचष्टे—

**विद्या ज्ञानजननात् ॥ १० ॥**

ज्ञानस्य बोधस्य जननात् आविर्भावनात् विद्या प्रोक्ता। परिणामस्वभावा त्रिगुणमयी प्रकृतिर्यदा तमोगुणतः सत्त्वगुणाभिमुखं प्रवहति, तदा सत्वगुणमयी प्रकृतिरसौ विद्येति संज्ञां लभते। यथायथा तमोगुणो ह्रासमुपैति, तथातथा निर्मलत्वहेतुना आत्मनश्चित्सत्ताविकाशं प्राप्ता ज्ञानमभिवर्धयति। अतोऽसौ ज्ञानजननीति तदीयं नाम विद्येति ॥ १० ॥

अन्यच्च—

**अविद्याऽज्ञानाधिष्ठानात् ॥ ११ ॥**

सा प्रकृतिः अज्ञानस्य अधिष्ठानात् अविद्येति गीयते। स्वभावत एव परिणामशीलायास्त्रिगुणमय्याः प्रकृतेः प्रवाहो यदा तमोऽभिमुखं प्रवहति, तदा मलविक्षेपावरणप्रसवित्री अज्ञानाधिष्ठात्री प्रकृतिरविद्येति कथ्यते, चिज्जडग्रन्थिकालेऽविद्यारूपिणी प्रकृतिरियं कथङ्कारं जीवत्वमुत्पादयतीति सर्वं प्रागेव सुप्रपञ्चितम्। जैव्यामवस्थायामियमेवाविद्यारूपिणी तमोमयी प्रकृतिर्जडत्व-पापाज्ञानजननी जीवमावागमनचक्रे पातयति। अतोऽज्ञानाधिष्ठातृत्वात् तस्या अविद्येति नाम योग्यमेव ॥ ११ ॥

उभयकार्यमभिधत्ते—

**अद्वैतद्वैतानुभवो द्वाभ्याम् ॥ १२ ॥**

द्वाभ्यां विद्याऽविद्याभ्यामद्वैतस्य द्वैतस्य चानुभवो जायते। मुक्तेर्बन्धनस्य च विचारेण स्वतन्त्रौ द्वावनुभवौ भवतः। अद्वैतानुभवो मुक्तेर्द्वैतानुभवश्च बन्धनस्य हेतुरस्ति। मीमांसात्रयमनुसृत्य सर्वप्रकारेऽपि मोक्षे अद्वैतानुभव एवान्तिमसीमा। कर्मयोगं द्वारीकृत्य जगत्सेवैव ब्रह्मसेवेत्यनुभवोऽद्वैतानुभवस्यैव कार्यमवसीयते। भक्तिविज्ञानमनुसृत्य पराभक्तिदशायां सर्वत्रैव सर्वावस्थायामपि भगवद्दर्शनानुभवोऽद्वैतानुभवस्यैव कर्म। सुतरां मुक्तिदशायामद्वैतानुभवः सर्ववादिसम्मतः। बन्धनदशायां द्वैतानुभवस्तु सर्वसम्मतः एव। यदि अद्वैतानुभवो मुक्तिहेतुस्तर्हि द्वैतानुभवो बन्धनकारणमित्यत्र न मनागपि विचारावसरः। वस्तुतो द्वैतानुभवमन्तरेण सृष्टिप्रपञ्चस्यास्तित्वैव न सिध्यति। अनुभवद्वयेऽत्रैकं विद्याकार्यमेकं चाविद्याकार्यमवधेयम् ॥ १२ ॥

अन्यस्याः संज्ञाया विज्ञानमभिदधाति—

**प्रधानं प्रपञ्चाश्रयत्वात् ॥ १३ ॥**

प्रपञ्चस्य जगत्प्रपञ्चस्य आश्रयत्वात् प्रकृतिः प्रधाननाम्नाऽपि व्यपदिश्यते। यथा बुद्बुदो जलावस्थाविशेषतः समुत्पद्यमाना जलस्यैवाश्रयेण तिष्ठन्ति, तथैव संसारे प्रपञ्चोऽपि प्रकृतेर्गुणत एव समुत्पन्नाः प्रकृत्याश्रयत विराजते। व्यक्तावस्थायां मूलप्रकृतिः स्वकीयत्रिगुणकारणतः परिणमन्ती चतुर्विंशतितत्त्वरूपेण विस्तृता सती जागतिकान् प्रपञ्चान् सृजति। पञ्चस्थूलभूतानि, पञ्चतन्मात्राः, पञ्चकर्मेन्द्रियाणि, पञ्चज्ञानेन्द्रियाणि, मनः, अहंकारः, महत्तत्वं, मूलतत्वं चेति प्रकृतेस्त्रिगुणपरिणामद्वारा समुत्पद्यन्ते। एतैरेव स्थूला सूक्ष्मा

व्यष्टिसमष्टिश्च सृष्टिरुत्पद्यते । सुतरां मूलतत्वहेतुना प्रकृतेः प्रधान नाम संगतमेव ॥ १३ ॥

तत्कार्यस्वरूपं निर्णीयते—

**अस्यास्त्रैगुण्यात् त्रैगुण्यं प्रपञ्चस्य ॥ १४ ॥**

अस्याः प्रकृतेस्त्रैगुण्यात् त्रिगुणस्वभावत्वात् प्रपञ्चस्य सर्गप्रपञ्चस्यापि त्रैगुण्यं त्रिगुणानुसारित्वमास्ते । जगत्कारणस्वरूपा ब्रह्मशक्तिर्यदा त्रिगुणमयी, तर्हि तत्कार्यस्वरूपस्य जगतस्त्रिगुणमयत्वं स्वतःसिद्धम् । व्यष्टिरूपपरमाणुमारभ्य समष्टिस्वरूपब्रह्माण्डपर्यन्तं सर्गस्थितिलयक्रमास्त्रिगुणमनुसृत्यैव विलसन्ति । अन्यच्च स्थूलसूक्ष्मप्रपञ्चानां प्रत्येकं वस्तु वृत्तिप्रभृतीनि सर्वाण्यपि वस्तुजातानि त्रिगुणात्मकानि विद्यन्ते । संसारेऽत्र त्रिगुणव्यतिरिक्तस्य वस्तुतः सत्तैव नास्ति । भगवता निजमुखेन स्वयमाह--

"त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन" इति ॥१४॥

स्वमतमनुसृत्य गुणातीतपदं व्याख्यातुं भक्तभेदानाह—

**चतुर्विधा भक्ताः ॥ १५ ॥**

स्पष्टोऽर्थः । सांसारिकस्य सर्वस्यापि वस्तुसमूहस्य त्रिगुणात्मकत्वे सत्यपि भक्ताश्चतुर्विधा एव भवन्ति । यतो भक्तिरेव भक्तं गुणातीतं पदं प्रापयति । अतो गुणातीतावस्थया सह भक्तिमार्गसम्बन्धोऽवश्यम्भावी । भगवता गीतायां गीतमपि--

चतुर्विधा भजन्ते मां नराः सुकृतिनोऽर्जुन ।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥
इति ॥ १५ ॥

तेषु वैशिष्ट्यम् व्यनक्ति—

**गुणात्मकास्त्रयो गुणातीतश्चान्त्यः ॥ १६ ॥**

त्रय; आर्त्तो जिज्ञासुः अर्थार्थी इति भक्ता गुणात्मका भवन्ति । ज्ञानी हि गुणातीतः कथ्यते । कारणमत्र प्रकृतेस्त्रिगुणात्मकत्वमेव । तापत्रयेष्वन्यतरेण तत्प्रस्तद्दुःखमोक्षमिच्छन् भगवच्चरणशरणापन्नो भक्त आर्त्त इत्युच्यते । केवल दुःखविमुक्तिलक्ष्यत्वात् आर्त्तभक्तस्तामसिक इत्यत्र न सन्देहः । यतः क्लेशविमुक्तिरेव तदीयं लक्ष्यभूतम् । अनुसन्धानेच्छुको द्वितीयो जिज्ञासु भक्तो भगवन्महत्त्वाकृष्टो राजसिकः प्रख्यायते । तृतीयस्तु सात्त्विको भक्तोऽर्थार्थी । यतः स्वार्थपरमार्थपरोपकार-परमोपकाराख्येषु अर्थेषु कस्यापि सिद्ध्येऽसौ भगवतः शरणमापद्यते । यद्यपि चतुर्ष्वेतेषूत्तरोत्तरोह्यर्थः श्रेष्ठतामापद्यते । किन्तु चत्वारोप्येतेऽर्थशब्दवाच्याः सन्ति । चत्वारोऽपि अभ्युदयनिःश्रेयसहेतवः साक्षात्रूपेण धर्ममोक्षमूलकाः सन्ति । अतस्त्रयोऽप्येते भक्ताः सृष्टिराज्यसम्बन्धसंवलिताः सन्ति । चतुर्थः सर्वाभ्यर्हितो ज्ञानी भक्तः किल सृष्टिराज्यमतीतो गुणातीतः परमपदाधिकारी । यतोऽसौ आत्मज्ञानसम्पन्नत्वाद् वासनाविरहितोऽस्ति ॥ १५ ॥

चतुर्थस्य वैशिष्ट्यम् वर्णयति—

**सर्वे तत्प्रिया ज्ञानी तु तदभिन्नः ॥ १७ ॥**

सर्वे पूर्वोक्तास्त्रयोऽपि भक्तास्तत्प्रियास्तस्य परमात्मनः प्रियाः सन्ति, ज्ञानी ज्ञानवान् भक्तस्तदभिन्नस्तेन परमात्मना अभिन्नो भेदरहितः । भक्तः साहाय्येन भगवतः समाश्रयेण च सर्वे भक्ता उदाराः सन्ति । भगवद्भागवतयोरभेद इति पूर्वमेव सिद्धान्तितम् । भक्तहृदयमन्दिरे भगवान् निवसतीति हेतोः सर्वविधोऽपि भक्त उदारचरित इत्यत्र नास्ति संशयलवोऽपि । परमात्माराम आत्मतत्त्वज्ञः पराभक्तेरधिकारी ज्ञानी भक्तस्तु भगवत्तुल्य एवास्ति । विषयेऽत्र स्मृतयो बाहूनुत्थाप्य जल्पन्ति । तथाहि भगवद्गीतायां शक्तिगीतायां चापि—

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतः।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्॥
चतुर्थो ज्ञानी भक्तस्तु मत्स्वरूपो न संशयः।
ज्ञानिनां मम भक्तानां नास्ति भेदो मया सह॥
त एवाहमहो देवा अहमेव च ते मताः।
नात्र कश्चन सन्देहः सत्यं सत्यं वदाम्यहम्॥
इति॥ १७॥

तस्य जीवन्मुक्तिसंबन्धं वर्णयति--

## तस्य भावो जीवन्मुक्तिः॥ १८॥

तस्य ज्ञानिनो भक्तस्य भावो दशाविशेषो जीवन्मुक्तिरुच्यते। ज्ञानी भक्तो गुणातीतः। गुणजनितबन्धनविमुक्तो भाग्यशाली साधकोऽसौ जीवन्मुक्तः प्रोच्यते। सुतरां ज्ञानी भक्तो जीवन्मुक्तश्चेति द्वयमेतदेकावस्थापरिचायकम्। साधको वैधभक्तितो रागात्मिकाया भक्तेरधिकारमासादयन् मलविक्षेपावपसारयति। अनन्तरं च पराया भक्तेरधिकारमधिगत्य आत्मसाक्षात्कारेण आवरणमपि विनाशयति। सुतरां मलविक्षेपावरणविरहितस्य ज्ञानिभक्तस्य शुद्धा दशा जीवन्मुक्तिरुच्यते। कर्मणा मलं नश्यति। तस्य स्थूलशरीरावच्छेदकत्वात्। योगेन विक्षेपस्य नाशो जायते। यतो विक्षेपो वृत्तिचाञ्चल्येनोत्पद्यते। बुद्धेराच्छादकमावरणमपि ज्ञानादेव प्रणश्यति। अतः क्रियाप्रधानतया वैध्या भक्त्या मलस्य, भावप्रचुरयोगशक्तिमयरागात्मिकया भक्त्या विक्षेपस्य नाशमनुष्ठाय ज्ञानी भक्तशिरोमणिस्तत्त्वज्ञानपरिपूर्णदशामासादयन् आवरणं च नाशयित्वा ब्रह्मपदमधिकुर्वन् जीवन्मुक्तावस्थां प्राप्नोति। यथा हि बीजैर्भर्जितैर्भोजनानन्दो लभ्यते, किन्तु न तान्यङ्कुरीभवन्ति तथैव त्रिगुणात्मकसृष्टौ विद्यमानोऽपि जीवन्मुक्तो भाग्यशाली भक्तो गुणत्रयोत्पन्नंबन्धनं नासादयति। मलविक्षेपावरणानि विनाशयतो भाग्यवतः साधकस्य ज्ञानिनो भक्तस्य स्वरूपस्थो भाव एव जीवन्मुक्तिरुदीर्यते। गुणातीतं पदमेतदेव उक्तं चात्र विषये स्मृतिशास्त्रे--

सर्वेषु प्राणिपुंजेषु येषामुत्पद्यते ननु।
ब्रह्मबुद्धिर्महात्मानो जीवन्मुक्ता भवन्ति ते॥
अपरोक्षं ध्रुवं येषां ब्रह्मज्ञानं प्रजायते।
ते महापुरुषा लोके जीवन्मुक्ता न संशयः॥
देहोऽस्मि पुरुषश्चास्मि शूद्रोऽस्मि ब्राह्मणोऽस्मि च।
यथेत्थं दृढविश्वासस्तथैव पितृपुङ्गवाः।
नाहं देहो न पुरुषो न शूद्रो ब्राह्मणो न च॥
निजस्वरूपे किन्त्वस्मि सच्चिदानन्दरूपकः॥
प्रकाशरूपः सर्वान्तर्यामी सर्वात्मको विभुः।
अस्म्यहं सर्वथा नूनं चिदाकाशस्वरूपकः॥
निश्चयो दृढ एवं योऽपरोक्षज्ञानमस्ति तत्।
बोद्धव्यमेतत् पितरोऽपरोक्षज्ञानलक्षणम्॥
अहं ब्रह्मास्मि इत्येवाऽपरोक्षज्ञानयोगतः।
सर्वकर्मावलीबन्धनिवृत्तिर्जायते ध्रुवम्॥
प्रारब्धं सञ्चितं कल्याः! आगामीति प्रभेदतः।
प्रोच्यते त्रिविधं कर्म कर्मतत्त्वविशारदैः॥
अनन्तकोटिजन्मौघेऽभुक्तानां कृतकर्मणाम्।
नूनं संस्कारभूतं यद् बीजवत्कारणान्वयि॥
अस्ति पूर्वार्जितं कर्म जातं तत्कर्म सञ्चितम्।
जनकं स्थूलदेहस्य देहेऽस्मिन्नेव च प्रदम्॥
सुखदुःखादि भोगानामास्ते पूर्वार्जितं च यत्।
प्रारब्धं प्रोच्यते कर्म तदेवाहो स्वधाभुजः!॥
जीवद्देहकृतं कर्म पापपुण्यात्मकं किल।
आस्ते यन्नूतनं कर्ण तदाऽऽगामि प्रचक्ष्यते॥
ब्रह्मैवास्मीत्यहं कल्याः! निश्चयात्मकताजुषा।
तत्र ज्ञानाग्निना कर्म संचितं दह्यते ध्रुवम्॥
संस्कारात्मकबीजौघ आस्ते सञ्चितकर्मणाम्।
चित्ताकाशेषु सर्वेषां प्राणिनां निहितो ननु॥

यदा ज्ञानिमहात्मानोऽपरोक्षज्ञानयोगतः ।
पञ्चकोषा ह्यहं नैव तेभ्योऽतीतो ह्यसंशयम् ॥
आत्मा तद्द्रष्टरूपोऽस्मि शुद्धो बुद्धश्च शाश्वतः ।
इत्थमेव वदन्तीह पञ्चकोषस्थितेषु वै ॥
सञ्चितः कर्मसंस्कारश्चित्ताकाशेषु संस्थितः ।
तिष्ठन्तोऽपि हि तेष्वेव न मुक्तान् बद्धुमीशते॥
ज्ञानिनामिह मुक्तानां प्राणिनां पितृपुङ्गवाः ।
प्रारब्धकर्मणां नाशो भोगादेव प्रजायते ॥
सञ्चितागामि कर्माणि यतो मुक्तमहात्मनाम् ।
नैव स्पृशन्ति मुक्तांस्तान् ब्रह्माण्डप्रकृतिं ह्यतः ॥
आश्रयन्ते च भुज्यन्ते समष्ट्यात्मकतो ध्रुवम् ।
ब्रह्माण्डे शोभने यत्र मुक्तात्माऽसावजायत ॥

× × ×

ब्रह्माण्डस्य हि तथैव तानि कर्माणि निश्चितम् ।
समष्ट्यात्मक प्रारब्धे सम्मिलन्ति स्वधाभुजः॥
समष्टिकर्मभिस्तैर्हि तद्ब्रह्माण्डस्य भूतिदाः ।
समष्टिसुखदुःखानि प्राप्यन्ते प्राणिभिर्ध्रुवम् ॥
सत्यत्रेताद्वापराणां कलेश्चैव समुद्भवे ।
सहायकानि जायन्ते काले तानि भविष्यति ॥
ज्ञानिनां मम भक्तानां भोगो भवति कर्मणाम् ।
अन्येनापि प्रकारेण यथाग्रे वो ब्रवीम्यहम् ॥
ज्ञानिनो ये भजन्तीह नितरामर्चयन्ति च ।
ज्ञानिभिर्विहितः पुण्यकर्मांशो याति तान् प्रति ॥
दुःखप्रदानं कुर्वन्ति निन्दन्ति ज्ञानिनश्च ये ।
ज्ञानिसम्पादितः पापकर्मांशस्तांस्तु गच्छति ॥
मुच्यन्ते ज्ञानिनो ह्येवं निखिलैः कर्मबन्धनैः ।
निष्कामा भाग्यवन्तस्ते विचरन्ति महीतले ॥
ब्रह्मेशकोटिभेदेन जीवन्मुक्तो द्विधा मतः ।
प्रारब्धकर्मणां तत्र जीवन्मुक्तमहात्मनाम् ॥
वैचित्र्यमेव हेतुः स्यात् प्रभेदे द्विविधे ध्रुवम् ।
ब्रह्मकोटिं समापन्ना जीवन्मुक्ता भवन्त्यहो ॥
देशकालौ न बाधेते कथञ्चित् किल कर्हिचित् ।
जीवन्मुक्ता महात्मान ईशकोटिं समाश्रिताः ॥
यत् किञ्चनेह संसारे कार्यं कुर्वन्ति सन्ततम् ।
कार्यं ममैव तत्सर्वं कुर्वते पितृपुङ्गवाः ॥
आत्मारामाः सदा मूका जगत्सम्बन्धवर्जिताः ।
ईशकोटिं श्रिता ये च जीवन्मुक्ताः स्ववेदिनः ॥
त ईशप्रतिमाः सन्तो भगवत्कार्यरूपतः ।
संसक्ता विश्वकल्याणे संतिष्ठन्ते महीतले ॥

\+ \+ \+

विश्वमेवंविधैरेव ह्येकमात्रं स्वधाभुजः ।
भवन्त्युपकृतं धन्यं जीवन्मुक्तैर्महात्मभिः ॥
सन्ति भागवता एवं भगवद्रूपिणो ध्रुवम् ।
तेषां सततयुक्तानां मय्येव पितृपुङ्गवाः ! ॥
चित्ते सर्वज्ञता बीजं भवत्यारोपितं खलु ।
मत्कार्यतत्परास्तांश्च सर्वथा मत्परायणान् ॥
यतोऽन्तःकरणं तेषां जैवाहङ्कारवर्जितम् ।
पूर्य्यते समदर्शित्व-निरासक्त्यादिभिस्तदा ॥
भगवत्कार्यबुद्धयैव निरीक्ष्यन्ते निरन्तरम् ।
सर्वस्मिन् समये ते च पदार्थे केवलं रताः ॥
तज्ज्ञानं सर्वभूतेष्ववरोधशून्यतां गतम् ।
अत्रैक्यं खलु संस्थाप्याऽद्वैतभावं प्रपद्यते ॥
यदाऽहं ज्ञानिभक्तेषु प्रसीदामि तदैव ते ।
जीवन्मुक्तिपदं प्राप्तुं शक्नुवन्ति स्वधाभुजः ॥
इति ॥ १८ ॥

तदानीं मोक्षनिर्णयार्थं ब्रह्मस्वरूपमाचष्टे—

## अक्षरं तत् ॥ १९ ॥

तद्ब्रह्म अक्षरं नाक्षरति नश्यतीत्यक्षरं वेद्यम् । जीवन्मुक्तिस्वरूपेऽनुशीलिते स्वत एव मोक्षपदस्वरूपं जिज्ञासुर्जिज्ञासते । तज्जिज्ञासामनुसृत्य मोक्षनिर्णयार्थं ब्रह्मस्वरूपं प्रति पिपादयिषया सूत्रमिदमाविर्भूतम् । सूत्र-

कृदभिधत्ते यद् ब्रह्मनाशरहितमिति। प्राकृतिकं जगत्तु नाशशीलम्, किन्तु यदाधारेण विश्वसृष्टिस्तिष्ठति तद्ब्रह्मसमुत्पत्तिर्विनाशरहितम्, नित्यरूपं परिवर्त्तन-शून्यमद्वितीयमक्षरं च, तदक्षरं सद्रूपम्, यतः सद्भावापन्नतामन्तरेण नाक्षरत्वसिद्धिः। सद्रूपस्य चिद्रूपता-अपि। यतश्चिद्भावसत्तां विना नैव भवितुमर्हति सत्सत्ताऽनुभवः। अक्षरं तदानन्दस्वरूपमपि। यतः क्षरपदे निरानन्दो दुर्निवारः निरानन्दरहितमक्षरपद-मानन्दमयमेव, सुतरामक्षरं ब्रह्म सच्चिदानन्दमयम्। यथा च श्रुतिराह—

"एतस्य वा अक्षरस्य प्रशासने गार्गि" इति ॥ १९ ॥

प्रसंगात्स्वभावविज्ञानं प्रतिपाद्यते—

## अध्यात्मं तत्स्वभावः ॥ २० ॥

तस्य सच्चिदानन्दमयस्याक्षरस्य ब्रह्मणो यः स्वभावः स हि अध्यात्ममित्युच्यते। सतश्चितआनन्दस्य चैकरस-स्वरूपाऽद्वैतंसत्त्वैव रसरूपपरात्मब्रह्मण श्चिन्मयस्वरूप-मवधेयम्। "अहंममेतिवत्" इत्युदाहृत्या एतच्छास्त्र-प्रतिपादिता प्रकृतिः किलाऽऽनन्दविलासाय सद्भाव-तश्चिद्भावस्य, चिद्भावतश्च सद्भावस्याश्रयेण स्वस्वरूप एव स्वकीयं वैभवं प्रदर्शयति। ब्रह्मप्रकृतेर्व्यक्ताव्यक्त-रहितः स्वाभाविको भाव एव ब्रह्मस्वभावः। वस्तुतो ब्रह्मप्रकृतिरेव ब्रह्मस्वभावः। अव्यक्तदशायां ब्रह्मप्रकृतेः स्वतन्त्रसत्ता नानुभूयते, सच्चिदानन्दानामपि स्वतन्त्र-सत्तया अनुभवोऽपि न जायते। अद्वैतस्य स्वस्वरूपस्ये-यमवस्था। क्रियमाणवर्णनाया ब्रह्मप्रकृतेस्तस्याः स्वतन्त्र-क्रियाऽनुभूता स्वरूपानन्दोपलब्धये कदाचित् चित्स-त्तायाः कदापि च सत्सत्तायाः प्राधान्यं वहन्ती समनु-भूयते। स्वभावोऽयमध्यात्ममित्युच्यते। दशायामत्रा-ध्यात्मं ब्रह्मस्वभावः, प्रकृतिनाम तुरीया शक्तिरिति। ब्रह्म, ईशो, विराट इति ब्रह्मणो रूपत्रयं पूर्वमेव सम्यङ् निरूपितम्। रूपत्रयेऽपि स्वस्वभावोऽयं विद्यते। विराड्रूपे अनन्तकोटिब्रह्माण्डानां स्वभावरूपतोऽनाद्य-नन्तं प्रवाहमनुसृत्य आविर्भावतिरोभावौ एतत्स्वभाव-सम्बद्धौ वेदितव्यौ। ईशरूपे च आनन्दविलासस्य हेतुना अनन्तकोटिब्रह्माण्ड-पिण्डात्मक-स्वरूपायाः प्राकृतिक-क्रियायास्तदीक्षणमूले या किलैकरसमयी स्वाभाविकता सैव स्वस्वभावो वाऽध्यात्ममिति वा प्रगीयते। सच्चिद्भावसाहाय्येन ब्रह्मणि तदानन्दानु-भूतिरेव स्वस्वभावोऽध्यात्मेति कथ्यते। ब्रह्मशक्ते-र्महामायाया "अहं ममेतिवत्" अनुभूयमानस्तुरीयभाव एव स्वस्वभावरूपिणि अध्यात्मभावे प्राकट्यमेति। स च नित्यो विकाररहितश्च। यतो ह्यक्षरभावेन सह भावस्यैतस्य स्वाभाविकः सम्बन्धः। "आत्मानमधिकृत्य इति अध्यात्म" इतिविग्रहविचारतोऽपि आत्मनि स्वाधिष्ठानं कुर्वाणाया ब्रम्हप्रकृते स्थितिरेवाध्यात्मेति गीयते। अवस्थामिमामन्यप्रकारेणापि बोधयति—स्वभावः प्रकृतिर्वेति द्वौ शब्दौ पर्यायवाचकौ स्तः। अस्य मान-वस्यैष स्वभाव इति कथनेन तन्मनुष्यप्रकृतिरेव ज्ञापते। ब्रम्हणः स्वस्वरूपेण साक्षात्सम्बद्धाया विकाररहिता या ब्रम्हप्रकृतेः स्वाभाविकावस्थैवाध्यात्म शब्दवाच्या। विद्याऽविद्याभावविरहिता विकृता ब्रम्हप्रकृतिरध्यात्म-शब्दवाच्येति निर्गलितार्थः। सहजकर्मणा स्वभावमिम-मधिकृत्य आत्मारामो जीवन्मुक्ता मुक्तात्मानोऽभिधी-यन्ते। एतमेव सहजस्वभावमधिगत्य निर्वासना महात्मान ऊर्ध्वस्थं सप्तमं लोकं प्राप्ताः शुक्लगतिं द्वारीकृत्य सूर्यमण्डलं भित्त्वा ब्रह्मीभवन्ति। एतामेव स्वाभाविकीं सहजदशां नित्यस्थिता ब्रह्मविष्णुमहेश्वराः सगुणरूपा-स्त्रिमूर्त्तयः ऐशकर्माणि द्वारीकृत्य ब्रह्माण्डनायका उच्यन्ते। वस्तुतो ब्रह्मेशविराड्भावैः सह स्वस्वभावस्यैतस्य यथा सम्बन्धस्तथैव कर्मबन्धनविमुक्तानामप्युपर्युक्तदशा

-त्रयेणापि तत्सम्बन्धो वेद्यः। एतत् पदं स्वभावं च लक्ष्यीकृत्यैव गीतोपनिषदोक्तम्—

"अक्षरं परमं ब्रह्म स्वभावोऽध्यात्म उच्यते।" इति ॥ २० ॥

इदानीं स्वभावविरुद्धदशाया विज्ञानं वर्ण्यते—

## भूतभावकृद् विसर्गः कर्म ॥ २१ ॥

भूतभावोद्भावकारी विसर्गः त्याग एव कर्मशब्दवाच्यः। पूर्वोक्ता स्वस्वभावदशा गुणकर्मातिशायिनी, किन्तु जीवदशा तु गुणकर्मसंयुक्तैवास्ते। गुणकर्मविरहितस्वस्वभावपरित्याग एव कर्मोच्यते। अस्वाभाविकी किल कर्मदशा। सैवा स्वाभाविकी दशा सत्त्व-तमोऽधिष्ठात्रीभ्यां विद्याऽविद्याभ्यां सम्बन्धसंयुक्ता निरूपिता। अर्थात् भूतभावोत्पत्तिकरस्वभावस्य दशा यदा तमस्सम्बद्धा, तदानीमज्ञानावस्थाऽसावविद्यासम्बन्धनिबन्धना, यदा च सत्त्वगुणसम्बन्धिनी तर्हि विद्यासम्बद्धेत्युच्यते। अविद्यैव भूतभावोद्भवकरविसर्गरूप कर्मोत्पादयति। स्वभावस्य सहजगतौ नष्टायां प्रकृतेर्विकृतावस्थातः कर्म समुदेति। विषयमिममन्यप्रकारेणाप्यवबोधयति—यत् साम्यावस्थया प्रकृत्या सह स्वभावदशायाः वैषम्यावस्थया च तया साकमस्वाभाविककर्मदशासम्बन्धः। ब्रह्मप्रकृतिर्ब्रह्मणा साक्षात् सम्बद्धा यदा तुरीयदशायां तिष्ठति तदानीं गुणत्रयविकाशरहिता स्वभावसंज्ञा धत्ते। गुणत्रयं विभ्राणायाः स्वाधीनाया परिणामिन्याः प्रकृतेरवस्था स्वभावविरुद्धा गीयते। तस्या एव प्रकृतिस्पन्दनावस्थातः कर्मणः सम्बन्धः। वस्तुतो दशायामत्र स्वस्वभावपरित्यागो जायते। एष किल भूतभावोद्भवकरो विसर्गापरनामकस्त्यागः कथ्यते। यतोऽस्यामेव कर्मदशायां सृष्टिस्थितिलयक्रियाः सम्पद्यन्ते। स्मर्यते चात्र—

अहं ममेतिवद् भेदो यथा नास्ति दिवौकसः।
मन्मच्छक्त्योस्तथा कर्ममच्छक्त्योर्नास्ति भिन्नता॥
देवाः! उद्भावकं सत्त्वतमसोः कर्म कथ्यते।
धर्म्मः सत्त्वप्रधानत्वादधर्मस्तद्विपर्ययात्॥
गूढं रहस्यं धर्मस्याधर्मस्याप्येतदेव हि।
जैवेश सहजाख्याभिस्त्रिधा कर्म विभिद्यते॥
बीजं च कर्मणो ज्ञेयं संस्कारो नात्र संशयः।
मम प्रभावतो देवाः! व्यष्टिसृष्टिसमुद्भवे॥
चिज्जडग्रन्थिसम्बन्धाज्जीवभावः प्रकाशते।
स्थानं तदेव संस्कारसमुत्पत्तेर्विदुर्बुधाः॥२१॥ इति

अधुना सर्गस्याधिदैवविज्ञानं निरूप्यते—

## अधिदैवतमीश्वरः ॥ २२ ॥

अनन्तकोटिब्रह्माण्डसृष्टीनामधिदैवतमधिदैवभाव ईश्वरशब्देन व्यपदिश्यते। लयहेतवेआत्मज्ञाननिर्णयार्थं ब्रह्मस्वरूपं निर्णीय ब्रह्मप्रकृतेर्महामायायाः सम्बन्धतो विकृतस्वभावस्वरूपिणीं कर्मदशां वर्णयित्वा सृष्ट्या साकं ब्रह्मस्वरूपसम्बन्धं निर्वक्ति त्रिगुणात्मानन्तकोटिब्रह्माण्डसृष्टिलीलाया योह्यधिदैवभावः स एवेश्वरः प्रणिगद्यते।

ईश्वरो जगती नायकः कर्त्ता च। दैवतमधिकृत्य इत्यधिदैवतम् इति विग्रहवाक्यानुसारेण सर्वत्रैव दैवप्रपञ्चेऽधिष्ठानकर्त्तुः परमात्मापरनामको ब्रह्मणो यो हि भावः साक्षाद्वैराज्यसम्बन्धयुक्तो महत्याः सृष्टिस्थितिलयक्रियाया द्रष्टा स एवेश्वरोऽधिदैवशब्दवाच्यः। यथा किल स्वस्वभावदशायामद्वैतरूपतस्तुरीयब्रह्मप्रकृतिसम्बन्धेनाध्यात्मस्वरूपज्ञानम्, तथैव त्रिगुणमय्याः सृष्टिस्थितिलयकारिण्या ब्रह्मविष्णुरुद्रजनन्याः स्थूलसूक्ष्मकारणस्वरूपधारिण्याः प्रकृतेः सम्बन्धेन ब्रह्मस्वरूपं विज्ञायते, यस्य च साक्षाज्जगत्सम्बन्धः स ईश्वरः किला-

धिदैव नाम्ना समुदीर्यते। परमात्मनोऽध्यात्माधिदैवाधिभूतरूपत्रह्मो शविराट्संज्ञकभावत्रयनिरुक्तिः पूर्वमेवानुष्ठिता। एतद्भावत्रयसम्बन्धेन च जगतः प्रत्येकांशेऽध्यात्माधिदैवाधिभूताख्यस्त्रिभावाः। कथमिवावबोध्यन्त इत्यस्यापि सविस्तरं विवरणं प्रागेव प्रपञ्चितम्। अधिदैवत्वादीश्वरो हि प्राकृतिकप्रपञ्चस्वामीति तस्येश्वरनामसार्थकता॥ २२॥

आत्मज्ञानस्य पन्थानं सरलीकर्तुमधियज्ञस्वरूपं निर्दिशति—

प्रत्यगात्मनोऽधियज्ञत्वम्॥ २३॥

प्रत्यगात्मनः कूठस्थस्याधियज्ञत्वमवधेयम्। द्वैतावस्थायां ब्रह्मतत्प्रकृत्योश्च पार्थक्ये महामायाया अवस्थाद्वयस्य नाम विद्याऽविद्येति। यथा च श्रुतौ—

"द्वे अक्षरे ब्रह्मपरे त्वनन्ते विद्या-
ऽविद्ये निहिते यत्र गूढे,—
क्षरन्त्वविद्याह्यमृतंतु विद्याविद्या-
विद्ये ईशते यस्तु सोऽन्यः॥"

"विद्ययाऽमृतमश्नुते"

"विद्यया विन्दतेऽमृतम्" इति।

सत्वगुणमयी ज्ञानजननी विद्या तमोमयी अज्ञानजननी अविद्येत्युच्यते। विद्या किलेश्वररूपाधिदैवाधीना अविद्या हि जीवान् स्ववशे स्थापयन्ती बन्धने गमयति। जीवस्याविद्याधीनत्वे सच्चिदानन्दमयज्ञानस्वरूपस्य ब्रह्मणः प्रकाशः कथं संभवति? सर्वव्यापकः परमात्मा मालायां सूत्रमिव कथंकारमनुभवमेति? इत्यादि शंकासमाहितये पूज्यपादो महर्षिः सूत्रकारः सूत्रमिदमाविर्भावयामास। जीवपिण्डे निर्लिप्तभावेन प्रतिभासमाना ब्रह्मसत्ता कूटस्थइति गीयते। कूटस्थोऽधियज्ञरूपः। अधियज्ञस्थानं शास्त्रकारैर्द्विदले समाम्नातम्। सविस्तरं प्राग्वर्णिताय चिज्जडग्रन्थिरूपजीवसत्तायाः स्थानमन्तःकरणमेव। यतो ह्यन्तःकरणसाहाय्येन जीवो ह्यात्मानं स्वतन्त्रसत्तावन्तमवधारयति। अन्तःकरणे विराजमाना ब्रह्मणश्चित्सत्ता अविद्योपाधिसमाक्रान्ता बन्धनदशामभ्युपैति। सर्वव्यापिका विकाररहिता निर्लिप्ता स्वभावस्थितब्रह्मस्वतन्त्रसत्ताऽपि प्रत्येक जीवपिण्डे तिष्ठत्येव। यतो न तादृशं किमपि स्थानं यदद्वैतसत्तातोऽतिरिच्यते। अतः स्वयं साक्षिस्वरूपः प्रतिपिण्डं स्थित आत्मबोधरूपश्चिदंश एव कूटस्थः प्रोक्तः, स एवाधियज्ञस्वरूपः। उक्तमपि गीतायाम्—

"अधियज्ञोऽहमेवात्र देहे देहभृतांवर" इति।

यज्ञमधिकृत्येति विग्रहेण कूटस्थस्याधियज्ञत्वमुचितमेव। जीवस्य जीवनं यज्ञरूपमास्ते। आत्मनः प्राप्तये क्रियमाणं पुण्यजनकं शुभकार्यमेव यज्ञःशब्देनोच्यते। अतो कर्मोपासनाज्ञानदानतपोमन्त्रयोगस्वाध्यायाख्या अनेक यज्ञाः शास्त्रेपूल्लिखिताः सन्ति। आत्मनोऽभिमुखमग्रेसारिणी क्रियैव यदि यज्ञशब्दवाच्या तर्हि समभ्युपगन्तव्यमेवैतत् यदुद्भिज्जमारभ्य मानवी दैवीं च योनिं यावत् अर्थात् सहजमानवदैवपिण्डेषु सर्वत्रैव यज्ञमयी गतिरास्ते।

उद्भिज्जादि सहजपिण्डेषु क्रमोन्नतिः सहजकर्मानुसारेण स्वाभाविकी। मानवदैवपिण्डेषु च जैवैश कर्माण्यनुसृत्य यज्ञधर्मो विलोक्यते। अतः पिण्डमात्रेऽपि यज्ञस्थितिरस्तीत्यभ्युपगन्तव्यमेवास्ते। एतत् यज्ञस्यानिर्लिप्तो द्रष्टा यथार्थतोऽधियज्ञ शब्दवाच्यः। यथा ब्रह्माण्डप्रकृतिरीश्वरसत्तया सत्तावती कार्यकारिणी च बोभवीति तथैव पिण्डप्रकृतिरपि कूटस्थसत्तातः सत्तावती कार्यकारिणी च जायते। अतः प्रत्येकपिण्डे कूटस्थस्याधियज्ञत्वमिति॥ २३॥

अधिभूतविज्ञानं निरूप्यते—

**अधिभूतत्वं क्षरस्य ॥ २४ ॥**

क्षरस्य क्षरभावस्य नाशशीलस्येत्यर्थः, अधिभूतत्वमुक्तम्। ब्रह्मसद्भावरूपमुक्तिप्राप्तिनिमित्तकज्ञानविज्ञानपरिपूर्णतायै साम्प्रतमुच्यतेऽधिभूतविज्ञानम्। अध्यात्माधिदैवाधियज्ञाधिकारवतोऽद्वितीयस्य स्वरूपस्य वर्णनेन साकं भूतभावोद्भवकरस्य कर्मणो रहस्यमपि समुपवर्णितम्। प्राकृतिकस्पन्दनमन्तरेण कर्मोत्पत्तिरसम्भवा। यत्र प्राकृतिकं स्पन्दनं, तत्र कर्मणोद्घातप्रतिघातरूपक्रियाप्रतिक्रिययोः परिणामोऽवश्यम्भावी। अन्यच्च त्रिगुणपरिणतिः, प्रत्येकवस्तुनः क्षणभङ्गुरत्वमपि स्वतःसिद्धम्। अतोऽपरिणामिना भावेन सह परिणामभावस्य समन्वयार्थं, प्रत्येकदशायां चात्मज्ञानस्थितिसम्पादनार्थं क्षरस्य विज्ञानं प्रतिपाद्यते। स्पन्दनशीला त्रिगुणविकारधारिणी प्रकृतिर्या किल परिणामदशामुत्पादयति सैवाक्षरेति संज्ञिता। अतोऽक्षरभावस्याधिभूतत्वं सिद्धम्। अध्यात्मभावे परिणामाभाव इति पूर्वमेव सविस्तरं प्रपञ्चितम्। भावमिममधिगत्य ब्रह्माण्डे परमेश्वरः पिण्डकूटस्थश्च कथमिव स्वभावस्थित इत्यपि प्राक् प्रमाणितम्। अन्यच्च कर्मविज्ञानमनुसृत्येदं सिध्यति यत् काचित् परिणामशालिनी दशाऽप्यवश्यम्भाविनी। दशेयं त्रिगुणविकारोदर्कभूता वेद्या। अतः प्रत्येकोऽपि प्राकृतिकः पदार्थः सृष्टिस्थितिलयाधीनः। सृष्टिस्थितिलयरूपं परिणामं प्राप्तो भाव एव क्षरशब्दवाच्यः। तस्यैवाधिभूतत्वमवगन्तव्यम्। विज्ञानमेतत् प्रकारान्तरेणाप्यवबोधयति। अविकृतस्वभावा ब्रह्मप्रकृतिरध्यात्मभावं, सैव विकारं प्राप्ता त्रिगुणमयी परिणामिनी भूत्वाऽधिभूतभावं प्रकटयति इति ॥ २४ ॥

ब्रह्मसद्भावकारणं कथ्यते—

**ब्रह्मसद्भावाधिगतिरानन्दपूर्णत्वात् ॥ २५ ॥**

आनन्दस्य परिपूर्णतया ब्रह्मसद्भावस्याविर्भावो जायते। पूर्वोक्तविज्ञानेन सह ब्रह्मसद्भावस्य कः सम्बन्धः? ब्रह्मसद्भावः कथमवाप्यते? मुमुक्षुहृदयसमुत्पन्नायाः शङ्काया एतस्या निराकरणार्थमेव पूज्यपादेन महर्षिणा सूत्रकृता सूत्रमेतदाविष्कृतम्। रसरूपे परमात्मनि परमानन्दपूर्णता विद्यते। तदानन्दस्य जगति व्याप्तत्वेऽपि स्वस्वरूप एव तत्परिपूर्णता। महज्जने भागवते यदा तस्यानन्दस्य विकाशो जायते, तदासौ भागवतो भगवति मिलित्वा ब्रह्मसद्भावमधिगच्छति। साधको यदाऽद्वितीयमेकमन्तःपूर्णं बहिःपूर्णं सर्वतः परिपूर्णं परमानन्दभावं सर्वेष्वपि देशकालपात्रेष्वनुभवति, तदैवाऽयं ब्रह्मसद्भावाधिकारमासादयति। इयमेवावस्था जीवन्मुक्तस्य। अक्षरमूलकाध्यात्मभावस्य, ईश्वरमूलकाधिदैवभावस्य, कूटस्थमूलकाधियज्ञभावस्य, क्षरमूलकाधिभूतभावस्य, अकर्मसकर्मावस्थयोश्च तत्त्वज्ञानमधिगत्याद्वैतस्थितिं प्राप्तो भाग्यवान् ज्ञानी भक्तो यदा पूर्णानन्दरससागरे निमग्नो जायते तदैव तेन ब्रह्मभावदशाऽधिगम्यते। द्वैतभावे विरहिते स्वस्वरूप एवानन्दपरिपूर्णतेति निर्विवादम्। स्वस्वरूपेतरदशायामानन्दस्थितौ सत्यामपि परिपूर्णताया अभाव एव। अस्मादेव कारणाद् विषयानन्दे द्वैतसम्बद्धे आनन्दे च। आनन्दस्य परिपूर्णता नास्ति। फलतः सात्त्विकस्य ज्ञानस्य सात्त्विकधृतेश्चाधिकारी अद्वैतां ब्राह्मीं स्थितिमासादयन् महापुरुष एव पूर्णानन्दे लयमानो ब्रह्मसद्भावाधिकारवान् भवति ॥ २५ ॥

ब्रह्मज्ञानं कथमासाद्यत इत्युच्यते—

**स्वरूपतटस्थवेद्यं सच्चिदानन्दमद्वितीयं ब्रह्म ॥ २६ ॥**

सच्चिदानन्दरूपमद्वितीयं सजातीयविजातीयस्वगतभेदशून्यं ब्रह्म स्वरूपलक्षण-तटस्थलक्षणाभ्यां वेद्यं भवति।

द्वैतविरहिता द्वितीयसच्चिदानन्दमयसर्वकारणस्वरूपस्य ब्रह्मणो ज्ञानमलौकिकमसाधारणं च। कार्यस्वरूपस्य जगतः कोऽपि जीवः कारणं ब्रह्म कथं ज्ञातुमर्हति? अपूर्णशक्तिर्जीवः पूर्णं ब्रह्म कथमिव जानीयात्? द्वैतदशायामद्वैतज्ञानं कथं सम्पद्येतेत्यादि सन्देहनिरासाय कैवल्याधिगमाय ब्रह्मज्ञानं कथं भवितुमर्हतीति ज्ञानमधिगन्तुं सूत्रकृता सूत्रेऽत्रोपायः प्रदर्शितः। यथा उष्णत्वं प्रकाशोऽग्नेर्धर्मस्तथैव ज्ञानं किलात्मनो धर्मः। चित्स्वभावसम्पन्न आत्मा ज्ञानस्वरूप एव। साधारणं ज्ञानं तु जैवान्तःकरणस्य स्वाभाविको धर्मः। उद्भिज्जमारभ्य मानवपर्यन्तं सर्वेष्वपि जीवेषु यथायोग्यमधिकारमनुसृत्य न्यूनाधिकरूपेण ज्ञानं तिष्ठत्येव। आहारनिद्राभयमैथुनसुखेच्छाज्ञानादीनि सर्वेष्वपि जीवेषु विद्यन्ते। एतत्तु साधारणज्ञानस्वरूपम्। असाधारणस्य ज्ञानस्य भेदद्वयं महर्षिभिरनुष्ठितम्। तद्धि स्वरूपज्ञानं तटस्थज्ञानं चेति। आत्मन्यविकृतरूपेण नित्यस्थितं ज्ञानं स्वरूपाख्यमुच्यते। ज्ञातृज्ञानज्ञेयरूपत्रिपुटीभेदेन विभिन्नताज्ञानं तटस्थाख्यं प्रोच्यते। विज्ञानमिदमन्यप्रकारेणाप्यवधेयम्। सर्वव्यापकस्य सच्चिदानन्दमयस्य ब्रह्मणः सर्वज्ञतामूलकं स्वरूपे ह्येकरसरूपेण विद्यमानं स्वरूपज्ञानम्। जैवान्तःकरणसाहाय्येन ज्ञातृज्ञानज्ञेयरूपत्रिपुट्यवलम्बनेन यज्ज्ञानं जीवं चेतनराज्याधिकारिणं विधत्ते तद्धि तटस्थज्ञानं प्रोच्यते। निरतिशयगभीरविषयमिमं प्रकारान्तरतोऽपि बोधयति—अविकारिणो ब्रह्मणो नित्यस्वरूपे यज्ज्ञानं तिष्ठति तत्स्वरूपज्ञानम्। यतोह्यात्मस्वरूपे न तटस्थज्ञानसम्भावना। जीवान्तःकरणेषु चित्कलासाहाय्येन यज्ज्ञानं प्रकाश्यते तद्धि तटस्थज्ञानम्। असाधारणस्यैतस्य ज्ञानद्वयस्यावधारणार्थं दार्शनिकज्ञानभूमिसाहाय्यमावश्यकम्। मीमांसाभूमिषु अद्वैतब्रह्मसद्भावदशायां यच्च केवलं स्वरूपमयं ज्ञानं तदेव स्वरूपज्ञानमवधेयम्। सांख्यप्रवचनभूमौ पुरुषं प्रकृतिं च पृथक् पृथगनुभूय यद्धि पुरुषज्ञानं तत् तटस्थ नाम्ना प्रोक्तम्। स्वरूपज्ञाने त्रिपुटीलयः, तटस्थे तु त्रिपुटीसद्भाव इति निर्गलितार्थः।

निर्गुणं ब्रह्म तु स्वरूपज्ञानवेद्यम्, सगुणं ब्रह्म विराट् चेति द्वयं तटस्थज्ञानवेद्यमास्ते। अद्वितीयब्रह्मसत्तां विरहय्य नान्यत्र यदि स्वरूपज्ञानस्थितिस्तर्हि ब्रह्मस्वरूपज्ञानवेद्यं स्वतः सिध्यति। अन्यच्च गुणमय्याः प्रकृतेः प्रभावतः कार्यब्रह्मणोऽनुभवत्वात्। सगुणौ विराडीश्वरभावौ समनुमेयौ जायेते। अत इदमभ्युपगन्तव्यमेव यत् द्वैतदशायास्तटस्थज्ञानेनैव तौ सगुणभावौ वेद्यौ स्तः। अतस्तद् ब्रह्मस्वरूपतटस्थवेद्यमस्तीति वक्तुं शक्यते। सुतरां द्वितीयं ब्रह्मस्वरूपतटस्थाभ्यामुभाभ्यामेव ज्ञातुं शक्यते। तद्धि स्वरूपज्ञानेन प्रत्यक्षवेद्यम्, तटस्थज्ञानेन चानुमानवेद्यमस्ति, तत्त्वज्ञानिना निर्विकल्पे समाधौ स्वरूपवेद्यम्, सविकल्पे च तटस्थवेद्यमिति निर्गलितार्थः॥ २६॥

सविस्तरमुच्यते—

## तत्र (तत्?) त्रिभाववत्॥ २७॥

तत् सच्चिदानन्दं ब्रह्म त्रिभाववत् अधिभूताधिदैवाध्यात्मरूपेण परिणमति। भावत्रयरहस्यमुक्तपूर्वम्। त्रीन् भावाननुसृत्य भक्तैर्भगवान् त्रिभिरूपैरनुभूयते। ज्ञानिनो भक्ताः स्वकीयज्ञाननेत्रद्वारेण निजहृदयमन्दिरविहारिणं सच्चिदानन्दमयं अद्वितीयमीश्वरं कदाचिद् ब्रह्मरूपेण कदापीश्वरस्वरूपेण कदाचिच्च विराड्रूपेण पश्यन्ति भक्तिरससागरे च निमज्जन्त्युन्मज्जन्ति च। भगवतस्त्रिभावात्मकस्वरूपवर्णनमपि सविस्तरं प्रागायातमास्ते॥ २७॥

कार्यकारणसम्बन्धेन भावमहत्त्वमुच्यते—

**कार्यमपि तथा कारणे सत्त्वात् ॥ २८ ॥**

कारणे सत्वात् त्रिभावात्मकस्य सत्वात् कार्यमपि त्रिभावात्मकमेव । कारणब्रह्मणः सच्चिदानन्दमयत्वात् त्रिभावात्मकत्वम्, ज्ञानिनो भक्ता अध्यात्माधिदैवाधिभूताख्यं भावत्रयमनुसृत्य ब्रह्मेशविराड्रूपेण परंब्रह्म साक्षात् कुर्वन्ति । अतः कारणब्रह्मणस्त्रिभावात्मकत्वं निश्चितम् । अतः कारणब्रह्मरूपस्य जगतोऽपि प्रत्येकमप्यङ्गमध्यात्माधिदैवाधिभूताख्यं त्रिभावात्मकमवधेयम् । एतद्विज्ञानस्य विस्तृतं स्वरूपमुक्तपूर्वम् ॥ २८ ॥

प्रसङ्गतो वाच्यवाचकविज्ञानं प्रतिपाद्यते—

**तस्मादों तत्सदिति निर्देशः ॥ २९ ॥**

तस्मात् कारणात् ब्रह्मण ओंतत्सत् इति निर्देशो अस्ति । परमात्मस्वरूपवाच्यस्य याथातथ्यवाचकनिर्णयार्थम्, उपासनायाः प्रधानाश्रयभूतविज्ञानदृढभित्तिस्थापनाय त्रिभावात्मकस्य सर्वश्रेष्ठवाचकस्य महत्त्वनिर्णयार्थं च महर्षिः पूज्यपादः सूत्रकारः सूत्रमेतदाविर्भावयत् । ओंतत्सदिति मन्त्रस्य त्रिभिर्मार्गैः साकं त्रिभावात्मकस्य भगवत्स्वरूपस्य साक्षात्सम्बन्धः । ओंशब्देन ब्रह्मणः, तच्छब्देन ईशस्य, सच्छब्देन विराड्रूपस्य निर्देशो विहितः । पक्षान्तरे मन्त्रोऽसौ सच्चिदानन्देति भावत्रयस्यापि परिचायकः स्मर्यते चात्र—

ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥
इति ॥ २९ ॥

विज्ञानमिदं परिपोषयति—

**सर्वत्र विधिदर्शनात् ॥ ३० ॥**

सर्वत्र शास्त्रेषु विधेः ओंतत्सदिति पूर्वोक्तमन्त्रविज्ञानविधानस्य दृष्टिगोचरतां समुपलभ्यते । अतो ह्युक्तविज्ञानपरिपूर्णताविषये नास्त्यणीयानपि सन्देहः । तथाहि—

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥
तदित्यनभिसन्धाय फलं यज्ञतपः क्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकांक्षिभिः ॥
सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥
इति ॥ ३० ॥

मन्त्रस्य तस्य सर्वोत्कृष्टत्वं दर्शयति—

**मुख्यमन्त्रत्वान्मुक्तिप्रदः ॥ ३१ ॥**

ओंतत्सदिति मन्त्रो मुख्यः सर्वाभ्यर्हितः, तस्मादसौ मुक्तिप्रदो मोक्षदो विज्ञेयः । सच परिपूर्णानां शक्तिभावज्ञानानां द्योतकत्वात् साधकेभ्यो मोक्षं वितरति । विद्येवाविद्यापि काचिच्छक्तिरेव । किन्तु अविद्या गमनागमनचक्रे पातयित्वा बन्धनदशां प्रापयति । विद्या तु तद्विपरीता, सा किलाऽविद्यां क्षीणां प्रकुर्वती मुक्तिमार्गं सरलीकुरुतेऽन्ते मुक्तिपदमपि प्रापयति । श्रीभगवतः परिपूर्णस्वरूपस्य वाचकत्वान्मन्त्रोऽयं विद्याशक्तिसम्पन्नो विज्ञेयः ।

त्रिभावात्मकत्वात् भावत्रयद्योतकत्वाच्च मन्त्रोऽयं परिपूर्णभावमयः । भगवतो निर्गुणसगुणस्वरूपयोः पूर्णवाचकत्वात् त्रिभावमय रूपत्रयप्रकाशकत्वाच्च मन्त्रोऽयं पूर्णज्ञानमयः । अतोऽस्य मुख्यमन्त्रत्वे मुक्तिप्रदत्वेऽपि नैव जागर्त्ति काचिदपि शङ्का उक्तं च स्मृतिशास्त्रे—

ब्रह्ममन्त्रेषु मूर्द्धन्यो मन्त्रोऽस्त्योंतत्सदात्मकः ।
अतो मे ज्ञानिनो भक्ताः सर्वकर्मफलं मयि ॥

क्षमन्तेऽर्पयितुं सम्यङ् मन्त्रेणानेन निर्जराः।
ममोपास्ति क्षणे नूनं सान्निध्यं चाप्तुमीशते॥
सर्वत्र सर्वदा ज्ञानदृष्ट्या च सर्वथा मयि।
युञ्जानाः स्थातुमात्मानं क्षमन्ते मत्परायणः॥
ओंतत्सदात्मके ब्रह्म-मन्त्रे मन्त्रशिरोमणौ।
तिसृणां सच्चिदानन्दकलानामस्ति पूर्णता॥
ममाध्यात्माधिदैवाधिभूतत्रिरूपवाचकः ।
प्रशस्तो मन्त्रराजोऽयं सर्वकल्याणकारकः॥
उपास्ति ज्ञानकर्माख्ये त्रिकाण्डे विश्रुताश्रुतिः।
तत्र सर्वत्र साफल्यं पूर्णं दातुं सचार्हति॥ ३१॥

सम्प्रति मन्त्ररहस्यमुच्यते—

**दैवलोकसम्बन्धो ध्वनिर्मन्त्रः॥ ३२॥**

स्पष्टोऽर्थः। मुख्यमन्त्रार्थवर्णनमाकर्ण्य जिज्ञासुः शङ्कते किं च मन्त्रविज्ञानं, कोऽसौ मन्त्रः? मननस्त्राणान्मन्त्र इति कानिचन शास्त्राणि व्याहरन्ति, किमस्य तात्पर्यम्? इत्यादि, उच्यते—एतादृशशङ्कासमाधानार्थमेव पूज्यपादेन महर्षिणा सूत्रकारेण सूत्रमिदमाविश्चक्रे। ध्वन्यात्मको वा वर्णात्मको वा मन्त्रो न काल्पनिक इत्यस्य सविस्मृतं विज्ञानं प्रागेवोक्तम्। इदानीमेतत्सूत्रविज्ञानवर्णनेन मन्त्रविषयकसर्वा शंकानां समाधानं भवितुमर्हति। सर्वेऽपि शब्दाः सूक्ष्मराज्यतः समुत्पद्यन्ते, तत्रैव विलीयन्ते चापि। मानवाः पशवः पक्षिणो वा केनापि भावेन भाविता सन्तो यदा कमपि शब्दं कुर्वन्ति, तदा ध्वनि रसावन्ताराज्यनिहितभावद्योतकत्वाद् यतः प्रारब्धस्तत्रैवान्तर्जगति सूक्ष्मातिसूक्ष्मे विलयमापद्यत्ते। यस्य स्थायी प्रभावोऽन्तर्जगति तिष्ठति, सैव ध्वनिर्मन्त्रशब्दवाच्यो जायते। ध्वन्यात्मका वा वर्णात्मका वा प्रणवरूपा वा बीजस्वरूपा वा वर्णात्मकमहावाक्या वा गायत्रीप्रभृतिवैदिका वा सप्तशतीगीताप्रभृतिपौराणिका वा तान्त्रिका लौकिका वा सर्वेऽपि मन्त्राः दैवराज्यप्रभावोत्पादका भवन्ति। वैदिकाः पौराणिकास्तान्त्रिका लौकिकाश्चेति चतुर्विधा अपि मन्त्रा नित्यनैमित्तिकरूपेण दैवराज्यसम्बद्धा भवन्ति। प्रणवगायत्रीप्रभृतिवैदिकमन्त्राणाम् बीजमन्त्रादिपौराणिकतान्त्रिकमन्त्राणां नित्यसिद्धस्वरूपत्वात् दैवराज्यतो नित्य सम्बन्धः। नित्यस्वरूपास्ते तत्तदधिष्ठातृदैवतेषु सदैवैकरूपतः प्रभावमुत्पादयन्ति। यथार्थरूपोच्चारितमन्त्रध्वनिर्दैवं राज्यं स्पृशन्नेव देशकालपात्रानुसारतो नैजं प्रभावं समुत्पादयन्ति। अन्येऽपि पौराणिकास्तान्त्रिका वा मन्त्रास्तत्तन्महर्षियुक्तान्तःकरणसमाधियोगे शब्दस्वरूपेण प्राकट्यमापद्यमाना दैवराज्यतो विशिष्टसम्बन्धयुक्ता जायन्ते। योऽपि मन्त्रो यावता समधिकरूपेण कर्मोपासनाज्ञानकाण्डैः सह मिलित्वा कार्यमनुतिष्ठति तावानेवासौ प्रभावशाली जायते। अत एव सप्तशतीप्रभावो लोके विश्रुतः। भूतप्रेतसर्पविषादिवाधानिवारका लौकिका मन्त्राश्चापि साधकतपस्साधनवलेन दैवराज्यसाहाय्यमासादयन्ति। विज्ञानमिदमन्यप्रकारेणाप्यवबोधयति—लौकिकोऽलौकिका वा शब्दो ध्वन्यात्मको वर्णात्मको वा भवति। प्रणवबीजादिमन्त्रा ध्वनिप्रधाना मन्त्रद्रष्टृमहर्षिकृपया वर्णात्मकतामप्यवाप्ताः। गायत्रीप्रभृतयो वैदिकाः सप्तशतीप्रभृतयः पौराणिकाश्च मन्त्रा वर्णप्रधानाः सन्तोऽपि तन्मन्त्रवर्णमयस्वरूपमन्ताराज्ये समुपढौकमानाः सूक्ष्मरूपं धृत्वा ध्वन्यात्मकस्वरूपतां दधतोऽधिदैवसाहाय्येन विशिष्टं कार्यमनुतिष्ठन्ति। विज्ञानमेतत्प्रकारान्तरेणाप्यवधारयति— तथाहि—अन्नमयः कोषः स्थूलाधिभौतिकराज्यसम्बद्धः, प्राणमयमनोमयकोषौ आधिदैविकसूक्ष्मदैवराज्यसम्बन्धयुक्तौ। विज्ञानमयानन्दमयकोषौ च कारणस्वरूपाध्यात्मराज्यसम्बन्धनिबन्धनौ। यश्चालौकिकः शब्दो विशिष्टदैव-

शक्तिसम्बन्धयुक्तः स्थूलराज्यतः सूक्ष्मराज्यमुपढौकमानो मानसं बलवत् सम्पादयन् दैवं कार्यं विधत्ते, स किल मनसस्त्राता मन्त्रशब्दवाच्यो भवति, विशिष्टमिदं यत् अधिदैवशक्तिसम्पन्नो मन्त्रः केवलं मनोराज्य एव कार्यं विदधाति। ज्ञानप्रधान आधिदैविकाध्यात्मिकोभयशक्तिसंयुक्तो मन्त्रस्तु मनोमयानन्दमयकोषौ समुपगच्छन् मुक्तेरपि साहाय्यं विधत्ते। मन्त्रशक्तिसमुत्पत्तेरनेके भेदाः सन्ति। तेषु केषांश्चिदुदाहरणानि दीयन्ते—

नित्यरूपेण विराजमानस्य प्रणवस्य वाच्यवाचकसम्बन्धयुक्ता मन्त्रशक्तिर्नित्या। सृष्टेरादित एवास्याः सम्बन्धो विद्यते। एष प्रथमः प्रकारः। महर्षिभिः स्वीयसमाधियोगद्वारा समनुभूय विशिष्टानधिकाराननुसृत्य विनियुक्ता शास्त्रेषु च वर्णिता बीजमन्त्राणां शक्तिरवधेया। एष किल द्वितीयः प्रकारः। गायत्रीप्रभृतिवैदिकमन्त्रास्तु कल्पारम्भे वेदाधिगमेन सहैव यथावत्स्वरूपे मन्त्रद्रष्टृमहर्षिभिरधिगताः। एष खलु तृतीयः प्रकारो वेद्यः। त्रिविधा अप्येते मन्त्राः स्वभावसिद्धशक्तिसंयुक्ताः सन्ति। एतदीयशक्तिसमुत्पादने महर्षीणां न कोऽपि प्रयत्नः, नाना पौराणिकाः सप्तशतीप्रभृतयश्च मन्त्रा यथाधिकारं चतुर्थश्रेणिगा अवधारणीयाः। एतादृशा मन्त्राः समाधिस्थैर्महर्षिभिर्भावराज्यसाहाय्येन स्थूलशब्दरूपेण प्राकट्यं नीयमाना जगत्कल्याणकामनया निजयोगशक्तिं द्वारीकृत्य दैवराज्येन विहितविशेषसम्बन्धाः साक्षाद्दैवकृपाबलेन प्रदत्तविशिष्टशक्तिकाः कृताः सन्ति। महर्षिभिः स्वीयोपासनाबलेन सिद्धीकृत्य संसारहिताय शास्त्रेषु प्रकाशिताः मन्त्रास्तु पञ्चमश्रेण्यन्तर्गता विज्ञातव्याः। पुराणतन्त्रादीनामनेकशाखापल्लवसंयुक्ता मन्त्राश्चापि पञ्चमश्रेणिगा सन्ति। एवं किल पञ्चविधशक्तिसम्पन्ना मन्त्रा वेदेषु च प्रतिपादिताः समुपलभ्यन्ते। एतदतिरिक्तमपि मन्त्राणां श्रेणीद्वयमास्ते। तच्च लौकिकम्। प्रथमस्तु तादृशो लौकिको मन्त्रो यः किल साम्प्रदायिकोपासनामन्त्रनाम्ना विख्यातः। एष किल शक्तिशालिभिर्भक्तोपासकैः स्वकीयोपासनाबलेन प्राकट्यं नीतः। द्वितीयस्तु सोऽस्ति यः किल विविधलौकिकबाधोपशमनाय तपस्विभिर्निजतपस्यया यथासमयं प्रकाशितः॥ ३२॥

तन्महत्त्वं प्रतिपाद्यते—

**चतुर्वर्गफलदोऽसौ॥ ३३॥**

असौ मन्त्रश्चतुर्वर्गाणां धर्मार्थकाममोक्षाणां फलमपि दातुं समर्थः। स्थूलमिदं जगत् दैवराज्याश्रितमास्ते। सुसिद्धैर्यैर्मन्त्रैर्देवेषु राज्येष्वाधिपत्यं स्थाप्यते तद्द्वारा चतुर्वर्गफलाधिगमो नास्त्यसम्भवः। कर्मफलदातॄणां देवानां प्रसादको मन्त्रः कामार्थधर्ममोक्षप्राप्तिसहायक इत्यत्र कः सन्देहः? कामार्थफलदातृत्वं तु देवाधीनमेव। यतः कर्मफलप्रेरका देवा इति प्रागेव सुनिर्णीतम्। मन्त्रशक्तिमतिस्तु प्राणमनोविज्ञानानन्दमयकोषान् समश्नुत इत्यप्युपरि निर्णीतमेव। अतो मन्त्रेण विक्षेपावरणे दूरीकुर्वता धर्ममोक्षावपि दीयते इत्यत्र न मनागपि संशीतिलेशः। मनः पवित्रयन् त्रायमाणश्च मन्त्रः सत्वगुणमुत्पादयन् कामार्थधर्ममोक्षाख्यचतुर्वर्गफलप्रदो नूनमेव भवितुमर्हति॥ ३३॥

तन्महत्त्वान्तरमाचष्टे—

**देवदर्शको वाच्यवाचकसम्बन्धात्॥ ३४॥**

वाच्यश्च वाचकश्च तयोः सम्बन्धात् मन्त्रो देवदर्शकोऽपि विधत्ते। यथा वाच्यवाचकसम्बन्धसत्वात् समाहूतः कोऽपि मानवः प्रश्नानामुत्तरं ददाति निकटस्थो वा जायते तथैव येन वाक्यस्वरूपाधिदैवेन

यस्य वाचकमन्त्रस्य सम्बन्धः स नित्यो वा स्यात् तपस्यादिना नैमित्तिको वा भवेत्; मन्त्रस्य योगयुक्तमानसोपांशुवाचनिकजपेन नूनमेव सूक्ष्मातिसूक्ष्मकोषावलम्बनेन स खलु तेषु तेषु देवलोकेषु समुपसर्पन् देवाह्वाने समर्थो बोभवीति ॥ ३४ ॥

अन्यप्रकारेणापि तन्महिमानं व्यनक्ति—

**स्थूलदैवजगत्सम्बन्धकृत् चक्रपीठोत्पादकत्वात् ॥ ३५ ॥**

चक्रपीठस्योत्पादकत्वान्मन्त्रोऽसौ स्थूलस्य जगतो दैवेन जगता सह सम्बन्धं च करोति। पीठसम्बन्धे पूर्वं बहुवर्णितमास्ते, पीठोत्पादकचक्रविषये भगवान् शिवः पितॄनुद्दिश्य प्रोवाच तथाहि—

स्वाभाविक्यस्वभावा वा पीठस्योत्पादनाय या।
विधीयते क्रिया सम्यक् सत्सुकौशलपूरिता ॥
चक्रं तदेव सम्प्राहुर्योगतत्त्वविशारदाः।
नात्र कश्चन सन्देहो विद्यते विश्वभूतिदाः ॥
अनेकभेदसत्त्वेऽपि चक्रञ्चास्ते चतुर्विधम्।
आवागमनचक्रादि तत्राद्यं सहजं जगुः ॥
द्वितीयं कीर्त्तितं चक्रं तद्वद्ब्रह्माण्डनामकम्।
ग्रहोपग्रहमादीनामधिकारस्थितिर्यथा ॥
ज्ञेयं स्वाभाविकं चक्रमेतद् द्वयमसंशयम्।
सगर्भं स्यात् तृतीयं तद् ब्रह्मचक्रादिकं यथा ॥
अगर्भनामकं चक्रं चतुर्थं समुदाहृतम्।
तन्त्रशुद्धया क्रियाशुद्धया रहितं चैव यद् भवेत् ॥
इति वः कीर्त्तितं चक्ररहस्यं परमाद्भुतम्।
याथार्थ्यानुष्ठितं चक्रं सगर्भं मुक्तिदं भवेत् ॥
अगर्भं पितरः ! तद्वन्नूनमभ्युदयप्रदम्।
परन्त्वेवं विधायां हि दशायां चक्रसाधकैः ॥
भवितव्यं ध्रुवं सम्यगवश्यं मत्परायणैः।
एतच्चक्रद्वयं जीवैः सत् सुकौशलपूर्णया ॥
क्रिययाऽनुष्ठितं यस्मादतोऽस्वाभाविकं जगुः।
उत्तरोत्तरमुक्तासु सप्तसु ज्ञानभूमिषु ॥
क्रमारोहणकृत्यैव जायते पितरो ध्रुवम्।
आवागमनचक्रस्याध्यात्मशुद्धिर्न संशयः ॥
वर्णाश्रमाख्यधर्माणां स्वाधिकारानुसारतः।
जायते पालनेनास्य शुद्धिः खल्वाधिदैविकी।
पितरो वो दयालब्ध्या शुद्धया शोणितशुक्रयोः ॥
सहजस्यापि पीठस्य क्रमोन्नत्या निरन्तरम्।
आधिभौतिकशुद्धिर्हि नूनमस्य प्रजायते ॥
चक्रेमेतद्भवन्तो हि कर्त्तुमुन्नामि सत्वरम्।
सन्ति चक्रेश्वरा नूनं स्मरणीयं सदेति वः ॥
एवं सर्वेषु चक्रेषु शुद्धित्रैविध्यमुत्तमम्।
आवश्यकं भवत्येव नात्र कार्या विचारणा ॥

उपर्युक्त चक्रविज्ञानप्रमाणद्वारा चक्रस्य तात्पर्यं सुस्पष्टमेव। पीठविज्ञानमपि सुस्पष्टीकृतम्। मन्त्रस्यासाधारणशक्तिर्हि पीठोत्पत्तौ चक्रस्थापने च साहाय्यं विदधाति। प्राणमये कोषे मनोमयकोषस्याधिपत्ये जाते मन्त्रसिद्धिं द्वारीकृत्य पीठोत्पत्तौ यथा मन्त्रशक्तिः कार्यकारिणी तथैव चक्रप्राकट्येऽपि। यतः चक्रे चक्रस्थितसाधक समवेतमनःशक्तिरेव कार्यं विदधाति। उपासनाचक्रे चक्रस्थितैः सर्वैरेवोपासकैः समानध्यानसंकल्पैर्भूत्वा मन्त्रजपः क्रियते। तदानीं मन्त्रशक्तिरियं चक्रस्थितसर्वसाधकानामन्तःकरणेषु दैवीं शक्तिमेकामेव सञ्चारयति, चक्रसहायिका सती चक्रसाफल्येन साकं चक्रं पीठरूपेणापि परिणमयति। गम्भीरस्यास्याधिदैवविज्ञानवर्णनेन पीठचक्रसम्बन्धिनी मन्त्रस्योपकारिता सिध्यति। चक्रपीठोत्पत्तौ साहाय्यकरत्वान्मन्त्रः किल स्थूलेन मृत्युलोकेन सह सूक्ष्मस्य दैवलोकस्य सम्बन्धं विधत्ते ॥ ३५ ॥

महत्वान्तरमाख्याति—

## सात्त्विकचक्रपीठे मोक्षदे ॥ ३६ ॥

चक्रं च पीठं च ते चक्रपीठे सात्त्विके ते मोक्षप्रदे भवतः। यथा सांसारिकाणि सर्वाण्यपि वस्तूनि सत्त्व-रजस्तमो भेदेन त्रिविधानि भवन्ति तथैव चक्रपीठे अपि विज्ञातव्ये। किन्तूपासनासम्बन्धेन चक्रपीठे सात्त्विके भवतः। उपासनायाश्चरमलक्ष्ये भगवत्प्राप्ति-रेव। चतुर्विधभक्तानां वर्णनं पूर्वमुक्तम्। भक्ताश्च चतुर्विधा भवन्ति। त्रिगुणमनुसृत्य त्रयः, गुणातीतश्च चतुर्थः। तथैवोपासनाऽपि चतुर्विधा गुणत्रयानुसारेण तिस्रः गुणातीता चतुर्थी। भूतप्रेतासुरादि कृपाप्राप्त्यर्थं या ह्युपासना, सा तामसिकी विज्ञेया, देवतादीनां सकामोपासना राजसिकी, ईश्वरस्य सकामोपासना सात्त्विकी, निष्कामभक्तस्य ब्रह्मेश्वरोपासना जगत्कल्या-णबुद्धया वा समनुष्ठीयमाना गुणातीता गीयते। एवं हि संकल्पमनुसृत्य पीठस्योत्पत्तिः चक्रस्य स्थापनम-प्यवगन्तव्यम्। अतएव कारणात् पीठकर्त्तुः चक्रेश्वरस्य चाधिकारमनुसृत्य पीठे चक्रे च तादृश्येव शक्ति-रुत्पद्यते।

विज्ञानमेतदुदाहृत्याऽवधेयं यद् यदि शूद्रप्रति-ष्ठितां मूर्त्तिः ब्राह्मणः कश्चित् प्रणमेदुपासीत चेत् तर्हि तत्पीठस्य तद्ब्राह्मणस्यापि क्षतिः सम्भवा। यतः शूद्र-प्रतिष्ठितमूर्त्तौ शूद्रस्य तामसिकी शक्तिर्निहिता तिष्ठति। अतः शूद्रद्वारा देवमन्दिरप्रतिमा ब्राह्मणेन नोपास्या। अस्तु। गुणतीतनिष्कामभावेन यत पीठमुत्पद्यते, तत्पीठं किंवा ब्रह्मज्ञानी महापुरुषो यत्र चक्रेश्वरस्तच्चक्रं च ध्रुवमेव निःश्रेयसप्रदं भवितुमर्हति। यथा काशीमरणं साक्षान्मुक्तिकारणम्, यथा च जीवन्मुक्तमहापुरुषसंगः परम्परया साक्षाद्रूपेण च मोक्षनिदानम्, यथा वा उपनिषद्गीताप्रभृतिमोक्षशास्त्रश्रवण-मनननिदिध्यासनतः निःश्रेयसाधिगमस्तथैव सर्वश्रेष्ठं पीठं चक्रं मुक्ति-प्रदे स्तः॥ ३६॥

उभयोरेकश्रेणिफलोत्पादकत्वं निरूप्यते—

## कारणमेकमन्यस्य ॥ ३७ ॥

स्पष्टोऽर्थः। यद्यपि केनाप्यलौकिकेनोपायेनापि विभिन्नरूपतः पीठमुत्पद्यते; परन्तु चक्रपीठोत्पत्तेरेकं प्रधानं कारणमास्ते। सहजपीठोत्पादने नास्ति चक्रस्या-वश्यकता। शक्तिशाली उपासकः, मन्त्रः, क्रियाकुशलः पुरोहितश्च चक्रमन्तरेणापि पीठमुत्पादयितुं प्रभवो भवन्ति, तथाप्येतदभ्युपगन्तव्यमेव यत् चक्रसमवेता-धिदैवशक्तिं द्वारीकृत्य पीठोत्पत्तिरवश्यम्भाविनी। योग्यश्चक्रेश्वरो यदि उपासकान् सार्धमादाय उत्तमेषु देशकालेषु शुद्धेन मनसा स्थिरलक्ष्यो दृढसंकल्पश्च चक्रानुष्ठानं कुर्यात् तर्हि द्रुतमेव पीठमाविर्भवेत्। सुतरां पीठकारणं चक्रमिति स्वीकर्त्तव्यमेव। अन्यच्च चक्रोपकारिताविषये विज्ञानमेतन्नूनमेवावधारणीयम् विधिपूर्वकचक्रानुष्ठानेन नूनमेव पीठमुत्पद्यते। साधा-रणमानवद्वारा व्यक्तिगतरूपेण पीठोत्पत्तिचेष्टा न तथा साफल्याधायिका। द्वितीयतः तीर्थादौ तु नित्य-चक्रस्थितिहेतोरधिदैवशक्तिः समानरूपेण नित्या तिष्ठति। तृतीयतः केवलं विधिज्ञोऽप्येकः कश्चित्पुमान् श्रेष्ठं पीठमुत्पादयितुं न तथा साफल्यमधिगच्छति, यथा विधिज्ञेन चक्रेश्वरेण सफलता अधिगम्यते॥ ३७॥

मन्त्ररहस्यं प्रोच्य ध्यानसिद्धये प्रतिपाद्यते—

## ब्रह्मणोऽधिदैवाधिभूतरूपं तटस्थवेद्यम् ॥ ३८ ॥

ब्रह्मणो यदधिदैवमीश्वररूपमधिभूतं च विराड्रूप-मेतद् द्वयमपि तटस्थवेद्यमास्ते। यद्यप्येतत् विज्ञानं पूर्वमपि प्रतिपादितम्, किन्तु ब्रह्मध्यानसिद्धये सविस्तरं पुनः प्रतिपाद्यते यत् ब्रह्मज्ञो महात्मा ब्रह्मेशविराड्-

रूपैस्त्रिभिर्यद् ब्रह्मदर्शनं विदधाति, तेषु ब्रह्मणो हीश्वर-रूपमधिदैवमधिभूतं विराड्रूपं च तटस्थवेद्यमवगन्तव्यम्। एतद्द्वयमपि तटस्थज्ञानसाहाय्येन ध्येयमस्ति। मुमुक्षुभिः श्रीगुरुदेवसाहाय्येन तटस्थज्ञानमवलम्ब्य ईश्वरो विराट् च ध्येयाविति मुमुक्षुगणसाहाय्यतायै सूत्रकारो महर्षिः सूत्रमिदमाह ॥ ३८ ॥

### स्वरूपेण तदध्यात्मरूपम् ॥ ३९ ॥

तस्य ब्रह्मणः गुणातीतमध्यात्मरूपं तु स्वरूपज्ञानवेद्य' विद्यते। तटस्थज्ञाने ज्ञातृज्ञानज्ञेयरूपत्रिपुटीविद्यमानता तिष्ठति। त्रिपुटीयुक्तज्ञानचक्षुषा ईश्वराख्यामधिदैव-रूपमधिभूतस्वरूपं विराड्रूपं च द्रष्टुं शक्यते। यतो रूपद्वयमिदं गुणसापेक्ष्यं द्वैतभावयुक्तं च, परन्तु निर्गुणमद्वितीयमध्यात्मरूपं तु स्वरूपज्ञानविज्ञेयमस्ति। स्वरूपज्ञानं किल ज्ञातृज्ञानज्ञेयाख्यत्रिपुटी विहीनमास्ते। तटस्थज्ञानेनाध्यात्मस्वरूपस्यैतस्य केवलं परोक्षज्ञानं सम्भवति। परन्तु तस्यापरोक्षज्ञानं तु केवलं स्वरूपज्ञानेनैव सम्भवम्। अस्मादेव हेतोरद्वितीयं ब्रह्मस्वरूपतटस्थाभ्यामुभाभ्यां वेद्यमित्युक्तम्, पूर्वोक्तं वर्णनद्वैविध्यं ज्ञानाधिगमाय साम्प्रतिके तु ध्यानसिद्धय इति द्विरुक्तिरवधेया। वस्तुतो यदि तटस्थज्ञानावलम्बनेन ईशविराड्ध्यानानुष्ठानप्रयत्नः क्रियेत, निर्विकल्पसमाधियुक्तेन स्वरूपज्ञानेन च ब्रह्मध्यानानुष्ठानप्रयत्नो विधीयते चेत् तर्हि तदानीमेव मोक्षमार्गः सुलभः स्यात् नान्यथा। शंकते—तटस्थज्ञानसाध्ययोरीशविराड्ध्यानयोः कथंकारं चोचिताध्यर्यम् ? साधनराज्येन सह ब्रह्मध्यानस्य सम्बन्धोऽस्ति नास्ति वा ? समाधत्ते—ईशध्यानसिद्धये प्रकृतेर्व्यक्तावस्थायास्तदीक्षणस्य च स्वकीय ज्ञाननेत्रेण ध्यानमनुष्ठेयम्। विराड्ध्यानविषये प्राकृतिको ह्यनाद्यनन्तसृष्टिवैभवोऽप्यवध्येय आस्ते। अद्वैतभावमयं ब्रह्मध्यानं तु स्वरूपज्ञानसाहाय्येन ईशविराड्ध्यानसिद्धेरनन्तरं श्रीजगद्गुरुकृपाबलेनानुष्ठेयमस्ति। विराड्ध्याने प्राकृतिकानाद्यनन्तवैभवेक्षणधारणा तिष्ठति। धारणया ध्यानस्य ध्यानेन च समाधेः सिद्धिरिति ॥ ३९ ॥

मुक्तिपदाधिगतेः प्रधानमवलम्बनमाह—

### कृतकृत्यता प्रकृतिगुणपुरुषभावदर्शनात् ॥ ४० ॥

प्रकृतिगुणानां पुरुषस्तभावदर्शनेन कृतार्थता विद्यते। मुमुक्षुर्यदा कर्मोपासना ज्ञानयज्ञानुष्ठानेन यथाक्रमं मलविक्षेपावरणहानं विधत्ते तदानीं भाग्यवति साधके तत्र प्रतिक्षणं प्रकृतिपुरुषगुणभावयोः पृथग् दर्शनशक्तिः स्वत एव समुत्पद्यते। सुतरां साधकस्तदैव सिद्धिभूमावग्रेसरति कृतकृत्यतामेति च यदाऽसौ तत्त्वज्ञानसाहाय्येन सर्वदैव प्रकृतिपुरुषयोः स्वतन्त्र सत्तां पश्यति प्रत्येक दृश्य पदार्थे च त्रिगुणत्रिभावानुभवं कर्त्तुं च पारयति। दृश्यस्य प्रत्येकक्रिया त्रिषु गुणेषु कस्य गुणस्य विद्यते, अध्यात्माधिदैवाधिभूतभावेषु कस्य भावस्य प्राधान्यं प्रत्येकदृश्ये तिष्ठतीति दर्शनयोग्यतायामुदीयमानायां सत्यामेव तत्त्वज्ञानी कृतकृत्यतां लभते ॥ ४० ॥

ध्यानसिद्धेरुपायं वर्णयित्वा समाधिसिद्धेरुपायं व्यक्ति—

### ध्यानेन सविकल्पाधिगमः ॥ ४१ ॥

ध्यानेन सविकल्पस्य समाधेरधिगमो जायते। समाधेर्ध्यानमेवेदमेकमात्रं तु कारणमित्युक्तेः। ध्यानसाधनेन क्रमशो यथायथा साधको ध्यातृध्यानध्येयाख्य त्रिपुट्याः संकोचं करोति, तथातथा समाधिभूमावग्रेसरति। धारणाभूमौ मलस्य, ध्यानभूमौ विक्षेपस्य समाधिभूमौ चावरणस्य नाशो जायते। धारणासिद्धया साधको यदाऽन्ताराज्ये तिष्ठति, तदानीं तत्र

स्थूलस्य वाह्यराज्यस्य प्रभावो निपतति । मलस्य सम्बन्धः केवलेन स्थूलेनैव शरीरेण भवति, अतः स्थूलराज्यसम्बन्धः शिथिलायते, तत्सम्बन्धोऽपि शैथिल्यमापद्यते । ततश्च ध्यानसिद्धया साधकेन चित्तवृत्तिनिरोधे कृते, मनोमयकोपाधिपत्यं स्थापयितुः साधकस्य मनोमलरूपे विक्षेपोऽपि विनाशमुपगच्छति । अन्ते च कृतकृत्यः साधकः समाधिभूमौ साफल्यमनुतिष्ठति, तदा तदन्तकरणावरणनाशपूर्वकं त्रिपुटीनाशेन तस्य बुद्धिः शुद्धा जायते । इयमेवावरणविरहित समाधिदशा बोध्या ॥ ४१ ॥

निर्विकल्पसमाधिसिद्धिहेतुं निर्दिशति—

**निर्विकल्पः सविकल्पलयात् ॥ ४२ ॥**

सविकल्पस्य समाधेर्विलयत् निर्विकल्पः समाधिरुदेति । योगाचार्यैर्वितर्क-विचार-आनन्दअस्मितानुगतश्चेति सविकल्पसमाधेश्चतस्रो दशाः समुपवर्णिताः। ध्यानावस्थारूपायास्त्रिपुट्या विलये जाते आत्मस्वरूपसम्बन्धे यदा वितर्कस्तिष्ठति तदा प्रथमादशा वेद्या, विचारे स्थिते सति द्वितीयाऽवस्था बोध्या, कैवल्ये विद्यमाने तृतीया दशा ज्ञातव्या । अस्मितायाा अनुभवेन चतुर्थी दशा विज्ञेया । एताश्चतस्रोऽवस्था उत्तरोत्तरमभ्यर्हिताः सन्ति । आत्मज्ञानपरिपूर्णतया अस्मितायाः सर्वथा विनाशेनाद्वितीयात्मसत्तामात्रावशेषे निर्विकल्पः समाधिरुदेति । निर्विकल्पसमाधिविषये शास्त्रेष्वेवमुपलभ्यते—

समाधिः शाश्वतीं मुक्तिं निर्विकल्पस्तु यच्छति ।
अतो वदन्ति विद्वांसो योगतत्त्वानुचिन्तकाः ॥
निर्वीजं निर्विकल्पं तु सविकल्पं सवीजकम् ।
शुक्लगत्या यया लभ्य ऊर्द्ध्वलोकव्रजोऽखिलः ॥
सैव शुक्लागतिर्देवा एति तेषामधीनताम् ।
सविकल्पसमाधौ ये तस्थिवांसो हि योगिनः ॥
जीवन्मुक्ताः पराभक्ता ज्ञानिनः सहजां गताः ।
प्रभवन्त्याधिकर्त्तुं मे समाधिं निर्विकल्पकम् ॥
स्वदेहं नीचगेहं ते जह्युर्वा जाह्नवीतटे ।
विभ्रद्देहा विदेहा वा मामेव प्राप्नुवन्ति ते ॥
निर्विकल्पसमाधिस्थैर्योगिराजैः सहास्ति मे ।
काचिद् विभिन्नता नैव सत्यमेतद् ब्रवीमि वः ॥४२॥

प्रसङ्गतः संयमविज्ञानं वर्ण्यते—

**धारणाजत्वात्संयमः समाध्युपसर्गः सिद्धिहेतुर्व्युत्थानानुकूलश्च ॥ ४३ ॥**

संयमः किल धारणया प्रादुर्भूतः, समाधेः उपसर्गः निर्विकल्पस्य समाधेर्विघ्नकारकः, सिद्धीनां हेतुभूतो व्युत्थानस्यानुकूलश्च वेद्यः । संयम एकतत्वं चेति द्वयं समाधिभूमौ विवेच्यमास्ते ।

तत्र प्रथमस्य संमयस्य वर्णनमत्र सूत्रे क्रियते द्वितीयस्याग्रिमसूत्रे वक्ष्यते । धारणाभूमौ संयमः समुदेति । स च सविकल्पसमाधौ स्वीयं कार्यमनुष्ठाय विलयमेति । संयमबलेन बहुविधा अलौकिक्यः सिद्धयोऽधिगम्यते । अतोऽयं निर्विकल्पस्य समाधेरन्तरायः । यतः सर्वा अपि सिद्धयो विषयतो नातिरिच्यन्ते । संयमविषये शास्त्रेष्वेवमाह—

त्रयं हि धारणाध्यानसमाधीति क्रियात्मकम् ।
दश्याज्ञयात् प्रयुक्तं सन्निर्जराः ! संयमो भवेत् ॥
प्रोत्सेधयति जीवेषु नानाशक्तिर्हि संयमः ।
ऐशी नैवात्र सन्देहो नाऽलं मोचयितुं त्वसौ ॥
अविद्या पाशसंनद्धाञ्जीवांस्तान् पाशबन्धनात् ।
साधनं संयमोपेतं योगस्याभ्युदयप्रदम् ॥

"त्रयमेकत्र संयमः" इति पातञ्जल योगदर्शने अप्याह । लौकिकालौकिकभेदेन दैविध्यमैश्वर्यस्य । धनजनपृथ्वीरत्नादि लौकिकम् , अणिमादि चालौकिक-

मैश्वर्यमवधेयम् । अध्यात्माधिदैवाधिभूतसहजाख्यानामलौकिकसिद्धीनां वर्णनमैश्वर्यप्रकरणे समनुष्ठितमेव । संयमशक्तिं द्वारीकृत्य अलौकिकमैश्वर्यसौविध्येनाधिगम्यते । ऐश्वर्यसमूहोऽपि विषयान्तर्गतत्वान्मुक्तेः परिपन्थी बन्धनकारणं च । सिद्धयो वासनाप्रसूताः । अतः संयमोऽपि व्युत्थानसंस्कारमूलकः । समुन्नतोऽपि चित्तवृत्तिनिरोधकरो योगिराजोऽपि संयमप्रवृत्तश्चेत् तर्हि तदीयं चित्तं व्युत्थानदशां प्राप्नोति, अतो ह्यलौकिकभोगशक्तिप्रदोऽपि संयमो निर्विकल्पसमाधिविघ्नकारको मुक्तिपरिपन्थी बहुशश्च विषयाकारव्युत्थानदशाप्रापकश्चेति ॥ ४३ ॥

समाधिसाफल्यायैकतत्त्वविज्ञानं निर्वक्ति—

**ध्यानभूमिप्रसूतमेकतत्त्वं स्वरूपप्रकाशकं निरोधपरिणामानुकूलं च ॥ ४४ ॥**

एकतत्त्वं किल ध्यानभूमिप्रसूतं स्वरूपस्य प्रकाशकं निरोधपरिणामस्यानुकूलं च विज्ञेयम् । एकतत्त्वं द्वारीकृत्यैव सविकल्पसमाधिविघ्नो निरस्यते, निर्विकल्पः समाधिरधिगम्यते । एकतत्त्वविषये योगशास्त्रे प्रतिपादितमपि, तथाहि—

ध्यानभूम्यास्तु भो देवाः ! एकतत्त्वं प्रजायते ।
यदा त्वात्मानमुद्दिश्य त्रयमेतत् प्रयुज्यते ॥
एकतत्त्वं तदोदेति ह्येषा वैदान्तिकी श्रुतिः ।
एकतत्त्वं तु शक्नोति भक्तान् दृश्यप्रपञ्चतः ॥
दृढादाकृष्य तेभ्यो हि शिवत्वं दातुमद्भुतम् ।
केवलं त्वेकतत्वस्य साहाय्यात् साध्यते तु यत् ॥
साधनं तद्धि योगस्य निःश्रेयसकरं ध्रुवम् ॥

एकतत्त्वं किल नैव केवलं संयमप्रसूतालौकिकैश्वर्यपाशतो विमोचयति, लौकिकैश्वर्यतोऽपि परिरक्षति बहुविधयोगप्रत्यूहानपि निरस्यति । उक्तं च योगाचार्येण महर्षि पतञ्जलिना—

"तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः" इति । व्याधि-स्त्यान–संशय–प्रमाद-आलस्य–अविरति-भ्रान्तिदर्शन–अलब्धभूमिकत्व-श्वासप्रश्वासादीनां सविस्तरं वर्णनं योगदर्शने निभालनीयम् । एतादृशान्तराय विनाश एकतत्त्वेन सम्पद्यते । मुक्तिमार्गश्च सरलीभवति । निरोधपरिणामाधिगमश्च जायते, चित्तवृत्तिविलयपूर्वकं स्वस्वरूपप्रकाशश्च बोभूयते, अत एकतत्त्वे साधकस्य लक्ष्यं नितान्तमावश्यकम् ॥ ४४ ॥

विशिष्टं महत्त्वमुपवर्णयति—

**ब्रह्मानन्दमूलमेकतत्त्वम् ॥ ४५ ॥**

एकतत्त्वं हि ब्रह्मानन्दस्य मूलमवधेयम् । एकतत्त्वमन्तरेण भक्तियोगेन ज्ञानयोगेन च ब्रह्मानन्दप्राप्तिर्न सम्भवा । पराभक्तिर्वा ब्रह्मसद्भावो वा एकमेव वस्त्विति प्रागेव सिद्धान्तितम् । भक्तियोगस्य पराभक्तिः, ज्ञानयोगस्य च ब्रह्मसद्भावश्चेति द्वयमप्येकं पदं लक्ष्यीकृत्य विभिन्नरूपतोऽभिहितम् । पराभक्तिलक्षणं सविस्तरमुक्तपूर्वम् । मुक्तिदायिनी पराभक्तिस्तदैवाधिगम्यते यदा भाग्यवान् भक्तशिरोमणिर्भगवद्भावव्यतिरिक्तं न किञ्चिदन्यन्मनसि धारयेत् । केवलमेकतत्त्वाश्रयेणैव दशेयमुपलभ्यते ॥ ४५ ॥

इदानीं तद्विरोधीभावो वर्ण्यते—

**परिणामो दुःखमूलम् ॥ ४६ ॥**

परिणामश्चित्तस्य दुःखहेतुरित्यर्थः । विरुद्धभावप्रदर्शनं विना न कोऽपि विषयः समुचितरूपेणावगन्तुं शक्यते । रात्रेः स्वरूपज्ञानं विना दिनस्य स्वरूपावधारणं न सम्भवति । बन्धनदशाज्ञानं विना मुक्तिस्वरूपज्ञानमपि न सम्भवम् । एवं किल परिणामदशाज्ञानमन्तरेणैकतत्त्वज्ञानं नावधारयितुं पार्यते । अतो मुक्तिपथसरलता सम्पादनाय एकतत्वावधारणाय च

पूज्यपादो महर्षिः सूत्रकारः सूत्रमेतद् व्याजहार। यद्यपि प्राणायामप्रत्याहारादि साधनेन चित्तवृत्तिनिरोधः सम्भवति, तेन च समाधिरुदेति, किन्तु निर्विकल्पसमाधिमूलकपराभक्तिदशाधिगमात् पूर्वं योगमार्गो वा भक्तिमार्गो वा प्राणायामादि साधनानि वा वैधाभक्तिसाधनानि वा सर्वाण्यप्येतानि चित्तपरिणामदशारूपविघ्नसमुत्पत्तिं नैव निवारयितुं प्रभवन्ति। दृश्यस्य सर्वमप्यङ्गं प्रत्यङ्गं च प्रकृतेस्त्रैगुण्यात् त्रिगुणात्मकमेव; अतो गुणत्रयमनुसृत्य सर्वदैव चित्तपरिणतिः स्वतःसिद्धा। यत्र परिणामस्तत्र चाञ्चल्याज्ञानयोः सत्ता अवश्यम्भाविनी। अतः परिणामदशा दुःखमूलिकेत्यत्र न सन्देहलेशः। अतः परिणामं दुःखमूलकमवधार्य साधकेन सदैवैकतत्त्वस्य ब्रह्मानन्दमूलकस्याभ्यासो विधेय एवेति ॥ ४६ ॥

प्रसङ्गतो ध्यानभेदमाह—

## योगध्यानं चतुर्विधमधिकारिभेदात् ॥४७॥

अधिकारिणां भेदात् योगध्यानस्य चतुर्विधत्वमभ्युपगन्तव्यम्। पराभक्तिमूलकनिर्विकल्पसमाधिप्राप्तिमन्तरेण निःश्रेयसलाभो न सम्भवः। ध्यानसिद्धिं विना समाधिसिद्धिरपि न सम्भवा। अतो ध्यानस्य सुविस्तृतरूपमवगन्तुं ध्यानभेदमहामन्त्र-हठ-लय-राजयोगानुसारतो ध्यानमपि चतुर्विधमास्ते। मन्त्रयोगमनुसृत्य स्थूलध्यानम्, हठयोगमनुसृत्य ज्योतिर्ध्यानम्, लययोगानुसारेण विन्दुध्यानम्, राजयोगानुसारतश्च ब्रह्मध्यानं योगाचार्यैः समुपवर्णितमास्ते। मन्त्रयोगः किल नामरूपात्मकं साधनम्। अतोऽत्र पञ्चानां सगुणब्रह्मस्वरूपाणां पञ्चस्थूलध्यानविधिर्दर्शिता। हठयोगः किल स्थूलशरीरतः सूक्ष्मे शरीरे ह्याधिपत्यं स्थापयितुमुपायं दर्शयति। अतोऽत्रापेक्षाकृतसूक्ष्मभावात्मकज्योतिर्ध्यानविधिर्निर्णीतः। लययोगो व्यष्टिसमष्टिविज्ञानात्मकः। अतस्तत्र ब्रह्मशक्तिकुण्डलिनीध्यानरूपस्य विन्दुध्यानस्य विधिरभिहितः। राजयोगस्तु केवलं विचारमूलकः। अतोऽत्र केवलज्ञाननेत्रदर्शनीयस्य ब्रह्मध्यानस्य विधिरुपदिष्टः। एतेषां चतुर्विधानां ध्यानानामपि विषये स्मृतिः प्रोवाच—

मन्त्रयोगो हठश्चैव लययोगः पृथक् पृथक्।
स्थूलं ज्योतिस्तथा सूक्ष्मं ध्यानं तु त्रिविधं विदुः ॥
स्थूलं मूर्त्तिमयं प्रोक्तं ज्योतिस्तेजोमयं भवेत्।
विन्दु बिन्दुमयं प्रोक्तं कुण्डली परदेवता ॥
स्थूलं ध्यानं तु मन्त्रस्य त्रिविधं परिकीर्त्तितम्।
उपासनां च त्रिविधामनुसृत्य महर्षिभिः ॥
राजयोगे न त्रिविधं ध्यानमस्ति हितप्रदम्।
वेदशास्त्रं गुरूणां हि साहाय्याद् ध्यानमाचरन् ॥
ब्रह्मेश्वरं विराडञ्च ज्ञातुं शक्नोति साधकः ॥ ४७ ॥

## समाधिरपि ॥ ४८ ॥

समाधिरपि मन्त्रयोग-हठयोग-लययोग-राजयोगनाम्ना चतुर्विधो भवति। मन्त्रयोगस्य महाभावः, हठयोगस्य महाबोधः, लययोगस्य महालयः, राजयोगस्य च समाधिर्जीवन्मुक्तिरित्यभिधीयते। तदुक्तं योगशास्त्रे—

सर्वेषु प्राणिपुञ्जेषु येषामुत्पद्यते ननु।
ब्रह्मबुद्धिर्महात्मानो जीवन्मुक्त भवन्ति ते ॥
अपरोक्षं ध्रुवं येषां ब्रह्मज्ञानं प्रजायते।
ते महापुरुषा लोके जीवन्मुक्ता न संशयः ॥
साधनंराजयोगस्य धारणाध्यानभूमितः।
आरम्भते समाधिर्हि साधनं तस्य मुख्यतः ॥
समाधिभूमौ प्रथमं वितर्को किं न जायते।
ततो विचारानन्दानुगता तत्परामता ॥
अस्मितानुगता नाम ततोऽवस्था प्रजायते।
समाधिर्मन्त्रयोगस्य महाभाव इतीरितः ॥

हठस्य च महाबोधः समाधिस्तेन सिध्यति ।
महाभावो महाबोधो महालय इति क्रमात् ॥
त्रिधा समाधिर्भवति प्रोक्तमेतन्महर्षिभिः ।
मन्त्रसिद्धया देवतायां विधाय मनसो लयम् ॥
त्रिपुटीनाशतो योगी समाधिमधिगच्छति ।
शरीरतो मनः सम्यगपनीय विजित्य तत् ॥
स्वस्वरूपोपलब्धिर्हि समाधिरिति चोच्यते ।
सलिलं सैन्धवं यद्वत्साम्यं भजति योगतः ॥
तथाऽऽत्ममनसोरैक्यं समाधिरभिधीयते ।
साधनं राजयोगस्य धारणाध्यानभूमितः ॥
आरभ्यते समाधिर्हि साधनं तस्य मुख्यतः ।
समाधिभूमौ प्रथमं वितर्कः किल जायते ॥
ततो विचारानन्दानुगताऽवस्था प्रजायते ।
विशेषलिङ्गं च विशेषलिङ्गं
लिङ्गं तथा लिङ्गमिति प्रभेदात् ।
वदन्ति दृश्यस्य समाधिभूमिं
विवेचनायां पटवो मुनीन्द्राः ॥
हेया अलिङ्गपर्यन्ता ब्रह्माऽहमिति या मतिः ।
निर्विकल्पे समाधौ हि न सा तिष्ठति निश्चितम् ॥४८॥

## स विकल्पास्त्रयो निर्विकल्पोऽन्त्यः ॥ ४९ ॥

त्रयो महाभाव-महाबोध–महालयाख्याः सविकल्पान्तर्गताः । चतुर्थो राजयोगसमाधिस्तु निर्विकल्प इत्युच्यते । अत एव मन्त्र-हठ-लय-योगिनस्त्रयोऽपीमे समाधिसिद्धेरनन्तरं वासनानाशपूर्वकमात्मज्ञानमधिगम्य राजयोगस्य निर्विकल्पसमाधिमाश्रयन्ति ।

आद्यास्त्रयोऽपि समाधयः क्रियासाध्या इति हेतोर्न तेषु स्वरूपज्ञानस्य साक्षात्सम्बन्धः । अत एव राजयोगी किल तत्त्वज्ञानसाहाय्येन मनोनाशं वासनायाः क्षयं चानुतिष्ठन् मलविक्षेपावरणानि विरहय्य स्वरूपज्ञानमासादयति, ततश्चासौ राजयोगी निर्विकल्पं समाधिमाश्रयन् जीवन्मुक्तिपदं प्राप्नोति । तद्भिन्नास्त्रयोऽपि समाधयो हठादनुष्ठीयन्ते । अतस्ते क्रियासाध्यत्वान्न सहजाः स्वाभाविका वा भवन्ति । राजयोगस्य समाधिः किल सहजः स्वाभाविको वा । अतस्तत्र ब्रह्मानन्दमयस्वरूपज्ञानस्य साक्षात्समुदयो जायते ॥ ४९ ॥

षट् पञ्चाशद्विधः सविकल्पानुभवस्त्रिविधा—

## निर्विकल्पधारणा ॥ ५० ॥

सविकल्पसमाधेरनुभव षट्पञ्चाशत्प्रकारकाः बोध्याः, निर्विकल्पस्य तु त्रिविधः प्रकारो विज्ञेयः । सविकल्पः समाधिः किल ज्ञानतोऽज्ञानतोऽपि च जायते । अतस्तस्य विस्ताराधिक्यम् । सविकल्पसमाधेरुच्चावस्था ज्ञानत एव सम्पद्यते । सिद्ध्यादौ संयमेन मन्त्र-हठ-लययोग सिद्धयः पूर्वमेव वर्णिताः । अज्ञानतः सम्पद्यमानस्य समाधेरुदाहृतिर्निम्ननिर्दिष्टा विज्ञेया । शीतर्त्तौ मण्डूकः समाधिस्थो भूत्वा निर्जीवदशायामिव वर्त्तमानः समाधिज्ञानद्वारेणैव पुनर्विबुद्धो भविष्यत्कालीनां वृष्टिं सूचयन् शब्दायते । उद्भिज्ज-स्वेदजाण्डजजरायुजप्राणिनां देशकालपदार्थयथार्थज्ञानादिसविकल्पसमाधिविकाशपरिणामस्वरूपम् । मानवीयो विषयानन्दानुभवो ब्रह्मानन्दानुभवस्यैवान्तर्गत इति पूर्वमेव निर्णीतम् । मनुष्याणां स्वाभाविक सविकल्पसमाधेरुदयेनैव यमनुभवः प्राप्यते कवयः केचन सविकल्पसमाधिसिद्ध्यै वानेकानज्ञातविषयानवगच्छन्ति ।

सप्तानामज्ञानभूमीनां ज्ञानभूमीनां च वर्णनं प्रागेवानुष्ठितम् । एतासां चतुर्दशभेदेषु प्रत्येकस्य वितर्कविचारादिमतभेदेन सविकल्पसमाधेः षट्पञ्चाशद्विधा स्वतैः सिद्धयति । सूक्ष्मदर्शिनो योगिनो विषयममुं सम्यगवधारयन्ति । सविकल्पस्य सर्वेऽपि भेदा मानवै-

रनुभूयन्ते। अन्यच्च ब्रह्मेशविराट्सम्बन्धेन धारणा त्रिधा विभिद्यते। सविकल्पसमाधौ भेदकल्पना। यतस्तत्र सविकल्परूपस्य द्वैतस्य नाममात्रस्थितिः। किन्तु निर्विकल्पसमाधौ ध्यानस्याद्वैतभावविरहितकल्पना नैव भवितुं शक्नोति। परन्तु धारणाभेदस्त्वावश्यकः। यतो धारणा किलान्तःकरणेन साक्षात्सम्बद्धा विशिष्टा वृत्तिरवधेया। अतो हि समाधिसिद्धये पूर्वत एव प्राप्ताया धारणाया अवशिष्टाः संस्कारा भर्जितबीजवत् तिष्ठन्ति। अतस्तदनुसारेणेदमभ्युपगन्तुं शक्यते यन्निर्विकल्पसमाधिधारणा ब्रह्मणस्त्रिविधभावमनुसृत्य त्रिविधा विज्ञातव्या॥ ५०॥

प्रसङ्गतो ह्यानन्दमहत्त्वमुदीर्यते—

## आनन्दः सर्वहितकरो व्यापकत्वात्॥५१॥

आनन्दः सर्वेषां हितकरो हितसाधको भवति, कुतो व्यापकत्वात्। भक्तियोगमयं उपासनाप्रधानं दर्शनशास्त्रमेतदानन्दस्यैव प्राधान्यमङ्गीकुरुते। पूर्वमेव सिद्धान्तितमिदं यत् आनन्दः स्वयं नानुभूयते। तदर्थं द्वैतापेक्षा। यथा द्वैतं विरहय्य विषयानन्दो नानुभूयते तथैव ब्रह्मानन्दोऽपि सच्चित्साहाय्यमन्तरेण नानुभूयते। अस्ति भाति स्वरूपयोः सच्चिदोः संयोगं विना नानुभवितुं शक्यते ब्रह्मानन्दः। अतो ह्येकतो विषयानन्दो विषयेषु व्यापकः, अन्यच्च ब्रह्मानन्दः सच्चिदो व्यापकः, अत एतदभ्युपगन्तव्यमेव यत् आनन्दस्य व्यापकत्वमवश्यम्भावि। यदि हि आनन्दो भगवत्स्वरूपः, सर्वव्यापकः, शान्तिनिकेतनम्, यदि चानन्दरूपिणी मन्दाकिनी भक्तितरङ्गमुद्भावयन्ती ब्रह्मसमुद्रे विलीयते, यदि वा आनन्दः सर्वव्यापकस्तर्ह्यसौ सर्वहितसाधक इत्यत्र कः सन्देहः। आनन्दे पूर्वोक्तगुणानां सत्वेऽपि यद्यसौ सर्वव्यापको न भवेत् तर्हि सर्वहितकरोऽपि न स्यात्॥ ५१॥

विज्ञानं पुनः परिपोषयति—

## ज्ञानं विज्ञानमयत्वात्॥ ५२॥

आनन्दस्य सर्वहितकारित्वविज्ञानं यद्यपि पूर्वसूत्रे सम्यग् विवेचितम्, तथापि विज्ञानस्य विशेषपरिपुष्टये सूत्रकारेण महर्षिणा सूत्रमिदमाविष्कृतम्। येन पुनः शङ्कावसर एव नोदेतुं शक्नुयात्। यथा स्वरूपभेदमनुसृत्य स्वरूपज्ञानं च प्रागुक्तम्, तथैव ज्ञानस्य कार्यकारिण्याः शक्तेरनुसारेण द्विविधो भेदः पूज्यपादैर्महर्षिभिरुपवर्णितः। बहिर्जगत्सम्बद्धं ज्ञानमन्तर्जगत्सम्बन्धनिबन्धनं विज्ञानं चेति। साधारणस्वरूपं ज्ञानम्, विशिष्टं ज्ञानं विज्ञानमिति निर्गलितोऽर्थः। सर्वोऽपि जीवो ज्ञानाधिकारी, परन्तु विज्ञानाधिकारी समुन्नतो ज्ञानी महापुरुष एव भवितुमर्हति। शास्त्राणि गुरूंश्चाधिकृत्य यत्प्राप्यते तत् ज्ञानम्, निदिध्यासनेन यदधिगम्यते तद् विज्ञानमिति आध्यात्मिका प्रणिगदन्ति। सिद्धान्तेनैतेन ज्ञानविज्ञानातिरिक्तः कोऽपि विषयो नास्ति।

स्थूलतरः सूक्ष्मतरो वा विषयः, जडस्य चेतनस्य वा कार्यजातम् मृत्युलोकादिस्थूलजगतः सूक्ष्मरूपाणां चतुर्दशभुवनानां वा दृश्यसमूहः, आधिभौतिकमाधिदैविकमाध्यात्मिकं वा प्रपञ्चजातम्, सर्वेषामपि ज्ञानविज्ञानसम्बन्धोऽवश्यम्भावी। अत एव ज्ञानविज्ञान सर्वव्यापकाधिकारसम्पन्न इति समाम्नातम्। ज्ञानविज्ञानयोः सर्वहितकारितायां सन्देहस्यात्यन्ताभावः। यतो ज्ञानविज्ञानाभावेन कस्मिन्नपि कार्ये नैव साफल्यमधिगन्तुं शक्यते। अन्यच्च—आनन्देन साकं विज्ञानस्य साक्षात्सम्बन्धः। अतो हि ज्ञानविज्ञानयोरिवानन्दस्यापि सर्वहिताधायकत्वं सिद्धमेव। यदि च ज्ञानस्य बहिर्जगत्सम्बन्धीयाधिकारसम्बद्धता, विज्ञानस्य चान्तर्जगत्सम्बद्धाधिकारसम्बन्धसंयुता स्वीक्रियेत, किं वा

ज्ञानस्य विषयानन्दयुक्तत्वं विज्ञानस्यात्मानन्दसंयुक्तताऽङ्गीक्रियेत, किन्तु यदि ज्ञानविज्ञाने आध्यात्मिकाधिदैविकाधिभौतिकेति त्रिविधाधिकारसम्बन्धनिबन्धने, यदि चापि द्वयोरभावे नैव कस्यचनापि कार्यस्य सिद्धिस्तर्हि तयोः सर्वहितकारित्वम्, उभयोः सम्बन्धाद्यानन्दस्य सर्वहितकरत्वमस्त्येवेत्यत्र न कस्यादपि विमतिः। आनन्दानुभवे ज्ञानविज्ञानयोः किमावश्यकत्वमिति शङ्कां समाधत्ते। तथाहि—विषयानन्दस्य ब्रह्मानन्दस्य च सिद्धिर्ज्ञानं विज्ञानं च विना भवितुमेव नार्हति, सच्चित्सम्बन्धेन ब्रह्मानन्दानुभव इति प्रागेव निर्णीतम्। यत्र चित्सत्ता तत्र विज्ञानमूलकमात्मज्ञानमपि स्यादेव। अतो ब्रह्मानन्दानुभवे सविकल्पे समाधौ विज्ञानस्य निर्विकल्पे च स्वरूपज्ञानस्य कान्तिकी प्रयोजनीयता। अन्यच्च विषयानन्दानुभवे तु ज्ञानविज्ञानयोः प्रयोजनीयत्वं स्वतःसिद्धम्। ज्ञानमन्तरेण विषयी पुरुषो नैव विषयानन्दमनुभवितुमर्हति। तत्त्वज्ञानी महापुरुषोऽपि विज्ञानेनैव विषयानन्दमनुभवति। यतस्तदीयमन्तःकरणमात्मज्ञानद्वारा ब्रह्मणि नियुक्तं तिष्ठति। आनन्दस्य सर्वहिताधायकत्वविज्ञानपरिपुष्ट्ये सूत्रेऽत्र चकारनिर्देशः। आनन्दो हि सृष्टिहेतुः, स्थित्यवस्थायामानन्दः सर्वहितसाधकः अन्ते च स एव मुक्तिहेतुरिति दर्शनस्यैतस्य सिद्धान्तः। आनन्दस्यैव हेतवे प्रवृत्तिस्तदर्थमेव निवृत्तेरुद्योगः प्रारभ्यते। ब्रह्मानन्दे च परिसमाप्तिरुद्योगस्य। यद्यानन्दो लक्ष्यीभूतो न भवेत् तर्हि प्रवृत्तिमार्गगामिषु पुरुषार्थशक्तिर्नैव स्थानमर्हति। आनन्दो नरकप्रदः स्वर्गप्रदो वा भवेत् किन्तु पुरुषार्थोत्पादकोऽसाविति हेतोर्हितकारकः प्रवृत्तिमार्गगामिनां पुरुषाणाम्। निवृत्तिपथपथिकस्तु ब्रह्मानन्दं ध्रुवतारकं लक्ष्यीकृत्यैव संसारेऽत्र निवृत्तिमार्गेऽग्रे सरति। आनन्द एव मुक्तिप्रदस्तत्स्वरूपश्चेति दर्शनेऽत्र सर्वत्रैव प्रतिपादितमास्ते ॥ ५२ ॥

विज्ञानं पुनरपि परिपोष्यते—

**अतः कुसुमेक्षणादानन्दः ॥ ५३ ॥**

अतोऽस्मात्कारणात् कुसुमस्य पुष्पस्य ईक्षणात् दर्शनात् आनन्दः समुत्पद्यत इति शेषः। पूर्वोक्तविज्ञानमनुसृत्य सिद्धान्तितमेतद् यत् आनन्दो व्यापकः, ज्ञानविज्ञानमयः, सर्वहिताधायकश्चेति, आनन्द एव सृष्टिस्थितिमुक्तिनिदानम्। एतादृशस्यानन्दस्य सर्वव्यापकत्वे सन्दिहानः शङ्कते—यद्यानन्दविकासश्चेतन एव जडे नास्ति चेत्तर्हि व्यापकत्वमानन्दस्य कथं सिध्येत्? एतादृशशङ्कासमाहितय एव स्वीय विज्ञानस्य विशेषपरिपोषणाय सूत्रकृता महर्षिणा सूत्रमिदमाविश्चक्रे। पुष्पं हि चैकं तादृशं वस्तु यस्य दर्शनेन प्रत्येकोऽपि पुरुष आनन्दमनुभवति। अत एतदभ्युपगन्तव्यमेव यद् जडेऽपि पदार्थे विकास आनन्दस्य तिष्ठत्येव। पतिव्रतायाः स्त्रियो मुखसुषमा तपस्विनो भगवद्भावापन्नस्य महापुरुषस्य मुखकान्तिः, बालस्य पवित्रमुखकमलसौन्दर्यं प्राकृतिकनानावस्तूनां रामणीयकम्, कस्य दर्शकस्य चेतसि नानन्दमाविर्भावयन्ति। निष्कर्षोऽयं यत् जडपदार्थेष्वपि दिव्यभावविशेषविकासेन साकं भगवद्भावविकासस्तिष्ठत्येव। यत्र यत्र तादृशदिव्यभावविकासस्तत्रतत्र नूनमेवानन्दज्योतिश्चेतश्चमत् करोति ॥ ५३ ॥

इदानीं मुक्तिपदसारल्यसम्पादनाय आनन्दश्रेण्यो वर्ण्यन्ते—

**द्विविधोऽयमूर्ध्वगो ब्रह्मानन्दोऽधोगो-विषयानन्दः ॥ ५४ ॥**

आयमानन्दो द्विविधो द्विप्रकारक ऊर्ध्वगामी ब्रह्मानन्दः, अधोगामी विषयानन्दो विज्ञेयः। विषयानन्दब्रह्मानन्दयोः सविस्तरं रूपं, पारस्परिकसम्बन्धः, आत्मना च सह तयोः सम्बन्धविज्ञानं प्रागेव सम्यग्

विवेचितम्। वस्तुतः स्वरूपानन्द एव ब्रह्मानन्दः, विषयविषयिणोः सम्बद्धो विषयानन्द इत्युच्यते। विषयरागविरहितायाः रागात्मिकाया भक्तेरानन्दः स एव ब्रह्मानन्दः। रूपरसगन्धस्पर्शादि तन्मात्रासाहाय्येन विषयजनित आनन्दो विषयानन्द इति चापि वक्तुं शक्यते। विज्ञानमिदं पक्षान्तरेणापि निर्देष्टुं शक्यते। तथाहि—कामनाया आसक्तेश्च समुद्भूतवेगतो यद्धि विषयसुखमनुभूयते तदेव ब्रह्मानन्दरूपेण परिणमति। आसक्तिर्हि बन्धनकारिणी भावो हि मुक्तिप्रद इति प्रागेव सविस्तरं प्रपञ्चितम्।

विज्ञानमिदमनुसृत्येदं व्याहर्त्तुं शक्यते यत् आसक्तिजनितविषयभोगो बन्धनहेतुः। शुद्धभावसुसंस्कृतविषयानुभवो मुक्तिकारणतामापद्यते। एतादृशसमुन्नतावस्था प्राप्तज्ञानिनां विषयानुभवो नैवाभिधातुं शक्यते विषयानन्दः। यतोऽसौ विषयकालुष्येण सर्वथा विरहितो विज्ञातव्यः। उपर्युक्तप्रकारो विषयानन्दो ब्रह्मानन्दश्च सम्यग् विवेचितौ।

वस्तुतः सद्भावशून्यः, विषयवासनया कलङ्कितः, नाशशीलो विषयानन्दः कीदृशोऽपि कथं न स्यात् किन्त्वसौ जीवं प्रतिक्षणमधः पातयत्येव। वासनाशून्यस्त्रिगुणातीतः, आत्मसम्बद्धो ब्रह्मानन्दस्तु सर्वप्रकारकोऽपि साधकमनुदिनमुन्नतं विधत्ते। सुतरां विषयानन्दो जीवं गमागमचक्रे भ्रामयन् अधः पातयित्वा नरकप्रेततिर्यक्प्रभृतियोनिषु नयति। ब्रह्मानन्दस्तु अभ्युदयनिःश्रेयसप्रदः समाम्नातः॥ ५४॥

मुक्तिमार्गसारल्यसम्पादनाय विषयानन्दं खण्डयति—

**नायं प्रशस्यो जडताप्रापकत्वान्मदानन्दवत्॥५५॥**

मदानन्दवत् मादकद्रव्यस्यानन्दं इव अयं विषयानन्दो न प्रशंसनीयः। मुक्तिपथपथिको मुक्तिमार्गेऽग्रेसरन् विषयानन्दपाशे पतितो न भवेत् इति हेतवे पूज्यपादो महर्षिः सूत्रकृत् अभिधत्ते, यत् साधनमार्गे विषयानन्दो न प्रशस्यः। यथा मादकद्रव्यसेवनेन समुद्भूत आनन्दो जडताभिमुखमानयति साधकं तथैव विषयानन्दोऽपि। सांसारिकदृष्ट्या सर्वविधोऽपि विषयानंदो मादकद्रव्यानन्दतो न्यून एव। अतो मदविषयकोदाहरणप्रदानपूर्वकं सूत्रकारोऽभिदधाति यत् सधैर्यानुभवेनेदमवगन्तुं शक्यते यत् मादकद्रव्यनिषेवणेन यद्यपि सामयिको विषयानन्दोऽधिगम्यते परन्तु प्रायशोऽनुभूतोऽयं सिद्धान्तो यन्मदानन्दगतिः स्वभावतो जडताभिमुखमेवास्ते। मदावस्थायां चित्तमाधिभौतिकमानन्दं समीहते। मदस्यावसाने मादकद्रव्यसेवी नूनमवसीदन् जाड्यमधिगच्छति। अत सर्वेऽपि विषयानन्दा एवमेवावधेयाः॥ ५५॥

योगविज्ञानमनुसृत्य सिद्धान्तममुं परिपोषयति—

**अयमूर्ध्वगो धारणान्तप्रापकः॥ ५६॥**

स्वविज्ञानपरिपुष्ट्ये हीदमुच्यते यत् मादकद्रव्यसेवापरायणः साधको भावशुद्धिपूर्वकं स्वकीयस्य अन्तःकरणस्य गतिमूर्ध्वाभिमुखीकर्त्तुं यदि प्रयतेत, साधने साफल्यमप्यधिगच्छेत्, तथापि सिद्धान्तोऽयमनुभवसिद्धो यत्साधकोऽसौ केवलं प्रत्याहारभूमिमतिक्रम्य धारणाभूमिमासादयितुमर्हति। सुतरां मादकपदार्थो हि समुपासनासहायको भवन् साधकं केवलं धारणाभूमिं यावन्नेतुं पारयति। अन्यच्च मादकं वस्तु ध्यानभूमौ समाधिभूमौ च साफल्याधिगमाय साधककृते बाधकं जायते। यतस्तद्गतिर्जडताभिमुखी। सर्वमिदं साधकैर्नूनमेव स्मर्त्तव्यम्॥ ५६॥

सम्प्रति भावस्योपयोगित्वं व्याचष्टे—

**मन्दोऽपि सद्भावत उत्तमः॥ ५७॥**

मन्दोऽपि निकृष्टमपि कर्म सद्भावेन सदुत्तमतामेति।

सविज्ञानं भावमाहात्म्यं पूर्वमपि सविस्तरमुपवर्णितम्। इदमपि प्राक्निर्णीतं यत् भावसाहाय्येन पापमपि पुण्यरूपेण परिणमति। प्रयोजनविरहान्नात्र सविस्तरमुच्यते। भावमहिम्नैव आपद्धर्मानुसारेण महर्षेर्विश्वामित्रस्य पापजनकश्वमांसद्वारा पुण्यजनकदेवपितृयज्ञसम्भावनां समपद्यत। सद्भावस्यैषोऽसाधारणः प्रभावो यत् जीवहत्यारूपं मन्दकर्मापि यज्ञेन पुण्यजनकं जायते। वेदसम्मतोऽयं राद्धान्तः। तामसिकं कर्म न कथमपि सात्त्विकं भवितुमर्हति, नापि पापं पुण्यस्वरूपमासादयति; किन्तु सद्भावेन सत् सर्वमसम्भवमपि सम्भवतामापद्यते। अत एव सूत्रेऽत्र 'अपि' शब्दप्रयोगः॥ ५७॥

विज्ञानमिदं पुनर्द्रढयति—

**विषयानन्दोऽपि ब्रह्मानन्दो भक्तेभ्यः ॥५८॥**

भक्तेभ्यो भक्तिमद्भ्यो विषयानन्दोऽपि ब्रह्मानन्दप्रदो जायते। भक्तिस्तद्भेदाः, तल्लक्षणानि, भक्त्या भावसम्बन्धश्चेत्यादिविषयाः प्रागेव सविस्तरं सम्यग् विवेचिताः। भक्तः सदैव भगवद्भावे निमज्जत्युन्मज्जति च। भक्तस्य भोजनं पानमुपवेशनमुत्थानं परिभ्रमणादिकं सर्वमपि कर्म भगवत्पदारविन्दयुक्ततया सम्पद्यते। अतो भक्तस्य विषयानुभवे स्वत एव भावशुद्धिस्तिष्ठति। भावशुद्ध्या पापकर्मापि पुण्यरूपतामापद्यते इति पूर्वमेव निर्णीतम्। सुतरां भक्तस्य विषयानन्दो ब्रह्मानन्दप्रद इत्यत्र कः सन्देहः। एतद्विज्ञाननिश्चयत्वद्योतनायापि शब्द प्रयोगो वेद्यः॥ ५८॥

प्रसङ्गादिदमुच्यते—

**विषयानन्दस्य प्रसृतिश्चाञ्चल्ये निरङ्कुशत्वे च स्वरूपानन्दोदयो धैर्यज्ञाने च ॥ ५९ ॥**

चाञ्चल्ये निरङ्कुशत्वे च विषयानन्दस्य विस्मृतिः, धैर्ये ज्ञाने च स्वरूपानन्दस्योदयो जायते। यदि ब्रह्मानन्दविषयानन्दोरुभयोरेव विज्ञानमालोच्यते, तर्हि तयोरुत्पत्तिस्थिति - पर्यालोचनमप्यत्यावश्यकमास्ते। गुणतः स्वरूपतश्च विषयानन्दो हेयो ब्रह्मानन्दश्चोपादेयो विद्यते। अतोऽपि चोभयोरुत्पत्तिस्थितीपर्य्यालोचनीये विद्येते। विषयसङ्गादिष्टसङ्गाच्च ब्रह्मानन्दसमुत्पत्तिर्भूत्वा चाञ्चल्य-निरङ्कुशत्वद्वारेण विषयानन्दस्य विस्मृतिर्जायते। धैर्येण ज्ञानेन च ब्रह्मानन्दस्वरूपमभिव्यज्यते। मुमुक्षोर्मुक्तिमार्गसरलीकर्त्तु मिदमुच्यते यत् प्रतिक्षणमानन्दस्यानुभवे चाञ्चल्यनैरङ्कुश्ययोस्त्यागो विधेयः, धैर्यज्ञानाभिवृद्धिश्च समनुष्ठेया।

शरीरमनसोश्चाञ्चल्येन प्रमादयुक्तनिरङ्कुशतया स्वान्तकरणप्रबलवेगतो मुमुक्षोश्चित्तं तरङ्गितं जायते। अतः किल स्वरूपस्य निर्मला ज्योतिर्नान्तःकरणे प्रतिफलति, चञ्चलमना प्रमादीविषयपाशे पतति, अतो मोक्षेच्छुभिरियमवस्था यत्नतः परित्याज्या। मुमुक्षूणां कृते धर्मज्ञानावलम्बनं सदैवोपादेयम्। यतो हि साधकस्य शरीरचित्ते यावतीं धैर्यशालितां विचारशीलतां प्रपत्स्येते, तावानेव तदीयान्तःकरणे आत्मस्वरूपविकासावसरः समुदेष्यते॥ ५९॥

शङ्कां समाधत्ते—

**हेयोऽपि विषयानन्दो ब्रह्मानन्दसोपानमतस्तेनासावनुमेयः ॥ ६० ॥**

त्याज्योऽपि विषयानन्दो ब्रह्मानन्दस्य सोपानभूतः, विषयानन्देन ब्रह्मानन्दोनुमातुं शक्यः। विषयानन्दो हेय इति सत्यम्, किन्तु द्वैते विद्यमाने दृश्यरूपविषयानुभवो नूनं भावी। शरीरे वर्त्तमाने विषयस्य सर्वथा परित्यागोऽप्यसम्भव एव। विषयाणां हेयत्वेऽपि तेभ्यः कथं मुक्तिसम्भावनेति शङ्कां समाधातुमिदमुच्यते यत् विषयानन्दस्य हेयत्वेऽपि यद्यसौ ब्रह्मानन्दप्राप्तिसोपानभूत इति विचारद्वारा निश्चये जाते सर्वसाध्य-

विषयानन्दानुभवेन सर्वानन्दाधारस्वरूपब्रह्मानन्दोऽनुमातुं शक्येत चेत् तर्हि साधको विषयानन्दपाशतो विमुच्येत, कामार्थधर्ममोक्षाख्यासु चतुर्विधवासनासु कस्या अपि वासनायाः सेवकस्य पुरुषस्य योऽपि पुरुषार्थः स्यात् स एवानन्दप्राप्तिसाधको भवितुमर्हति। तस्य सविस्तरविवृत्तिः प्रागेव प्रपञ्चिता, आनन्दसमीहामन्तरेण कस्यापि पुरुषार्थप्रवृत्तिर्न भवति। मोक्षाभिलाषिणो लक्ष्यभूतो ब्रह्मानन्दः, कामाभिलाषिणश्च विषयानन्द इति सत्यम्, परमैकान्तिकानंदलक्ष्यं विना कुत्रापि कस्य चिदप्यधिकारवतः पुरुषस्य प्रवृत्तिरेव न सम्भवति। अतः किल यदि सर्वविधप्रवृत्तेर्लक्ष्यभूत आनन्दएव चेत्तर्हि विचारवता साधकेन विषयानन्दद्वारा ब्रह्मानन्दोनुमातुं शक्यते। यतो हि विषयानन्दो ब्रह्मानन्दप्रतिबिम्बभूतः। कथमिदमिति प्राङ्निर्णीतम्। फलतः सुविचारशाली समदर्शीसद्भावापन्नो मानव इदमनुभवति यल्लौकिकेन विषयानन्देन ब्रह्मानन्दोऽनुमीयते। विज्ञानमिदमन्यप्रकारेणाप्यभिधत्ते—यद् द्वैतप्रपञ्चमयेऽत्र संसारे विषयपरागरञ्जितं मार्गमन्तरेण मार्गान्तरं नास्ति। मार्गेऽत्र प्रचलताऽपि मुमुक्षुसाधकेन ब्रह्मानन्दसोपानमवगत्य यदि विषयानन्दोऽनुभूयेत, यदि च तस्य ब्रह्मानन्दो लक्ष्यभूतः स्यात् तर्हि, तदीयो भवव्याधिर्नूनं प्रणश्येत। विषयानन्दतादृशलक्ष्योपकारितावर्णनार्थमेव सूत्रेऽत्र अपि शब्दप्रयोगः ॥ ६० ॥

प्रसङ्गतः स्वरूपस्थस्य महत्त्वमुपवर्ण्यते—

## विषयानन्देऽपि ब्रह्मानन्दः स्वरूपस्थेनानुभाव्यः ॥ ६१ ॥

स्वरूपस्थेन महात्मना विषयानन्देऽपि ब्रह्मानन्दोऽनुभवनीयः। परा भक्तेः पूर्णाधिकारिणो महापुरुषस्यान्तःकरणं सदैव निर्विकल्पे समाधौ तिष्ठति। तदीया सक्रिय-निष्क्रय-स्वरूप-व्युत्थान-विषयोन्मुख-विषय-विमुखाद्याः सर्वविधा अप्यवस्था निर्विकल्पसमाधिभूमौ सम्पद्यन्ते। सुतरां स्वरूपस्थितो जीवन्मुक्तो महात्मा विषयसुखमनुभवन् व्युत्थानदशायामपि निजस्यान्तःकरणस्याद्वैतस्थित्या भगवद्भावमयपराभक्तिबलेन च विषयानन्देऽपि निर्विकारं ब्रह्मानन्दमनुभवन् भगवद्भावसमुद्रे निमज्जंस्तिष्ठति। द्वैतावस्थायां विषयानन्दस्य हेयत्वेऽपि जीवन्मुक्तेरद्वैतदशायां हेयोपादेययोः समता सम्पद्यते। कारणेनैतेनात्र सूत्रे अपिशब्दः प्रयुक्तः ॥ ६१ ॥

प्रसङ्गतो मुमुक्षून् सावधानी कुरुते—

## तदभावे पतनमारुरुक्षूणाम् ॥ ६२ ॥

तस्याभावेन मोक्षमार्गमारोढुमिच्छन्तः पतन्ति। योगारूढदशामुपवर्ण्य पूज्यपादो महर्षिरारुरुक्षूणामुपकाराय सूत्रमेतदाविश्चकार। उभयेषां कर्त्तव्यं भगवती गीता निर्दिशति—

आरुरुक्षोर्मुनेर्योगं कर्मकारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥

एतत्सूत्रनिर्गलितोऽर्थोयं यत् योगारूढा जीवन्मुक्तास्तु स्वकीय निर्विकल्पसमाधिना स्वयमेव विषयानन्दे ब्रह्मानन्दस्वरूपमनुभवन्तः परायां भक्तौ निमज्जन्तस्तिष्ठन्तीति पूर्वसूत्रे निर्णीतम्। परन्तु भावशुद्धिं द्वारीकृत्यारुरुक्षूणां मुनीनामपि विषयानन्दग्रहणावसरे भगवद्भावसाधनेन नैजान्तःकरणस्य ब्रह्मानन्दाभिमुखीकरणं समुचितम्। साधकः स्वीयसाधनावस्थायां यद्येवं नानुतिष्ठेत्, विषयबुद्ध्यैव विषयानन्दमनुभवेत् तर्हि तस्य साधनदशातः पतनमवश्यम्भावि। मुक्तिपर्यन्तं जीवेन सार्कं विषयसम्बन्धो न निवर्त्तते। अन्यच्च केवलं विषयबुद्ध्यैव विषयानुभवेन बन्धनग्रन्थिरुत्तरोत्तरं दृढायते। यदा साधको ह्येतद्भयावहपतनविज्ञानमवधार्य विषयानुभवो भावशुद्धिसाहाय्यमासादयेत् तर्हि तदीयः

पतनमार्गो निरुद्धो भवेत् तस्योत्तरोत्तरं च क्रमोन्नतिर्वोभूयते ॥ ६२ ॥

मुक्तिपथं सरलीकर्त्तुमुच्यते—

**सर्गस्य त्रिभेद-सप्तभेदेषु तदनुभव उपासनायोगात् ॥ ६३ ॥**

सृष्टेः सप्तभेदेषु त्रिभेदेषु चोपासनया तदनुभवो जायते। मानवः पतनभूमिमाश्रित्यैवोत्तिष्ठते। सर्गस्य त्रिभेदाः सप्तभेदाश्च वेदेऽपि पाशनाम्ना व्याहृताः, तथाहि—

"ओं येते पाशाः सप्त सप्त त्रिधा तिष्ठन्ति" इति। अघटनघटनापटीयसी अविद्या विद्यारूपिणी जगज्जननी महामाया त्रिविधसप्तविधभेदान् वहन्ती सृष्टिप्रवाहे जीवं प्रवाहयति। भाग्यवानुपासको यदा परायाः भक्तेः कृपासाहाय्येन कार्यकारणयोरैक्यं सम्पादयति तदानीमेतत्रिविधसप्तविधानामुच्चस्तरावलम्बनेन मुक्तिमार्गं सरलीकुर्वन्नग्रेसरति। तत्त्वदर्शिभिर्महर्षिभिः सर्गस्यास्य ये किल सप्तसप्तभेदाः समुपवर्णितास्ते हि रसपादे सम्यग् विवेचिताः। अतो द्विरुक्तिर्निष्प्रयोजना। इदानीं तदीय त्रिविधोदाहणं शास्त्रमनुसृत्याधः प्रदीयते—

यथा—सत्वंरजस्तम इति त्रिविधो गुणः तदधिष्ठातारस्त्रिदेवाः, देवर्षिपितॄणां त्रिप्रकाराः, धर्मस्य त्रिविधानि प्रधानाङ्गानि, त्रिभावाः, त्रिविधा वेदशास्त्रभाषा, तिस्रो रात्रयः, तिस्रः सन्ध्याः, त्रिविधो व्याधिः, त्रिप्रकारा चिकित्सा, त्रयो लोकः, त्रिविध योनयः, त्रीणि कर्माणि, त्रयोऽधिकाराः, त्रिविधो मानवीयः स्वभावः, त्रीणि शरीराणि, त्रिविधं ध्यानं, त्रेधा गतिः, त्रय आचाराश्चेत्याद्या अनेके भेदाः शास्त्रेषु समुपलभ्यन्ते। यदा साधक उपासनायोगसाहाय्येन मुक्तिभूमावग्रेसरति, तदा सर्गरस्थैते सप्तसप्त त्रयस्त्रयो भेदा ये च स्वभावतः सृष्टिस्थायित्वसंपादनोपयोगिनः त एव मुक्तिमार्गसारल्यसम्पादनाय कारणतामापद्यन्ते। यद्युपासनायोगाद्ज्ञानप्रभावो विनश्यति। भक्तिमन्दाकिनी च भक्तान्तःकरणे प्रवहन्ती, भक्तान्तःकरणं परिशोधयति तदानीं प्रथमावस्थायां सप्तसु सप्तसु त्रिषु त्रिषु भेदेषु भाग्यशाली भक्तशिरोमणिः स्वकीयहृदयनाथस्य भगवतो गुणमयं स्वरूपमनुभवति। अवस्थान्तरे च त्रीन् त्रीन् सप्त सप्त भेदान् मुक्तिमार्गस्य सहायकान् कथमिव साधको विधत्त इत्यग्रे वक्ष्यते॥ ६३ ॥

प्रसङ्गादुच्यते—

**समर्पणं त्रिविधम् ॥ ६४ ॥**

समर्पणम् त्रिप्रकारकं बोध्यम्। योगभक्तिमयोपासनावलेन यदा भाग्यवान् साधकः स्वकीयानि मलविक्षेपावरणानि विनाश्य त्रिविध-सप्तविधसर्गविभागावलम्बनेन धीमन्तं भगवन्तमनुस्मरन् भक्तिपथश्रेष्ठभूमिमासादयति, तदा प्राकृतिकान् त्रिभेदान् आश्रयन्ती विद्यास्वरूपिणी भक्तिर्महापुरुषस्य तस्य त्रिविधसमर्पणमार्गसोपाने तमग्रे सारयन्ती कैवल्यं प्रयच्छति। आत्मसमर्पणस्य यथार्थमधिकारीसम्पद्यमानो भाग्यशाली मुमुक्षुः स्वकीयं जीवत्वं परित्यजति। यतः प्रागेवेदं सिद्धान्तितं यन्मुक्तिः समर्पणादेवेदितीति ॥ ६४ ॥

प्रथमाधिकारं वर्णयति—

**ममैवासाविति प्रथमम् ॥ ६५ ॥**

मम एव असौ वर्त्तत इति प्रथमाऽधिकारः। भाग्यवता भक्तेन भक्तिभूमावग्रे सरता ममैवासाविति प्रथमोऽधिकारः प्राप्यते। सांसारिकस्नेह-प्रेम-श्रद्धाराज्ये चैतद् दृश्यते यत्तदधिकारिणो मानवस्य ममैवासावित्यनुभवः सर्वप्रथमं समुदेति। मदीयः पुत्रो, मामकः पिता, मम पतिश्चेत्थंविधस्वाभिमानयुक्तात्मीयतागुम्फितोऽनुरागोऽनुरागवतो मनसि यदोत्पद्यते तदैवासावुक्तप्रेमपात्र-

सुखदुःखयोर्निजे सुखदुःखे मेलयन् तानात्मीयान् विदधाति। जगत्यनेकेषां पुत्राः पतयः पितरश्च सन्ति, त एते मामकीना विद्यन्ते इत्थम्विध स्वाभिमानयुक्तेऽनुरागे जातेऽनुरागपात्रेऽनुरागकर्त्तरि चैकत्वं स्थापितं जायते। एवमेवावधेयमिदं यत् भक्तिराज्ये वैध्यारागात्मिकायाश्च भक्तेः सहायतया यदा भक्तः कृतकृत्यतामासादयति तदासाविदमनुभवति यद् भगवान् ममैवास्ति इति। अधिकारस्यास्य प्राथमिकतया तत्राहङ्कारसम्बन्धस्तिष्ठति। मदीयाः पुत्रादयो ममेच्छानुरूपं प्रवर्त्तन्ताम् इति समीहा यथा पित्रादीनां चेतस्सु समुत्पद्यन्ते तथैव स्वाभिमानयुक्तवासनाऽधिकारेऽत्र भक्तहृदयेऽपि जागर्त्ति, उपासनासम्प्रदायमतभेदादीनामस्तितायां धर्माधर्मभेदादीनामनुभवः अनुदारतायाः सत्ता चात्रैवाधिकारे सम्भवति। अग्रिमाधिकारेषु नैतेषां सम्भावना। अधिकारममुम् अधिगतवतः साधकस्य पुनः पतनं न सम्भवति॥ ६५॥

द्वितीयोऽधिकार उच्यते—

## तस्याहमिति द्वितीयम्॥ ६६॥

भक्तिमूलकसमर्पणस्य द्वितीये समुन्नततराधिकारे सम्पद्यमाने भाग्यवता भक्तेनेदमनुभूयते यत् अहं तदीय एवास्मीति। इतः पूर्वोक्ताधिकारे मदीयोऽसावित्यत्र स्वार्थः स्वाधीनता स्वाभिमानश्च सन्तिष्ठन्ते। परमत्रोन्नततरे समर्पणाधिकारे स्वार्थसम्बन्धस्यात्यन्ताभावः। यतस्तदीयोऽहमित्यनुभवे मदीयं सर्वस्वमेव तदीयतामापद्यते। मदीया स्वार्थपरता तदीयसमीहायां विलीयते। एवमेव भक्तेः सुमधुरदशायामत्र स्वाधीनतावृत्तिर्विलयं याति। यदा स्वकीयानि प्राणमनांसि जीवनोद्देश्यस्वाधीनत्वादीनि न तिष्ठन्ति, तदा स्वीयायाः स्वतन्त्रसत्ताया अस्तिताभाव एव भवति। एवमलौकिक्यां प्रेमदशायामस्यां स्वाभिमाने निजाहङ्कारास्तित्वं च सहैव स्वीये हृदयनाथे विलयमभ्युपगच्छतः। तस्याहमिति धारणायां दृढीभूतायां समूलमुच्छिद्यते स्वाभिमानः। स्वीयं सर्वस्वमपि स्वेष्टदेवस्यैव न स्वकीयमित्यन्तर्वहिःप्रकृतिर्भक्तस्य जगरूकतामापद्यते। ध्यानस्य सिद्धावस्थायां ध्येयव्यतिरिक्तं लक्ष्यान्तरं न भवति, तदानीं च ध्याता यथा स्वीयमस्तित्वं विस्मरति, तथैव समुन्नतदशायामत्र भाग्यशालिनो भक्तस्य मानसिकी दशा स्वयमेवं जायते। योगविज्ञानेनेदमवधेयम् यत् प्रथमदशाधारणा भूमेः द्वितीयेयं च ध्यानसिद्धेरवगन्तव्या। भक्तस्य समुन्नतदशायामत्रोपासनासम्प्रदायादिमतभेदस्य सम्भावना नास्ति, नापि धर्ममतपक्षपातो भक्तस्य शान्तिमयमन्तःकरणं विचालयितुं शक्नोति॥ ६६॥

इदानीमन्तिममधिकारं वर्णयति—

## स एवाहमिति तृतीयम्॥ ६७॥

सोऽहमस्मीति तृतीयोऽनुभवः। समर्पणस्य तृतीयेऽधिकारे भक्तभगवदभेदः सिध्यति। समाधिभूमौ सर्वदैव विद्यमानो निर्विकल्पसमाधिदशामधिगतो भागवतः स्वस्मिन् भगवति चाभेदमनुभवति। त्रिविधमप्येतत्समर्पणं जैवाहङ्कारसम्बन्धतो विज्ञातव्यमास्ते। वस्तुतस्त्रिष्वप्यधिकारेष्वेतेपूत्तरोत्तरं जैवाहङ्कारमूलकास्तित्वपरित्याग एव समर्पणमवगन्तव्यम्। एतत् त्रिविधानुरागमूलकसमर्पणाधिकारविषये स्मृताविदमुक्तम्। यथाहि—

प्रेम्णोऽस्ति त्रिविधो भेदस्तत्राद्यः सममेत्ययम्।
अहं तस्येत्ययं मध्यः सोऽहमस्मीति चान्तिमः॥
इहाद्वैतदशायां हि स्वानुभूत्यैकगोचरः।
ब्रह्मणास्तस्य शक्तेश्च भेदाभावः प्रसिध्यति॥

इयं सर्वोन्नतावस्था परायाः भक्तेः परिपूर्णताया-

मवाप्यते । यदीयं सविस्तरवर्णनं परभक्तिविज्ञाने समुपवर्णितम् ।

विघ्नभयमपाकर्तुमुच्यते—

**अदर्शनादन्तिमतत्त्वावलम्बनेन नास्तिकः ॥६८॥**

अदर्शनात् दार्शनिकज्ञानाभावात् अन्तिमतत्त्वस्य आकाशतत्त्वस्याश्रयेण साधको नास्तिकः सम्पद्यते । भक्तिमार्गमहत्त्वं स्थापयितुं तत्र च विघ्नभयमपाकर्त्तुं पूज्यपादेन महर्षिणा सूत्रमिदमाविश्चक्रे । यदि पूर्वोक्त-प्रथमदशातस्तृतीयावस्थाधिगमो भक्तिमार्गसाहाय्येन स्यात् तर्हि विघ्नभयेनैव सम्भवति । यतो भगवद्भाव-युक्तो भक्तिमार्गो निर्भयः । परन्तु यद्येवं न स्यात्, साधकश्च भगवदस्तित्वं विस्मृत्य केवलं स्वीयविचारेणैवा-द्वैतभूमिमासादयितुं प्रयतेत तर्ह्यसौ विघ्नेषु परिपतति । एकतो भगवद्भक्तेर्द्वितीयतश्च दार्शनिकशुद्धदृष्टेरभावात् अद्वैतभूभावन्तिमाकाशतत्त्वावलम्बनेन साधक-चित्ते नास्तिकत्वोदयः सम्भवः । तेन चाध्यात्मिकोन्नति-मार्गे सर्वविधानन्तरायाधिगमात् साधकस्य पतनं जायते । यथा पूर्वनिरूपितो भक्तिमार्गस्य चैकः क्रम-स्तथैव दार्शनिकज्ञानमार्गस्यापि विद्यते । यश्च वैदिकसप्त-दर्शनानां यथाक्रमं श्रवण-मनन-निदिध्यासनतो ज्ञानि-नाऽधिगम्यते । एतदकाम्यसिद्धान्तपरिपूर्णज्ञानमार्गक्रमा-धिकारं विरहय्य केवलं विचारपद्धत्या ज्ञानमार्गगामी पथिकोऽद्वैतभूमिमासाद्यकृतकृत्यतामधिगन्तुं समीहमानो नास्तिकत्वं भजति । अत एव जागतिका अनेके धर्म-मार्गा भगवद्भक्तिमधिदैवतत्त्वं चोपेक्षमाणा नास्तिकम-तावलम्बिनः समपद्यन्ते ह्येतिह्यविदो जानन्ति । विपयो-ऽयं प्रकारान्तरेणाप्यवधेयः । यथा प्राङ् निरूपितवेदोक्त-सप्तज्ञानभूमिसम्बद्धेषु सप्तसु दर्शनेषु न्यायवैशे-षिकयो पदार्थवाददर्शनयोः योगसांख्ययोः सांख्यप्रव-चनदर्शनयोः वैदिककाण्डत्रयमनुसृत्य च कर्मोपासना-ज्ञानप्रतिपादकमीमांसात्रयस्य च विधिपूर्वकं श्रवणमनन-निदिध्यासनतः पतनभयसम्भावना न भवति । यत एतेषु यथाधिकारमीश्वरतत्त्वं निहितमास्ते । पदार्थवाद-दर्शनद्वयमनुमानेनेश्वरतत्त्वं साधयति, सांख्यप्रवचद्वयं स्वभूम्यनावश्यकमपीश्वरतत्त्वं परिपोषयति । तिसृष्वपि मीमांसासु पूर्वार्धरूपा कर्ममीमांसा कर्मणां गहनविज्ञानं परमात्मतत्त्वं च वर्णयति, उत्तरार्द्धरूपा च वैदिकयज्ञ-विज्ञानं निर्णयति । वेदस्योपासनाकाण्डज्ञानकाण्डमीमांसे दैवीमीमांसा ब्रह्ममीमांसा च जगदीश्वरतत्त्वं सम्यक् सुसाधयन्त्यौ अधिदैवाध्यात्मरहस्यं चापि विवेचयतः । सुतरां वैदिकसप्तदर्शनानां यथाक्रममनुशीलनेन कस्यापि भयस्य सम्भावना न भवति । एतदभावे तु विचारशीलो मानवः, उपधर्मः, सम्प्रदायो वा कोऽपि भगवद्भक्ति-विरहितविचारपद्धत्याऽन्ताराज्येऽग्रे सर्त्तुं प्रयतमानोऽन्त्ये-ऽद्वैतभूमिसान्निध्यमासद्यागत्याऽधिदैवालम्बनविच्युतः सर्वव्यापकस्य सुमहतोऽनन्तस्यान्तिमतत्त्वस्याकाश-तत्त्वपरनामकस्यावलम्बनं परिज्ञानविरहेणैवानुतिष्ठति । यतो ह्याकाशतत्त्वस्वरूपाया अद्वैतभूमेरनेकानि लक्ष-णानि निभाल्यन्ते । अतो हि वैदिकदर्शनमार्गपरिच्युतो-ऽधिदैवावलम्बनपरित्यागी भगवद्भक्तिरहितो विचार-शाल्यपि समुन्नतो मानवः पतनभयग्रस्तो भवत्येव । एतद्भयप्रमादहेतुना बहुविधानि नास्तिकमतानि प्रका-शितान्यभूवन् भवन्ति भविष्यन्ति चेति ॥ ६८ ॥

प्रसंगात्प्रोच्यते—

**दर्शनं सप्तविधं सप्तभूम्यवलम्बनात् ॥ ६९ ॥**

सप्तविधानां ज्ञानभूमीनामवलम्बनेन दर्शनं सप्त-प्रकारकं विज्ञेयम् । सप्तभागविभक्तानां प्राकृतिक-राज्यानां वर्णनं सविस्तरं प्राक् प्रपञ्चितम् । तदनुसारेण कर्मकाण्डसप्तभूमिकास्तदनुभवाश्च पृथक् पृथक् संवेद्याः । काण्डानां त्रयाणां भूमिपार्थक्यं तदनुभवश्च तत्तत्काण्ड-

मीमांसादर्शनेषु संप्राप्यते । दार्शनिकं राद्धान्तमिममनुसृत्योपासनाकाण्डीयादर्शनपद्धतयोऽपि सप्तविधाः सन्ति । यदिङ्गनमत्रसूत्रे सम्पन्नमग्रे च यथाक्रमं वक्ष्यते ॥ ६९ ॥

प्रथमदर्शनं वर्ण्यते—

## दिव्यनामसु प्रथमम् ॥७०॥

भक्तिमार्गपथिको भक्तिरसरसिको भवन् यदान्ताराज्येऽग्रे सरति, तदानीं सर्वप्रथमं यस्य दर्शनस्याधिकारं प्राप्नोति, तत्रासौ भगवद्दिव्यनाम्नामवलम्बनेन भगवत्सत्तामनुभवितुं क्षमते । अतएवोपासनाकाण्डाचार्यैः प्रथमा भूमिर्नामपरा प्रोक्ता । भगवत्तत्त्वे मनोवाग्बुद्ध्यातीतेऽपि भक्तौ सद्भावनासाहाय्येन साधकः सर्वप्रथमं दिव्यानां भगवन्नाम्नामवलम्बनेन भगवत्सत्तामनुभवति । दिव्यशब्दतात्पर्यमिदं यद् यन्नामालौकिकम् दैवराज्यसम्बन्धशालित्वं तन्मन्त्रशब्दवाच्यं स्यादिति । मन्त्रलक्षणं प्रावेग प्रपञ्चितम्, श्रीगुरुदेवस्योपदेशतो यदा शिष्यो मन्त्ररूपं दिव्यं भगवन्नामाधिगच्छति तदा वैध्या रागात्मिकाया भक्तेः साहाय्येन साधकस्य प्रेम तन्नाम्नि तिष्ठति तदानीं तन्नामावलम्बनेन स्वेष्टदेवस्मरणं जायते । इयमेव प्रथमावस्था । जगदिदं नामरूपात्मकमिति विज्ञानं प्रागेव निर्णीतम् । तदनुसारेणापि नाम्नः प्रथमाधिकारः अधिकारसिद्धावस्था नाम्नः श्रवण कीर्तनजयादिना साधकः स्वीयमन्तःकरणं भगवद्भावमयमनुष्ठातुं सामर्थ्यं लभते । केचन भक्ता नामधारणायास्तीव्रत्वेन नाम्नः श्रवणकीर्त्तनजपेषु सम्पद्यमानेषु तदन्तःकरणं सविकल्पसमाधिमधिगच्छति । तस्यैव समाधेर्नाम महाभाव इति । नामकीर्त्तनानुष्ठानकाले भक्तस्य महाभावसमाधिप्राप्तिर्यद् दृश्यते, सोऽयमेतदवस्थाया दृष्टान्तः । नामावलम्बनेनापि साधकः समाधिमधिगच्छतीति तात्पर्यम् । पूर्वं चतुर्णां योगानां चत्वारः समाधयो वर्णिताः प्राक् तेषु प्रथमसमाधेः पूर्णं स्वरूपं यद्यप्यवस्थायामत्र न प्रकाशते तथाप्यवस्थेयं महाभावसमाधेरन्तर्गता बोध्या ॥ ७० ॥

द्वितीयं वर्णयति—

## दिव्यरूपेषु द्वितीयम् ॥ ७१ ॥

उपासनामार्गदर्शनस्य द्वितीयाधिकारोऽयम्, यदत्रकाले साधको नानादिव्यरूपावलम्बनेन भगवद्भावानुभवसामर्थ्यमासादयति । यथा दैवराज्यसम्बद्धः शब्दो मन्त्र इति, तथैव दैवराज्यसम्बद्ध रूपमपि दिव्यं समाम्नातम् । नामापेक्षया रूपाधिकारः सूक्ष्मतरः । यतो नाम्ना बहिर्जगतः शब्दराज्यस्य चाधिकः सम्बन्धः । एवं किल पूर्वोक्तदर्शनपद्धतौ धारणाभूमेरत्र च ध्यानभूमेरधिकः सम्बन्धो वेद्यः । अत्र साधको नाम्नामपेक्षाधिक्यमन्तरेणैव दिव्यरूपस्मरणमात्रेण भगवद्भक्तिमये सागरे निमज्जति । एवमसौ ध्यानयोगेन समाधिभूमिमासादयति ॥ ७१ ॥

तृतीयमाचष्टे—

## विभूतिषु तृतीयम् ॥ ७२ ॥

विभूतिस्वरूपमवधारयितुं भगवता स्वयमुक्तम्—

यद् यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा ।
तत् तदेवावगच्छत्वं ममतेजोंऽशसम्भवम् ॥ इति ।

विभूतीनामानन्त्येऽपि शास्त्रेषु तन्निर्देशकाले ह्युक्तं यत् अश्वत्थो वृक्षाणां रोगघ्नकीटः स्वेदजानां, गरुडोऽण्डजानां, ब्राह्मणो वर्णानाम्, राजा मानवानाम्, संन्यासआश्रमाणाम् इति । एवं हि प्रत्येक सूक्ष्मप्रपञ्चेषु यत्रयत्रैश्वर्य-सौन्दर्य-शक्ति-प्रभाव-विशेषाश्चेतांसि समाकर्षेयुस्तत्रतत्र तदानीं भगवद्भावोदय एतदधिकारावस्थासम्बन्धो बोध्यः । अत्र विचारप्राधान्यादियमवस्था—पूर्वोक्तावस्था—समुन्नता विद्यते । भक्तिमान् साधकः प्रतिक्षणमेव विभूतिसाहाय्येन भगवद्भावनिमग्नो भवितु-

मर्हति। स्थूलप्रपञ्चेषु सूक्ष्मप्रपञ्चेषु वा संलग्नचेता भाग्यवान् भक्तशिरोमणिर्यदेव दृश्यमवलम्बेन, तत्रैव विभूतेरवलम्बनधारणया श्रीमन्तं भगवन्तं स्मर्तुं शक्नुयात्। उदाह्रियते यथा,—दिवसे रविं रात्रौ निशानाथं नक्षत्राणि वा सर्वगमाकाशं वा साधको विभूतिस्वरूपं पश्यन्ति, मनुष्यसृष्टौ प्रतिमुहूर्तमेवोपर्युक्तलक्षणेन विभूतिदर्शनं लभ्यते। पुरुषेषु तेजः, स्त्रीषु शोभा, वृक्षलतौषधिप्रभृतिषु पुष्पफलादीनि विभूतिभूतानि विद्यन्ते। इन्द्रियेषु मनो, जीवमात्रे चैतन्यमित्याद्यस्य संक्षिप्तमुदाहरणम्। एवं हि भाग्यवान् साधको भूमिमिमामासाद्य यत्रैव नैजं मानसं नियोजयेत्, तत्रैव विभूत्यवलम्बनेन श्रीमन्तं भगवन्तं द्रष्टुं शक्नुयात्। एतद्धारणायां दृढीभूतायां समाधिरधिगम्यते ॥ ७२ ॥

चतुर्थं वर्णयति—

## स्थूलसूक्ष्मशक्तिषु चतुर्थम् ॥ ७३ ॥

साधकान्तःकरणे सूक्ष्मतरतामापद्यमाने स्थूलोऽपि पदार्थः सूक्ष्मायते। तदानीं स्थूलां सूक्ष्मां वा शक्तिमासृत्य साधकः कृतकृत्यतामापद्यते। स्थूलेषु सूक्ष्मेषु वा प्रपञ्चेषु न तादृशं किमपि स्थानं यत्र भगवच्छक्तिविकाशो न विद्यते। अग्नौ दहकता सूर्यमारभ्य दीपपर्यन्तेषु तेजोमयपदार्थेषु प्रकाशिका शक्तिश्चेत्यादि स्थूलशक्तेरुदाहरणम्। मनसः सर्वगामिनीशक्तिः प्रणानां सर्वसञ्चालिका शक्तिश्चेत्यादि सूक्ष्मशक्तेरुदाहृतिः। सुतरामिमां भूमिमासाद्य भगवद्भक्तः स्थूलायाः सूक्ष्माया वा शक्तेराश्रयेण भगवद्भावं विलोकमानः समाधिभूमिमासाद्यति ॥ ७३ ॥

पञ्चममुच्यते—

## गुणेषु पञ्चमम् ॥ ७४ ॥

भक्तिमार्गस्येमां पञ्चमीं भूमिमासादयतः साधकस्य भक्तिमयदार्शनिकदृष्टिरतितरां सूक्ष्मायते। तदानीं पूर्वोक्तावलम्बनानामनावश्यकत्वम्। केवलं प्रकृतेः सत्त्वरजस्तमोगुणानां दर्शनेन साधकः कृतकृत्यतां भजति। अहं ममेतिवत् ब्रह्मणि तच्छक्तौ चाभेदः, महामायायास्त्रिगुणमयत्वम्, गुणत्रयाधिष्ठातारः सगुणब्रह्मस्वरूपास्त्रिमूर्त्तयश्चैतेषां विज्ञानं प्राग् विशिष्य सुविवेचितम्। भक्तेर्दर्शनभूमिकामिमामासादयन् साधको नैजाज्ञानदृष्टिं दूरीकृत्य प्रतिक्षणं हि केवलगुणदर्शनसाहाय्येन भगवद्भावमनुभवति। तदानीं त्रिगुणानां तद्बन्धनेऽसामर्थ्यं जायते। साधकश्च सर्वदैव भगवत्सत्तामनुभवन् निर्विकल्पसमाधेरभिमुखमग्रेसरति ॥७४॥

षष्ठमुदीर्यते—

## भावेषु षष्ठम् ॥ ७५ ॥

त्रिभाववर्णनं सविस्तरं प्राक् प्रपञ्चितम्। गुणस्यापेक्षया भावस्याधिकारः समुन्नतः। यतो गुणैरेव सृष्टिस्थितिप्रलयाभावेन च तदनुभव इत्यपि पूर्वविवृतम्। यदा भाग्यशाली ज्ञानी भक्तो भक्तेरुच्चतरकोटयां श्रीमद्भगवतो ज्ञानशक्तिमधिकुरुते, तदानीं भगवतः सच्चिदानन्दभावाननुभवन् सर्वदैव भावसमुद्रे निमज्जत्युन्मज्जति च। गुणदर्शनदशायां विशेषरीत्या द्रष्टृदृश्यपार्थक्यं विलोक्यते। भावदर्शनदशायां पार्थक्यं तत् शिथिलायते। तदानीं गुणवैषम्ये दृष्टेरगतिः, ब्रह्मेशविराजां ध्यानमूलकेभ्योऽध्यात्माधिदैवाधिभूतभावेभ्यस्तरङ्गायिते भक्तिसागरे साधको निमज्जंस्तिष्ठति, दशेयं स्वरूपस्थ महापुरुषेण व्युत्थानदशायामासाद्यते ॥७५॥

अन्तमस्य वर्णनमभिधीयते—

## तत्स्वरूपे सप्तमम् ॥ ७६ ॥

भूमिकाया एतस्यादर्शनं सप्तममर्थात् सर्वान्तिममाख्यातम्। ज्ञानिना भक्तशिरोमणिना स्वस्वरूपदशाया-

मधिकारोऽयमासाद्यते । ब्रह्मभावमयो ज्ञानी भक्तो यदा जगत्कल्याणाय यां व्युत्थानावस्थां प्राप्नोति तदवस्था पूर्वमेवाख्याता । परिपूर्णमद्वैतभावमधिगत्य स्वस्वरूपावस्थानमेवैतत्सूत्रलक्ष्यमास्ते ॥ ७६ ॥

प्रसङ्गतः शङ्कां समाधत्ते—

**प्रकृतिप्रवृत्तिशक्तिभेदादेते भेदाः ॥ ७७ ॥**

प्रकृतेः प्रवृत्तेः शक्तेश्च भेदतो ह्येते भेदाः समाम्नाताः । यद्येतद्भक्तिसम्बन्धीय विभेदेषु लक्ष्यभेदाभावं, साक्षाद्रूपेण परोक्षरूपतो वा सर्वेऽपि परां भक्तिमासादयन्ति, तर्हि कथं कल्पानभेद इति शङ्कासमाहितय एवैतत्सूत्रमाविष्कृतं महर्षिणा सूत्रकृता । विश्वस्य त्रिगुणात्मकत्वान्मानवीया प्रकृतिरपि त्रिगुणात्मिका । विशेषतो मनुष्यदेहस्य पाञ्चभौतिकतया प्रत्येकमनुष्ये तत्त्वभेदोऽवश्यम्भावी । अतस्त्रिगुणतदन्तर्भावभेदाननुसृत्य पञ्चभूतविभेदतः साधकानां प्रकृतिविभिन्नतां भजति । अस्मात् कारणात् भक्तप्रकृतिभेदवस्त्वेतेऽधिकारा निर्णीताः । अन्यच्च पूर्वजन्मार्जितानां प्रारब्धसंस्काराणामिहजन्मार्जितानां क्रियमाणसंस्काराणां च विभेदानुसारेण प्रवृत्तिभेदोऽपि निश्चप्रचः । सर्वेष्वप्यधिकारेषु ज्ञानक्रियाशक्तिप्रभृतयो न समानाः सन्ति । फलतो भक्तेराचार्यैर्भक्तानां प्रकृतिप्रवृत्तिशक्तितारतम्यानुसारेण पूर्वोक्ताधिकारभेदकल्पना समनुष्ठिता ॥ ७७ ॥

स्वविचारभूमिदार्ढ्याय शङ्का समाधीयते—

**अद्वितीयस्यापि विभुतया संख्यया चानन्त्यम् ॥ ७८ ॥**

अद्वितीयस्य तत्त्वस्य विभुत्वं संख्यया चानन्तत्वम् । परमात्मनोऽद्वैतत्वेन कार्यकारणयोश्चाद्वैतसिद्धेः ब्रह्मजीवयोर्द्वैतभावावलम्बनेन कथमिव द्वैतभावसिद्धिः सम्भवा ? भक्तिमार्गे जीवब्रह्मणोर्नित्यरूपेण पार्थक्यमङ्गीकुर्वद्भिः कैश्चिदाचार्यैर्यो हि द्वैतवादः प्राचारि, तस्य कथं सम्भावना ? सांख्यादिदर्शनसिद्धान्तानां बहुपुरुषवादाः कथं सम्भवन्तीत्यादि सन्देहा दार्शनिकजिज्ञासुचेतस्सु समुद्भवितुमर्हन्तीति हेतोरिदं सूत्रमाविरभूत् । परमात्मन एकत्वेऽद्वितीयत्वे च तदानन्त्यं स्वतः सिद्धम् । बहुपुरुषवादाधारेण द्वैतसिद्धान्तस्वीकारे संख्ययाऽऽनन्त्यं सिद्धं पूर्वोक्तब्रह्माण्डपिण्डानन्ततासिद्धत्वात् । यस्य विभुत्वं तस्यानन्तत्वमपि । आकाशदेशयोर्विभुत्वस्वीकारे तत्र व्यापकस्यात्मनोऽनन्तता स्वीकृतेः कः सन्देहः ? अन्यच्च चिज्जडग्रन्थेर्विद्यमानत्वेऽज्ञानसत्वात् पिण्डेषु द्वैतभानं स्वतः सिद्धम् । अतो जीवदशायां द्वैतमवश्यमभ्युपगन्तव्यम् । गुणत्रयेण प्रकृतिमभ्युपगच्छन्तो ज्ञानिनः सांख्यमतावलम्बिनः स्वस्वपिण्डेषु त्रिगुणवैभवयुक्तामेकां प्रकृतिं, नित्यशुद्धमुक्तचित्स्वरूपं कूटस्थमनुभवन्ति चेत्तर्हि बहुपुरुषपादकल्पनाऽपि नासंगता । आत्मज्ञानसम्पन्नाः योगिनः सर्वप्रथमं स्वीयपिण्डेष्वेव बहुपुरुषवादज्ञापकं कूटस्थमनुभवन्ति । अपि शब्देनाद्वैतविज्ञानपुष्टिः, तद् विभुत्वस्वीकृतावपि तदनन्तता, बहुपुरुषवादस्वीकारेण तत्स्वरूपानुभवो पिण्डानन्त्यात् पुरुषानन्ततास्वीकृतिरपि न युक्तिविरुद्धा ॥ ७८ ॥

विज्ञानमिदं पुनः परिपोषयति—

**भिन्नावस्थया तच्छक्त्या द्वैताद्वैतभावानुभवः ॥ ७९ ॥**

भिन्ना अवस्था यस्याः तस्यास्तच्छक्त्या ब्रह्मशक्त्या द्वैतस्याद्वैतस्य च भावस्यानुभवो जायते । ब्रह्मशक्तेश्चतुर्विधा भेदाः सविस्तरं प्राक्प्रपञ्चिताः । साम्यावस्था वैषम्यावस्थेति प्रकृतेर्दशाद्वयमङ्गीकृतम् । तुरीया शक्तिरेव साम्यावस्थेत्युच्यते । वैषम्यावस्थायाः स्थूलसूक्ष्मकारणशक्तिनाम्ना त्रिविधो भेदः । अतः साम्यावस्थां प्राप्तायां ब्रह्मणि विलीनायां तुरीयायां शक्तौ

स्वस्वरूपमद्वैतमनुभूयते । अन्यच्च वैषम्यावस्थां प्राप्ता ब्रह्मतः पृथग् भूत्वा कार्यसम्पादयित्री स्थूलसूक्ष्मकारण-भावानधिगता शक्तिर्द्वैतभावं परिदर्शयति । सुतरां ब्रह्मशक्तेर्विभिन्नदशायां द्वैताद्वैतभावानुभवः । नात्र शङ्कावसरः ॥ ७९ ॥

पुनस्तत् परिपोष्यते—

**तन्मयतया पृथक्सत्ताभावतः पूर्णसुखमतो न तत्सालोक्यादौ ॥ ८० ॥**

तन्मयता द्वारा पृथक् सत्ताया अभावेन पूर्णं सुखं जायते, सालोक्यसामीप्यादौ न तदित्यर्थः । पूर्णसुख-नामके ह्यानन्दे इन्द्रियजनितविषयसुखे च महत् पार्थक्यम् । स्वस्वरूपसम्बन्धेन यस्य सुखस्याधिगम-स्तस्यैव नाम पूर्णसुखमानन्दो वा । इन्द्रियसम्बन्धाधिगत सुखमित्युच्यते । वैषयिकसुखे न पूर्णता, पूर्णसुखमा-नन्दखनिरेव सच्चिदानन्दमयं ब्रह्मपदम् । एतत्पदभिन्ने न कुत्रापि पूर्णानन्दस्थानम्, यतो भगवानेवानन्दरूपः । प्रागेवैतत् सर्वं संविस्तरं प्रपञ्चितम् । विषयानन्दो न ब्रह्मानन्दः, स हि ब्रह्मानन्दभासस्वरूपः । एतदपि प्राक् सुनिरूपितम् । सुतरां साधको यथायथा विषयानन्दं परित्यजन् ब्रह्मानन्दाभिमुखमग्रेसरति, तथातथा यथार्थसुखस्याधिकारतां लभते । अन्ते च तन्मयतया स्वीयां पृथक् सत्तामपहाय पूर्णानन्दमधिगच्छति । विषयममुमन्यप्रकारेणाप्यवबोधयति — साधकान्तः-करणस्यैकतो विषयो द्वितीयतश्च ब्रह्मपदम् । तदीय-मन्तःकरणं यावद् भगवद्भावपरिपूर्णं जायते तावदेव तदन्तःकरणतो विषयसुखं विनिवर्त्तते । अन्ते तन्मय-तया यदा तदीयं मानसं पूर्णभगवद्भावसंयुक्तं जायते तदैव तत्र विषयानन्दस्य समूलनाशे ब्रह्मानन्दः समुदेति । विषयोऽयमन्यप्रकारेणाप्यबोध्यते । यत्र द्वैतं तत्र दुःखोदयावसरः, अद्वैतदशायां तु दुःखस्यात्यन्ता-भावो जायते । द्वैतदशायां द्रष्टृदृश्यसम्बन्धसत्त्वात् दृश्यस्य परिणामशीलत्वात् परिशुद्धायामपि द्वैतदशायां दुःख्यस्येषदप्यवसरस्तिष्ठत्येव । फलतस्तन्मयतयाऽद्वै-तभावोदये दुःखं समूलं प्रणश्यति पूर्णसुखमुदेति च । अन्यच्च सालोक्य-सामीप्य-सारूप्यासु त्रिविधमुक्तिषु द्वैतसत्ता तिष्ठति, सायुज्यमुक्तिषु तदभावः । अतः प्रथमासु त्रिविधमुक्तिषु पूर्णं सुखं नोदेति, सायुज्या-ख्यायां चतुर्थ्यां मुक्तौ परिपूर्णं सुखमुदेति । नैकट्य-तारतम्येन सालोक्यतः सामीप्ये ततोऽपि च सारूप्ये ह्यानन्दसत्ता उत्तरोत्तरं प्रवर्धते । परमानन्दपरिपूर्णता सायुज्य एव सम्भवति । कैवल्यादिपदेनाभिहितायां सायुज्यपदविख्यातायां च मुक्तौ को भेद इति शङ्कां समाधत्ते । वस्तुतस्तु सायुज्यपदवाच्यमुक्तिविज्ञानो भेद इयानेव यत् केवलं विष्णुशिवादिसगुणब्रह्मोपासना-सम्बन्धेन मुक्तिः सायुज्यनाम्नाऽऽख्याता । निर्गुणभावा-वलम्बनेन समधिगता कैवल्यमित्युच्यते । सगुणनिर्गुणो-पासनायां यथा रुचिभेदस्तथैवैतन्मुक्तिद्वयाधिकारेऽपि रुचिभेद एव कारणम् । एतत्सूत्रोक्तसिद्धान्तमनुसृत्य रागात्मिकाया भक्तेः सप्तस्वासक्तिषु तन्मयासक्तेरधि-कारः सर्वाभ्यर्हितं आस्ते ॥ ८० ॥

इदानीं मुक्तिविज्ञानं निर्णयति—

**स एक एव कार्यकारणभावात् ॥ ८१ ॥**

कार्यं च कारणं च तयोर्भावात् स परमात्मा एको-ऽद्वितीय एव वर्त्तते । अहं ममेतिवत् ब्रह्मणि तत्प्रकृतौ चाभेदः, कार्यब्रह्मस्वरूपं ब्रह्माण्डपिण्डात्मकं जगच्च ब्रह्मप्रकृतेः समुत्पन्नमिति पूर्वमेव निर्णीतम् । एतदपि सुस्पष्टं यत् कारणब्रह्मैव कार्यब्रह्मकारणमिति । अतो ज्ञानिनो भक्ता ज्ञानदृष्ट्या कार्यकारणयोरैक्यमवगत्य

जगदपि ब्रह्मस्वरूपमवधारयन्ति। एतादृशीं ज्ञानदृष्टिसमुत्पत्तिमन्तरेण नोदेत्यद्वैतभावः। सूत्रेऽत्र एव पदमद्वैतभावं निश्चाययति। निष्कर्षोऽयं यत् कार्यं ब्रह्म कारणं ब्रह्म च कार्यकारणयोरैक्यादेकमेव। अतः परमं ब्रह्मैकमेव ॥ ८१ ॥

विज्ञानं तत् पुनर्दृढीकुरुते—

## नानात्वैक्योपाधिविलये स एव ॥ ८० ॥

नानात्वमैक्यं चोभयमप्युपाधिः, तस्य विलये विनाशे स एव अवशिष्यत इत्यर्थः। उपाधिना हेतुभूतेनैव नानात्वस्यैकत्वस्य चावबोधः। द्वैताद्वैतभावानुभवोऽज्ञानज्ञानाभ्यां जायते। अज्ञानजन्यविद्या द्वैतं, ज्ञानजननी विद्या चाद्वैतभावमनुभावयति। विद्याऽविद्ये ब्रह्मप्रकृतेः रूपान्तरस्वरूपे बोध्ये प्रकृतेः साम्यावस्थायामद्वैतम्, वैषम्यावस्थायां च द्वैतं सिध्यतः। वस्तुतोऽज्ञानमेव भेदप्रतीतिहेतुः। अतोऽज्ञानोपाधिविलये जाते कार्यकारणयोरेकतायां सिद्धायां भेदप्रतीतिर्नश्यति, अद्वैतभावोदयेन च कैवल्याधिगमः सम्पद्यते ॥ ८२ ॥

कैवल्यमार्गं सरलीकर्तुमुच्यते—

## एकतत्त्वप्रतिष्ठितिरेवापवर्गबीजम् ॥ ८३ ॥

एकतत्त्वस्य प्रतिष्ठैवापवर्गस्य निदानम्। एकतत्त्वविज्ञानं सुनिरूपितं प्रागेव। एकतत्त्वयोगे विज्ञानमूलकः योगमार्गे सिद्धिप्राप्तिहेतुः संयमः, मुक्तिदायकनिर्विकल्पसमाधिनिदानं चैकतत्त्वमिति प्रागेव संसाधितम्। प्रसङ्गेऽत्रैकतत्त्ववर्णनस्य तात्पर्यमिदं यत् निष्कामकर्मयोगे उपासनायोगो ज्ञानयोगे चैकतत्त्वं विना मुक्तेरुदयः प्रायशोऽसम्भव एव। मुक्तिप्रदेषु सर्वेष्वपि मार्गेषु एकतत्त्वप्रतिष्ठया साफल्यमधिगम्यते। श्रीमति भगवत्येकतत्त्वप्रतिष्ठया चित्तैकतानताया उदयेन पराभक्तिरुदेति। निष्कामकर्ममूलकः कर्मयोगोऽपि सिध्यति। सदसन्मूलकौ कर्मयोग-ज्ञानयोगौ सिध्यतः। ज्ञानयोगोदयेन ब्रह्मसद्भावसाफल्यमधिगम्यते, भावमूलकोपासनामार्गे एकतत्त्वमेव प्रधानमवलम्बनं क्रियते। यत एकतत्त्वप्रतिष्ठां विना पराभक्तिर्न सिध्यति। कर्मज्ञानयोगयोः सिद्धिमधिगन्तुमेकतत्त्वस्यैव साहाय्यं स्वीक्रियते, किन्तूपासनायाः प्रधानाङ्गेष्वेकतत्त्वसहायतामन्तरेण मुक्तिपदं कदापि सरलं न भवति। उपासनाया अङ्गं योगसाधनम्, तत्प्राणरूपा भक्तिश्चेति पूर्वमेव संसाधितम्। अष्टाङ्गयोगसाधने एकतत्त्वसाहाय्यादृते मुक्तिप्रद-निर्विकल्पसमाधिसिद्धिरसम्भवा। अन्यच्च मुक्तिमार्गसाक्षात्सम्बन्धनिबन्धना पराभक्तिरपि तदैवोदेति यदा भक्तान्तःकरणमेकतानता संयुक्तं सत् प्रतिक्षणमेव भगवत्स्वरूपं परिपश्यति भगवद्भावातिरिक्तो न कोऽपि भाव उत्तिष्ठते। पराभक्तेरधिकारिणो भक्तशिरोमणेरन्तःकरणस्यैकान्तिकव्यवस्थैवैकतत्त्वमूलिकेत्यत्र न मनागपि सन्देहः ॥ ८३ ॥

विज्ञानं तत्पुनः परिपोष्यते—

## साकाण्डत्रये स्थापनमेकतायाः ॥ ८४ ॥

योगमूलक-भक्तिमूलकस्यैकत्त्वरहस्यमुक्त्वा साम्प्रतं ज्ञानमूलकमेकत्त्वरहस्यवर्णनं प्रक्रमते। वेदः सम्पूर्णज्ञानाधारः। प्रकृतिस्त्रिगुणमयी। तत एकोऽपि गुणः पृथग् भवितुं नार्हति, तथैव वेदस्त्रिकाण्डमयः। एकस्यापि काण्डस्य पार्थक्ये वेदस्य वेदत्वं न सम्भवति। वेदस्त्रिविधशुद्धिमूलकः। कर्मकाण्डेनाधिभौतिकी, उपासनाकाण्डेनाधिदैविकी, ज्ञानकाण्डेनचाध्यात्मिकी शुद्धिर्बोभवीति। एवं मलविक्षेपावरणानां यथाक्रमं विनाशेन साधको मुक्तिभूमिमासादयति। सुतरां त्रिविधशुद्धिमूलकेषु वेदस्य काण्डत्रयेषु एकतास्थापनमेवैकतत्त्वप्रतिष्ठालक्षणम्। ज्ञानमूलकैकतत्त्वप्रतिष्ठाविषये

श्रीभगवता निजमुखेन देवान् प्रति प्रोचे। तथाहि—

आनन्दो ज्ञानमूलस्तु ज्ञानं वै ज्ञेयमूलकम्।
तत्त्वमूलं ज्ञेयमात्रं तत्त्वं हि ब्रह्ममूलकम्॥
ब्रह्मज्ञानं त्वैक्यमूलमैक्यं स्यात् सर्वमूलकम्।
ऐक्यं तद्धि सुपर्वाणो भावातीतं सुनिश्चितम्॥८४॥

पुनः सुस्पष्टतां विधत्ते—

## प्रत्येकं त्रित्वात्॥ ८५ ॥

वेदस्य काण्डत्रयेऽप्येकत्वस्थापनपुरस्सरमेकतत्त्व-प्रतिष्ठापनं विज्ञानसिद्धमास्ते। तदेकतत्वमेव मुक्तिनिदानम्। वैदिककाण्डत्रयपुरुषार्थेषु प्रत्येकस्य स्वातन्त्र्यादेकतत्त्वप्रतिष्ठा कथं सम्भवतीति शङ्कां समाधातुमेतत्सूत्राविष्कृतिः। वेदकाण्डत्रयस्य स्वरूपपुरुषार्थ-पद्धत्योः पारस्परिकपार्थक्येऽपि एकत्राऽपि काण्डे त्रयाणां सम्बन्धः। अध्यात्माधिदैवाधिभूत-नित्यनैमित्तिककाम्यभेदेन कर्मकाण्डस्य षड् भेदाः सन्ति। यद्यपि कर्मकाण्डं क्रियाबाहुल्यम्, किन्तु सूक्ष्मदृष्ट्येदं सिद्धं यत् कर्मकाण्डमीशभक्तिमपि स्वीकुरुते। तच्च श्रीभगवच्चरणकमलयोः कर्मफलार्पणं शिक्षयत् मानवं निष्कामकर्मयोगिनं विदधाति।

कर्मणो जडत्वात्तच्चालका देवाः सन्तीति कर्मकाण्डं दैवीं शक्तिमङ्गीकृत्योपासनाकाण्डस्य सहयोगितामापद्यते। अन्यच्च कर्मकाण्डस्योपासनाकाण्डवत् ज्ञानकाण्डेनापि सम्बन्धो वर्त्तते। कर्मकाण्डस्य प्रत्येकक्रियायाः पूर्वापरसम्बन्धः देशकालपात्रादीनां द्रव्य-क्रियाशुद्ध्योर्विचारः, साधारणकर्मणां विशिष्ट-यज्ञादिकर्मणां च दार्शनिकरहस्यं-निर्णयश्चेत्यादि सर्वं ज्ञानकाण्डमूलमित्यत्र नास्ति सन्देहलेशः। एवं हि कर्मकाण्डमन्यस्य काण्डद्वयस्यापेक्षामादधाति। वैध्या भक्तेः, मन्त्रहठयोगादीनां क्रियाकलापाः कर्मकाण्डप्राधान्यमावहन्ति। परया भक्त्या ज्ञानकाण्डस्य कीदृक् सम्बन्ध इति प्रागेवोपवर्णितम्। तथैव ज्ञानकाण्डस्यापि काण्डद्वयापेक्षा वर्त्तत एव मोक्षाभिलाषवतां गुरोः शरणापन्नता गुरुं च ब्रह्मस्वरूपमवधार्य तत्सेवा चेति सर्वं कर्मकाण्डमुपासनाकाण्डमूलमवगन्तव्यम्। आत्मज्ञानाभिलाषिणां संन्यासिनां कुटीचकबहूदकादि संन्यासव्रतग्रहणं कर्मकाण्डसापेक्ष्यम्। वस्तुतो ज्ञानकाण्डस्य श्रवणं कर्मकाण्डबहुलम्, मननमुपासनाबाहुल्यं, निदिध्यासनं च ज्ञानकाण्डबहुलमवधेयम्। दिग्दर्शनेनैतेनेदमवश्यमवधेयम् यत् वैदिककाण्डत्रयमपि परस्पर-सापेक्ष्यं वर्त्तत इति। काण्डानि त्रीण्यपि त्रिविधां शुद्धिमामनन्ति। एवं किल ज्ञानिनो भक्ता यदा त्रिष्वपि काण्डेषु ऐक्यं स्थापयन्तः समदर्शिनो जायन्ते तदानीं तेषु ज्ञानमूलकमेकतत्त्वं प्रतिष्ठितं बोभवीति॥ ८५॥

पुनर्द्रढयति विज्ञानमिदम्—

## श्रुतितः॥ ८६ ॥

श्रुतितो वेदतोऽपि काण्डत्रयस्यैकतत्त्वं सिध्यति, तथाहि छान्दोग्योपनिषदि—

"अस्य लोकस्य का गतिरित्याकाश इति होवाच।" इति।

तत्रैवोद्गीथप्रकरणे यथा—

सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ते" इति।

अन्यच्चापि पुनस्तत्रैव—

"अथ यदतः परो दिवो ज्योतिर्दिव्यते
विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु
लोकेष्विदं वाव तद् यदिदमस्मिन्नन्तः
पुरुषे ज्योतिस्तस्यैषादृष्टिः"। इति।

"गायत्री वा इदं सर्वं सैषा चतुष्पदा षड् विधा"। इति वेदे।

छान्दोग्यं पुनरप्युपाच—

य एषोऽक्षिणि पुरुषो दृश्यते, सआत्मेति।" "को न

आत्मा किं साध्नोति आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषितमेव ब्रूहीति। श्रुतावत्र सर्वत्रैव आकाश-प्राण-ज्योतिर्गायत्री-अक्षिपुरुष-वैश्वानरप्रभृतिभिः शब्दैः प्राप्तं ब्रह्मैव निर्दिष्टमास्ते।

प्रते ब्रवीमि तदु मे निबोधस्वर्ग्य-
मग्निं नचिकेतः प्रजानन्।
अनन्तलोकाप्तिमथो प्रतिष्ठां
विद्धि त्वमेतं निहितं गुहायाम्॥
लोकादिमग्निं तमुवाच तस्मै
या इष्टका यावतीर्वा यथा वा।
स चापि तत् प्रत्यवदद् यथोक्त-
मथास्य मृत्युः पुनरेवाह तुष्टः॥

उपर्युक्तप्रमाणानि श्रौतानि दिग्दर्शनरूपाण्यवगन्तव्यानि। प्रमाणैरेतैरिदं सिध्यति यत् वैदिकानि काण्डत्रयाण्यपि लक्ष्यैकमेवाश्रयन्ति। अद्वैतपदस्वरूपा मुक्तिश्च त्रयाणामपि चरमलक्ष्यरूपा॥ ८६॥

सिद्धान्तमिमं पुनर्द्रढयति—

## दर्शनतश्च॥ ८७॥

दर्शनशास्त्रतोऽपि सिद्धान्तोऽयं दृढीभवति। "आकाशस्तल्लिङ्गाद् ब्रह्मलिङ्गम्" "ज्योतिश्चरणाभिधानात्" "छन्दोभिधान्नेति चेन्न तथा चेतोऽर्पणनिगमस्तथाहि दर्शनम्"। "अन्तर उपदेशः" "वैश्वानरः साधारणशब्द विशेषात्" "नियन्तृत्वात्तत्त्वं धर्मस्य" इत्यादि दर्शनशास्त्रसूत्राणि दिग्दर्शनरूपेण स्वविज्ञानपरिपुष्ट्यै पर्याप्तान्यवगन्तव्यानि। काण्डत्रयाण्यपि मुक्तिपदमेव प्रतिपादयन्त्यत्र नास्ति सन्देहलवः। वेदोक्तानि सप्तदर्शनानि च स्वस्वसिद्धान्तानुसारतो मुक्तिस्वरूपं निर्दिशन्ति। वैदिककाण्डत्रयमीमांसादर्शनानि तु एकमात्राद्वैतपदमभिलक्ष्यैवाग्रेसरन्ति॥ ८७॥

पुनर्दृढीकुरुते—

## स्मृतितश्च॥ ८८॥

स्मृतिभिरप्ययं सिद्धान्तः समर्थ्यते। वेदः किल साक्षाद् भगवद्वाक्यस्वरूपः। अतो वेदाधिकाप्तप्रमाणाभावः। किन्तु वेदमीमांसकदर्शनप्रमाणान्यनुसृत्य सर्वविधशङ्कायाः समाहितिः प्रागेवानुष्ठिता। साम्प्रतमत्र स्मार्त्तप्रमाणैः सप्तप्रमाणसमाप्तिरनुष्ठीयते। यतो वेदैर्दर्शनैः स्मृतिभिश्च मिलित्वा यः किल सिद्धान्तो निश्चीयते न तत्र सन्देहावसरः। उक्तं च स्मृतिशास्त्रे—

पञ्चमी भूमिमारूढो ज्ञानोपासनकर्मभिः।
शोकमोहादिनिर्मुक्तः सर्वदैव विराजते॥
न ज्ञानेन विनोपास्तिर्नोपास्त्या च विनेतरत्।
कर्मापि तेन हेतुत्वं पूर्वपूर्वस्य कथ्यते॥
यद् वा यावन्नहि ज्ञानं तावन्नोपासनं मतम्।
यावन्नोपासनं तावन्न ज्ञानं च कथंचन॥
ज्ञानं यावन्न कर्मापि न तावन्मुख्यमीर्यते।
यावन्न कर्म तावच्च न ज्ञानं साधुसम्मतम्॥
यावन्नोपासनं तावन्न कर्मापि प्रशस्यते॥
यावन्न कर्मोपास्तिश्च न तावत् सात्त्विकी मता॥
ज्ञानोपासनकर्माणि सापेक्षाणि परस्परम्।
प्रयच्छन्ति परां मुक्तिं नान्यथेत्युक्तमेव वः॥
ज्ञानोपास्ती कर्मसापेक्षके ते
कर्मज्ञाने चान्य सापेक्षके च।
कर्मज्ञाने चान्यसापेक्षके त
न्मुक्त्यै प्रोक्तं साहचर्यं त्रयाणाम्॥
ज्ञानोपास्ति स्वीयकर्मस्वस्या
प्येकंमुक्तिर्नैव कस्यापि सिध्येत्।
तस्माद्धीमानाश्रयेदप्रमत्त-
स्त्रीण्युक्तानि श्रद्धया देहपातात्॥

एतेषु साधनेष्वेकं त्रिषु यत्किञ्चिदत्र यः।
त्यजेदसद् गुरूक्त्या स नाश्नुवीत परामृतम्॥

इति ॥ ८८ ॥

सम्प्रति साक्षात् फलमुपवर्ण्यते—

**त्रिष्वेकतत्त्वदर्शिनोऽधिकारो ब्रह्मोपसनायाः ॥ ८९ ॥**

त्रिष्वप्येकत्वदर्शिभिरेव ब्रह्मोपासनाया अधिकारो लभ्यते। वेदप्रतिपादितकर्मोपासना ज्ञानकाण्डेषु एकत्वमधिगतवतां महापुरुषाणां कृते मुक्तेः पन्थाः सरलायते एव, किन्तु तैस्तत्काले कीदृशोधिकारः प्राप्यते इति सम्प्रति महर्षिणा सूत्रकृता समुपवर्ण्यते। समुत्पन्ने साम्यविचारे सात्त्विकबुद्धेरधिकारवान् साधको ब्रह्मोपासनाधिकारं स्वत एवाधिकरोति। सगुणनिर्गुणोपासनाया अनेके भेदाः पूर्वमेव सुप्रपञ्चिताः।

सगुणपञ्चोपासनाधिकारस्तु सार्वभौमभावसंयुक्तः। सर्वविधा अप्यधिकारवन्तः केनापि प्रकारेण सगुणपञ्चोपासनाश्रयतो मुक्तिभूमावग्रे सरन्ति। इदमेव सगुणोपासनायाः सर्वजीवहितकारित्वं महत्त्वं चावधेयम्। वस्तुतः सगुणपञ्चोपासना ब्रह्मोपासनातो नातिरिच्यते। समुन्नतश्च ब्रह्मोपासको भावसाहाय्येन सगुणपञ्चोपासनायां ब्रह्मानन्दमनुभवति, किन्तु परया भक्त्या ब्रह्मसद्भावदशायां यादृक् सर्वाभ्यर्हिता ब्रह्मोपासनाऽधिगम्यते, तस्या एव सूत्रेऽत्र समुल्लेखः। कर्मोपासनाज्ञानेषु साम्यबुद्धौ समुत्पन्नायां ब्रह्मेशविराडिति त्रिविधायां धारणाप्रणाल्यां ध्यानपद्धत्या चैकत्वमवसीयते। गंगायमुना-सरस्वती च यथा तिस्रोऽपि दिव्यनद्यः प्रयागे एकत्वमधिगत्यैकमेव गङ्गारूपं धारयन्ति, तथैव त्रिविधा अपि पद्धतयो ब्रह्मसद्भावधारायां परिणमन्त्यः स्वतएव ब्रह्मोपासनाधिकारमासादयन्ति ॥ ८९ ॥

द्वितीयं फलमुपवर्णयति—

**तदभिन्नमाराध्यं कृत्स्नम् ॥ ९० ॥**

ततोऽभिन्नमेव सर्वमप्याराधनीयं जायते। श्रेष्ठतममिममधिकारमासाद्य योगिराजो महापुरुषः समस्तसंसारं भगवद्भिन्नमवधारयति। आब्रह्मस्तम्बपर्यन्तं समस्तमपि भूमण्डलं तदाराध्यतां गच्छति। उक्तमपि श्रीभगवता निजमुखेन—

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति समहात्मा सुदुर्लभः॥

गीतोक्तवर्णनमिदमनुसृत्योपासनायाः सर्वोत्तममधिकारं ज्ञानीभक्तः समासाद्य कृतकृत्यतामधिगच्छति ॥ ९० ॥

तृतीयं फलं वर्णयति—

**अन्यानानुष्ठित्यापि नक्षतिरहंकारहानात् ॥ ९१ ॥**

अन्यानुष्ठानाभावेऽपि अहंकारस्य नाशात् क्षतिर्नास्ति। पराया भक्तेरधिकारी ज्ञानवान् भक्तोऽधिकारमिममभ्यर्हितमधिगच्छति, तदाऽसौ किंचित्कर्म कामप्युपासनामनुतिष्ठेन्न वा न तस्य काचित् क्षतिः। अधिकारमिमं प्राप्तवति ज्ञानिनि सात्त्विकी धृतिः सात्त्विकं ज्ञानं चोदेति। मलविक्षेपावरणापायेन तस्य भक्तशिरोमणेरन्तःकरणं सदैव भगद्भावे निमज्जति। सुतरां तदन्तःकरणेऽहंकृतेरत्यन्ताभावः संजायते। तदभावेन जीवत्वं प्रणश्यति तेन च कर्मबन्धविनाशः। तदानीमसौ महात्मा कर्मानुष्ठानं कुर्यान्नवा न तस्य काचित् क्षतिः। सूत्रेऽत्रापि शब्दप्रयोगः साधारणाधिकारद्योतकः। सुतरामधिकारमधिगत्येमं जीवन्मुक्तो महापुरुषो विधिनिषेधं चातिवर्त्तते ॥ ९१ ॥

निःश्रेयससिद्धये बन्धनस्य मौलिकं विज्ञानं स्मारयति—

**आसक्तिर्बन्धहेतुश्चित्तमनः संगमजत्वात् ॥ ९२ ॥**

चित्तमनसोः संयोगेन समुत्पन्नत्वात् आसक्तिर्बन्धनस्य हेतुतां भजति। भावविज्ञानप्रसङ्गत आसक्तेः

सविस्तरं वर्णनं पूर्वमेव प्रपञ्चितम्। अन्तःकरणमेव बन्धनमोक्षहेतुः। मनो बुद्धिः चित्तम् अहंकारश्चेत्यन्तःकरणं चतुर्धा विभक्तम्। तेषु मनसो बुद्धेश्च प्राधान्यम्, चित्ताहङ्कारयोर्गौणत्वम्, यतो मनसश्चित्तम् बुद्धेश्चान्तर्विभागोऽहङ्कारश्चेति। मनश्चित्तसंयोगेन समुदीयमाना वृत्तिरेवासक्तिरित्युच्यते। सैव जीवबन्धनकारणं, जीवं च गमागमचक्रे भ्रामयति। अतो बन्धनमूलकारणमासक्तिमवधार्य तां मुमुक्षुः सर्वथा परित्यजेत्॥ ९२॥

इदानीं तत्संगं सर्वथा विहातुं भावस्य मौलिकं विज्ञानमभिधत्ते—

**भावो मुक्तिहेतुर्बुद्धयहङ्कारसंगमजत्वात्॥ ९३॥**

बुद्धेरहङ्कारस्य च संयोगतः समुत्पन्नो भावो मुक्तिहेतुः। "बुद्धेः परः पुरुषः" इति श्रुत्युक्त्या बुद्धया पुरुषसम्बन्धः, ज्ञाननेत्रेण बुद्धिरेव पुरुषं पश्यति। बुद्धयाहंकारसंयोगसमुत्पन्नो भाव एव मुक्तिसाहाय्यं विधत्ते। भावस्य सविस्तरं वर्णनं प्राक् प्रपञ्चितम्। स एवान्तिमं तत्त्वं निर्णीतम् "भावातीतं परब्रह्म" इति श्रुतेः। वस्तुतः सच्चिदानन्दाश्च भाव एव। भावसाहाय्येनैव भावातीतं ब्रह्मपदं परिज्ञायते। अत एतदभ्युपगन्तव्यमेव यद्भावसाहाय्येन ज्ञानी भक्तः स्वकीयमन्तःकरणं मुक्तिभूमिं प्रापयति॥ ९३॥

प्रसङ्गतो भावस्य विशिष्टं महिमानं वर्णयति—

**अभ्युदयो भावशुद्धया॥ ९४॥**

भावस्य शुद्धयैवाभ्युदयो जायते। संसारो भावमयः। भगवानपि भावगम्य एव। विस्तृतं भावविज्ञानमुक्तपूर्वम्। वैषयिक राज्योदाहरणं दीयते। भावसाहाय्येन विषयोऽनुभूयते। असति भावे विषयोऽपि असत्यतामावहति। सद्भावे विषयोऽपि असद्रूप एव। अन्यच्च भावशुद्धयैव भक्तो भक्तिभूमावग्रे सरन् पराभक्तिभूमिमासादयन् अद्वैतभावमधिगत्य निरञ्जने भगवच्चरणसरसीरुहेषु विलयमेति। सुतरां भक्तिसाहाय्येन भक्तोऽभ्युदयमधिगच्छतीत्यत्र कः सन्देहः। सर्वव्यापको भाव आसक्तेरधीनोऽशुद्धः, भगवद्भक्तियुक्तश्च साधकं पवित्रयन् किं वा भक्तिराज्यसम्बद्धश्रद्धादिधार्मिकवृत्तिगुम्फितः शुद्ध इत्युच्यते। अशुद्धस्य भावस्य बन्धनकरणत्वेऽपि शुद्धस्याभ्युदयकारणत्वं सिद्धयति। भावशुद्धयाऽधर्मोऽपि धर्मस्वरूपं धत्ते। उक्तं च कर्ममीमांसायाम्—

"तत्राऽधर्मोऽपि धर्मो भावशुद्धिमत्वात्" इति।

साधकः साधनेन प्रथमावस्थायामभ्युदयमन्ते च निःश्रेयसमधिगच्छति इति सर्वशास्त्रसम्मतो राद्धान्तः। साधकः साधनेन आसक्तिं विरहय्य भावशुद्धेरवलम्बनेन ऐहलौकिकीं पारलौकिकीं च समुन्नतिमभ्युदयाख्यामधिगच्छति। साधकान्तःकरणे रजस्तमसोर्विनाशः, सत्त्वगुणस्य च क्रमविकासतो धर्मशक्तिरभिवर्द्धते। ततश्च भाग्यवान् भक्तः पूर्णरूपेण सत्त्वगुणाधिकारमधिगच्छति एतत्सूत्रोक्तपदमधिकरोति च। अनन्तरं हि साधको एकतत्त्वमधिकुर्वन् आन्तःकरणिक क्लिष्टाक्लिष्टवृत्तीर्निरोधयन् अनन्यभक्त्या निर्विकल्पसमाधिदशामधिकरोति। तदानीं मनसो विनाशो जायते। यथा भर्जितो बीजो नाङ्कुराय कल्पते, किन्तु भोजनयोग्यतामावहत्येव, तथैव प्रारब्धकर्मभोगाय मनसः सहायकत्वेऽपि सञ्चितक्रियमाणकर्मकृते मनः शक्तिहीनतां प्रतिपद्यते। मनोनाशेन बुद्धिरपि विलीयते। यतो बुद्धेरन्तर्विभागोऽहङ्कारः मनो नाशेन सञ्चितक्रियमाणसंस्कारसम्बन्धनाशे अहङ्कारो निर्बीजतां प्रपद्यते, तेन च बुद्धिलय स्वतः सम्भवः। एवं प्रकारेण भाग्यशालिनः साधकस्यान्तःकरणमस्तित्वविरहितं जायते। तदानीमद्वैतभावमय पराभक्तिसमुदयेन भक्तो भगवद्भावमधि-

गच्छति। अवस्थेयं मनोबुद्ध्यतीता ॥ ९५ ॥

सर्वाभ्यर्हितभूमिमासादयतो भक्तस्य स्वाभाविकोऽधिकारं निरूपयति—

## ततो वासनाक्षयतत्त्वज्ञाने ॥ ९६ ॥

ततो वासनायाः क्षयः तत्त्वज्ञाने च भवतः। पूर्वसूत्रोक्तसाधकेन भागवतश्रेष्ठेन निर्विकल्पसमाधिदशायां वासनाक्षयतत्त्वज्ञानाधिगमः स्वतः समवाप्यते। निष्कर्षोऽयं यत् सम्प्राप्तपराभक्तिभक्तेन व्युत्थानदशामधिगत्य जगता सह यदा सम्बन्धः संस्थाप्यते तदा तदीयमन्तःकरणं वासनारहितं तत्वज्ञानपरिपूर्णं सर्वं साधयदपि न किञ्चिदपि विधत्ते। उक्तमपि गीतायाम्

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥
नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्।
पश्यन्न श्रृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन् ॥
प्रलपन् विसृजन् गृह्णन् उन्मिषन् निमिषन्नपि।
इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन् ॥
ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥
सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी।
नवद्वारे पुरे देही नैव कुर्वन् न कारयन् ॥९६॥

चरमफलमुच्यते—

## ततो निःश्रेयसम् ॥ ९७ ॥

योगयुक्तभक्तिमार्गमधिकुर्वन् भाग्यवान् साधको वैध्या भक्तेः रागात्मिकाया भक्तेरधिकारमासाद्य मलविक्षेपावरणतां शुद्धः सन् अन्ते च पराभक्तिसमधिकारमवाप्य सर्वोत्तमामवस्थामधिकुर्वन् एकतत्त्वयुक्तान्तःकरणस्वभावसिद्धगत्या निःश्रेयसमधिगत्य कृतकृत्यतामासादयति। विषयेऽत्र गीतोपनिषदि वर्णनमित्थमुपलभ्यते—

प्रजहाति यदा कामान् सर्वान् पार्थ ? मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥
एषा ब्राह्मी स्थितिः पार्थ ! नैनां प्राप्य विमुह्यति।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥९७॥

प्रसङ्गतः शङ्कां समाधत्ते—

## आविस्तिरो भावविकाराः स्युरुपाधिसंयोगात् ॥९८॥

उपाधेः संयोगत आविर्भावतिरोभावरूपा विकारा उत्पद्यन्ते। ब्रह्मणस्तत्प्रकृतेश्चाभेदो बहुत्र वर्णितः। ब्रह्मप्रकृतेः स्वाभाविकसहजसाम्यावस्थायां अस्वाभाविकविकृतवैषम्यावस्थायाश्च तत्स्वरूपस्य सृष्टेर्दशायाश्च वर्णनं सविस्तरं पूर्वमेवानुष्ठितम् वस्तुतस्त्वविद्योपाधिहेतुनैव द्वैतप्रपञ्चाविर्भावः। अज्ञानमेवैतत्प्रतीतेः कारणम्। तत्त्वज्ञानादद्वैतभावस्योदयेन साकमेव स्वस्वरूपोपलब्धिर्जायते। यथार्थतो ब्रह्मणस्तत्प्रकृतेश्चैक्यात् कार्यब्रह्म कारणं ब्रह्म चैकमेव ॥ ९८ ॥

सिद्धान्तो निरुच्यते—

## परया सर्वलयः ॥ ९९ ॥

पराया भक्तेरुदयेन सर्वस्य द्वैतप्रपञ्चस्य विलयो जायते। अनन्तरं च जीवन्मुक्तो योगिराजो ज्ञानी भक्तो ब्रह्म सायुज्यमधिगच्छन् ब्रह्मस्वरूपतामेति। रागात्मिकया भक्तेर्दशायाम् भक्तस्य ब्रह्मरससागरे निमज्जनोन्मज्जनदशा अपि तिरोदधाति। पराभक्तेरुदयसमकालमेव द्वैतभावो नाशमेति, तेन च द्वैतप्रपञ्चस्य सर्वथा तिरोभावो जायते। शास्त्रेषु विभिन्नेयमवस्था निर्विकल्पसमाधि-जीवन्मुक्ति-ब्रह्मसद्भाव-विदेहलयादिनामभिरुक्ता।

इमामेवावस्थामभिलक्ष्य श्रुतिराह—

गताः कलाः पञ्चदश प्रतिष्ठा
देवाश्च सर्वे प्रतिदेवतासु।
कर्माणि विज्ञानमयश्च आत्मा
परेऽव्यये सर्व एकीभवन्ति ॥९९॥

लक्ष्यभूतायाः पराया भक्तेरवस्थां वर्णयति—

**पराभक्तेरवस्था चतुर्विधा परिणति-विश्रान्ती-क्षणयोगभेदात् ॥ १०० ॥**

परिणतिः, विश्रान्तिः, इक्षणम् , योगश्चेति चतुर्विधा पराया भक्तेरवस्था विज्ञेया। परां भक्तिमधिगतवतो भगवद्भावापन्नस्य भागवतस्य चतस्रः अवस्था वेद-शास्त्रेपु बहुत्र समुपलभ्यन्ते। एतस्योदाहरणं स्मृति-शास्त्रतः प्रदाय पूज्यपादसूत्रकारः तात्पर्यमवगमयितुं प्रयत्नोऽनुष्ठीयते। स्मृतावुक्तं च—

"सर्वेषां दृश्यवस्तूनां त्रिधा दर्शनमस्ति यत्।
आध्यात्मिकाधिदैवाधिभौतिकत्रयरूपतः"॥ इति।

प्रथमदर्शेयं पूर्वमेव सुविवेचिता पराया भक्तेरधि-कारवतो ज्ञानिनो भक्तस्य व्युत्थानदशायां दृश्यप्रप-ञ्चेषु दर्शनमिदं बोभवीति। दर्शयैनया बहिर्जगतोऽधिकः सम्बन्धः। एतदतिरिक्तासु तिसृष्ववस्थासु प्रथमाया विश्रान्तिदशायाः सम्बन्धे स्मृतावुक्तम्—

ब्रह्मेदं बृंहितं ब्रह्मशक्त्याकारा विकाशया।
मनसा मनसि च्छिन्ने स्वेन्द्रियावयवात्मनि॥
सत्यालोका जगज्जाले प्रच्छन्ने विलयं गते।
क्षीयते शीर्णसंस्कारकलना कल्पनात्मिका॥
भ्रष्टबीजोपमासत्ता जीवस्येति च नामिका।
पश्यन्तीनाम कलितोत्सृजन्ती चेत्य चर्वणाम्॥
मनोमोहाभ्रनिर्मुक्ता शारदाकाशकोषवत्।
शुद्धा चिद्भावमात्रस्था चेत्यापि श्चापलं गता॥
समस्तसामान्यवती भवतीर्णा भवार्णवा।
अपुनर्भवसौषुप्तपदं पाण्डित्य-पीवरी॥
परमासाद्य विश्रान्ता विश्रान्ता वितते पदे।
द्वितीयं शृणु विप्रेन्द्र शक्तेरस्याः सुपावनम्॥
एषैव मनसोन्मुक्ता चिच्छक्तिः शान्तिशालिनी।
सर्वज्योतिस्तमोमुक्ता वितताकाशसुन्दरी॥
घनसौषुप्तलेखावच्छिलान्तः सन्निवेशवत्।
कालेन यत्र तत्रैव परां परिणतिं यदा॥
शून्यशक्तिरिवाकाशे परमाकाशजा तदा।
चेत्यांशोन्मुखता नूनं त्यजत्यम्बिव चापलम्॥
वातलेखेव चलनं पुष्पलेखेव सौरभम्।
कालताकाशके त्यक्त्वा सकले सकला कला॥
नजडा नाऽजडा स्फारा धत्ते सत्तामनात्मिकाम्।
दिक्कालाद्यनवच्छिन्नमहासत्तापदं गताम्॥
तूर्यतूर्या शकलितामकलङ्कामनामयाम्।
काञ्चिदेव विशालाक्षसाक्षिवत् समवस्थिताम्॥
सर्वतः सर्वदा सर्वप्रकाशस्वाद्वतत्पराम्।
एषा द्वितीया पदता तव सुव्रत शोभते॥
तृतीयं शृणु वक्ष्यामि पदं पदविदांवर।
एषादृक् चेत्यवलनादनामार्थापदं गता॥
ब्रह्मात्मेत्यादि शब्दार्थादतीतोदेति केवला।
स्थैर्येण कालतः स्वस्था निष्कलङ्का परात्मना॥
तूर्यातीतादिनामत्वादपि याति परं पदम्।
सा परा परमा काष्ठा प्रधानं शिवभावतः॥
चित्येका निरवच्छेद्या तृतीता पावनी स्थितिः।

इमाः किल चतस्रोऽवस्थाः परिणतिः, विश्रान्तिः ईक्षणाम् , योगश्चेति नामत उच्यन्ते ॥ १०० ॥

पराया भक्तेरधिकारिणो ज्ञानिनो भक्तस्यानुभवान् वर्णयति—

**अनुभवस्त्रिविधः ॥१०१॥**

स्पष्टोऽर्थः। परां भक्तिमधिगतवतो ज्ञानिनो भक्तस्य

बहिर्दृष्टिसमयेऽन्तर्दृष्टिकाले च या चिन्मयी धारा चतुर्धा प्रवहति, तस्य वर्णनं पूर्वसूत्रेषु समुट्टङ्कितमेव। इदानीं महापुरुषस्य क्रमप्राप्तोऽनुभवो वर्ण्यते। चित्स्वभावो ज्ञानम्, सत्स्वभावोऽस्तितामूलकः। अतः अस्ति भाति चेति द्वयमपि सहैवानुभूयते। अतो ज्ञानस्य विज्ञानमुच्यमाने अनुभवविज्ञानमप्यवश्यमेवावधार्यम्। इत्यालोच्यैव पूज्यपादो महर्षिः सूत्रकारः सूत्रमिदमाविर्भावयामास। वैज्ञानिकीं दृष्टिं द्वारीकृत्य श्रीमन्तो भगवता ब्रह्मेशविराड्रूपैः त्रिभिर्भावैः श्रीभगवन्तं निरीक्षन्ते। एतानेव त्रीन् भावाननुसृत्य त्रिविधा अनुभवा अप्यग्रे वक्ष्यन्ते ॥१०१॥

प्रथमानुभवस्वरूपमुच्यते—

## इदं तदिति ॥ १०२ ॥

परां भक्तिमधिगतवतो ज्ञानिनो भक्तस्य सर्वोत्तमदशायामिह प्राथमिकोऽनुभव इत्थं जायते यत् द्वैतप्रपञ्चरूपं जगत् भगवत्स्वरूपमेवेति। अर्थात् तदानीं सर्वमिदमद्वैतरूपेण निभालयताऽपि भक्ताग्रगण्येन जगत् भगवद्रूपमेव दृश्यते। अद्वैतभावस्थितौ सत्यां स्वीयमस्तित्वमपि भगवत्स्वरूपे जगति विलीयते। प्रतिक्षणं च तेनेत्थमनुभूयते यत् सर्वमपि दृश्यप्रपञ्चं भगवत्स्वरूपमेव। स्थितिमिमां लक्ष्यीकृत्य स्मृतावित्थमुपलभ्यते—

भावयन्तः कर्मतत्त्वं पराभक्त्यधिकारिणः।
अस्त्येवैतज्जगद्ब्रह्म धारणामीदृशीं मम ॥
सर्वथा सर्वदा देवाः कुर्वते कर्मयोगिनः ॥१०२॥

द्वितीयोऽनुभवो निरुच्यते—

## तदेवेदम् ॥ १०३ ॥

भक्ताग्रगण्येन ज्ञानिना भक्तेन योहि द्वितीयोऽनुभवो विधीयते, तत्र किञ्चिद् वैलक्षण्यं निभाल्यते। दशायामत्र द्वैतभावनाशपूर्वकमद्वैतभावे स्थितेऽपि चैतदनुभूयते यद् भगवान् जगत्स्वरूप एव। पूर्वावस्थायां प्रथमं जगद्धारणा। अत्र पूर्वं भगवद्धारणा समापतति। सर्वं किलाद्वैतस्वरूपं भगवद्व्यतिरिक्तं न किमपीति धारणायां जगतो भानं प्रणश्यति। जगद्भानप्रणाशेन साकं नैजमस्तित्वमपि विलीयते। स्मर्यते चात्र—

"मत्पराभक्तिनिष्णाता मद्भक्ता योगिनां वराः।
ब्रह्मैवास्ते जगत्सर्वमितिधारणयाऽनिशम् ॥
महात्मानो निरीक्षन्ते विश्वस्मिन् सुरसत्तमाः ॥१०३॥

अन्तिमानुभवस्वरूपं निर्णीयते—

## तदेवाहमिति तदेवाहमिति ॥ १०४ ॥

भक्तशिरोमणिना जीवन्मुक्तेन महापुरुषेण अन्तिमावस्थायाम् "अहं ब्रह्मास्मी" त्यनुभूयते, पूर्वोक्तदशाद्वयेऽद्वैतभावसिद्धौ सत्यामपि पुरतः पृष्ठतश्च जगत्प्रपञ्चभानसत्ता निरीक्ष्यते। परमन्तिमायामवस्थायामत्र जगतो भानं निर्मूलं प्रणाशमेति। तदानीमद्वैतभाननाशपुरस्सरं स्वकीयास्तितायां विनाशः अस्ति भातीत्युभयोरेव स्वस्वरूप एव विलयो वोभवीति। पूर्वोक्तानां चतसृणामवस्थायामेतदन्तिमया दशया साकं सामञ्जस्यमवधेयम्। स्मृतावुक्तं चापि—

अहं ब्रह्मास्मि भो देवा इति धारणयाऽस्ति मे।
जीवन्मुक्ता महात्मानस्तदा तां प्राप्तुमीशते ॥

इममेवान्तिमं सर्वाभ्यर्हितमधिकारं लक्ष्यीकृत्य श्रुतिराह—

ओं पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥१०४॥

इति लयपादः।

# हृदयोल्लासः

पाटलिपुत्रस्थितस्य

'पद्मश्री' पण्डित श्रीविष्णुकान्तझा शर्मणः

( ज्यौतिषाचार्य-ज्यौतिषरत्न-ज्यौतिषपञ्चानन-दैवज्ञशिरोमणेः )

( १ )

अन्नपूर्णाविश्वनाथौ जगतः पितरावुभौ ।
विश्वकल्याणदौ देवौ प्रणमामि पुनःपुनः ॥

( २ )

जयति जयति नित्यं भारतन्देश एषः
जयति जयति सम्यग्वैदिकः श्रेष्ठधर्मः ।
जयति जयति शश्वच्छ्रीमहामण्डलं सद्-
जयति जयति पत्रं श्रील-''सूर्योदयाख्यम्'' ॥

( ३ )

तीर्थं विश्वसुविश्रुतं प्रमहितं काशीपुरीनामकं
''यत्रास्ते भगवानुमापतिशिवः श्रीविश्वनाथः स्वयम् ।
पूज्यैर्देवगणैर्वृतोऽमृतमयं ज्ञानं वितन्वन्सदा''
तद्‌गङ्गातटवर्त्ति सद्विजयते भुक्तिप्रदं मुक्तिदम् ॥

( ४ )

नित्यं सिद्धमहात्मभिः सुधिषणैर्विद्वद्भिरासेवितं
श्रीमद्भारतधर्मपूर्वकमिदं मान्यं महामण्डलम् ।
प्राञ्चं वैदिकधर्ममुच्चमनिशं प्रख्यापयद्‌भूतले
काश्यां शङ्करविश्वनाथनगरे रम्ये परं राजते ॥

( ५ )

नानाशास्त्रपुराणवेदनिखिलज्ञानाब्धिपारङ्गतो
वेदान्तोपनिषत्प्रबोधलसितः सन्न्यासिवर्यःस्तुतः ।
ब्रह्मानन्दसुधासुपङ्कजवनीसरषट्पदो भ्राजितो
''ज्ञानानन्द''महोदयोऽत्र समभूद्‌भूपैर्बुधैश्चार्चितः ॥

( ६ )

ब्रह्मज्ञानपरायणस्य महतस्तस्यैव कृत्यैः शुभैः,–
विद्वद्वर्य-"रमेश्वरस्य" मिथिलाधीशस्य हृद्योगतः ।
अन्येषामपि भक्तिधर्मसुभृतां सद्योगदानैस्तथा
श्रीमद्भारतधर्ममण्डलमहो निर्माणमापत्सुखम् ॥

( ७ )

यत्सद्धर्मविवृद्धयेऽत्र विपुलं यत्नं प्रकुर्वत्सदा
विद्याबुद्धि-चरित्रशील-सुगुणाचारप्रचारोद्यतम् ।
लोकक्षेमसमृद्धये बहुविधं कार्यं च तन्वत्परं
तच्छ्रीभारतधर्ममण्डलमिदं विद्योततेऽस्मत्प्रियम् ॥

( ८ )

प्रत्यब्दं सुरवाक्प्रचारणकृते सत्पण्डितेभ्यश्चिराद्
विद्योपाधिप्रदानपुण्यविधिना कीर्त्तिं परामाश्रयत् ।
यद्यज्ञादिकमाचरत्यतितरां विश्वप्रशान्त्यै सदा
तल्लोके सुविराजतेऽतिमहितं दीव्यन्महामण्डलम् ॥

( ९ )

यद्धर्मं हि सनातनं गुरुतरं प्राचीनमुद्भासितं
विश्वक्षेमकृते तनोति चिरतस्तस्मात्प्रतिष्ठां गतम् ।
ख्यातं भारतधर्ममण्डलमहो सद्धार्मिकैः संवृतं
तद्देशाय सुधर्मगौरवमिदं बिभ्राजते सर्वतः ॥

( १० )

गीर्वाणामृतवाक्प्रचारविषये "सूर्योदयाख्यं" महत्
पत्रं संस्कृतवाङ्मयं सुविदितं प्राचीनकालादिह ।
प्राकाश्यं समुपैति धर्मकमहासन्मण्डलात्सत्तमाद्-
यत्पत्रेषु समेषु संस्कृतविदः श्रेष्ठं परं मन्वते ॥

( ११ )

यच्छास्त्रोक्तविशिष्टपुण्यसमये तीर्थेष्वनेकेषु तान्
योग्यान्स्वीयसदस्यकानविरतं संप्रेष्य धर्माध्वनाम्
कार्याणि प्रथयत्यतीव विधिना श्रीमन्महामण्डलं
तस्मात् ख्यातिमुपाश्रयत्यतितरांत्तद्धर्मवृद्धय्रे रतम् ॥

( १२ )

"सूर्योदये" पण्डितमान्यपत्रे
भक्तेर्विशिष्टाङ्कप्रकाशनं सत् ।
भावीति तस्मान्मुदितस्य मेऽद्य
स्वान्तं नितान्तं नयतीह तृप्तिम् ॥

( १३ )

ख्यातस्य सूर्योदयनामकस्य
पत्रस्य सम्पादकमण्डलेभ्यः ।
विद्वद्वरेभ्यश्च प्रबन्धकेभ्यः
सद्धन्यवादानहमर्पये द्राक् ॥

( १४ )

सूर्योदयस्याभ्युदयं समिच्छन्
विद्वद्वराणां भवतां करेषु ।
सुपद्यपुष्पाञ्जलिमर्पयेऽहं
"श्रीविष्णुकान्तो" विनयान्वितः सन् ॥

—:o:—

# शुभाशंसनम्

'सूर्योदयः' चिरात् सांस्कृतिके, धार्मिके च क्षेत्रे गीर्वाणवाणीं वर्धयन्, जनानां तमांसि च क्षपयन् उदेति । तस्य इदानीं 'भक्तिविशिष्टाङ्क' प्रकाशनमुपश्रुत्य चेतो मोमुदीति । भक्तिरुपासनान्तर्गता चेतसो मलं दवयित्वा तदीयां शुद्धिं विधाय परमपुरुषार्थमुक्तिसाधनाय कल्पते—इति तदीयप्रकाशनं चेतो मालिन्यवति युगेऽस्मिन् परमप्रयोजनीयम्—इति तदीयोऽध्यवसायोऽतितरामभिनन्द्यतेऽस्माभिः ।

निवेदकः—

श्री दीनानाथशर्मा शास्त्री सारस्वतः
विद्यावागीशः, विद्याभूषणः, विद्यानिधिः
प्रिंसिपल, संस्कृतमहाविद्यालय, दरीबाकलां, देहली ।

# सम्पादकीयम्

भारतीयं दार्शनिकं ज्ञानं कलाकौशलं वाणिज्यं व्यवसायश्च आधिभौतिकसमुन्नतिपूर्वकमाध्यात्मिकसमुन्नतेः अग्रेसरत्वात् प्राचीनकालत एव जगद्गुरुपदे प्रतिष्ठितं वर्तते। अद्वैतप्रतिपादकं भारतीयं दर्शनशास्त्रं आध्यात्मिकतायाः परमामुच्चकोटिमधिष्ठितमासीत्। अद्यत्वेऽपि विश्वस्मिन् पौर्वात्याः पाश्चात्याश्च सर्वे मनीषिणः भारतवर्षीयामाध्यात्मिकीं समुन्नतिमेकस्वरेण सर्वोत्कृष्टां स्वीकुर्वन्ति। सर्वगुणसम्पन्नतया भारतीयाः शिक्षा चरित्राचारव्यवहारादयः सर्वत्र प्रसृता आसन्। अन्ये देशवासिनोऽपि भारतादेव सर्वं गृह्णन्तिस्म। अत एवोक्तं भगवता मनुना—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥

मनुष्यजीवने शिक्षायाः सर्वोपरि महत्त्वमस्ति। यदि देशं समुन्नतिशीलं विधातुमिष्यते, भारतीयम् आर्यगौरवं पुनः प्रतिष्ठापितुमभिलष्यते, वास्तविकं सुखं वांछयते, राष्ट्रस्य सर्वाङ्गीणं कल्याणं काम्यते, तर्हि उत्तमशिक्षया बालका बालिका चावश्यं शिक्षितव्याः। उत्तमशिक्षाया उद्देश्यं केवलं भृत्यताप्राप्तिर्नास्ति, किन्तु शिक्षया समीचीनं ज्ञानं संप्राप्य सार्वजनिकं कल्याणकरणमेवास्ति। सुशिक्षायाः शीतलेन ज्योतिषा हृदयसरोजकलिकाया विकासद्वारा मानवमात्रस्य कल्याणसम्पादनमेव श्रेयस्करं प्रतिभाति। अस्माकं पवित्रतमं भारतवर्षं शिक्षाक्षेत्रे सर्वतोऽग्रगण्यमादर्शभूतञ्चासीत्। परिस्थितिपारवश्यात् दौर्भाग्येनास्माकं कर्तव्यहीनतया भारतं परतन्त्रतापाशबद्धं सत् स्वं पवित्रमुद्देश्यमेव विसृष्टवत्। परिणामतोऽस्माकमुत्तमायाः शिक्षायाः पतनं जातम्। येन भारतीयाः स्वं गौरवमादर्शञ्च विस्मृत्य पाश्चात्यानामन्धानुकरणं कर्तुं प्रवृत्ताः। पाश्चात्यशिक्षापद्धत्या शिक्षितानां भारतवासिनां मानसिकपरिवर्तनेन सह आचार-विचार-व्यवहार-शिक्षादिषु महत्परिवर्तनमजायत। भारतीयताविरुद्धं तात्कालिकं भौतिकह्रासं आध्यात्मिकं नैतिकं पतनञ्चावलोक्य विचारशीलानां भारतीयमनीषिणां मनःसु महती चिन्ता प्रादुरभवत्। ततस्ते भारतस्य कल्याणाय स्वविचारानुसारमभिनवा योजना उपस्थापिता यया भारतं स्वतन्त्रं भवेत्। परिणामतः स्वतन्त्रतायै भारतं जागरितम्। समस्ते भारते चेतनायास्तरङ्गा उद्वेलिताः। "सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्" इति सिद्धान्तमनुसृत्य समस्ते भारते जनजागरणं जातम्। सौभाग्यात् देशभक्तानां त्यागेन जनताजनार्दनस्यादम्येनोत्साहेन सार्वजनीनेन सहयोगेन च भारतं परतन्त्रतापाशविमुक्तं भूत्वा स्वतन्त्रतासाम्राज्यसुखमनुभवति। हर्षास्पदमिदं यत् परतन्त्रतासमयेऽपि भारतीयानां आध्यात्मिकं ज्ञानज्योतिर्निरन्तरं प्रज्वलितमेवासीत्। स्वस्वरूपज्ञानसंस्कारो भारतीयानामासीदतो भारतमतिशीघ्रमेव स्वतन्त्रं जातम्।

स्वतन्त्रताप्राप्तिमात्रेण सर्वविधं सुखं प्राक्तनम् आदर्शभूतं गौरवं च प्राप्तुं न शक्यते। किन्तु सर्वकल्याणकारिण्या भारतीयसंस्कृतेः रक्षार्थं भारतवर्षं समृद्धशालिसमुन्नतराष्ट्ररूपे परिणमयितुं शिक्षाविधानेऽपि महत्परिवर्तनमत्यावश्यकमस्ति। यतोहि पाश्चात्यप्रणाल्या प्रवर्तितशिक्षातो भारतीयानां वास्तविकं कल्याणं भवितुं नार्हति। एतदर्थं सर्वभाषाजनन्याः संस्कृतभाषायाः प्रचारः प्रसारश्च शिक्षाक्षेत्रेऽनिवार्यरूपेणावश्यकोऽस्ति।

महतो हर्षस्यायं विषयो यत् प्रतिप्रान्तं वर्तमाना

राष्ट्रनायका नेतारः संस्कृतभाषाया महत्त्वं मुक्तकण्ठं प्रशंसन्ति। संस्कृतं समुन्नेतुं सर्वतोभावेन प्रयतन्ते, अन्यभाषासमानमेव समादरं च कुर्वन्ति। केन्द्रीय-शासनमपि संस्कृतभाषायाः पुनरुत्थाने प्रचारे प्रसारे च सर्वविधैरुपायैः प्रोत्साहनं ददाति। केन्द्रीय-शिक्षा-सचिवस्य माननीय डाक्टर कालूलाल श्रीमाली महोदयस्य शुभप्रेरणया केन्द्रीयशिक्षामन्त्रालयस्य साम्प्रतिकं साहाय्यं सर्वथा प्रशंसनीयमस्ति। अतः केन्द्रीयं प्रान्तीयञ्च शासनं सबहुमानं धन्यवादार्हमस्ति।

संस्कृतं हि विश्ववर्तिषु समस्तेषु वाङ्मयेषु अतिप्राचीनं सर्वोत्कृष्टं सरलमत्यन्तमुपयोगि चास्ति। एतस्यैवाक्षुण्णः प्रभावः सर्वासु भाषासु साक्षात् परम्परया वा वर्तते। संस्कृतमेव अखिलं भूमण्डलमेकसूत्रे सम्बद्धुं सर्वथा समर्थमस्ति। अन्यभाषाविवादस्यावसर एव न समुपतिष्ठते यतो हि सर्वभाषाजननी संस्कृतमेवास्ति। एतस्याभ्युत्थानेन समाजस्य राष्ट्रस्य च सर्वविधं मङ्गलं भवितुमर्हति। अस्यां दिशि शुभशकुनमेवास्ति यत्केन्द्रीयशिक्षामन्त्रालयद्वारा संस्कृतभाषापत्रपत्रिकाभ्य आर्थिकं साहाय्यं विधातुं व्यवस्था क्रियते। अर्थाभावेनैव बहूनि संस्कृतपत्राणि पत्रिकाश्च स्वोद्देश्यं पूरयितुं न शक्नुवन्ति किन्तु अल्पकाले एव विलीयन्ते। अर्थप्रधानेऽस्मिन् युगे अर्थाभावेन कस्मिन्नपि क्षेत्रे सफलतायाः प्रयासो व्यर्थो बोभवीति। अतः संस्कृतस्य पत्रेभ्यः पत्रिकाभ्यश्च सर्वकारीयसाहाय्यमवश्यमेवापेक्ष्यते। महतो दुःखस्यायं विषयो यदस्मिन् पत्रपत्रिकाप्राधान्ययुगे एकमपि संस्कृतस्य दैनिकं पत्रं न निःसरति भारते। अपि तु यानि संस्कृतपत्राणि पत्रिकाश्च निःसरन्ति तेषामवस्था दयनीयैवास्ति। अयोध्यातः प्रकाश्यमानं साप्ताहिकं संस्कृतपत्रमपि न सम्यक् प्रचलति। का दुरवस्था अन्येषां संस्कृतस्य पत्राणां पत्रिकाणाञ्च। सूर्योदयः प्रथमं मासिक आसीत्परमर्थाभावेनैवेदानीं त्रैमासिको जातः। अतो भारतीयसर्वकारेण सन्नद्धतया संस्कृतपत्रपत्रिकाप्रकाशनायावश्यं प्रचुरं साहाय्यं प्रदाय संस्कृतस्य सर्वविधा समुन्नतिः कर्तव्या।

'सूर्योदयो' हि सुरभारती—प्रचारार्थं सप्तत्रिंशद्वर्षतो निरन्तरं प्रयतमानः स्वकर्तव्यं प्रतिपालयति। भारतीयसंस्कृतिसंरक्षणे संस्कृतभाषाविदुषां सम्माने च सर्वथा प्रयत्नशीलोऽयं सूर्योदयः सर्वकारेण सर्वथा संरक्षणीयः। केन्द्रीयशिक्षामन्त्रालयद्वारा संस्कृतभाषापत्रेभ्योऽर्थदानव्यवस्थायामेकः सूर्योदयोऽपि वर्तते। यदि सर्वकारीयमार्थिकसाहाय्यं निरन्तरमभविष्यत्तर्हि मन्येऽयमितोऽपि दृढतया संस्कृतस्य प्रचारं समुन्नतिञ्चावश्यमकरिष्यदेव।

संस्कृतपत्रपत्रिकाभ्य आर्थिकसहयोगदानेन सह सर्वविधेषु विद्यालयेषु महाविद्यालयेषु विश्वविद्यालयेषु चानिवार्यरूपेण संस्कृतस्याध्ययनव्यवस्थां विधाय शासनेन संस्कृतस्याभ्युत्थाने पूर्णः सहयोगः प्रदेय इति सादरमनुरुध्यते। एवमेव स्वतन्त्रभारतस्य गौरवं सुरक्षितं स्थास्यति। शिक्षा-क्षेत्रीयविद्यार्थिषु समागतः साम्प्रतिको दोषो दूरीभविष्यति, देशसेवकानामुद्देश्यं सफलं भविष्यति, राष्ट्रस्य वास्तविकं कल्याणं च भविष्यतीति नास्ति सन्देहलेशः। आशास्यते राजशासनं केन्द्रीयशासनञ्चावश्यमस्यां दिशि ध्यानं प्रदाय संस्कृतस्य प्रचारे प्रसारे च सर्वतोभावेन सहयोगं दास्यत्येव।

जयतु सुरभारती

—:o:—

# श्रीभारतधर्ममहामण्डल-शास्त्रप्रकाश-विभागद्वारा प्रकाशितपुस्तकानि

## श्रीस्वामि दयानन्द महाराज द्वारा रचितानि

### (१) दार्शनिक ग्रन्थ—

१—कर्ममीमांसादर्शन प्रथम भाग १॥)
२— ,, ,, द्वितीय भाग २)
३—दैवीमीमांसादर्शन – प्रथम भाग ३॥)
४— ,, ,, द्वितीय भाग ५)
५—योगदर्शन हिन्दी-भाष्य-सहित २)
६—वेदान्त-दर्शन चतुःसूत्री हिन्दीभाष्य ॥—)
७—श्रीदत्तात्रेय दर्शनादर्श (संस्कृत) १)
८—कठोपनिषद् हिन्दी-भाष्य ३)
९—केनोपनिषद् ,, ॥)
१०—ईशावास्योपनिषद् ,, ॥)
११—श्रीमद्भगवद्गीता हिन्दी-टीका प्रथम भाग ४)
१२— ,, ,, द्वितीय भाग ३॥)
१३—श्रीविष्णुगीता १)
१४—श्रीशंभुगीता १)
१५—श्रीशक्तिगीता १)
१६—श्रीसूर्यगीता ॥)
१७—श्रीधीशगीता ॥)
१८—श्रीसंन्यासगीता १)
१९—श्रीगुरुगीता ।)

### (२) धार्मिक ग्रन्थ—

२०—सत्यार्थ-विवेक-धर्मकल्पद्रुम प्रथम खण्ड ५)
२१—श्रीधर्मकल्पद्रुम द्वितीय खण्ड १॥)
२२—श्रीधर्मकल्पद्रुम तृतीय खण्ड २)
२३—श्रीधर्मकल्पद्रुम चतुर्थ खण्ड ( यंत्रस्थ )
२४—श्रीधर्मकल्पद्रुम पंचम खण्ड २)
२५—श्रीधर्मकल्पद्रुम षष्ठ खण्ड ३॥)
२६—श्रीधर्मकल्पद्रुम सप्तम खण्ड २)
२७—श्रीधर्मकल्पद्रुम अष्टम खण्ड ३॥)
२८—धर्मविज्ञान प्रथम खण्ड ५)
२९—धर्मविज्ञान द्वितीय खण्ड ४)
३०—धर्मविज्ञान तृतीय खण्ड ४)
३१—श्रीरामगीता हिन्दी-टीका-सहित २॥)
३२—संन्यासधर्म-पद्धति १॥)
३३—पुराणरहस्यम् (संस्कृत) १॥)
३४—कहावत-रत्नाकर संकलित १०)
३५—हठयोगसंहिता ॥)
३६—उपदेश-पारिजात ( संस्कृत ) ॥)
३७—त्रिवेदीय सन्ध्या ।=)
३८—स्तोत्र-कुसुमांजलि ।)
३९—महिला-प्रश्नोत्तरी =)
४०—निर्मूल आक्षेपोंका उत्तर ।=)
४१—अन्तःकरण-विज्ञान ॥)
४२—दुर्गासप्तशती ( मातृमहिमा-प्रकाशिनी टीका )
सजिल्द १॥।=)
अजिल्द १॥)
४३—पूजा-प्रार्थना ।)
४४—हिन्दूधर्मका स्वरूप ≡)
४५—गायत्री-मन्त्रकी टीका ।)
४६—स्मरणी ॥=)
४७—स्त्री-पुरुष-विज्ञान ।)
४८—श्राद्ध और परलोकविचार ।=)
४९—तीर्थ और देव-पूजन प्रश्नोत्तरी =)
५०—सुलोचना ( नाटक ) ॥)
५१—गोव्रत-तीर्थमहिमा ॥)
५२—गोस्वामी तुलसीदासकृत रामायण (टीका) १॥)
५३—मार्कण्डेयपुराण हिन्दी प्रथम खण्ड २)
५४— ,, ,, ,, द्वितीय खण्ड १)
५५— ,, ,, ,, तृतीय खण्ड १)
५६—संगीत-सुधाकर ।)
५७—व्रतोत्सव-चन्द्रिका ४)
५८—वर्ल्डस् इण्टरनल रीलीजन ( अंग्रेजी ) ३)
५९—इण्डिया इण्टरनल रीलीजन ( ,, ) ॥)

## (३) प्राइमरी, हाईस्कूल एवं इण्टरमीटियेट कालेजोंमें शिक्षाके उपयोगी धर्मग्रंथ

६०—भारतवर्षका इतिवृत्त ३॥)
६१—धर्मचन्द्रिका १)
६२—चरित्र-चन्द्रिका—प्रथम भाग १)
६३—चरित्र-चन्द्रिका—द्वितीय भाग १)
६४—शास्त्रचन्द्रिका १॥)
६५—प्रवीण दृष्टिमें नवीन भारत—प्रथम खण्ड २)
६६— ,, ,, ,, ,, द्वितीय खण्ड २)
६७—नवीन दृष्टिमें प्रवीण भारत १)
६८—सती-चरित्र-चन्द्रिका २)
६९—भारतधर्म-समन्वय १॥)
७०—नीति-चन्द्रिका ॥)
७१—आर्यगौरव ॥)
७२—धर्मकर्म-दीपिका ॥)
७३—आचार-चन्द्रिका ॥।)
७४—साधन-चन्द्रिका १॥।)
७५—सुगम साधन-चन्द्रिका १॥)
७६—नित्यकर्म-चन्द्रिका ।)
७७—ब्रह्मचर्य-सोपान ।)
७८—शास्त्रसोपान ।)
७९—धर्मसोपान ।)
८०—धर्मप्रश्नो त्तरी ≡)
८१—साधन-सोपान ॥)
८२—कन्या-शिक्षासोपान ।)
८३—सनातनधर्मदीपिका ॥।)
८४—धर्मप्रवेशिका ।=)
८५—कुमारिल भट्ट ॥।)
८६—परलोक-रहस्य ।)
८७—चतुर्दशलोक रहस्य ।)
८८—तत्त्वबोध ।=)
८९—मनुष्यधर्म ।)
९०—हिन्दू-संस्कृति-समीक्षा ।–)
९१—परलोकत[illegible] ॥=)
९२—कर्मरहस्य ॥≡)
९३—व्रतोत्सव-कौमुदी ॥=)
९४—सती-सदाचार ॥)
९५—आदर्श देवियाँ प्रथम खण्ड १॥)
९६—सतीधर्म और योगशक्ति ।)
९७—परलोक-प्रश्नोत्तरी =)
९८—धर्माधर्म-प्रश्नोत्तरी =)
९९—श्रीव्यास-शुक-सम्वाद ॥)
१००—गीतार्थ-चन्द्रिका २॥)

## (४) बङ्गलाभाषाके ग्रन्थ—

१०१—पुराणतत्त्व १)
१०२—साधनतत्त्व १)
१०३—अवतारतत्त्व ॥)
१०४—नीति-शिक्षा ॥)
१०५—नारीधर्म १)
१०६—महर्षि-चरित १)
१०७—गोस्वामी तुलसीदास रामायण ( बंगला ) ४)
१०८—योगरहस्य ॥)
१०९—न्याय-रहस्य ॥)
११०—वेदान्त-रहस्य ॥)
१११—मन्त्रयोग-संहिता १)
११२—शक्ति-गीता १)
११३—श्रीशंभु-गीता १)

प्राप्तिस्थान—श्रीभारतधर्ममहामण्डल प्रधानकार्यालय जगतगंज, वाराणसी।